सरस्वतीभवन-ग्रन्थमाला

[ ११४ ]

सायणभाष्योपेता

# शुक्लयजुर्वेदकाण्वसंहिता

[ उत्तरविंशतिः ]



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

# SARASVATĪBHAVANA-GRANTHAMĀLĀ

*[ Vol. 114 ]*

**Chief Editor**

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'

Director, Research Institute,

Sampurnanand Sanskrit Vishvavidyalaya

Varanasi




# ŚUKLA YAJURVEDA KĀNVA SAṀHITĀ

With

SĀYAṆA BHĀṢYA

[ UTTARA VIṀŚATI ]

Edited by

**Pt. CINTĀMAṆI MIŚRA ŚARMĀ**

Pradhāna Acārya ( O. S. A. )

Puri.

Joint-editor

**Pt. DIVĀKARADĀSA ŚARMĀ**

ŚRĪSADĀŚIVA KENDRĪYA SANSKRIT VIDYAPĪṬHA

PURI.

Assistant Editor

**Dr. Gopāla Candra Miśra**

Head of the Veda Department

SAMPURNANAND SANSKRIT Vishvavidyalaya

VARANASI

1978

[ This book has been published with financial assistance from the Ministry of Education, Government of India ]

Published by—
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi.

Available at—
Publication Section
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi-221002. ( India)

First Edition : 2000 Copies
Price Rs. 22-00.

Printed by—
Ghanashyam Upadhyay,
Manager,
Sampurnanand Sanskrit Vishvavidyalaya Press,
Varanasi.

सरस्वतीभवन-ग्रन्थमाला
[ ११४ ]

मुख्यसम्पादकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थाननिदेशकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये



सायणभाष्योपेता

# शुक्लयजुर्वेदकाण्वसंहिता

[ उत्तरविंशतिः ]

सम्पादकः
प० श्रीचिन्तामणिमिश्रशर्मा
प्रधान आचार्यः, उत्कलप्रदेशशासनस्य
पुरी

उपसम्पादकः
प० श्रीदिवाकरदासशर्मा
अध्यापकः
श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठे
पुरी

सहसम्पादकः
डॉ० गोपालचन्द्रमिश्रः
वेदविभागाध्यक्षः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्
२०३५ तमे वैक्रमाब्दे | १९०० तमे शकाब्दे | १९७८ तमे ख्रैस्ताब्दे

[ ग्रन्थोऽयं भारतशासनस्य शिक्षामन्त्रालयतो लब्धेनार्थिकसाहाय्येन मुद्रापितः प्रकाशितश्च ]

प्रकाशकः —
निदेशकः, अनुसन्धानसंस्थानस्य,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये,
वाराणसी ।

प्राप्तिस्थानम्—
प्रकाशनविभागः
अनुसन्धानसंस्थानम्,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः,
वाराणसी–२२१००२.

प्रथमं संस्करणम् : २००० प्रतिरूपाणि
मूल्यम् : २२–०० रूप्यकाणि

मुद्रकः—
घनश्याम उपाध्यायः
व्यवस्थापकः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयीयमुद्रणालयस्य
वाराणसी ।

# प्रास्ताविकम्

वैदिकं वाङ्मयं महिष्ठं रिक्थं भारतभूभागस्य। स्तुतियज्ञगानप्रकाशकाः प्रसिद्धा ऋग्यजुः-सामवेदाः। चतुर्थस्त्वथर्ववेदोऽभिचारादिपरकः। कृष्णद्वैपायनव्यासेन खल्वेकैको वेदः क्रमशः पैल-वैशम्पायन-जैमिनि-सुमन्तुनामकान् शिष्यान् अध्यापितः। वैशम्पायनस्य यजुःशिष्यपरम्परायां षडशीतिसंख्याकाः शिष्याः समभूवन्। तत्र चत्वारः प्रामुख्यं भेजिरे—श्यामायनिः, आसुरिः, आलम्बिर्याज्ञवल्क्यश्चेति। यजुर्वेदस्य षडशीति-संख्याकाः संहिता वैशम्पायनेन विहिता शिष्यसंख्यानुसारेणेत्यनुश्रुतिः। न ताः सम्पूर्णाः साम्प्रतमुपलभ्यन्ते। रुष्टस्य गुरोरादेशेन याज्ञवल्क्योऽधीतं वेदमुदवमदिति प्रथा। पुनश्चादित्यमाराध्य मन्त्रव्याख्यात्मकगद्यांशविरहितं गद्यांशयुतं यजुर्वेदमधीतवान्। स एव यजुर्वेदः शुक्लयजुर्वेदसंज्ञामध्यगमत्। मन्त्रव्याख्यात्मकगद्यांशस्तु ब्राह्मणग्रन्थरूपतया प्रकटीकृतो याज्ञवल्क्येन। यद्यप्यस्यां गद्यपद्यात्मकयजुर्वेदसंहितायाम् ऋग्वेदात् पद्यानि गृहीतानि, स्वोपज्ञगद्यादेवास्या यजुष्ट्वं सिध्यति, तथापि संबद्धानां मन्त्रव्याख्यात्मकगद्यांशानां मन्त्रैः सह मिश्रणाद् यजुर्वेदसंहिता कृष्णयजुर्वेदसंहितात्वेन प्रथामगात्। तस्याः प्रतिपाद्यो विषयः शुक्लयजुर्वेदसंहिता-वन्नास्ति सुव्यवस्थितः।

वाजसनेयापरनामधेयो याज्ञवल्क्यो वादपटुरात्मज्ञ ऋषिर्बृहदारण्यकोपनिषद्युद्दालकारुणिशिष्यो मतो दार्शनिकोत्तमः। इत्थमयं वेदविद्यां वैशम्पायनाद् आदित्याच्च, दर्शनशास्त्रं तूद्दालकारुणेः सकाशात् समधीतवान्। योगशास्त्रीया शिक्षा त्वेतेन हिरण्यनाभकौशल्यादवाप्तेति वायुविष्णुब्रह्माण्डश्रीमद्भागवतानि पुराणानि। स्कन्दपुराणे त्वस्य गुरोर्नाम शाकल्य इति स्मृतं वैशम्पायनस्थाने। आथर्वणमन्त्रबलेन स याज्ञवल्क्यस्य सम्पूर्णां वेदविद्यामाहृतवान्। जनकसदसि विद्यमानत्वादस्य विदेहदेशाभिजनत्वं साधयन्ति केचन विद्वांसः। केचित्तूद्दालकस्य शिष्यत्वात् कुरुपाञ्चालाभिजनत्वं संकीर्तयन्ति याज्ञवल्क्यस्य।

वाजसनेयो याज्ञवल्क्यः पञ्चदश शाखा अकरोद् यजुर्भिरिति प्रसिद्धिः। यथा श्रीमद्भागवतपुराणे (१२, ६, ७४)—

यजुर्भिरकरोच्छाखा दशपञ्च शतैर्विभुः।
जगृहुर्वाजसेन्यस्ताः काण्वमाध्यन्दिनादयः॥ इति।

वायुपुराणानुसारेण (६१, २४-२५) तु तेषां नामानीत्थं ज्ञायन्ते—१. कण्वः, २. वैधेयः, ३. शाली, ४. मध्यन्दिनः, ५. शापेयी, ६. विदिग्धः, ७. उद्दलः, ८. ताम्रायणः, ९. वात्स्यः, १०. गालवः, ११. शैशिरी, १२. आटवी, १३. पर्णी, १४. वीरणी, १५. परायणः (आप्यः) चेति। इत्थं पञ्चदशसंख्याकाः शाखाप्रवर्तकास्तदीयाः शिष्या अभूवन्। यद्यपि पुराणान्तरेषु चरणव्यूहे च नामानीमानि नामान्तरत्वेन पठितानि सन्ति, तथापि कण्वमध्यन्दिननाम्नोर्नास्ति नामान्तरम्। पञ्चदशशाखाप्रवर्तकानामृषीणां मध्ये केवलमेतयोरेव द्वयोर्ऋष्योः प्राप्येते संहिते—१. वाजसनेयिमाध्यन्दिनशुक्लयजुर्वेदसंहिता, २. शुक्लयजुर्वेदीया काण्वसंहिता चेति।

यद्यपि कण्वस्य काण्वस्य च भूयानुल्लेखो दृश्यत ऋग्वेदसंहितायाम्, तथापि शुक्लयजुर्वेदीयकाण्व-शाखाप्रवर्तककण्वगुरोर्याज्ञवल्क्यस्य तावद् ऋग्वेदात् परवर्तिवाङ्मये शतपथब्राह्मणादावेव समुल्लेखाद् ऋग्वेदीय-कण्वेन सार्धं नैक्यं भजते शुक्लयजुर्वेदीयः कण्वः। विप्रेत्यादिषु चतुर्विंशतिसंख्याकेषु मेधाविनामसु कण्व ऋभुरिति पठितम्। शब्दार्थकात् √कण् धातोः 'अशिप्रुषिलटिकणिखटि०' इत्यादिनौणादिकेन सूत्रेण क्वन्प्रत्यये कण्वशब्दो निष्पद्यते। स्तोतेति सामान्यतस्तदर्थः। इत्थं गोत्रनामादिभ्यो भिन्नः स्तोतृमेधावीत्याद्यर्थकः कण्व-शब्दः सामान्योऽपि भवति।

यद्यपि वैशम्पायनेन सह याज्ञवल्क्यस्य मतभेद इव याज्ञवल्क्येन सह तच्छिष्यस्य कण्वस्य वैमत्यं न श्रूयते, तथापि वाजसनेयिमाध्यन्दिनसंहितातः काण्वसंहितामेदो ध्रुवं प्रतिपद्यते। शुक्लयजुर्वेदीयमाध्यन्दिन-संहितायास्त्रिषष्टिसंख्याका इमे वक्ष्यमाणा मन्त्राः काण्वसंहितायामनूरीकृताः—

१. अग्निरस्मि जन्मना १८,६६
२. अग्ने पत्नीरिहावह २६,२०
३. अङ्गिरसो नः पितरः १९,५०
४. अनु नोऽद्यानुमतिर्यज्ञम् ३४,९
५. अपाघमदभिशस्तीः ३३,९५
६. अभि यज्ञं गृणीहि २६,२१
७. अमेव नः सुहवा २६,२४
८. अयमग्निः पुरीष्यः ३,४०
९. अश्वावतीर्गोमतीर्न ३४,४०
१०. अस्येदिन्द्रो वावृधे ३३,९७
११. आक्रन्दय बलमोजः २९,५६
१२. आ नो यज्ञं दिवि स्पृशाम् ३३,८५
१३. आपवस्व हिरण्यवदश्ववत् ८,६३
१४. आमूरज प्रत्यावर्तयेमाः २९,५७
१५. इन्द्र वायू सुसन्दृशा ३३,८६
१६. इन्द्रस्य वज्रो मरुता २९,५४
१७. इन्द्राग्नी अपादियम् ३३,९३
१८. इन्द्रा याहि वृत्रहन् २६,५
१९. उच्चा ते जातमन्धसः २६,१६
२०. उतेदानीं भगवन्तः ३४,३७
२१. उद्दिवं स्तभानान्तरिक्षम् ५,२७
२२. उपह्वरे गिरीणाम् २६,१५
२३. ऋचो नामास्मि १८,६७
२४. ऋजीते परिवृङ्धि २९,४९
२५. ऋतवस्ते यज्ञम् २६,१४
२६. एकस्त्वष्टुरश्वस्या २५,४२
२७. एह्यूषु ब्रवाणि ते २६,१३
२८. चतुस्त्रिंशत्तन्तवः ८,६१
२९. चतुस्त्रिंशद्वाजिनः २५,४१
३०. चन्द्रमा अप्स्वन्तरा ३३,९०
३१. तं वो दस्ममृतीषहम् २६,११
३२. तवायं सोमः २६,२३
३३. तीव्रान् घोषान् कृण्वते २९,४४
३४. दिवि पृष्टो अरोचत ३३,९२
३५. दीर्घायुस्त ओषधे १२,१००
३६. देवं देवं वोऽवसे ३३,९१
३७. देवकृतस्यैनसोऽव ८,१३
३८. द्रविणोदाः पिपीषति २६,२२
३९. पाहि नो अग्न एकया २७,४३
४०. प्र व इन्द्राय ३३,९६
४१. प्रातरग्निं प्रातरिन्द्रम् ३४,३४
४२. ब्राह्मणासः पितरः २९,४७
४३. भग एव भगवाँ ३४,३८
४४. भग प्रणेतर्भग ३४,३६
४५. मा त्वा तपत्प्रिय २५,४३
४६. मेधां मे वरुणः ३२,१५
४७, यज्ञस्य दोहो विततः ८,६२
४८. यत्ते सादे महसा २५,४०
४९. यत्प्रज्ञानमुत चेतः ३४,३
५०. यद्वाहिष्ठं तदग्नये २६,१२
५१. यस्मिन्नृचः साम ३४,५
५२. ये नः पूर्वे पितरः १९,५१
५३. येन कर्माण्यपसः ३४,२
५४. येनेदं भूतं भुवनम् ३४,४
५५. रक्षोहा विश्वचर्षणिः २६,२६
५६. रथवाहणं हविरस्य २९,४५
५७. शिवो नामासि स्वधिति ३,६३
५८. स न इन्द्राय यज्यवे २६,१७
५९. समध्वरायोषसः ३४,३९
६०. सुगव्यं नो वाजी २५,४५
६१. सुषारथिरश्वानिव ३४,६
६२. स्वादिष्ठया मदिष्ठया २६,२५
६३. स्वादुषं सदः पितरः २९,४६

काण्वसंहितायां त्रयस्त्रिंशत्संख्याकास्त इमे वक्ष्यमाणा मन्त्रा नूतना लभ्यन्ते, येषां संनिवेशो वाजसनेयिशुक्लयजुर्वेदसंहितायां नास्ति—

| | |
|---|---|
| १. अग्निर्ज्योतिषं त्वा वायु | ३,६ |
| २. आ नो गोत्रा दर्दृहि | २२८,१४ |
| [३. आ यातमुप भूषतम् | ३३,३८] |
| ४. इदं मे कर्मेदं वीर्यम् | २,५३ |
| ५. इन्द्रः पश्चादिन्द्रः पुरस्तात् | ३,१५ |
| ६. इन्द्रस्य त्वा जठरे | २,२५ |
| ७. इह पुष्टिं पुष्टिपति | ३,१३ |
| ८. उत्प्रुषो विप्रुषः | २,३८ |
| ९. ऋद्धाः कर्मण्या | २,४३ |
| १०. जाय एहि स्वः | १०,२९ |
| ११. ततोऽसि तन्तुरस्य नु | २,५२ |
| १२. तं त्वा घृतस्न ईमहे | २४,२१ |
| १३. त्वामग्ने हविष्मन्तः | १६,५२ |
| १४. दीर्घायुत्वाय बलाय | ३,७६ |
| १५. देव सवितरेतं त्वा | २,१९ |
| १६. देवासो हि ष्मा मनवे | ३१,६४ |
| १७. पूषन्नेकर्षे यम सूर्य | ४०,१६ |
| १८. प्राणापानौ मे पाहि | २,२६ |
| १९. बृहस्पतिर्देवानाम् | २,२१ |
| २०. मनो गायत्र्यै | २,२० |
| २१. मित्रस्य त्वा चक्षुषा | २,२२ |
| २२. यस्ते प्राणः पशुषु | १,५० |
| २३. येन धाता बृहस्पते | ३,७५ |
| २४. वाजिनां वाजोऽवतु | ३,७१ |
| २५. वाज्यहं वाजिनस्योपहूत | ३,७२ |
| २६. विश्वकर्मन् हविषा वावृधान | ८,२७ |
| २७. वेषोऽस्युपवेषो द्विषतः | २,४२ |
| २८. वैश्वानरं हवामहे | २८,७ |
| २९. समिदसि समिद्धः | ३,१६ |
| ३०. समूह्योऽसि विश्ववेदा | ५,४३ |
| ३१. सवित्रा प्रसूता दैव्य | ३,७३ |
| ३२. सूर्य ज्योतिषं त्वा | ३,१० |
| ३३. स्वाहाकृतं जठरमिन्द्रस्य | २,२४ |

काण्वसंहितायां ये नूतना माध्यन्दिनसंहितापेक्षयाऽधिकाश्च मन्त्रा लभ्यन्ते, तेषु पञ्चषाणामेव पाठ ऋग्वेदसंहितायामित्थं दृश्यते—

१. आ नो गोत्रा दर्दृहि ( ऋ. ३, ३०, २१ ); २. आ यातमुप भूषतम् ( ऋ. ७, ७४, ३ ); ३. 'तं त्वा घृतस्न ईमहे' इत्ययं मन्त्र ऋग्वेदे ( ५, २६, २ ) तु 'तं त्वा घृतस्न वीमहे' इत्येतादृशरूपो दृश्यते। ४. त्वामग्ने हविष्मन्तः ( ऋ. ५,६,१ ); ५. देवासो हि ष्मा मनवे ( ऋ. ८, २७, १४ ); ६. विश्वकर्मन् हविषा वावृधान ( ऋ. १०, ८१, ६ ) इति।

कर्मकाण्डस्य पर्यवसायिता ज्ञानकाण्डे भवतीति समसाधि वाजसनेययाज्ञवल्क्येन शुक्लयजुर्वेदे चरमं चत्वारिंशमध्यायम् ईशा वास्याख्यं योजयता। तत्र काण्वशाखायां 'पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्त्समूह' इत्येको मन्त्रोऽधिको लभ्यते स्ववैशिष्ट्यप्रकाशकः। पुराणेषु काण्वशाखायाः प्रभावो लक्ष्यते। ब्रह्मवैवर्तपुराणस्य गणपतिखण्डे दुर्गादिस्तोत्रं काण्वशाखोक्तमभिहितम्—'कवचं काण्वशाखोक्तमुक्तं नारद सुन्दरम्' इति (३४, ४४)। एवमेवास्यैव पुराणस्य चतुश्चत्वारिंशेऽध्याये सनातनभगवतः स्तुतिः काण्वशाखोक्तस्तोत्ररीत्या विहिता। अन्येष्वपि पुराणादिग्रन्थेषु काण्वशाखाप्रभावोऽनुसन्धेयतामर्हति।

काण्वीयं शतपथब्राह्मणं डब्ल्यू. कैलैण्डसम्पादितं लवपुरीतः १९२६ खीस्तान्दे प्रकाशितम्। बृहदारण्यकोपनिषत् काण्वशाखाया एव। काण्वसंबद्धा अन्येऽपि कण्वनीति-कण्वस्मृत्यादयो ग्रन्थाः श्रूयन्ते। कण्वस्मृतिस्तु हेमाद्रिमध्वाचार्यादिभिरसकृत् समुल्लिखिता वर्तते। आपस्तम्बः कण्वग्रन्थमुद्धरति। कण्वग्रन्थस्य बहून्युदाहरणानि स्मृतिचन्द्रिकायां मिताक्षरायां च गृहीतानि सन्ति।

शुक्लयजुर्वेदीयकाण्वसंहितायाः संस्करणानि जर्मन-मद्रास-चौखम्बा-धारवाड़-आन्ध्र-स्थानेभ्यः प्रकाशमुपगतानि। अस्याः सप्त भाष्याणि समुपलभ्यन्ते। त्रीणि पूर्णतया प्रकाशमानीतानि—१. उवटभाष्यम्, २. महीधरभाष्यम् ( निर्णयसागरमुद्रणालयतः ), ३. मिश्रभाष्यम् ( वेङ्कटेश्वरमुद्रणालयतः ) चेति। वेदार्थ-दीपिकाभाष्यम्, देवयाज्ञिकभाष्यं चेति द्वयम् अमुद्रितम्। आनन्दभाष्यं 'सारस्वती सुषमा' इत्याख्यपत्रिकायां ३१-४० अध्यायमात्रम् अपूर्णं प्रकाशितम्।

सायणभाष्यस्य प्रकाशनमध्यायानां विंशतिं यावदेव विद्याविलासमुद्रणालयादेकोनसप्ततिवर्षेभ्यः प्राक् काश्यां संजातम्। पण्डितप्रकाण्डस्य सायणस्य भाष्येषु तादृशानि वैशिष्ट्यानि सन्ति यत् तानि भाष्यान्तराण्यतिशेरते। इह शुक्लयजुर्वेदीयकाण्वसंहितायाः सायणभाष्यस्य कानिचन वैशिष्ट्यानि प्रस्तूयन्ते।

व्युत्पत्तिदृशेह काण्वसंहितायाः सायणभाष्ये भाष्यान्तरापेक्षया बहूनि वैशिष्ट्यानि सन्ति। बहुत्र सायणकृता शब्दव्युत्पत्तिरुवटमहीधरकृतशब्दव्युत्पत्तिसादृश्यमावहति। यत्र ताभ्यामुवटमहीधराभ्यां येषां शब्दानां व्युत्पत्तिर्न कृता, तेषामेव केषाञ्चन शब्दानां व्युत्पत्तिवैशिष्ट्यदर्शनार्थमिह यत्यते।

२१, ४ मन्त्रे स्वधाशब्दव्युत्पत्तिप्रसङ्गे सायणेन—'स्वकीयान् पितॄन् धारयतीति स्वधा' इति साधीयसी दर्शिता व्युत्पत्तिस्तादृशमर्थमभिव्यञ्जयन्ती। वैयाकरणैस्तु स्वद्यतेऽनेनेति पृषोदरादित्वात् साध्यते। २१, २३ मन्त्रे 'नग्नहु'-शब्दं व्युत्पादयता सायणेन—'नग्नं वस्त्ररहितं ह्वयतीति नग्नहुः कुविन्दोऽत्र विवक्षितः' इत्यभिहितम्। वैयाकरणैस्तु—'ह्वानं हूयते वा, सम्पदादिक्विप्, नग्नस्य हूः नग्नहूः' इति व्युत्पाद्यते। २२, २५ मन्त्रस्य सायणभाष्ये 'तनून् न पातयति' इति व्युत्पत्तिर्दर्शिता सुस्पष्टा तनूनपाच्छब्दस्य। वैयाकरणैस्तु द्विधा व्युत्पत्तिर्दर्श्यते, सा न स्पष्टा, यथा—१. तनूं स्वं स्वरूपं न पाति=न रक्षति ( इन्धनसमाप्तौ ) आशुविनाशित्वाद् इति 'तनूनपात्' शत्रन्तः; २. तन्वा ऊनं कृशं पाति—तनूनपं घृतादि, तदत्ति "अदोऽनन्ने" ३।२।६८ इति विट्-इति। २२, ३८ मन्त्रगत इन्द्रशब्दो निरुक्तसरण्या द्विधा निरुच्यते सायणेन—' इरां वाणीं धारयतीतीन्द्रः' इति, 'इरां भुवं ( पा० वज्रम् ) धारयतीतीन्द्रः' इति च।

यद्यपि गव्यूतिशब्दः सर्वैः संस्कृतज्ञैः साधीयः परिचीयते 'गोर्यूतौ छन्दस्युपसंख्यानम्' 'अध्वपरिमाणे च' इति वार्त्तिकद्वयेन सह, तथापि तस्य निर्वचनं नेतोऽधिकं व्याकरणग्रन्थेषु लभ्यते। सायणेन २३, ८ संख्याके मन्त्रे गव्यूतिशब्दस्य निर्वचनमित्थं कृतम्—'यद्यपि गव्यूतिशब्दो रूढ्या क्रोशयुगमाचष्टे, तथापि पूर्वाचार्यैरर्थ-संकोचे कारणाभावाद् योगमाश्रित्य गवि=पृथिव्याम्, ऊतिम्=पालनक्षमां भूमिमिति रक्षणक्षमक्षेत्रतया व्याख्यातः। तद्व्याख्यानानुसारेण पृथिव्यां रक्षणक्षमं क्षेत्रमित्यर्थः। यद्वा गव्यूतिं गोप्रचारपर्याप्तां भूमि-मित्यर्थः।' इति।

'आपो बिभर्तीत्यभ्रम्' इति यथार्था व्युत्पत्तिराश्रिता सायणेन 'अभ्रम्' इत्यस्य काण्वसंहिताया भाष्ये ( २४, २८ )। वैयाकरणैस्तु यद्यपि चतुर्धा व्युत्पाद्यतेऽयं शब्दः, तथापि नार्थाभिव्यक्तिर्जायते तादृशी। यथा—१. 'न बिभर्ति किञ्चित्, मूलविभुजादित्वात् कः' इति, २. आपो भ्रश्यन्त्यस्मात्, अन्येभ्योऽपि ( वा० ३।२।१०१ ) इति डः' इति ३. 'अभ्रति=स्थैर्यं गच्छति; अच् ( ३।१।१३४ )' इति, ४. 'न भ्राजते, भ्राजृदीप्तौ, अन्येभ्योऽपि दृश्यते ( ३।२।१०१ ) इति डः' इति च। दिग्वाचकस्याऽऽशाशब्दस्य व्युत्पत्तिप्रसङ्गे सायणः—'आशेरते आसु प्राणिन इत्याशा दिशः' इति व्याचष्टे। वैयाकरणास्तु प्रतीपमेव व्याकुर्वते—'आ समन्ताद् अश्नुते=व्याप्नोति' इति। एवमेव निमेषशब्दे सायण ऐतिह्यं स्मरन् निर्वक्ति—'निमिर्नाम जनकस्य पूर्वज आद्यो मिथिलेश्वरः संसीदति=उपविशति वर्तते देववरप्रसादाद् येषु=अक्षिपक्ष्मपातेष्विति ते निमेषाः' इति।

मन्त्रव्याख्यानभूता अंशा वाजसनेयेन याज्ञवल्क्येन शुक्लयजुर्वेदसंहितायां नोरीकृताः। तेषां समावेशस्तु शतपथब्राह्मणे कृत इति प्राङ्निर्दिष्टं मया। सायणेन तु काण्वसंहितामन्त्रव्याख्यानावसरे संबद्धानि तानि तानि शतपथब्राह्मणवचनानि यथाशक्ति गवेषं गवेषं समुद्धृतानीति द्वितीयं वैशिष्ट्यं सायणभाष्यस्य। एकविंशेऽध्याये १, २, ६, ७, ८, १४, ३४ मन्त्राणां सायणभाष्ये समुद्धृतानि ब्राह्मणवचनानि, उवटमहीधर-भाष्ययोस्तु नैकमपि। द्वाविंशाध्यायस्य सायणभाष्ये तु श्रुतिशब्देन समुद्धृतं 'अश्विनावध्वर्यू' इति ब्राह्मणवचनं विहाय नोपन्यासः। त्रयोविंशेऽध्याये श्रुतिशब्देन निर्दिष्टं शतपथब्राह्मणस्य वचनद्वयमेवोद्धृतं दृश्यते—एकं सायणभाष्येऽपरं चोवटमहीधरभाष्ययोः। चतुर्विंशेऽध्याये ५, ७, ६, १०, १६, ३७, ३६ संख्याकेषु मन्त्रेषु, चतुस्त्रिंशेऽध्याये ३, ५ संख्याकेषु मन्त्रेषु, पञ्चत्रिंशेऽध्याये १६, १७, २३ संख्याकेषु मन्त्रेषु, सप्तत्रिंशे चाध्याये ३७ संख्याके मन्त्रे शतपथब्राह्मणीयानि वचनानि समुद्धृतानि सन्ति सायणभाष्ये। अवशिष्टानामध्यायानां सायणभाष्ये मन्त्रव्याख्यानभूतानि ब्राह्मणवचनानि प्रायेण नोपलभ्यन्ते।

अष्टादश श्रुतिवचनानि व्याख्यान्तरापेक्षयाऽधिकानि समुपस्थापितानि सायणेन व्याख्यानोत्कर्षाय। इत्थं स्पष्टं सायणभाष्यस्य वैशिष्ट्यं सिध्यति।

ससायणभाष्यायाः काण्वसंहितायाः पूर्वविंशतिरेकोनसप्ततिवर्षेभ्यः प्राक् काशीस्थविद्याविलास-मुद्रणालयात् प्रकाशमयासीत्। एतादृशो महत्त्वभाजः सायणभाष्यस्योत्तरविंशतेः कस्मिंश्चिदपि हस्तलेख-ग्रन्थागारेऽनुपलम्भात् कोऽपि प्रकाशको न प्राभवत् प्रकाशयितुमवशिष्टं सायणभाष्यम्। उत्कलप्रदेशमणिभिः मिश्रोपाख्यैः पण्डितश्रीचिन्तामणिभिर्महता प्रयासेन गञ्जाममण्डलान्तर्गतात् 'आठगढ़' इत्याख्यात् पण्डित-महेश्वराचार्यस्थापितात् प्राचीनग्रन्थागारादुत्तरविंशतेर्हस्तलेखः समवाप्तः। स खलु चिराय प्रतीक्ष्यमाणस्तेन महानु-भावेन महता वैदुष्येण सम्पादितः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन शिक्षामन्त्रालयाल्लब्धार्थिकसाहाय्येन प्रकाशितो विद्वज्जनानां प्रीणनाय जिज्ञासूनां चोपकाराय भविष्यतीति ध्रुवं विश्वसिमि।

गुरुपूर्णिमायाम्
२०३४ वैक्रमाब्दे
(३०-७-७७ खीस्ताब्दे)

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
निदेशकः
अनुसन्धान-संस्थानस्य

# मन्तव्य

## [ FOREWORD ]

राजा टोडरमल्ल सम्राट् अकबर के प्रवीण अर्थमन्त्री थे। उन्नत अर्थनीति के अनुगामी बनकर वे शासनक्षेत्र में बहु आर्थनीतिक संस्कार और आर्थनीतिक विधान स्वीकार किये थे। भारत में सबसे पहले वे जमीन का सर्वे कराकर उसके ऊपर उचित खजाना भी निर्धारित किये थे। इसके बाद भारतीय शास्त्र, संस्कृति, वैदिकविधि-विधान, ज्ञान-विज्ञान, साहित्य और परम्परा इत्यादि में उनका जो गम्भीर ज्ञान था—यह बात बहुत कम आदमी जानते हैं। उनके टोडरमल्ल-नामा ग्रन्थमाला से अब पता चल रहा है कि वैदिक संस्कृति, भारतीय ज्ञान-विज्ञान और संस्कृत साहित्य के वे अगाध पण्डित थे। उनके 'टोडरमल्ल' नामा ग्रन्थ के पचीस खण्ड पुस्तकों में ये समस्त सुविशद प्रकाशित हो चुका है। बड़े हर्ष की बात यह है कि ये पचीस पुस्तकों में टोडरमल्ल ने बहुत स्थलों पर विभिन्न ग्रन्थों के नाम उल्लेख करके उनमें से कितने अति उपादेय अंश का उद्धार किया है। बड़ी आश्चर्य की बात है, इनमें से अधिकांश ग्रन्थ अभी तक भारतवर्ष में देखने को नहीं मिलते।

शुक्लयजुर्वेद काण्वसंहिता का सायणभाष्य सहित उत्तरविंशति भाग इसी तरह का एक उपादेय ग्रन्थ होते हुए भी आजतक वह लोकलोचन के सामने नहीं आया था। यहाँ स्मरण रखना उचित होगा कि शुक्लयजुर्वेद काण्वसंहिता भारतीय पण्डितों का ध्येय होते हुए भी सम्पूर्ण सायणभाष्य ही उसका उत्कर्षसाधन करता है। आश्चर्य की बात है, यह दुर्लभ ग्रन्थ उत्कल प्रदेश के एक अनुन्नत अञ्चल, पहिले जो गंजाम जिले में आठगढ़ जमींदारी था, वहाँ अब विद्यमान पण्डित श्रीमहेश्वर आचार्य के पूर्व पुरुषों के द्वारा संस्थापित प्राचीन ग्रन्थागार में एक तालपत्र पुस्तक के रूप में लुक्कायित पड़ा रहा।

उत्कल के ख्यातनामा प्रधानाचार्य पण्डित श्रीचिन्तामणि मिश्र जी महामहिमोपाध्याय ने अपने पूज्यगुरु स्वर्गीय पण्डित रामाज्ञा पाण्डेय जी की प्रेरणा से अशेष श्रम स्वीकार करके इसका उद्धार किया है। प्रधानाचार्य जी केवल उत्कल प्रान्त में ही नहीं, बल्कि भारत में भी विशिष्ट विद्वान् के रूप में सुपरिचित हैं, वैदिक साहित्य और वेदविद्या में उनके आग्रह स्वागत योग्य तथा प्रशंसनीय हैं। वे महाशय इस ग्रन्थ को मुद्रण योग्य बनाने के लिये बहुश्रम स्वीकार किये हैं। पाठभेद और टिप्पणी प्रभृति द्वारा ग्रन्थ का महत्त्व वे बढ़ा दिये हैं।

जब मैं उत्तरप्रदेश का राज्यपाल था, उसी समय इस ग्रन्थ के मुद्रण कार्यों में मेरी सहायता माँगी गयी थी। तदनुसार उसी समय के केन्द्र के शिक्षामन्त्री डॉ० श्रीमाली जी और राजस्थान के राज्यपाल डॉ० सम्पूर्णानन्द जी के साथ इसके बारे में परामर्श करने के बाद केन्द्र

सरकार की आर्थिक सहायता से वाराणसेय संस्कृत विश्वविद्यालय के अनुसन्धान विभाग द्वारा इस ग्रन्थ के मुद्रण की व्यवस्था की गयी थी। उसी व्यवस्था के अनुसार अब यह ग्रन्थ प्रकाशित हो रहा है।

इस ग्रन्थ को संशोधन-पूर्वक मुद्रणोपयोगी बनाने में प्रधानाचार्य जी जो गम्भीर श्रम स्वीकार किये हैं, इसके लिये उनको मैं हार्दिक धन्यवाद दे रहा हूँ और इस कार्य में प्रारम्भ से अन्त तक उनका साहाय्य करने वाले उनके शिष्य पुरीस्थ श्रीसदाशिव केन्द्रीय संस्कृत विद्यापीठ, पुरी के व्याकरणाध्यापक पण्डित श्रीदिवाकर दास जी को भी प्रशंसा के साथ आशीर्वाद दे रहा हूँ।

भारतीय चतुर्धामवेदभवनन्यास,<br>
पुरी शाखा, "वेदभवन"<br>
दि० ५-११-७६

विश्वनाथ दास



# उपोद्घातः

विदितचरमेवैतत् समेषां विदुषां यत्—मानवीयसभ्यताविकाशो वेदद्वारेणैव। वेदविषये सायणाचार्यादिभिः बहुविधशङ्कासमाधानपुरःसरं बहु प्रपञ्चितमिति वेदस्वरूपविमर्शो नात्र प्रतन्यते। यद्यपि ऋग्वेदस्य प्राथम्यं सर्वे आमनन्ति तत्तु सर्ववेदाध्ययनतत्पारायणाय, अर्थज्ञानस्य तु यज्ञानुष्ठानार्थत्वात् तदर्थं च यजुर्वेदस्यैव प्राधान्यं साम्प्रतम्। शुक्ल-कृष्णभेदेन द्विविधे यजुषी। शुक्लयजुर्वेदे पञ्चदशशाखासु काण्व-माध्यन्दिनभेदेन द्वे एव शाखे हन्त! उपलभ्येते। माध्यन्दिनशाखायाम् उवट–महीधराभ्यां भाष्यं व्यधायि। सायणेन तु तत्र काण्वशाखायां तथा सर्वेषु वेदेषु भाष्यं निरमायि। निश्चप्रचमेतत् यदि नाम सायणभाष्यं न भवेत् तदा न कोऽपि वेदार्थज्ञानलाभाय प्रभवेदिति। ऋग्वेदे दशममण्डले—"अदो यद्दारु प्लवते—" (ऋ० म० १०।१५५।३) इत्यादिमन्त्रे सायणेन 'केचित्तु' इति व्याख्यान्तरप्रदर्शनेन ज्ञायते यत् सायणात् पूर्वं वेदभाष्याणि विरचितानि आसन्। हन्त! सम्प्रति तानि कालकवलितानीति नोपलभ्यन्ते।

काण्वशाखायां सायणेन विरचितं भाष्यम् अद्यावधि सम्पूर्णमप्रकाशितमासीत्। एतदर्थं वैकुण्ठमधिवसतां पूज्यपादानां मद्गुरुवराणां **श्रीरामाज्ञापाण्डेयमहानुभावानां** प्रेरणया उत्कलप्रान्ते 'गंजाम'मण्डले अष्टदुर्गे (आठगढ़) निवसतां राजपुरोहितानां श्रीमहेश्वराचार्यमहोदयानां गृहे तालदलेषु उत्कलाक्षरैः लिखितः सायणभाष्यसहितः शुक्लयजुर्वेदकाण्वसंहितायाः उत्तरविंशत्यात्मको भागः मया महता प्रयत्नेन उपलब्धः। प्रथमतः उत्कलाक्षरैस्तस्य पाठोद्धारो मया तथा मदन्तेवासिना पुरीस्थित–श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठस्य व्याकरणाध्यापकेन आयुष्मता श्रीदिवाकरदासशर्म्मणा महता कष्टेन विहितः। प्रायेण तालदललेखेषु लिपीनां भिन्नरूपत्वात्, अस्पष्टलेखत्वात्, बहुषु स्थलेषु अशुद्धिमत्त्वाच्च तत्र महान् आयासोऽस्माभिः स्वीकृतः। ततो देवनागराक्षरैः पुनस्तन्मातृकायाः लेखः सम्पादितः। अनन्तरम् उत्कलराजधान्यां श्रीभुवनेश्वरस्थिते उत्कलराजकीयसंग्रहालये स्थितया छिन्नया कीटदष्टया एकया मातृकया साकम् अस्य लेखस्य सामञ्जस्यं निर्णीय तत्र तत्र पाठभेदाः समुद्धृताः। ते च पाठभेदा अस्मिन् ग्रन्थे टिप्पण्याम् उ० म्यु० (उत्कल म्युजियम्) इति संकेतेन संकलिता वर्तन्ते। अस्य ग्रन्थस्य मातृकायां तालदलपुस्तके पदपाठोऽस्माभिर्नावलोकितः, अतः प्रतिमन्त्रं पदपाठस्थाने पदच्छेद एव योजितोऽस्माभिः।

अनन्तरं मुद्रणोपयोगिलेखं विधाय अस्य प्रकाशनम् उत्तरप्रदेशस्थित–'बलिया' मण्डलान्तर्गत–'रतसर' ग्रामे अस्मद्गुरुपाद–संस्थापित–सम्पूर्णानन्द-सरस्वतीभवनतो भवेदिति निश्चित्य तदर्थं भारतशासनसविधे आवेदनपत्रं समुपस्थापितम्। एतद्विषये तदानीन्तनकेन्द्रशिक्षामन्त्रिभिः डा० श्रीमालिभिस्तस्मिन् काले उत्तरप्रदेशराज्यपालानां वेदसमुद्धरणतत्पराणां श्रीविश्वनाथदासमहोदयानां तथा राजस्थानस्य तात्कालिक-राज्यपालानां महाविदुषां डा० सम्पूर्णानन्दमहाभागानां मुद्रणविषये अनुकूलाभिमतम् आकाङ्क्षितम्। तदपि यथाकालं डा० श्रीमालिमहोदयानां सविधे आगतम्। शुक्ल-यजुर्वेद-काण्वशाखायाः सायणभाष्यसहितया पूर्वविंशत्या सह सम्पूर्णस्य ग्रन्थस्य प्रकाशनं प्रस्तावितमस्माभिः। केन्द्रसर्वकारैस्तदपि स्वीकृतम्। प्रकाशनविषये मुद्रणव्ययनिर्धारणं वाराणसीस्थ–भार्गवपुस्तकालयेन समाकलय्य पञ्चविंशतिसहस्रमितमुद्रा निरूपिताः। तदपि भारतशासनेन स्वीकृतमासीत्। परन्तु हन्त! अस्मिन्नवसरे खीष्टीय १९६५ तमेऽब्दे अप्रैलमासे अस्मद्गुरुपादा वैकुण्ठं प्रस्थिताः।

तदनन्तरं भारतशासनेन अस्य मुद्रणविषये मदन्तिके पत्रं प्रहितम्। राजकीय-नियमानुसारं मुद्रणात् प्राक् व्यक्तिविशेषाय अर्थसाहाय्यं सर्वकारेण न दीयते इति भारत-शासनेन विज्ञापितम्। एतद् निशम्य तदानीन्तनैः उत्तरप्रदेशराज्यपालैः श्रीविश्वनाथ-दासमहोदयैर्वाराणसेयसंस्कृतविश्वविद्यालयपक्षतः प्रकाशनं भवेदिति सूचना प्रदत्ता। तदनुसारम् अस्य मुद्रणं तद्विश्वविद्यालयपक्षतः संजातम्।

पूज्या वैदिकमार्गपुनरुद्धरणतत्पराः श्रीविश्वनाथदासमहाभागा अस्य प्रकाशने प्रथमत एव प्रोत्साहं तथा महान्तं प्रयत्नं कृतवन्तः। पुनश्च भारतशासनतत्त्वावधार-कत्वेन संस्थापितस्य **राष्ट्रियसंस्कृतसंस्थानस्य** भूतपूर्वनिदेशकाः, सम्प्रति च कामेश्वर-सिंहदरभङ्गासंस्कृतविश्वविद्यालयस्य कुलपतयः विद्वन्मूर्धन्याः संस्कृतशिक्षाप्रचाराय बद्धपरिकराः डा० रामकरणशर्ममहोदयाः 'राष्ट्रियसंस्कृतसंस्थान'पक्षतो मुद्रणव्यय-प्रदानाय तथा त्वरितमुद्रणाय बहुश्रमं प्रयत्नं च कृतवन्त इति तेभ्यो महानुभावेभ्य आशीराशिसहितां बहुशः सान्तरं कृतज्ञतां समर्पये।

अस्य प्रकाशनव्यवस्थायां बहूनि वर्षाणि व्यतीतानि। अन्ते तु सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्य भूतपूर्वोपकुलपतीनां श्रीबलराम-उपाध्यायमहाभागानां तथा साम्प्रतिककुलपतीनां पण्डितप्रवर–श्रीकरुणापतित्रिपाठिमहोदयानाम्, 'सरस्वतीभवन' तत्त्वावधारक-श्रीलक्ष्मीनारायणतिवारिमहोदयानाम्, अनुसन्धानविभागस्य भूतपूर्व-

निदेशक–आचार्य–बलदेव–उपाध्यायमहानुभावानाम्, तथा इदानीन्तननिदेशकानां डा० भागीरथप्रसादत्रिपाठि'वागीशशास्त्रि'महोदयानाम्, अनुसन्धानसहायकानां डा० जानकीप्रसादद्विवेदशर्मणाम्, सार्वभौमसंस्कृतप्रचारकार्यालयसञ्चालक–पण्डित-श्रीवासुदेवद्विवेदिशर्मणां च महदानुकूल्येन ग्रन्थोऽयं प्रकाशं प्रापित इति तेभ्यो महानुभावेभ्यो भूयो भूयः साशीर्वादधन्यवादान् प्रयच्छामि।

मदन्तेवासिना पुरीस्थित–**श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठस्य** व्याकरणाध्यापकेन चिरजीविना श्रीदिवाकरदासशर्म्मणा अस्य ग्रन्थस्य प्रकाशनविषये कार्यारम्भात् कार्यंपरिसमाप्ति यावद् भूरिशः श्रमः स्वीकृतः। तदभावे एतत्प्रकाशनं दुष्करमिति मन्ये। तदर्थम् अस्य चिरजीवित्वं कामये। तेन आयुष्मता ईदृशं बहुकार्यंजातं सम्पाद्यतामिति मे आशीराशिः।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य वेदविभागाध्यक्षैः **डॉ० पण्डितश्रीगोपालचन्द्रमिश्रशर्ममहोदयैरस्य** ग्रन्थस्य मुद्रणावसरे ईक्षणपत्र (प्रूफ) निरीक्षणे तथा मुद्रण-परिपाटीसंकलने प्रभूतं साहाय्यं विहितम्। अतोऽस्मिन् ग्रन्थे 'सहायक-सम्पादक'रूपेण ते निर्देशिताः सन्ति। तेषां च दीर्घायुष्ट्वं कामये।

अस्य ग्रन्थस्य संकलनकर्मणि याः काश्चिद् अशुद्धयो दृष्टिपथमारूढाः, तास्तु ऋग्वेदकृष्णयजुर्वेदतैत्तिरीयसंहिता-शतपथब्राह्मणेषु सायणभाष्यं तथा कात्यायन-श्रौतसूत्रादिकं पर्यालोच्य यथामति संशोधिता अस्माभिः। असर्वज्ञैर्मर्त्यैः भूरिशः कृतेऽपि प्रयत्ने प्रमादोऽवश्यम्भावीति यदि नाम कश्चन दोषः समीक्षमाणानां पुरस्ताद् आपतेत् सोऽपि कृपया निर्देष्टव्यः, येनास्य द्वितीयसंस्करणे तस्य समुत्सारणं भवेदिति आशासे।

"सङ्गच्छध्वं संवदध्वम्" इति वैदिकसूक्तिमूररीकृत्य भूयो भूयो वैदिकशास्त्र-समुद्धरणाय प्रयतन्तां सुनिपुणा विद्वांस इति अनुदिनं श्रीनीलाद्रिनाथ-श्रीजगन्नाथचरणारविन्दयुगले असकृत् प्रार्थये इति शिवम्।

श्रीजगन्नाथधाम, पुरी,<br>
दि० ७–२–१९७७

विदुषां विधेयः<br>
**श्रीचिन्तामणिमिश्रशर्म्मा**



# आमुखम्

चिरं जीवन्तु विपश्चिदपश्चिमाः प० श्रीचिन्तामणिमिश्राः, संस्कृतसंस्कृतिजीवातवः श्रीविश्वनाथदासमहोदयाश्च येषां प्रेरणया, परमोत्साहयत्नप्रभावमहिम्ना च प्रकाशनपथमिदानीमारोहति समग्रा शुक्लयजुर्वेदकाण्वसंहिता सायणभाष्यसंवलिता।

शुक्लयजुर्वेदसंहितायाः ( काण्वमाध्यन्दिनशाखाद्वयसंवलितायाः ) समहीधरभाष्यायाः प्रथमं प्रकाशनं तु वेबरेण १८५२ क्रिस्त्वब्दे व्यधीयत। ससायणभाष्या काण्वसंहिता पुनरंशत एव ( प्रारम्भाद्विंशाध्यायपर्यन्तम् ) १९१५ क्रिस्त्वब्दे माधवशास्त्रिभिर्वाराणस्यां प्राकाश्यमानायिता। महानेष आनन्दस्य विषयो यद् वाराणस्यामेवाद्य पूर्णभावं भजते ससायणभाष्यं ग्रन्थरत्नमेतत्।

एकैव शाखा ( नैकविंशतिर्नापि पञ्च ) शाकलशाखा ऋग्वेदस्य, षडेव शाखाः ( काठकमैत्रायणीकापिष्ठलतैत्तिरीयशाखाः कृष्णयजुर्वेदस्य, काण्वमाध्यन्दिनशाखे शुक्लयजुर्वेदस्य ) यजुर्वेदस्य शतशाखस्य, द्वे एव ( कौथुमराणायनीयशाखे ) साम्नः सहस्रशाखस्य, द्वे एव ( न नव शाखाः ) शाखे ( शौनकपैप्पलादशाखे ) अथर्ववेदस्यापि च यथाकथमपि च लभ्यन्ते, दृश्यन्ते, श्रूयन्ते वा। न जाने कः कदा कथमुद्धरिष्यति लुप्तास्ताः शाखा महाफलच्छायस्य भगवतो वेदकल्पतरोरिति। प्रकाशनमिदं फलेग्रहि भूयात् प्रेरयताच्च पण्डितप्रवरान् 'पाषण्डविवाद'—तिरोहितानां शाखानां सर्वासां च समुद्धाराय सद्विद्यानामित्यभ्यर्थ्यते भगवानाशुतोषः। साधयताच्च साध्यममरालये विराजमानं मूलप्रेरकं किमपि 'रामाज्ञा' महाः। धन्यवादार्हाः सन्ति सम्पूर्णानन्दसंस्कृतविश्वविद्यालयकुलपतयः श्रीकरुणापतित्रिपाठिनः, पुरीस्थश्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठव्याकरणप्राध्यापकाः श्रीदिवाकरशास्त्रिणः, भारतसर्वकारशिक्षामन्त्रालयाधिकारिणश्च येषां तत्तत्साहाय्यमन्तरेण नेदं ग्रन्थमाल्यं पूर्णतामभजिष्यत्।

माल्यमिदमिदानीं विश्वनाथाय भगवते समर्पयन् परमं तोषमनुभवति विबुधलोक इति।

विजयादशमी, २०३३ वि० सं०

**रामकरणशर्मा**
कुलपतिः
कामेश्वरसिंह-दरभङ्गा-संस्कृतविश्वविद्यालयस्य
दरभङ्गा ( विहार )

# अध्यायक्रमेण विषयसूची

## एकविंशोऽध्यायः

### ( सौत्रामणीयागः, अ० २१-२३ )



## द्वाविंशोऽध्यायः

### ( सौत्रामणीयागः )



## त्रयोविंशोऽध्यायः

### ( सौत्रामणीयागः )

## चतुर्विंशोऽध्यायः

### अश्वमेधयागः ( अ० २४–२७ )



## पञ्चविंशोऽध्यायः

### ( अश्वमेधयागः )

## षड्विंशोऽध्यायः

### ( अश्वमेधयागः )



## सप्तविंशोऽध्यायः

### ( अश्वमेधयागः )



## अष्टाविंशोऽध्यायः

### ( ग्राह्यग्रहादिमन्त्राः )

## एकोनत्रिंशोऽध्यायः

### ( अग्निचयनगता मन्त्राः )



## त्रिंशोऽध्यायः



## एकत्रिंशोऽध्यायः

## द्वात्रिंशोऽध्यायः

### ( सर्वमेधः )

## पञ्चत्रिंशोऽध्यायः

### ( पुरुषमेधः )



## षट्त्रिंशोऽध्यायः



## सप्तत्रिंशोऽध्यायः

## अष्टत्रिंशोऽध्यायः



## एकोनचत्वारिंशोऽध्यायः

## चत्वारिंशोऽध्यायः

### ( ईशा वास्योपनिषत् )

अत्र एक एवानुवाकः





### सायणभाष्योपेता

# शुक्लयजुर्वेदकाण्वसंहिता



## एकविंशोऽध्यायः

ॐ योगेश्वराय नमः । सच्चिदानन्दरूपाय श्रीगुरवे नमः ।
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

द्वादशाध्यायमारभ्य नवभिरध्यायैरग्निं निरूप्येदानीमेकविंशाध्यायमारभ्य त्रिभिरध्यायैरग्निगतत्वादनन्तरं सौत्रामणी प्रक्रियते । अत एवाऽऽमनन्ति—"अग्निं चित्वा सौत्रामण्या यजेत" इति । तत्र प्रथमेऽध्याये प्रथमेऽनुवाके सुरासन्धानादिमन्त्रा आम्नायन्ते ।

[ प्रथमोऽनुवाकः १-१३ ]

तत्र "स्वाद्वीन्त्वा" इति सुरा संसृज्यते । तथा च कात्यायनः—"संसृज्य स्वाद्वीन्त्वा" इति (अ० १९।१।२२) । अनुष्टुभा "सोमोऽसि" इत्यादिचतुर्भिर्यजुर्भिश्च मासरादिना सुरां [1]सन्धायेत्यर्थः । तथा च कल्पः—"तोक्मैर्मासरेण नग्नहुना च सुरां संसृज्य" इति । अङ्कुरिता यवास्तोक्मानि । अङ्कुरितानां व्रीहीणां सूक्ष्मं चूर्णं दध्ना तक्रेण वा मिश्रितं दर्भैः प्रच्छन्नं मासरम् । व्रीहीणामेव स्थूलं चूर्णं दर्भैः प्रच्छन्नं नग्नहुः । मन्त्राणां पाठस्तु—

**ॐ स्वाद्वीन्त्वा स्वादुना तीव्रान्तीव्रेणामृताममृतेन ।**
**मधुमतीम्मधुमता सृजामि सꣳ सोमेन ।**
**सोमोऽस्यश्विभ्याम्पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ॥ १ ॥**

स्वाद्वीम् । त्वा । स्वादुना । तीव्राम् । तीव्रेण । अमृताम् । अमृतेन ॥
मधुमतीम् । मधुमता । सृजामि । सम् । सोमेन ॥
सोमः । असि । अश्विभ्याम् । पच्यस्व । सरस्वत्यै । पच्यस्व । इन्द्राय । सुत्राम्णे । पच्यस्व ॥१॥

हे सुरे स्वाद्वीं स्वादुं रुचिकररसोपेताम्, तीव्रामुग्रगन्धोपेताम्, शीघ्रं मद्यस्य जनयित्रीं वा, अमृताममृतवद्वाप्यायनकरीम्, मधुमतीं मधुररसोपेताम्, त्वा त्वां स्वादुना रुचिकररसोपेतेन, तीव्रेण उग्रगन्धोपेतेन, अमृतेन अमृतत्वकारणेन, "अपाम सोमममृता अभूम" इत्यादिश्रुतेः[2] । मधुमता मधुररसोपेतेन,

---

१. सन्धानायेति उ. म्यु.        २. ऋ. ८।४८।३

सोमेन, "सोमो वा ओषधीनां राजा" इति श्रुतेः[१] सोमस्यौषधिराजत्वेन सोमशब्दोपलक्षितमासरादिना संसृजामि। यतस्त्वमेतादृशसोमत्वेन भावितमासरादिना युक्तत्वात् सोमोऽसि, अतस्त्वमश्विभ्याम् अश्व्यर्थं पच्यस्व। अत्र पाको विपरिणामः। तथा सरस्वत्यै सरस्वत्यर्थं पच्यस्व। तथा सुत्राम्णे सुष्ठु रक्षणाय इन्द्राय पच्यस्व। अत्र ब्राह्मणम्—

"स्वाद्वीं त्वा स्वादुनेति सुराꣳ संदधाति स्वदयत्येवैनां तीव्रां तीव्रेणेतीन्द्रियमेवास्मिन्नेतद् दधाति। अमृताममृतेनेति आयुरेवास्मिन्नेतद् दधाति। मधुमतीं मधुमतेति रसमेवास्यां दधाति, सृजामि सं सोमेनेति सोमरूपमेवैनां करोति। सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्येता वा एतं देवता अग्र यज्ञꣳ समभरꣳस्ताभिरेवैनꣳ सम्भरति" इति (श०, का० १२। प्र० ३। ब्रा० ४। अ० ७। ब्रा० ३। क० ५-६)। [ —अ० २१।१।१ ]

कात्यायनः—"परिषिञ्चति परीतो षिञ्चता" इति (अ० १९।१।२३)। श्यामाकसक्तून् त्रेधा विभज्य तृतीयमंशं सुराया उपरि विकीर्य तस्योपरि "परीतो षिञ्चता सुतम्" इत्यनेन मन्त्रेण पयः परिषिञ्चेदित्यर्थः। तथा च कल्पः—"सक्तूनां तृतीयेन परिकीर्य परीतो षिञ्चता सुतमित्येकस्यापो दुग्धेन परिषिञ्चति" इति। पाठस्तु—

**परीतो षिञ्चता सुतꣳ सोमो य उत्तमꣳ हविः।**
**दधन्वा यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः ॥ २ ॥**

**परि। इतः। सिञ्चत। सुतम्। सोमः। यः। उत्तमम्। हविः ॥**
**दधन्वान्। यः। नर्यः। अप्सु। अन्तः। आ। सुषाव। सोमम्। अद्रिभिः ॥ २ ॥**

यः प्रसिद्धः सोमः स एव उत्तमं हविर्भवति। दधन्वान् देवान् पोषयन्, स्वादुत्वादिकं धारयन् वा, यः प्रसिद्धः सोमः, नर्यः कर्माधिकारिणां नराणां हितकारी, तं सोमम् अन्तर्मध्ये अप्सु, व्यत्ययः। अद्रिभिः अभिषवपाषाणैश्च आसुषाव अभिषुणोति। सुतम् एव अभिषुतं सोमम् इतोऽनन्तरं हे परिषिक्तारः पयसा परिषिञ्चत। अत्र ब्राह्मणम्—

"परीतो षिञ्चता सुतमिति परिषिञ्चति सुत्यायै, सोमो य उत्तमꣳ हविरित्युत्तमं वा एतद्धविर्यत् सोम उत्तममेवैतꣳ हविष्करोति, दधन्वाँ यो नर्यो अप्स्वन्तरेत्यद्भिश्च ह्येषोऽन्तरेण च सूयते, सुषाव सोममद्रिभिरिति अद्रिभिर्वै सोमः सूयत" इति (श०, का० १२। प्र० ४। ब्रा० १। अ०७। ब्रा० २। क० १२)। [ —अ० १।२ ]

कात्यायनः—"वायोः पूतः" इति (अ० १९।२।८)। तिसृभिर्गायत्रीभिः परिस्रुतं पुनाति। अत्र विशेषो ब्राह्मणे श्रूयते—

"वायोः पूतः पवित्रेण प्राङ्क्सोमो अतिद्रुत इति सोमवामिनः पुनाति, यथारूपमेवैनं पुनाति। इन्द्रस्य युज्यस्सखेति यदेवास्य तेनेन्द्रियं वीर्यमपक्रान्तं भवति तदस्मिन् पुनर्दधाति। वायोः पूतः पवित्रेण प्रत्यङ्क्सोमो अतिद्रुत इति सोमाभिपूतस्य पुनाति, यथारूपमेवैनं पुनाति। इन्द्रस्य युज्यः सखेति यदेवास्य तेनेन्द्रियं वीर्यमपक्रान्तं भवति, तदस्मिन् पुनर्दधाति। पुनाति ते परिस्रुतमिति समृद्धिकामस्य" इति (श०, का० १२। प्र० ३। ब्रा० ४। अ० ७। ब्रा० ३। क० ९-११)।

---

१. तुलना—तै. ब्रा. ३।१।४।३; मा. सं. गो. ब्रा. २।१।१७; मं. ब्रा. २।८।३।४

पुरा[1] सोमयागकाले यः सोमं वमति स सोमवामी। यस्य तु पुनः सोमो न जीर्यते अधोऽङ्ग-द्वारेण निर्गतो वा स सोमाभिपूतः। स्पष्टमन्यत्। आसां पाठस्तु—

वायोः पूतः पवित्रेण प्राङ्क्सोमो अतिद्रुतः।
इन्द्रस्य युज्यस्सखा॥ ३॥
वायोः पूतः पवित्रेण प्रत्यङ्क्सोमो अतिद्रुतः।
इन्द्रस्य युज्यस्सखा॥ ४॥
पुनाति ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता।
वारेण शश्वता तना॥ ५॥

वायोः। पूतः। पवित्रेण। प्राङ्। सोमः। अतिद्रुतः॥
इन्द्रस्य। युज्यः। सखा॥ ३॥
वायोः। पूतः। पवित्रेण। प्रत्यङ्। सोमः। अतिद्रुतः॥
इन्द्रस्य। युज्यः। सखा॥ ४॥
पुनाति। ते। परिस्रुतम्। सोमम्। सूर्यस्य। दुहिता॥
वारेण। शश्वता। तना॥ ५॥

वायोः विभक्तिव्यत्ययः। उदरान्तर्वर्त्तिना वायुना पवित्रेण पावनहेतुना पूतः सन् प्रागञ्चति। प्राङ्मुखो भूत्वा अतिद्रुतः [2]अतिस्रुतः। इन्द्रस्य व्यत्ययः। इन्द्रेण युज्यः संयोगार्हः, सखा[3] सखिवत् ख्यायत इत्यर्थः। वायोरित्यादि समानम्। प्रत्यगञ्चतीति प्रत्यङ्, अधोमुखः सन्, स्पष्टमन्यत्। तेन समृद्धिकामस्य यजमानस्य. तव सम्बन्धिनं परिष्टुतम् अभिषवणकाल उद्गतसोमं सूर्यस्य सर्वस्य जगतः प्रेरकस्य, दुहिता, "श्रद्धा वै सूर्यस्य दुहिता" इत्यादिश्रुतेः। (श०,का० १२। प्र० ३। ब्रा० ४। अ० ७। ब्रा० ३। क० ११)। तना विस्तृतेन, धननिमित्तेन[4] योजनम्, तनेति धननामसु[5] पाठात्। शश्वता शाश्वतिकेन वारेण गोऽश्ववालेन पुनाति। [—अ० २१।१।३-५]

कात्यायनः—"पयोऽजाविलोमपवित्रेण ब्रह्म क्षत्रमिति" इति (अ० १९।२।१०)। पुनातीत्यनु-वर्त्तते। पाठस्तु—

ब्रह्म क्षत्रम्पवते तेज इन्द्रियꣳ सुरया सोमस्सुत आसुतो मदाय।
शुक्रेण देव देवताः पिपृग्धि रसेनान्नं य्यजमानाय धेहि॥ ६॥

ब्रह्म। क्षत्रम्। पवते। तेजः। इन्द्रियम्। सुरया। सोमः। सुतः। आसुतः। मदाय॥
शुक्रेण। देव। देवताः। पिपृग्धि। रसेन। अन्नम्। यजमानाय। धेहि॥ ६॥

ब्रह्म ब्राह्मणत्वजातिः। क्षतात् त्रायत इति क्षत्रम्, क्षत्रियत्वसामान्यं पवते उत्पादयतीत्यर्थः। तथा चाऽऽमनन्ति—"ब्रह्म एव तत् क्षत्रं जनयति" इति (श०,का० १२। प्र० ३। ब्रा० ४। अ० ७।

---

१. यागसमाप्तेरित्यध्याहार्यम्। २. अभिगत इति उ. म्यु.।
३. सखा च उ. म्यु.। ४. 'इति वा' इति पाठाध्याहारे सुगमोऽर्थः।
५. निघ० २।१०

ब्रा० ३। क० १२ )। तत् क्षत्रं तेजः पवते। तच्च तेजः इन्द्रियं वीर्यं पवते, तेजो वीर्यहेतुभूतया सुरया सोमः सुतः अभिषुतः आसुतः तीक्ष्णीकृतश्च मदाय देवानां मदार्थं भवति। तस्माद् हे देव द्युतिमन्[1] सोम शुक्रेण निर्मलेन दीप्तिमता मन्त्रजनितेन रूपेण देवताः पिपृग्धि प्रीणीहि। यद्वा संपृक्ताः कुर्वित्यर्थः। रसेन[2] युक्तमन्नं रसमन्नं वा यजमानाय धेहि यजमाने स्थापय। तथा च ब्राह्मणम्—

"ब्रह्म क्षत्रं पवत इति पयः पुनाति। ब्रह्मण एव तत् क्षत्रं जनयति। ब्रह्मणो हि क्षत्रं जायते। तेज इन्द्रियमिति। तेज ( स ) एवास्मिन्निन्द्रियं वीर्यं दधाति। सुरया सोम इति। सुरया हि सोमः सुत आसुत इत्यासुताद्धि सूयते। मदायेति। मदाय वाव सोमो मदाय सुरोभावेव सोममदं च सुरामदं चावरुन्धे शुक्रेण देव देवताः पिपृग्धीति। शुक्रेण देव देवताः प्रीणीहि इत्येवैतदाह रसेनान्नं यजमानाय धेहि इति रसमेवान्नं यजमाने दधाति" इति ( श०, का० १२। प्र० ३। ब्रा० ४। अ० ७। ब्रा० ३। क० १२ )। [—अ० २१।१।६ ]

कात्यायनः—"पयोग्रहान् गृह्णाति कुविदङ्गेति" इति ( अ० १९।२।१२ )। पाठस्तु—

कुविदङ्ग यवमन्तो यवञ्चिद्यथा दान्त्यनुपूर्वं वियूय।
इहेहैषाङ्कृणुहि भोजनानि ये बर्हिषो नम उक्तिन्न जग्मुः।
उपयामगृहीतोऽस्यश्विभ्यान्त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे।
एष ते योनिस्तेजसे त्वा वीर्याय त्वा बलाय त्वा ॥ ७ ॥

कुवित्। अङ्ग। यवमन्तः। यवम्। चित्। यथा। दान्ति। अनुपूर्वम्। वियूय ॥
इह। इह। एषाम्। कृणुहि। भोजनानि। ये। बर्हिषः। नम उक्तिम्। न। जग्मुः ॥
उपयामगृहीतः। असि। अश्विभ्याम्। त्वा। सरस्वत्यै। त्वा। इन्द्राय। त्वा। सुत्राम्णे ॥
एषः। ते। योनिः। तेजसे। त्वा। वीर्याय। त्वा। बलाय। त्वा ॥ ७ ॥

अङ्ग हे हविरात्मकपयः, यथा लोके प्रथितयवमन्तो यवादिधान्यवन्तः[3] कुविच्छब्दोऽनुक्तसमुच्चयार्थः। अन्यान्यपि गोधूमादिधान्यानि। अनुपूर्वं तत् परिपाकानुक्रमेण वियूय विविच्य दान्ति लुनन्ति, तथा त्वमपि अयं श्रद्धालुरिति विचिन्त्य ये यजमाना बर्हिषो यागस्य नमउक्तिं नमस्कारवचनं हविर्लक्षणान्नवचनं[4] न जग्मुः न प्राप्नुवन्ति श्रद्धालवो न भवन्तीत्यर्थः। तेषामेषां सम्बन्धीनि भोजनानि भोग्यानि धनानि तेभ्यः [5]परिच्छिद्य इहेह अस्मिन् श्रद्धालौ यजमाने तानीह सर्वाणि, वीप्सा ग्रहबहुत्वापेक्षया वा, कृणुहि कुरु। अतो हे पयस्त्वम् उपयामगृहीतः = उपयमयतीति उपयामो ग्रहः,। पृथिवी (कार्य) भव[6]पात्रविशेषो वा। "इयं वा उपयाम"—इति श्रुतेः ( श०, का० ४। प्र० १। ब्रा० २। अ० १। ब्रा० २। क० ८)। तेन गृहीतो भवसि। अश्विभ्यामश्विनोरर्थे त्वा त्वां गृह्णामीति शेषः। तथा सरस्वत्यै त्वां गृह्णामि। तथा सुत्राम्णे सुष्ठु रक्षकायेन्द्राय त्वां गृह्णामि। हे आश्विनग्रह ते तव एष प्रदेशो योनिः स्थानम्, अस्मिन् स्थाने तेजसे तेजःसिद्ध्यर्थं त्वां सादयामि। हे

१. ब्रह्म उ. म्यु.।
२. रस उ. म्यु.।
३. कृषकाः उ. म्यु.।
४. वा—अध्याहारः।
५. विच्छिद्य उ. म्यु.।
६. 'कार्यक्षमपात्र' पाठे इति सुगमोऽर्थः

सारस्वतग्रह वीर्याय वीर्यसिद्धयर्थं त्वां सादयामि । हे सुत्रामेन्द्रग्रह एष तव स्थानम्, अस्मिन् स्थाने बलाय त्वां सादयामि । तथा च ब्राह्मणम्—

"कुविदङ्ग यवमन्तो यवञ्चिदिति पयोग्रहान् गृह्णाति । सोमाꣳशवो वै यवाः सोमः पयः सोमेनैवैनꣳ सोमं करोत्येकया गृह्णाति एकधैव यजमाने श्रियं दधाति[1]" इति ( श०, का० १२ । प्र० ३ । ब्रा० ४ । अ० ७ । ब्रा० ३ । क० १३ ) । [—अ० २१।१।७ ]

कात्यायनः—"सौरान्नाना हि वामिति"इति (अ० १९।२।२०) । सुराग्रहानित्यर्थः । पाठस्तु—

नाना हि वान्देवहितꣳ सदस्कृतम्मा सꣳसृक्षाथाम्परमे व्योमन् ।
सुरा त्वमसि शुष्मिणी सोम एष मा मा हिꣳसीस्स्वाँ योनिमाविशन्ती ।
उपयामगृहीतोऽस्याश्विनन्तेजस्सारस्वतँ व्वीर्यमैन्द्रम्बलम् ।
एष ते योनिर्मोदाय त्वानन्दाय त्वा महसे त्वा ॥ ८ ॥

नाना । हि । वाम् । देवहितम् । सदः । कृतम् । मा । संसृक्षाथाम् । परमे । व्योमन् ॥
सुरा । त्वम् । असि । शुष्मिणी । सोमः । एषः । मा । मा । हिंसीः । स्वाम् । योनिम् । आविशन्ती ॥
उपयामगृहीतः । असि । आश्विनम् । तेजः । सारस्वतम् । वीर्यम् । ऐन्द्रम् । बलम् ॥
एषः । ते । योनिः । मोदाय । त्वा । आनन्दाय । त्वा । महसे । त्वा ॥ ८ ॥

हि यस्मात् हे पयः सुरे वां युवयोर्देवहितं देवानां पथ्यं देवैर्वा स्थापितं सदो निवासस्थानं नाना पृथक् कृतम्, "द्वे हि वेदी भवतः" इति श्रुतेः (श०, का० १२। प्र० ३। ब्रा० ४। अ० ७। ब्रा० ३। क० १४ ) । तस्मात् परमे उत्कृष्टतमे व्योमन् व्योमनि स्थाने मा संसृक्षाथाम् । ( परमे व्योमन् ) सुरा त्वमसि शुष्मिणी संसर्गं मा कुरुतम् । अपि च हे गृह्यमाणद्रव्यविशेष त्वं शुष्मिणी बलवती क्रूरेव सुरासि । "सोमः पयः" इति श्रुतेः (श०,का० १२। प्र० ३। ब्रा० ४। अ० ७। ब्रा० ३। क० १३)। सोमः पय एष प्रख्यातगुणः शान्तः । अतोऽपि युवयोः संसर्गो न युक्त इत्यर्थः । हे सुरे स्वां स्वकीयाम् असाधारणभूतां योनिं स्थानमाविशन्ती त्वं मा मां यजमानं मा हिंसीः हिंसां मा कुरु । किं च हे गृह्यमाणद्रव्यविशेष उपयामगृहीतः उपयामेन गृहीतः सोमोऽसि । अश्विसम्बन्धि आश्विनं तेजश्च त्वमसि । तथा सरस्वत्याः सम्बन्धि सारस्वतं वीर्यं सामर्थ्यं त्वमसि । तथैवेन्द्रसम्बन्धि ऐन्द्रं बलं त्वमसि । हे आश्विनग्रह ते तव एष प्रदेशो योनिः स्थानम्, अस्मिन् स्थाने त्वां मोदाय हर्षाय आसादयामि । "एष ते योनिः" इति उत्तरत्रानुकृष्यते । हे सारस्वतग्रह त्वा त्वामानन्दायाऽऽसादयामि । हे ऐन्द्रग्रह त्वां महसेऽर्थे आसादयामि । तथा [2]च ब्राह्मणम्—

"नाना हि वां देवहितꣳ सदस्कृतमिति सुराग्रहान् गृह्णाति । नाना हि सोमश्च सुरा च, देवहितमिति देवहिते ह्येते, नाना सदस्कृतमिति द्वे हि वेदी भवतो मा सꣳसृक्षाथाम्, परमे व्योमन्निति पाप्मनैवैनं व्यावर्त्तयति, सुरा त्वमसि शुष्मिणीति सुरामेव सुरां करोति, सोम एष इति सोममेव सोमं करोति मा मां हिंसीः, स्वां योनिमाविशन्तीति, यथा योन्यैवैनां व्यावर्त्तयत्यात्मनोऽहिंसाया" इति (श०, का० १२ । प्र० ३ । ब्रा० ४ । अ० ७ । ब्रा० ३ । क० १४) । [—अ० २१।१।८]

---

१. श्रीर्हि पयः उ. म्यु. ।

२. ब्राह्मणं च उ. म्यु. ।

कात्यायनः—"आश्विनमाश्वत्थेन गोधूमकुवलचूर्णानि चावपति तेजोऽसीति, सारस्वतमौदुम्बरेणोपवाकबदरचूर्णानि च वीर्यमसीत्यैन्द्रं नैयग्रोधेन यवकर्कन्धुचूर्णानि च बलमसीति" इति। ( अ० १९।२।१६–१९ ) । पाठस्तु—

**तेजो॑ऽसि॒ तेजो॒ मयि॑ धेहि वी॒र्य॑मसि वी॒र्य॒म्मयि॑ धेहि॒ बल॑मसि॒ बल॒म्मयि॑ धे॒हि ॥ ९ ॥**

तेजः । असि । तेजः । मयि । धेहि । वीर्यम् । असि । वीर्यम् । मयि । धेहि । बलम् । असि । बलम् । मयि । धेहि ॥ ९ ॥

हे आश्विनग्रह त्वं यत् तेजोऽसि, अतस्तेजो मयि धेहि धारय पोषय वा। हे सारस्वतग्रह त्वं वीर्यमसि, अतो वीर्यं मयि धेहि। हे ऐन्द्रग्रह त्वं बलमसि, अतो बलं मयि धेहि। [—अ० २१।१।९]

कात्यायनः—"श्रोणाल्योजोऽसीति वृकव्याघ्रसिंहलोमभिः प्रतिमन्त्रम्" इति ( अ० १९।२।२२–२३ ) । पाठस्तु—

**ओजो॒ऽस्योजो॒ मयि॑ धेहि म॒न्युर॑सि म॒न्युम्मयि॑ धेहि॒ सहो॑ऽसि॒ सहो॒ मयि धेहि ॥ १० ॥**

ओजः । असि । ओजः । मयि । धेहि । मन्युः । असि । मन्युम् । मयि । धेहि । सहः । असि । सहः । मयि । धेहि ॥ १० ॥

ओज इन्द्रियसामर्थ्यम्, मन्युः क्रोधः, सहः प्राणबलम्, स्पष्टमन्यत्। [—अ० २१।१।१०]

कात्यायनः—"पावयतः श्येनपत्राभ्यां या व्याघ्रमिति" इति ( अ० १९।२।२६ ) । अध्वर्युप्रतिप्रस्थातारौ श्येनपत्राभ्यां यजमानं पावयतः । पाठस्तु—

**या व्या॒घ्रँ व्विषू॑चिको॒भौ वृक॑ञ्च॒ रक्ष॑ति ।**
**श्ये॒नम्प॑त॒त्रिण॑ꣳ सि॒ꣳहꣳ सेमम्पा॒त्वꣳह॑सः ॥ ११ ॥**

या । व्याघ्रम् । विषूचिका । उभौ । वृकम् । च । रक्षति ॥
श्येनम् । पतत्रिणम् । सिंहम् । सा । इमम् । पातु । अंहसः ॥ ११ ॥

या विषूचिका भुक्तस्यान्नस्याजरताहेतुव्याधिविशेषो व्याघ्रं शार्दूलम्, वृकोऽरण्यश्वा, तं च उभौ रक्षति। तथा श्येनं [1]शशादं पतत्रिणं पक्षिणं सिंहं मृगेन्द्रं च रक्षति। अत एव व्याघ्रादीनां कदाचिदप्यजरतादोषो नास्ति। सा विषूचिका इमं यजमानम् अंहसः सर्वव्याधिहेतुभूतात् पापात् पातु। [—अ० २१।१।११]

कात्यायनः—"अग्निं प्रेक्षयति यदा पिपेषेति" इति ( अ० १९।२।२७ ) । पाठस्तु—

**यदा॑ पि॒पेष॑ मा॒तर॑म्पु॒त्रः प्रमु॑दि॒तो धय॑न् ।**
**ए॒तत्तद॑ग्ने अनृ॒णो भ॑वा॒म्यह॑तौ पि॒तरौ॑ मया॑ ॥ १२ ॥**

---

१. शामानम् उ. म्यु.।

यत् । आ । पिपेष । मातरम् । पुत्रः । प्रमुदितः । धयन् ॥
एतत् । तत् । अग्ने । अनृणः । भवामि । अहतौ । पितरौ । मया ॥ १२ ॥

यत् यदा धयन् स्तनं पिबन् प्रमुदितो हृष्टः पुत्रोऽहं मातरमापिपेष हस्ताभ्यां [1]घर्षणं घट्टनं च कृतवानस्मि, हे अग्ने तत् आपेषणं तत्कृतं पापं च [2]एतत्तव पुरतो [3]विहितम्, अतः परमनृणः ऋणत्रयविनिर्मुक्तो भवामि। तत्प्रसादात् पितरौ मातापितरौ मया अहतावहिंसितौ भवेताम्। ब्राह्मणे(न)तु "या व्याघ्रम्" इत्यादिमन्त्रद्वयमपि यजमानपावन एव विनियुक्तम्। तद्यथा—

"या व्याघ्रं विषूचिकोभौ वृकं च रक्षति। श्येनं पतत्रिण॑ सि॑ह॑ सेमं पात्व॑हस इति। यदापिपेष मातरं पुत्रः प्रमुदितो धयन्। एतत्तदग्ने अनृणो भवाम्यहतौ पितरौ मयेत्यध्वर्युश्च प्रतिप्रस्थाता च ( यजमानेन ) जघनेन वेदिं प्राञ्चमावृत्तं यजमान॑ श्येनपत्राभ्यामूर्ध्वं चावाञ्चञ्च पावयत" इति ( श०, का० १२। प्र० ३। ब्रा० ४। अ० ७। ब्रा० ३। क० २१-२२ )।
[ —अ० २१।१।१२ ]

कात्यायनः—"पयोग्रहसंमर्शन॑ संपृचस्थ विपृचस्थेति सौराणाम्" इति ( अ० १९।२।२८-२९ )। तथाच ब्राह्मणम्—

"संपृचस्थ सं मा भद्रेण पृङ्क्तेति पयोग्रहान् संमृशति श्रियैवैनं यशसा समर्द्धयति विपृचस्थ वि मा पापेन पृङ्क्तेति सुराग्रहान् पाप्मनैवैनं व्यावर्त्तयति" इति ( श०, का० १२। प्र० ३। ब्रा० ४। अ० ७। ब्रा० ३। क० २२ )। मन्त्रपाठस्तु—

सम्पृच॑ स्थ॒ सम्मा॑ भ॒द्रेण॑ पृङ्क्त।
वि॒पृच॑ स्थ॒ वि मा॑ पा॒पेन॑ पृङ्क्त ॥ १३ ॥

सम्पृचः। स्थ। सम्। मा। भद्रेण। पृङ्क्त॥
विपृचः। स्थ। वि। मा। पापेन। पृङ्क्त॥ १३॥

हे पयोग्रहा ये यूयं संपृचस्थ सम्यक् पृक्ता भवथ। अतो यूयं मां भद्रेण भजनीयेन संपृक्त सम्यक् योजयत। हे सुराग्रहाः ये यूयं विपृचो वियोगकारिणः स्थ भवथ। ते यूयं मा मां पापेन विपृङ्क्त वियोजयत। [—अ० २१।१।१३]

इत्येकविंशेऽध्याये प्रथमोऽनुवाकः।

[ द्वितीयोऽनुवाकः १४-३३ ]

अथ द्वितीयेऽनुवाके सौत्रामण्याः स्वरूपप्रदर्शनार्था विंशत्यनुष्टुप्छन्दःप्रचछन्दस्का मन्त्रा आम्नायन्ते। तत्रायमाद्यो मन्त्रः—

दे॒वा य॒ज्ञम॑तन्वत भेष॒जम्भि॒षजा॒श्विना॑।
वा॒चा सर॑स्वती भि॒षगिन्द्रा॑येन्द्रि॒याणि॒ दध॑तः ॥ १४ ॥

देवाः। यज्ञम्। अतन्वत। भेषजम्। भिषजा। अश्विना॥
वाचा। सरस्वती। भिषक्। इन्द्राय। इन्द्रियाणि। दधतः॥ १४॥

---

१. कर्षणम् उ. म्यु.। २. त्वत् उ. म्यु.।
३. निहितम् उ. म्यु.।

इन्द्रस्यानुपहूतसोमपानादस्वस्थेन्द्रियवीर्यस्य पुनस्तत्प्रीत्यर्थं भैषज्यकर्तारो देवाः, तथा च ब्राह्मणे श्रूयते—

"विश्वरूपं वै त्वाष्ट्रमिन्द्रोऽहँस्तन्त्वष्टा हतपुत्रोऽभ्यचरत्सोऽभिचरणीयमपेन्द्रँ सोममाहरत्त-स्येन्द्रो यज्ञवेशसङ्कृत्वा प्रासहा सोममपिबत्स विष्वङ् व्याच्र्छत्तस्येन्द्रियं वीर्यमङ्गादङ्गादस्रवद्" इत्यारभ्य "तन्देवा उपसंजग्मिरे श्रेष्ठो वैनोऽयमभूत्तमिमं पाप्माऽविदद्धन्तेमं भिषज्यामेति" इति ( श०, का० १२ । प्र० ३ । ब्रा० २ । अ० ७ । ब्रा० १ । क. १ ) ।

यज्ञं सौत्रामणीनामकम् अतन्वत विस्तारितवन्तः अकार्षुरित्यर्थः, भिषजा देवानां भिषजाव-श्विनौ, "अश्विनौ [1]च देवानां भिषजौ" इति श्रुतेः ( श०, का० १२। प्र० ३ । ब्रा० ३ । अ० ७ । ब्रा० २ । क० ३ ) । भेषजमुपद्रवपरिहारार्थमौषधरूपं यज्ञम् [2]अतन्वाताम् । तथा सरस्वती भिषग्भूता, वाचा त्रयीलक्षणया भेषजमतन्वत इत्यत उक्तम् । इन्द्राय इन्द्रियाणि दधतः । "लक्षणहेत्वोः क्रियायाः" ( पा० ३।२।१२६ ) इति शतृप्रत्ययः । इन्द्रियधारणाद्धेतोरेते देवा इमं यज्ञमकुर्वन्नित्यर्थः । तथा च ब्राह्मणम्—"इन्द्रस्य वै यत्रेन्द्रियाणि वीर्याणि व्युदक्रामँस्तानि देवा एतेनैव यज्ञेन पुनः समदधुः" इति (श०, का० १२ । प्र० ३ । ब्रा० ५ । अ० ८। ब्रा० १। क० १) ।

[ —अ० २१।२।१ ]

द्वितीयमन्त्रपाठस्तु—

**दीक्षायै रूपँ शष्पाणि प्रायणीयस्य तोक्मानि ।**
**क्रयस्य रूपँ सोमस्य लाजास्सोमाँशवो मधु ॥ १५ ॥**

दीक्षायै । रूपम् । शष्पाणि । प्रायणीयस्य । तोक्मानि ॥
क्रयस्य । रूपम् । सोमस्य । लाजाः । सोमांशवः । मधु ॥ १५ ॥

सद्यः प्ररूढव्रीहयः शष्पाणि । दीक्षायै दीक्षणीयेष्ट—[3]रूपं द्रव्यस्य यागरूपत्वात् । नवप्ररूढा यवास्तोक्मानि प्रायणीयस्य रूपं सोमस्य सम्बन्धिनं[4] क्रयस्य लाजा रूपं सोमांशवः सोमस्य सूक्ष्मा-वयवाः मधु अमृतम् ।

[ —अ० २१।२।२ ]

अथ तृतीयः—

**आतिथ्यरूपम्मासरम्महावीरस्य नग्नहुः ।**
**रूपमुपसदामेतत्तिस्रो रात्रीस्सुरा सुता ॥ १६ ॥**

आतिथ्यरूपम् । मासरम् । महावीरस्य । नग्नहुः ॥
रूपम् । उपसदाम् । एतत् । तिस्रः । रात्रीः । सुरा । सुता ॥ १६ ॥

व्रीहिश्यामाकचूर्णौदनानां संसर्गे (ण[5]) मासरं भवति । तथाऽऽतिथ्यस्य रूपं यवानां स्थूलं चूर्णं नग्नहुस्तन्महावीरस्य सोमपूरणभाण्डविशेषस्य रूपम् । तिस्रो रात्रीः । "कालाध्वनोरत्यन्त-

---

१. वै उ. म्यु. ।
२. अपरम् उ. म्यु. ।
३. 'ष्टि' पाठे सुगमोऽर्थः ।
४. 'नः' पा० सु० ।
५. ण. उ. म्यु.

संयोगे" (पा० २।३।५) इति द्वितीया। सुता अभिषुता, सुरा उपसदामुपसद्यमानानाम् एतत् प्रसिद्धं रूपम्। [—अ० २१।२।३]

अथ चतुर्थः—

सोम॑स्य रू॒पङ्क्री॒तस्य॑ परि॒स्रुत् परि॑षिच्यते।
अ॒श्विभ्या॑न्दु॒ग्धम्भे॑ष॒जमिन्द्रा॑यै॒न्द्र१॒ सर॑स्वत्या॥ १७॥

सोमस्य। रूपम्। क्रीतस्य। परिस्रुत्। परिषिच्यते॥
अश्विभ्याम्। दुग्धम्। भेषजम्। इन्द्राय। ऐन्द्रम्। सरस्वत्या॥ १७॥

क्रीतस्य सोमस्य यत् परिस्रुत् परिस्रवणं परिषिच्यते तत् क्रीतस्य सोमस्य रूपं भवति। अश्विभ्यां दुग्धं पयो भेषजमिन्द्राय दुग्धं पयः अर्थात् सरस्वत्या रूपं भवतीत्यर्थः। [—अ० २१।२।४]

अथ पञ्चमः—

आ॒स॒न्दी रू॒प१॒ रा॑जास॒न्द्यै वेद्यै॑ कु॒म्भी सु॒राधानी॑।
अन्त॑र उत्तरवे॒द्या रू॒पङ्का॑रोत॒रो भि॒षक्॥ १८॥

आसन्दी। रूपम्। राजासन्द्यै। वेद्यै। कुम्भी। सुराधानी॥
अन्तरः। उत्तरवेद्याः। रूपम्। कारोतरः। भिषक्॥ १८॥

राजासन्द्यै राजासन्द्याः, आसन्दी "राष्ट्रं वा आसन्दी" इति श्रुतेः (श०, का० १२। प्र० ४। ब्रा० २। अ० ८। ब्रा० ३। क० ६)। सूक्ष्मो मन्त्रो वा तद्रूपम्, वेद्यै वेद्याः[1] सौमिकाया वेदेः सुराधानी सुराधानवती कुम्भी रूपम्, अन्तरो मध्यम्, उत्तरवेद्या रूपम्, कारोतरः गोचर्ममयः सुराधारको वराहमुखः पदार्थविशेषः, सुरापावको भिषग् यजमानस्य रूपमिति शेषः। [—अ० २१।२।५]

अथ षष्ठः—

वे॒द्या वेदि॒स्सम॑ाप्यते ब॒र्हिषा॑ ब॒र्हिरि॑न्द्रि॒यम्।
यू॒पे॑न॒ यू॒प॑ आप्यते॒ प्रणी॑तो अ॒ग्निर॒ग्निना॑॥ १९॥

वेद्या। वेदिः। सम्। आप्यते। बर्हिषा। बर्हिः। इन्द्रियम्॥
यूपेन। यूपः। आप्यते। प्रणीतः। अग्निः। अग्निना॥ १९॥

वेद्या अत्रत्यया वेदिः सौमिकी समाप्यते। अनेन बर्हिषा इन्द्रियम् इन्द्रसम्बन्धिबर्हिः समाप्यते। अनेन यूपेन यूपो मुख्यः समाप्यते। अनेनाग्निना मुख्योऽग्निः प्रणीतो भवति। [—अ० २१।२।६]

अथ सप्तमः—

ह॒वि॒र्धा॒नँ॒ यद॒श्विनाग्नी॑ध्रँ॒ यत्सर॑स्वती।
इन्द्रा॑यै॒न्द्र१॒ सद॑स्कृ॒तम्प॑त्नी॒शाल॒ङ्गार्ह॑पत्यः॥ २०॥

---

१. वेदिकायाः उ. म्यु.

हविर्धानम् । यत् । अश्विना । आग्नीध्रम् । यत् । सरस्वती ।।
इन्द्राय । ऐन्द्रम् । सदस्कृतम् । पत्नीशालम् । गार्हपत्यः ।। २० ।।

अश्विना अश्विनौ देवतेति यत् तेन हविर्धानं समाप्यते । सरस्वती देवतेति यत् तेनाऽऽग्नीध्रं समाप्यते । यदैन्द्रमिन्द्रदैवत्यं हविस्तेनेन्द्राय इन्द्रार्थं सता हविषा ऐन्द्रं मुख्यं हविः समाप्यते इति योजनीयम् । यत् सदस्कृतमिन्द्राय तेनान्नेन इन्द्राय सदस्कृतं मुख्यं समाप्यते । गार्हपत्यः पत्नीशालं पत्नीशालया समाप्यते इत्यर्थः । [—अ० २१।२।७ ]

अथाष्टमः—

प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीर्यज्ञस्य ।
प्रयाजेभिरनुयाजान् वषट्कारेभिराहुतीः ॥ २१ ॥

प्रैषेभिः । प्रैषान् । आप्नोति । आप्रीभिः । आप्रीः । यज्ञस्य ।।
प्रयाजेभिः । अनुयाजान् । वषट्कारेभिः । आहुतीः ।। २१ ।।

प्रैषेभिरेतैः[1]................................... [—अ० २१।२।८ ]

अथ नवमः—

पशुभिः पशूनाप्नोति पुरोळाशैर्हवींष्या ।
छन्दोभिस्सामिधेनीर्याज्याभिर्वषट्कारान् ।। २२ ।।

पशुभिः । पशून् । आप्नोति । पुरोडाशैः । हवींषि । आ ।।
छन्दोभिः । सामिधेनीः । याज्याभिः । वषट्कारान् ।। २२ ।।

पशुभिः पशून् मुख्यानाप्नोति । पुरोडाशैरेतैर्मुख्यान् पुरोडाशानाप्नोति । हविर्भिरेतैर्हवींष्याप्नोति । छन्दोभिरेतैश्छन्दांस्याप्नोति । सामिधेनीभिः समिन्धनार्थाभिः सामिधेनीराप्नोति । याज्याभिस्ता याज्या आप्नोति । एतैर्वषट्कारैः–( वषट्कारा )स्तान् वषट्कारानाप्नोति ।
[—अ०२१।२।९]

अथ दशमः—

धानाः करम्भस्सक्तवः परीवापः पयो दधि ।
सोमस्य रूपꣳ हविष आमिक्षा वाजिनम्मधु ।। २३ ।।

धानाः । करम्भः । सक्तवः । परीवापः । पयः । दधि ।।
सोमस्य । रूपम् । हविषः । आमिक्षा । वाजिनम् । मधु ।। २३ ।।

---

१. अस्य सायणभाष्यं नोपलब्धम् इति महीधरभाष्यमुपादीयते—
प्रैषेभिः प्रैषैः प्रैषानाप्नोति । आप्रीभिः प्रयाजयाज्याभिर्यज्ञस्याप्रीराप्नोति । प्रयाजेभिरित्यादिवाक्यचतुष्टयस्योत्तरपदलोपश्छान्दसः । प्रयाजेभिः प्रयाजैः प्रयाजानाप्नोति । अनुयाजैरनुयाजानाप्नोति । वषट्कारेभिर्वषट्कारानाप्नोति ; आहुतिभिराहुतीराप्नोति । प्रैषादीनामुभयत्र सद्भावात् ( मा० यजु० सं० १९।१९ ) इति ।

दधिमिश्रिताः करम्भाः सक्तवः, करम्भाः यवविकाराः, तानाप्नोति। सक्तवः परीवापो गोधूमः, व्यत्ययः, परिवापमाप्नुवन्ति। पयो दध्याप्नोति। यद् वा पयो दध्नो रूपमित्यर्थः। सोमस्य सौम्यस्य रूपं हविषः आमिक्षा रूपम्। वाजिनं व्यत्ययः, वाजिनो रूपम् मधु। [—अ० २१।२।१०]

अथैकादशः —

धानानां॑ रूपङ्कुवलम्परीवापस्य॑ गोधूमाः।
सक्तूनां॑ रूपम्बदरमुपवाकाः करम्भस्य॑ ॥ २४ ॥

धानानाम्। रूपम्। कुवलम्। परीवापस्य। गोधूमाः॥
सक्तूनाम्। रूपम्। बदरम्। उपवाकाः। करम्भस्य॥ २४॥

धानानां कुवलम्, कुवलं बदरविशेषो रूपम्। परीवापस्य गोधूमा रूपम्। सक्तूनां बदरं रूपम्। करम्भस्य उपवाका यवा रूपम्। [—अ० २१।२।११]

अथ द्वादशः —

पय॑सो रूपँय्यद्यवा॑ दध्नो रूपङ्कर्कन्धूनि।
सोम॑स्य रूपँव्वाजिनं॑ सौम्यस्य॑ रूपमामिक्षा॑ ॥ २५ ॥

पयसः। रूपम्। यत्। यवाः। दध्नः। रूपम्। कर्कन्धूनि॥
सोमस्य। रूपम्। वाजिनम्। सौम्यस्य। रूपम्। आमिक्षा॥ २५॥

यत् यवास्ते पयसो रूपम्। दध्नः कर्कन्धूनि रूपम्। वाजिनं सौम्यस्य रूपम्। सौम्यस्य हविष आमिक्षा रूपम्। [—अ० २१।२।१२]

अथ त्रयोदशः —

आश्रा॑वयेति॑ स्तोत्रिया॑ः प्रत्याश्रावो अनु॑रूपः।
यजेति॑ धाय्यारूपम्प्रगाथा ये॑ यजामहाः॥ २६ ॥

आश्रावय। इति। स्तोत्रियाः। प्रत्याश्रावः। अनुरूपः॥
यज। इति। धाय्यारूपम्। प्रगाथाः। ये। यजामहाः॥ २६॥

अथ [1]मन्त्रसमिदुच्यते—आश्रावयेति। इतिशब्दो विवक्षितार्थंप्रदर्शनार्थः। स्तोत्रियाः सामाश्रयाः स्तावका मन्त्राः। अस्तु श्रौषट् इत्यनुरूपाः प्रत्याश्रावो, यजेति धाय्यारूपम्। शंस्यदेवताः सन्निधायकाः। प्रक्षेप्तव्या मन्त्रा धाय्याः। ये यजामहा इति प्रगाथाः। यत् चतुष्टयं चतुर्थपादादारभ्य ऋचा* ऋचात्मकं क्रियते स प्रगाथः। [—अ० २१।२।१३]

अथ चतुर्दशः —

अर्धऋचैरुक्थानां॑ रूपम्पदैराप्नोति निविदः।
प्रणवैश्शस्त्राणां॑ रूपम्पय॑सा सोम॑ आप्यते ॥ २७ ॥

अर्धऋचैः। उक्थानाम्। रूपम्। पदैः। आप्नोति। निविदः॥
प्रणवैः। शस्त्राणाम्। रूपम्। पयसा। सोमः। आप्यते॥ २७॥

*. ऋगात्मकमिति भवितुमर्हति।

१. सम्पदिति युक्तः पाठः

अर्घ[१]-ऋचैरेतैरुक्थानां रूपमाप्नोति। पदैः [२]देवप्रकाशकशब्दैः, निविदः निवित्संज्ञकस्य मन्त्रस्य रूपमाप्नोति। प्रणवैरोंकारैः शस्त्राणाम् अप्रगीतमन्त्रसाध्यानां स्तुतीनां रूपमाप्यते। पयसा सोमेन सोम आप्यते। [—अ० २१।२।१४]

अथ पञ्चदशः —

अ॒श्विभ्या॒म्प्रात॑स्सव॒नमिन्द्रे॑णै॒न्द्रम्माध्य॑न्दिनम् ।
वै॒श्व॒दे॒वꣳ सर॑स्वत्या तृ॒तीय॑मा॒प्तꣳ सव॑नम् ॥ २८ ॥

अश्विभ्याम् । प्रातः । सवनम् । इन्द्रेण । ऐन्द्रम् । माध्यन्दिनम् ॥
वैश्वदेवम् । सरस्वत्या । तृतीयम् । आप्तम् । सवनम् ॥ २८ ॥

अश्विभ्यां प्रातः सवनमाप्तम्। इन्द्रेणैन्द्रम् इन्द्रदैवत्यं माध्यन्दिनसवनमाप्तम्। सरस्वत्या विश्वेदेवा देवता यस्य तद् वैश्वदेवं तृतीयसवनमाप्तम्। [—अ० २१।२।१५]

अथ षोडशः —

वा॒य॒व्यै॑र्वाय॒व्या॑न्याप्नोति॒ श॒तेन॑ द्रोणकल॒शम् ।
कु॒म्भीभ्या॑मम्भृ॒णौ सु॒ते स्था॒लीभि॑ स्था॒लीरा॑प्नोति ॥ २९ ॥

वायव्यैः । वायव्यानि । आप्नोति । शतेन । द्रोणकलशम् ॥
कुम्भीभ्याम् । अम्भृणौ । सुते । स्थालीभिः । स्थालीः । आप्नोति ॥ २९ ॥

वायव्यैर्वायव्यानीति सोमपात्राणां संज्ञा, तैरेतैः पात्रैर्वायव्यानीति मुख्यानि पात्राण्याप्नोति। शतेन शतच्छिद्रेणानेन सोमासाधारणपात्रेण द्रोणकलशाख्यं पात्रमाप्नोति। कुम्भीभ्यां सुरापयोधारकाभ्यां पात्रविशेषाभ्याम् अम्भृणौ पूतभृदाहवनीयौ[३] सुते सोमपात्रे आप्नोति। स्थालीभिरेताभिः स्थालीराप्नोति। [—अ० २१।२।१६]

अथ सप्तदशः —

यजु॑र्भिराप्यन्ते॒ ग्रहा॒ ग्रहै॒ः स्तोमा॑श्च॒ विष्टु॑तीः ।
छन्दो॑भिरुक्था॒ श॒स्त्रा॒णि॒ साम्ना॑वभृ॒थ आ॑प्यते ॥ ३० ॥

यजुर्भिः । आप्यन्ते । ग्रहाः । ग्रहैः । स्तोमाः । च । विष्टुतीः ॥
छन्दोभिः । उक्था । शस्त्राणि । साम्ना । अवभृथः । आप्यते ॥ ३० ॥

यजुर्भिरेतैर्मुख्यानि यजूंष्याप्यन्ते। ग्रहैरेतैस्ते ग्रहा आप्यन्ते। एताभिर्विष्टुतीभिः विशिष्टाः स्तुतय आप्यन्ते। छन्दोभिरेतैश्छन्दांसि विशिष्टान्याप्यन्ते। शस्त्रैरेतैः उक्था उक्थसंज्ञकानि शस्त्राण्याप्यन्ते। एतेन साम्ना तत् साम आप्यते। एतेनावभृथेन अवभृथो मुख्य आप्यते। [—अ० २१।२।१७ ]

---

१. पदैः उ० म्यु०।
२. देवता उ० म्यु०।
३. आधवनीयौ इति उवटमहीधरौ।

अथाष्टादशः —

**इळाभिर्भक्षानाप्नोति सूक्तवाकेनाशिषः ।**
**शँय्युना पत्नीसँय्याजान्त्समिष्टयजुषा सँस्थाम् ॥ ३१ ॥**

**इडाभिः । भक्षान् । आप्नोति । सूक्तवाकेन । आशिषः ॥**
**शंयुना । पत्नीसंयाजान् । समिष्टयजुषा । संस्थाम् ॥ ३१ ॥**

इडाभिरिडाम्, भक्षैः भक्षान् सौमिकानाप्नोति । सूक्तवाकेनानेन सूक्तवाकं मुख्यमाप्नोति । एताभिराशीर्भिः आशिषस्ता आप्नोति । शंयुनानेन विशिष्टं शंयुमाप्नोति । एतैः पत्नीसंयाजैः पत्नीसंयाजान् तानाप्नोति । समिष्टयजुषा समिष्टयजुराख्येन होमेनानेन प्रधानसमिष्टयजुर्होममाप्नोति । अनया संस्थया संस्थां प्रधानसमाप्तिमाप्नोति । [—अ० २१।२।१८]

अथैकोनविंशः —

**व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ।**
**दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ ३२ ॥**

**व्रतेन । दीक्षाम् । आप्नोति । दीक्षया । आप्नोति । दक्षिणाम् ॥**
**दक्षिणा । श्रद्धाम् । आप्नोति । श्रद्धया । सत्यम् । आप्यते ॥ ३२ ॥**

व्रतेन अव्रत्येन नियमेन दीक्षामाप्नोति । दीक्षाशब्दो **"दीक्षामौञ्ज्युपनयननियमव्रतादेशेषु"** इत्युक्तदीक्षादिषु वर्त्तते । दीक्षयाऽनया दक्षिणामाप्नोति । दक्षिणा व्यत्ययः, दक्षिणया श्रद्धां तात्पर्यबुद्धिमाप्नोति । श्रद्धया च सत्यं यथार्थवचनं ब्रह्म वा, अन्तःकरणशुद्धिद्वारा ब्रह्मज्ञानसाधनत्वेन तत्प्राप्तिहेतुत्वादाप्यते । [—अ० २१।२।१९]

अथ विंशः —

**एतावद्रूपँ यज्ञस्य यद्देवैर्ब्रह्मणा कृतम् ।**
**तदेतत्सर्वमाप्नोति यज्ञे सौत्रामणी सुते ॥ ३३ ॥**

**एतावत् । रूपम् । यज्ञस्य । यत् । देवैः । ब्रह्मणा । कृतम् ॥**
**तत् । एतत् । सर्वम् । आप्नोति । यज्ञे । सौत्रामणी । सुते ॥ ३३ ॥**

एतावत् एतावता यथोक्तपरिमाणेन परिमितं यद् यज्ञस्य सोमयागस्य रूपं देवैर्ब्रह्मणा वेदेन कृतं कल्पितम्, तदेतत् सर्वं सुते अभिषुते सोमे सौत्रामणी सौत्रामण्यां यज्ञे सौत्रामण्याख्ये याग इत्यर्थः, यजमान आप्नोति । सुराग्रह—[1]प्रयोक्तविशेषैरेव सौमिकान् सर्वान् विशेषानाप्नोतीति कृत्स्नस्यानुवाकस्याभिप्रायः । [—अ० २१।२।२०]

इत्येकविंशेऽध्याये द्वितीयोऽनुवाकः

[तृतीयोऽनुवाकः ३४-५२]

द्वितीयेऽनुवाके सौत्रामणीरूपसम्पत्तिरुक्ता । अथ तृतीये होमादिमन्त्रा आम्नायन्ते । कात्यायनः—"सुरावन्तमिति जुहोति" इति ( अ० १९।३।८ ) । सुरावन्तमित्यनेन पयोग्रहान् जुहुयादित्यर्थः ।

१. पक्षोक्त उ. म्यु.

पाठस्तु—

**सुरावन्तम्बर्हिषदꣳ सुवीरं य्यज्ञꣳ हिन्वन्ति महिषा नमोभिः ।**
**दधानास्सोमन्दिवि देवतासु मदेमेन्द्रं य्यजमानास्स्वर्काः ॥ ३४ ॥**

**सुरावन्तम् । बर्हिषदम् । सुवीरम् । यज्ञम् । हिन्वन्ति । महिषाः । नमोभिः ॥**
**दधानाः । सोमम् । दिवि । देवतासु । मदेम । इन्द्रम् । यजमानाः । स्वर्काः ॥ ३४ ॥**

सुरा हविरस्यास्तीति सुरावान् तम्, बर्हिषि सीदतीति बर्हिषत्, तम् बर्हिषदम् । सुवीरं शोभनपशु[1]यजमानवन्तं यज्ञं सौत्रामण्याख्यं सोमं दधाना धारयन्तः, महिषा ऋत्विजः नमोभिः नमस्कारैः अन्नैर्वा(भि)हिन्वन्ति प्रीणयन्ति संवर्द्धयन्तीत्यर्थः । अतः स्वर्काः शोभनान्नवन्तः, **"अर्कमन्नं भवति"** इति यास्कवचनात् ( निरु. ५।४ ) । यजमाना वयं दिवि द्युलोके देवतासु देवतानां मध्ये इन्द्रं मदेम [2]तुष्टं करवाम । तथा च ब्राह्मणम्—**"स जुहोति बर्हिषदꣳ सुवीरमिति, सुरावान् वा एष बर्हिषद् यज्ञो यत् सौत्रामणी बर्हिषैवैनं यज्ञेन समर्द्धयति, यज्ञꣳ हिन्वन्ति महिषा नमोभिरिति । ऋत्विजो वै महिषा, यज्ञो नम, ऋत्विग्भिरेव यज्ञꣳ समर्द्धयति, यज्ञेन यजमानम्, दधानाः सोममिति सोमपीथमेवास्मिन् दधाति । दिवि देवतास्विति दिव्येवैनं देवतासु दधाति । मदेमेन्द्रमिति मदाय वाव सोमो मदाय सुरोभावेव सोममदं च सुरामदं चावरुन्धे । यजमानाः स्वर्क्का इति, अर्क्को वै देवानामन्नमन्नं यज्ञो यज्ञेनैवैनमन्नाद्येन समर्द्धयति"** इति (श०, का० १२ । प्र० ३ । ब्रा० ५ । अ० ८ । ब्रा० १ । क० २ ) ।

[—अ. २१।३।१]

कात्यायनः, **"सौरान् यस्त इति"** इति ( अ. १९।३।९ ) । यस्त इत्यनेन सुराग्रहान् जुहुयादित्यर्थः । पाठस्तु—

**यस्ते रसस्सम्भृत ओषधीषु सोमस्य शुष्मस्सुरया सुतस्य ।**
**तेन जिन्व यजमानम्मदेन सरस्वतीमश्विना इन्द्रमग्निम् ॥ ३५ ॥**

**यः । ते । रसः । सम्भृतः । ओषधीषु । सोमस्य । शुष्मः । सुरया । सुतस्य ॥**
**तेन । जिन्व । यजमानम् । मदेन । सरस्वतीम् । अश्विना । इन्द्रम् । अग्निम् ॥ ३५ ॥**

हे सुरे ते तव यो रसः ओषधीषु वर्त्तमानः सम्भृत एकीकृतः सुरया सुतस्य अभिषुतस्य सोमस्य शुष्मः यच्च बलं रसात्मकं तेन उभयविधेन रसेन मदेन मदहेतुना यजमानं जिन्व प्रीणीहि । तथा सरस्वतीं च जिन्व । तथैवाश्विना अश्विनौ जिन्व । तथैव चेन्द्रमग्निं च जिन्व । अत्र ब्राह्मणम्—**"स जुहोति यस्ते रसः सम्भृत ओषधीष्वित्यपां च वा एष ओषधीनां च रसो यत्सुराऽपां चैवैनमेतदोषधीनां च रसेन समर्द्धयति, सोमस्य शुष्मः सुरया सुतस्येति । य एव सोमे शुष्मो यः सुरायां तमेवावरुन्धे तेन जिन्व यजमानं मदेनेति । तेन प्रीणीहि यजमानं मदेन इत्येवैतदाह, सरस्वतीमश्विनाविन्द्रमग्निमिति, देवताभिरेव यज्ञꣳ समर्द्धयति"** इति (श०, का० १२ । प्र० ३ । ब्रा० ५ । अ० ८ । ब्रा० १ । क० ४ ) ।

[—अ. २१।३।२]

कात्यायनः—**"यमश्विनेति भक्षयन्ति"** इति ( अ० १९।३।१० ) । अनेन पयोग्रहान् भक्षयन्तीत्यर्थः । पाठस्तु—

---

१. वसु उ. म्यु. । २. हृष्टम् उ. म्यु. ।

**यम॒श्विना॒ नमु॑चेरासु॒रादधि॒ सर॑स्वत्यसु॒नोदि॑न्द्रि॒याय॑ ।**
**इ॒मन्तꣳ शु॒क्रम्मधु॑मन्त॒मिन्दु॒ꣳ सोम॒ꣳ राजा॑नमि॒ह भ॑क्षयामि ॥ ३६ ॥**

**यम् । अश्विना । नमुचेः । आसुरात् । अधि । सरस्वती । असुनोत् । इन्द्रियाय ॥**
**इमम् । तम् । शुक्रम् । मधुमन्तम् । इन्दुम् । सोमम् । राजानम् । इह । भक्षयामि ॥ ३६ ॥**

आसुरात् असुरपुत्रात् नमुचेः सोमं बलादपहृत्य स्थितात् अधि सकाशात् अश्विना अश्विनौ यं सोमं नमुचिं घातयित्वा पुनराहरताम्, सरस्वती च इन्द्रियाय वीर्याय इन्द्रस्य भैषज्याय वा असुनोत्, तमिमं शुक्रं शुद्धं मधुमन्तं रसवन्तं क्लेदनादियुक्तं राजानम् ओषधीनाम् **"सोमो वा ओषधीनाꣳ राजा"** इति श्रुतेः । सोममिह सौत्रामण्याख्ये यज्ञे भक्षयामि अध्वर्य्वादिरहम् । तथा च ब्राह्मणम्—**"स भक्षयति यमश्विना नमुचेरासुरादधीत्यश्विनौ ह्येतं नमुचेरध्याहरताꣳ सरस्वत्यसुनोदिन्द्रियायेति । सरस्वती ह्येतमसुनोदिन्द्रियायेमन्तꣳ शुक्रं मधुमन्तमिन्दुमिति शुक्रो वा एष मधुमानिन्दुर्यत् सोमः सोमꣳ राजानमिह भक्षयामीति सोम एवास्य राजा भक्षितो भवति"** इति ( श०, का० १२ । प्र० ३ । ब्रा० ५ । अ० ८ । ब्रा० १ । क० ३ ) । [—अ. २१।३।३]

कात्यायनः—**"यदत्रेति सौरान् भक्षयन्ति"** इति ( अ० १९।३।१४ ) । पाठस्तु—

**यद॒त्र॑ रि॒प्तꣳ र॒सिन॑स्सु॒तस्य॒ यदिन्द्रो॒ अपि॑ब॒च्छची॑भिः ।**
**अ॒हन्तद॑स्य॒ मन॑सा शि॒वेन॒ सोम॒ꣳ राजा॑नमि॒ह भ॑क्षयामि ॥ ३७ ॥**

**यत् । अत्र । रिप्तम् । रसिनः । सुतस्य । यत् । इन्द्रः । अपिबत् । शचीभिः ॥**
**अहम् । तत् । अस्य । मनसा । शिवेन । सोमम् । राजानम् । इह । भक्षयामि ॥ ३७ ॥**

अत्रास्यां सुरायां यद् यो रसो रिप्तं लिप्तं रसिनो रसवतः सुतस्य अभिषुतस्य सोमस्य यद् यं रसम् इन्द्रः शचीभिः कर्मभिरपिबत् । अहं भक्षणस्य कर्ता अस्य शिवेन शान्तेन मनसा तत् तं सुरासोमयोरुभयोरपि रसं सोमं राजानं सोमत्वेन भावितम् इह सौत्रामण्याख्ये यज्ञे भक्षयामि । तथा च ब्राह्मणम्—**"स भक्षयति यदत्र रिप्तꣳरसिनः सुतस्येति । सुतासुतयोरेव रसमवरुन्धे, यदिन्द्रो अपिबच्छचीभिरिति । इन्द्रो ह्येतदपिबच्छचीभिः, अहं तदस्य मनसा शिवेनेत्यशिव इव वा एष भक्षो यत्सुरा ब्राह्मणस्य शुभमेवैनमेतत् कृत्वाऽऽत्मन्धत्ते सोमꣳ राजानमिह भक्षयामीति सोम एवास्य राजा भक्षितो भवति"** इति (श०, का० १२ । प्र० ३ । ब्रा० ५ । अ० ८ । ब्रा० १ । क० ५ ।)

[—अ. २१।३।४]

कात्यायनः—**"अङ्गारेषु वा बहिष्परिधि दक्षिणतो जुहोत्याश्विनमुत्तरे मध्यमे सारस्वतमैन्द्रं दक्षिणे पितृभ्य इति प्रतिमन्त्रम्"** इति (अ० १९।३।१७)। अथवा सौरग्रहभक्षणप्रतिनिध्यर्थं[१] दक्षिणस्याग्नेर्बहिष्परिधि त्रीनङ्गारान्निर्वर्त्त्य तेष्वङ्गारेषु पितृभ्य इत्यादिभिस्त्रिभिर्मन्त्रैः प्रत्येकमाश्विनग्रहमुत्तरेऽङ्गारे जुहुयात्, सारस्वतं ग्रहं मध्यमेऽङ्गारे, ऐन्द्रं ग्रहं दक्षिणेऽङ्गारे जुहुयादित्यर्थः । तथा च ब्राह्मणम्—**"[२]अन्येऽध्वर्यवो राजन्यं वा वैश्यं वा परिक्रीणन्ति स एतद् भक्षयिष्यतीति तदु तथा न कुर्याद्यो ह वा एतद् भक्षयति तस्य हैवं पितॄन् पितामहानेष सोमपीथोऽन्वेति दक्षिणस्यैवाग्नेस्त्री-**

१. सिद्धयर्थम्. उ. म्यु. २. तद्धैतत् उ. म्यु.

नङ्गारान्निर्वर्त्य बहिष्परिधि तदेताभिर्व्याहृतिभिर्जुहुयात्" इति ( श०, का० १२ । प्र०३ । ब्रा० ५ । अ० ८ । ब्रा० १ । क० ६) । पाठस्तु—

**पितृभ्यस्स्वधायिभ्यस्स्वधा नमः पितामहेभ्यस्स्वधायिभ्यस्स्वधा नमः ।**
**प्रपितामहेभ्यस्स्वधायिभ्यस्स्वधा नमः ॥ ३८ ॥**

पितृभ्यः । स्वधायिभ्यः । स्वधा । नमः । पितामहेभ्यः । स्वधायिभ्यः । स्वधा । नमः ।
प्रपितामहेभ्यः । स्वधायिभ्यः । स्वधा । नमः ॥ ३८ ॥

स्वकीयान् पितॄन् धारयतीति स्वधा, तां प्रति गमनशीलाः स्वधायिनस्तेभ्यः पितृभ्यः स्वधा नमः अन्नमस्तु । स्पष्टमन्यत् । [—अ. २१।३।५]

कात्यायनः—"अक्षन् पितर इति प्रक्षालनेनोपसिञ्चति" इति ( अ० १९।३।१८ ) । पाठस्तु—

**अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः ।**
**पितरः शुन्धध्वम् ॥ ३९ ॥**

अक्षन् । पितरः । अमीमदन्त । पितरः । अतीतृपन्त । पितरः ॥
पितरः । शुन्धध्वम् ॥ ३९ ॥

पितरः अक्षन् भुक्तवन्तः, भुक्त्वा च अमीमदन्त हृष्टा अभवन् । अस्मान् वा हृष्टानकुर्वन्, अतीतृपन्त तर्पिताश्चाभवन् । तथा च ब्राह्मणम्—"अप आनीय निनयत्यक्षन्पितर इत्यन्नाद्यमेवैषु दधात्यमीमदन्त पितर इति मदयत्येवैनानतीतृपन्त पितर इति तर्पयत्येवैनान्" इति[१] ( श०, का १२ । प्र० ३ । ब्रा० ५ । अ० ८ । ब्रा० १ । क० ८ ) । [—अ. २१।३।६]

कात्यायनः—"नवर्चं वाचयति पुनन्तु मा" इति ( अ० १९।३।२० ) । तत्र प्रथमायाः पाठस्तु—

**पुनन्तु मा पितरस्सोम्यासः पुनन्तु मा पितामहाः ।**
**पुनन्तु प्रपितामहाः ।**
**पवित्रेण शतायुषा ॥ ४० ॥**

पुनन्तु । मा । पितरः । सोम्यासः । पुनन्तु । मा । पितामहाः ॥
पुनन्तु । प्रपितामहाः ॥
पवित्रेण । शतायुषा ॥ ४० ॥

सोम्यासः सोम्याः सोमार्हाः सोमसम्पादका वा पितरो मा मां यजमानं शतायुषा येन पूतः शतायुर्भवति, तत् शतायुः, तेन पवित्रेण शुद्धिसाधनेन पुनन्तु । पितामहाः पितुः पितरः, प्रपितामहाः पितुः पितामहाः, अन्यत्समानम् । [—अ. २१।३।७]

---

१. कात्यायनः—"पितरः शुन्धध्वमिति जपति" इति (अ. १९।३।२२) । 'हे पितरः शुन्धध्वं शुद्धा भवत' इत्यधिकः पाठः उ. म्यु.

अथ द्वितीया—

पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।
पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ ४१ ॥

पुनन्तु । मा । पितामहाः । पुनन्तु । प्रपितामहाः ॥
पवित्रेण । शतायुषा । विश्वम् । आयुः । व्यश्नवै ॥ ४१ ॥

शतायुषा पवित्रेण पितरः पितामहाश्च प्रपितामहाश्च मां पुनन्तु । विश्वम् एतैः पित्रादिभिरत्र सर्वमायुर्व्यश्नवै [1]व्याप्नुयाम् । [—अ० २१।३।८]

अथ तृतीया—

अग्न आयूंषि पवस आसुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥ ४२ ॥

अग्ने । आयूंषि । पवसे । आ । सुव । ऊर्जम् । इषम् । च । नः ॥
आरे । बाधस्व । दुच्छुनाम् ॥ ४२ ॥

हे अग्ने नः अस्मान् प्रति आयूंषि आयुःप्रापकाणि मुख्यान्येवायूंषि वा पवसे । अत्रान्तर्भावणिजर्थोऽयम् । पवसे प्रापयसीत्यर्थः । अपि च ऊर्जं क्षीरादिरसं पशून् वा, "ऊर्क् पशवः" इति श्रुतेः (तै० सं०, का० २ । प्र० १ । अनु० १)। इषमन्नम्, नोऽस्मभ्यम्, आसुव प्रेरय । आरे दूरे दुच्छुनां दुष्टान् शुनः, दुष्टाश्च ते श्वानश्चेति समासे दुःसकारस्य "सर्वे विधयश्छन्दसि विकल्पन्ते" (सि. कौ., सू. ३३८६) इति रुत्वाभावपक्षे सकारस्य दत्व-तत्वयोः कृतयोः शकारस्य छत्वम् । "रुजार्थानां भाववचनानामज्वरेः" (पा० २।३।५४) इति कर्मणि षष्ठी । [2]दुष्टसदृशान् सर्वानतिकुलानित्यर्थः । बाधस्व । [—अ० २१।३।६]

अथ चतुर्थी—

पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।
पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ ४३ ॥

पुनन्तु । मा । देवजनाः । पुनन्तु । मनसा । धियः ॥
पुनन्तु । विश्वा । भूतानि । जातवेदः । पुनीहि । मा ॥ ४३ ॥

देवजना देवानुवर्त्तिनो जनाः, मां पुनन्तु । मनसा विवेकसम्पन्नचित्तेन [3]सता, धियो ज्ञानानि कर्माणि वा, मा मां पुनन्तु । तथा विश्वा विश्वानि सर्वाणि भूतानि, मां पुनन्तु । हे जातवेदो मां पुनीहि । [—अ० २१।३।१०]

अथ पञ्चमी—

पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् ।
अग्ने क्रत्वा क्रतूँरनु ॥ ४४ ॥

१. व्याप्नुयाम उ. म्यु. । २. दुष्टैः उ. म्यु. ।
३. संजाता उ. म्यु. ।

पवित्रेण । पुनीहि । मा । शुक्रेण । देव । दीद्यत् ॥
अग्ने । क्रत्वा । क्रतून् । अनु ॥ ४४ ॥

हे देव क्रीडादिगुणयुक्त, दीद्यत् द्योतमान अग्ने, शुक्रेण शुद्धेन, पवित्रेण शुद्धसाधनेन, मां पुनीहि । तथा क्रतून् संकल्पान्, अनु जातेन, क्रत्वा क्रतुना कर्मणा च, मां पुनीहि । [—अ० २१।३।११]

अथ षष्ठी—

यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ।
ब्रह्म तेन पुनातु मा ॥ ४५ ॥

यत् । ते । पवित्रम् । अर्चिषि । अग्ने । वि । ततम् । अन्तरा ॥
ब्रह्म । तेन । पुनातु । मा ॥ ४५ ॥

हे अग्ने, ते तव, अर्चिषि तेजसि, अन्तरा मध्ये यद् विततं विस्तृतं पवित्रं पावनसाधनरूपमस्ति, तेन ब्रह्म वेदः परं ब्रह्म [1]वा, मां पुनातु । [—अ० २१।३।१२]

अथ सप्तमी—

पवमानस्सो अद्य नः पवित्रेण विचर्षणिः ।
यः पोता स पुनातु मा ॥ ४६ ॥

पवमानः । सः । अद्य । नः । पवित्रेण । विचर्षणिः ॥
यः । पोता । सः । पुनातु । मा ॥ ४६ ॥

पवमानः पूयमानः, विचर्षणिः कृताकृतविवेकस्य कर्ता, सः प्रसिद्धः सोमः, अद्यास्मिन्नहनि, नोऽस्मान्, पवित्रेण स्वीयेन मुदो हेतुना रूपेण, मां पुनातु । यः स्वभावतः पोता पवनस्य कर्ता वायुः सोऽपि पवित्रेण पुनातु । [—अ० २१।३।१३]

अथाष्टमी—

उभाभ्यान्देव सवितः पवित्रेण सवेन च ।
माम्पुनीहि विश्वतः ॥ ४७ ॥

उभाभ्याम् । देव । सवितः । पवित्रेण । सवेन । च ॥
माम् । पुनीहि । विश्वतः ॥ ४७ ॥

हे देव द्योतमान, सवितः सर्वस्य जगतः प्रेरक, पवित्रेण शुद्धिहेतुना त्वदीयेन रूपेण, सवेन यज्ञेन चोभाभ्यां ( पवित्रस्य ) पवित्रसवाभ्याम्, मां विश्वतः सर्वतः पुनीहि । [—अ० २१।३।१४]

अथ नवमी—

वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः ।
तया मदन्तस्सधमादेषु वयꣳ स्याम पतयो रयीणाम् ॥ ४८ ॥

---

१. व उ. म्यु. ।

**वैश्वदेवी । पुनती । देवी । आ । अगात् । यस्याम् । इमाः । बह्व्यः । तन्वः । वीतपृष्ठाः ॥**
**तया । मदन्तः । सधमादेषु । वयम् । स्याम । पतयः । रयीणाम् ॥ ४८ ॥**

वैश्वदेवी विश्वेदेवदेवत्या सुराकुम्भी, पुनती पावनं कुर्वाणा, देवी द्योतमाना, आगात् आगता । यस्यां सुराकुम्भ्याम् इमाः परिदृश्यमानास्तन्वो विस्तृताः, वीतपृष्ठाः [१]बहिर्गतापरभागाः, निरन्तरा धारा इत्यर्थः । बह्व्यः सन्ति । तया कुम्भ्या सधमादेषु सहर्षप्राप्यस्थानेषु, मदन्तो मोदमानाः, वयं रयीणां धनानां पतयः स्याम । [—अ० २१।३।१५]

कात्यायनः—**"ये समाना इति यजमानो जुहोति"** (अ० १९।३।२३) इति । अनया दक्षिणाग्नावाहुतिं जुहुयादित्यर्थः । अथ दशमी—

**ये स॒मा॒नास्सम॑नसः पि॒तरो॑ यम॒राज्ये॑ ।**
**तेषाँ॑ल्लो॒कस्स्व॒धा नमो॑ य॒ज्ञो दे॒वेषु॑ कल्पताम् ॥ ४९ ॥**

**ये । समानाः । समनसः । पितरः । यमराज्ये ॥**
**तेषाम् । लोकः । स्वधा । नमः । यज्ञः । देवेषु । कल्पताम् ॥ ४९ ॥**

ये पितरोऽस्मदीयाः, सहमानाः समानजातीयाः, समनसः समानमनस्काश्च, [२]यमराज्ये धर्मराज्ये धर्मराजस्य लोके वर्त्तन्ते, तेषां लोको ममास्त्विति शेषः । तेभ्यः स्वधा हविर्दत्तमस्तु । नमो नमस्कारश्च । कृतो यज्ञो मदीयोऽयं यागो देवेषु कल्पतां समर्थो भवतु, देवेभ्यस्तृप्तिप्रदो भवत्वित्यर्थः । तथा च ब्राह्मणम्—**"यो दक्षिणेऽग्नौ चरत्याज्याहुतिं जुहोति यज्ञो वा आज्यं यज्ञादेव यज्ञे प्रतितिष्ठतीति स जुहोति ये समाना इति पितॄनेव यमे परिदधात्यथो पितृलोकमेव जयति"** (श०, का० १२ । प्र० ३ ब्रा० ५ । अ० ८ । ब्रा० १ । क० १८-१९ ) इति । [—अ० २१।३।१६]

कात्यायनः—**"उत्तरे च यज्ञोपवीत्युत्तरया"** (जुहोति) ( अ० १९।३।२४ ) इति । उत्तरेऽग्ना उत्तरया ऋचा आज्यं जुहुयादित्यर्थः । तथा च ब्राह्मणम्—**"सर्वे यज्ञोपवीतानि कृत्वोत्तरमग्निमुपसमायान्त्ययं वाव लोक उत्तरोऽग्निरस्मिन्नेव लोके प्रतितिष्ठन्त्याज्याहुतिं जुहोति"** ( श०, का० १२ । प्र० ३ । ब्रा० ५ । अ० ८ । ब्रा० १ । क० १९ ) इति । अथैकादशी—

**ये स॒मा॒नास्सम॑नसो जी॒वा जी॒वेषु॑ माम॒काः ।**
**तेषा॒ᳪ श्रीर्मयि॑ कल्पताम॒स्मिँल्लो॒के श॒तᳪ समाः॑ ॥ ५० ॥**

**ये । समानाः । समनसः । जीवाः । जीवेषु । मामकाः ॥**
**तेषाम् । श्रीः । मयि । कल्पताम् । अस्मिन् । लोके । शतम् । समाः ॥ ५० ॥**

जीवेषु जीवनवत्सु मध्ये, ये मामका मदीया जीवनवन्तः, समानाः समानजन्मानो ज्ञातयः, समनसः समानमनस्कास्तेषां श्रीः सम्पद्, अस्मिन् लोके इह लोके, शतं समाः संवत्सरान्, मयि कल्पतां क्लृप्ता भवतु । [—अ० २१।३।१७]

कात्यायनः—**"अन्वारब्धेषु पयो जुहोति द्वे सृती"** (अ० १९।३।२५) इति । अथ द्वादशी—

**द्वे सृ॒ती अ॑शृणवम्पितॄ॒णाम॒हन्दे॒वाना॑मु॒त मर्त्या॑नाम् ।**
**ताभ्या॑मि॒दं॑ विश्व॒मेज॒त्समे॑ति॒ यद॑न्त॒रा पि॒तर॑म्मा॒तर॑ञ्च ॥ ५१ ॥**

---

१. विगता उ. म्यु. । २. मनःस्थाः उ. म्यु. ।

द्वे । सृती । अशृणवम् । पितॄणाम् । अहम् । देवानाम् । उत । मर्त्यानाम् ।।
ताभ्याम् । इदम् । विश्वम् । एजत् । समेति । यत् । अन्तरा । पितरम् । मातरम् । च ।। ५१ ।।

मर्त्यानां मरणशीलानां कर्मानुष्ठायिनामुपासकानां च, पितरं मातरं च द्यावापृथिव्योर्मध्ये "द्यौः पिता पृथिवी माता" इति श्रुतेः। तथा द्वे सृती द्वौ दक्षिणोत्तरमार्गौ, अहम् अशृणवम् । "ते धूममभिसम्भवन्ति धूमाद्रात्रिꣳरात्रेरर्चिरभिसम्भवन्त्यर्चिषो हविः" (छा०उ०, अ० ५। ख० १०) इत्यादि-श्रुतिभ्यः श्रुतवानस्मि । तत्रैव श्रुतिः । पितॄणां सम्बन्धिनी त्विहलोकप्राप्तिहेतुत्वात्, उताप्यदेवानां सम्बन्धिनी ब्रह्मलोकप्राप्तिहेतुत्वात्, ताभ्यां श्रुतिभ्याम् इदं कर्मानुष्ठानमप्युपासकप्राणिजातम् एजत् चरत् परलोकगतियुक्तं सत् समेति लोकं प्राप्नोति । तथा च ब्राह्मणम्—"पयः समन्वारब्धेषु जुहोती-त्यारभ्य द्वे सृती अशृणवं पितॄणामहमिति द्वे वाव सृती इत्याहुर्देवानां वै पितॄणाञ्चेति ताभ्यामिदं विश्वमेजत् समेतीति । ताभ्याꣳ हीदꣳ सर्वमेजत् समेति यदन्तरा पितरं मातरञ्चेत्यसौ पितेयम्मातेति" (श०, का० १२ । प्र० ३ । ब्रा० ५ । अ० ८ । ब्रा० १ । क० २०-२१) इति । [—अ० २१।३।१८]

कात्यायनः—"शेषं यजमानो भक्षयतीदꣳ हविरिति" ( अ० १९।३।२६। ) इति । शेषं हुतशेषं पय इत्यर्थः । अथ त्रयोदशी—

**इदꣳ हविः प्रजननम्मे अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये ।**
**आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि ।**
**अग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतो अस्मासु धत्त ॥ ५२ ॥**

इदम् । हविः । प्रजननम् । मे । अस्तु । दशवीरम् । सर्वगणम् । स्वस्तये ।।
आत्मसनि । प्रजासनि । पशुसनि । लोकसनि । अभयसनि ।।
अग्निः । प्रजाम् । बहुलाम् । मे । करोतु । अन्नम् । पयः । रेतः । अस्मासु । धत्त ।। ५२ ।।

इदं पयो हविः मे शुभायास्तु । यद् हविः प्रजननम् उत्पादकम्, दशवीरं दशसंख्याककर्मशूरपुत्र-युक्तं दशप्राणं वा, "प्राणा वै दशवीरा" इति श्रुतेः ( श०, का० १२ । प्र० ३ । ब्रा० ५ । अ० ८ । ब्रा० १ । क० २२ )। सर्वगणं वध्वादिसमूहयुक्तं सर्वाङ्गयुक्तं वा, "अङ्गानि वै सर्वे गणा" इतिश्रुतेः ( श०, का० १२ । प्र० ३ । ब्रा० ५ । अ० ८ । ब्रा० १ । क० २२ ) । तथा आत्मानं सनोति ददाति सम्भजत इति वा आत्मसनि, प्रजां सनोतीति प्रजासनि, पशून् सनोतीति पशुसनि, लोकानभीष्टान् सनोतीति लोकसनि, भयरहितं स्वर्गं सनोतीति अभयसनि, "स्वर्गो वै लोकोऽभयम्" इति श्रुतेः ( श०, का० १२ । प्र० ३ । ब्रा० ५ । अ० ८ । ब्रा० १ । क० २२ ) । किञ्च अग्निः बहुलां प्रभूतां प्रजां मे करोतु मह्यं ददातु । किञ्च हे देवाः ऋत्विजो वा, "तद् य एवैनमेते याजयन्ति तानेतद्वा सर्वं धत्त" इति श्रुतेः (श०, का० १२ । प्र० ३ । ब्रा० ५ । अ० ८ । ब्रा० १ । क० २२) । अन्नं पयः क्षीरादिकं च रेतो वीर्यम् अस्मासु धत्त स्थापयत । [—अ० २१।३।१९]

इत्येकविंशेऽध्याये तृतीयोऽनुवाकः ।

[ चतुर्थोऽनुवाकः ५३-७३ ]

तृतीयेऽनुवाके पयोग्रहहोमादि मन्त्रा उक्ताः । चतुर्थे यजमानवाचनार्था मन्त्रा उच्यन्ते ।

**उदीरतामवर उत्परास उन्मध्यमाः पितरस्सोम्यासः ।**
**असुँ य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ ५३ ॥**

**उदीरताम् । अवरे । उत्परासः । उत् । मध्यमाः । पितरः । सोम्यासः ॥**
**असुम् । ये । ईयुः । अवृकाः । ऋतज्ञाः । ते । नः । अवन्तु । पितरः । हवेषु ॥ ५३ ॥**

अवरे परलोके स्थिता अस्मदीयाः पितरः, उदीरताम् अस्माल्लोकाद् [१]उत्कृष्टं गच्छन्तु । तथा उत्परास उत्तमलोकस्था ये पितरस्तेऽप्युदीरतां ततोऽप्युत्कृष्टं लोकं गच्छन्तु । तथा ये सोम्यासः सोमसम्पादिनः सोमार्हा वा, तथा ये पितरः, असुं प्राणम् ईयुः अनुगच्छन्ति, ये च अवृका अहिंसकाः, ये च पितरः ऋतज्ञास्ते सर्वेऽप्युदीरताम् । एवमस्मदीयेन स्वीयेन च कर्मणा उन्नतिं प्राप्ता ये पितरः, ये पितरो हवेष्वाह्वानेषु अस्माभिराहूताः सन्तर्पिताश्च सन्तो नोऽस्मान् अवन्तु पालयन्तु । [ —अ० २१।४।१ ]

अथ द्वितीयः—

**त्वꣳ सो॒म॒ प्रचि॑कितो मनी॒षा त्वꣳ रजि॑ष्ठ॒मनु॑नेषि॒ पन्था॑म् ।**
**तव॒ प्रणी॑ती पि॒तरो॑ न इन्दो दे॒वेषु॒ रत्न॑मभजन्त॒ धीराः॑ ॥ ५४ ॥**

**त्वम् । सोम । प्रचिकितः । मनीषा । त्वम् । रजिष्ठम् । अनुनेषि । पन्थाम् ।**
**तव । प्रणीती । पितरः । नः । इन्दो । देवेषु । रत्नम् । अभजन्त । धीराः ॥ ५४ ॥**

हे सोम त्वं प्रचिकितः प्रकृष्टज्ञानवान् असि । अतो मनीषा । व्यत्ययः । मनीषया प्रज्ञया युक्तः त्वं रजिष्ठम् ऋजुमयम्, पन्थां पन्थानम्, अनुनेषि पितॄन् नयसि । हे इन्दो क्लेदनादिगुणयुक्तसोम, तव प्रणीती प्रणीत्या प्रापणेन, नोऽस्माकं पितरो धीरा धीमन्तो विशिष्टकर्मकारिणः, देवेषु मध्ये रत्नं रमणीयं श्रेष्ठं पदम्, अभजन्त सेवितवन्तः । [ —अ० २१।४।२ ]

अथ तृतीयः—

**त्वया॒ हि नः॑ पि॒तरः॑ सोम॒ पूर्वे॒ कर्मा॑णि च॒क्रुः प॑वमान॒ धीराः॑ ।**
**व॒न्वन्नवा॑तः परि॒धीँ॒ रपो॑र्णु वी॒रेभि॒रश्वै॑र्म॒घवा॑ भवा नः ॥ ५५ ॥**

**त्वया । हि । नः । पितरः । सोम । पूर्वे । कर्माणि । चक्रुः । पवमान । धीराः ॥**
**वन्वन् । अवातः । परिधीन् । अप । ऊर्णु । वीरेभिः । अश्वैः । मघवा । भव । नः ॥ ५५ ॥**

हे पवमान पूयमान सोम, त्वया हि त्वयैव, नोऽस्माकं पूर्वे पितरः, धीरा बुद्धिमन्तः, कर्माणि विहितानि नित्यनैमित्तिकादीनि चक्रुः । अतस्त्वं वन्वन् अस्मदीयान्यपि कर्माणि सम्भजमानः, अवातो वाताद्युपद्रवरहितः परिधीन् आवर्त्तितान् निहितान् यज्ञविघ्नकारिणो राक्षसान्, अप ऊर्णु अपगमय । किं च वीरेभिः वीरैरश्वैश्च युक्तः सन्, नोऽस्माकं मघवा धनवान् धनस्य[२] दाता भव । [ —अ० २१।४।३ ]

अथ चतुर्थः—

**त्वꣳ सो॑मपि॒तृभि॑स्सँविदा॒नोऽनु॒द्यावा॑पृथि॒वी आत॑तन्थ ।**
**तस्मै॑ त इन्दो ह॒विषा॑ विधेम व॒यꣳ स्या॑म॒ पत॑यो र॒यी॒णाम् ॥ ५६ ॥**

१. लोकमिति शेषः इति भवितुं युक्तम् ।

२. धनसम्पदारक्षिता उ. म्यु.

त्वम् । सोम । पितृभिः । सम् । विदानः । अनु । द्यावापृथिवी । आ । ततन्थ ॥
तस्मै । ते । इन्दो । हविषा । वि । धेम । वयम् । स्याम । पतयः । रयीणाम् ॥ ५६ ॥

हे सोम त्वं पितृभिः सोमवद्भिरस्मदीयैः, संविदानः संविजानन् सन् मर्यादां कुर्वाणो द्यावापृथिवी द्यावापृथिव्यावाततन्थ आतनोषि । हे इन्दो सोम तस्मै तादृशाय ते तुभ्यं हविषा विधेम परिचरेम । हविर्दद्म इत्यर्थः । अतो वयं रयीणां धनानां पतयः स्याम । [—अ० २१।४।४]

अथ पञ्चमः—

[1]बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आगतावसा शन्तमेनाथा नश्शँय्योररपो दधात ॥ ५७ ॥

बर्हिषदः । पितरः । ऊती । अर्वाक् । इमाः । वः । हव्याः । चकृम । जुषध्वम् ॥
ते । आगत । अवसा । शन्तमेन । अथ । नः । शम् । योः । अरपः । दधात ॥ ५७ ॥

बर्हिषि सीदन्तीति हविर्याजिनो बर्हिषदो हे पितरः ( वो युष्माकम् ) ऊती ऊत्या गच्छत ।....
अथानन्तरं योः 'यु मिश्रणे' सुखादिमिश्रणसाधनान्, शं सुखम्, अरपः पापराहित्यं च नोऽस्मासु दधात स्थापयत । [—अ० २१।४।५]

अथ षष्ठः—

उपहूताः पितरस्सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आगमन्तु त इह श्रुवन्त्वधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ ५८ ॥

उप । हूताः । पितरः । सोम्यासः । बर्हिष्येषु । निधिषु । प्रियेषु ॥
ते । आ । गमन्तु । ते । इह । श्रुवन्तु । अधि । ब्रुवन्तु । ते । अवन्तु । अस्मान् ॥ ५८ ॥

बर्हिष्येषु यागयोग्येषु, निधिषु निधिवदासादितेषु, प्रियेषु इष्टेषु हविःषु निमित्तभूतेषु, सोम्यासः सोमसम्पादिनो ये पितर उपहूतास्ते आगमन्तु अस्मदीयं यज्ञं प्रत्यागच्छन्तु । आगत्य इह च यज्ञे ते पितरः श्रुवन्तु अस्मदीयवाक्यमपि शृण्वन्तु । श्रुत्वा च अस्मद्धितं यत् तद् अधिब्रुवन्तु । किं च ते पितरोऽस्मानवन्तु । [—अ० २१।४।६]

---

१. अस्य भाष्यं पूर्णतया नोपलब्धम् इति महीधरभाष्यमुपादीयते—
अतो बर्हिषदां पितृणां तृचः । बर्हिषदः बर्हिषि दर्भे सीदन्तीति बर्हिषदः । पृषोदरादित्वादन्त्यलोपः । हे बर्हिषदः पितरः, ते यूयमूत्या अवनेन निमित्तेन अर्वागागत आगच्छत । किमर्थमिति चेत् । वो युष्माकमिमा इमानि हव्या हव्यानि वयं चकृम । करोतेर्लिट् । कृतवन्तस्तानि यूयं जुषध्वं सेवध्वम् । अथानान्तरं शंतमेन सुखयितृतमेनावसान्नेन तर्पिताः सन्तो नोऽस्माकं शं सुखं रोगशमनं योः भयपृथक्करणमरपः पापाभावं च दधात धत्त स्थापयत 'तप्तनप्-' (पा० ७।१।४५) इति तबादेशात् 'श्नाभ्यस्तयोरातः' (पा० ६।४।११२) इत्यालोपाभावः । शं योः 'शमनं च रोगाणां यावनं च भयानाम्' इति यास्कः । 'रपो रिप्रमिति पापनामनी भवतः' ( शु. मा. सं. १९।५५ ) ।

अथ सप्तमः—

**आहम्पितॄन्त्सुविदत्राँ२ अवित्सि नपातञ्च विक्रमणञ्च विष्णोः ।**
**बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ ५९ ॥**

**आ । अहम् । पितॄन् । सुविदत्रान् । अवित्सि । नपातम् । च । विक्रमणम् । च । विष्णोः ॥**
**बर्हिषदः । ये । स्वधया । सुतस्य । भजन्त । पित्वः । ते । इह । आ । गमिष्ठाः ॥ ५९ ॥**

अहं सुविदत्रान् कल्याणदानान् पितॄन् आसमन्तात् अवित्सि, व्यत्ययः । वेद्मि । तं तथा विष्णोः, "यज्ञो वै विष्णुः" इति श्रुतेः ( श०, का० १२। प्र० २। ब्रा० ३। अ० ४। ब्रा० १। क० ५) यज्ञस्य सम्बन्धिनम्, नपातं न विद्यते पातो यस्मिन् देवयानमार्गे तं च विक्रमणं विविधं क्रमणं यस्मिन् पितृयाणमार्गे तं च वेद्मि । ये बर्हिषदः पितरः स्वधयाऽन्नेन सह सुतस्याभिषुतस्य सोमस्य पित्वः पानानि भजन्त ये सेवन्ते, ते पितरः इह यज्ञकर्मणि आगमिष्ठाः, व्यत्ययः । आगच्छन्तु ।
[—अ० २१।४।७ ]

अथाष्टमः—

**अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः ।**
**अत्ता हवीꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीरन्दधातन ॥ ६० ॥**

**अग्निष्वात्ताः । पितरः । आ । इह । गच्छत । सदः । सदः । सदत । सुप्रणीतयः ॥**
**अत्त । हवींषि । प्रयतानि । बर्हिषि । अथ । रयिम् । सर्ववीरम् । दधातन ॥ ६० ॥**

अग्निष्वात्ता अग्निं स्वकीयत्वेन प्राप्ता हे पितरः, इहास्मिन् कर्मणि सदः सदः ( आदत्त ), वीप्सा । सभां प्रत्यागच्छत । सदत प्रविशत । हे सुप्रणीतयः शोभनप्रणीतयः, बर्हिषि यज्ञे प्रयतानि नियतव्रतैर्दत्तानि हवींषि, अत्त भक्षयत । अथानन्तरं सर्ववीरं पशुपुत्रादियुक्तं रयिं धनम्, दधातन अस्मासु स्थापयत ।
[ —अ० २१।४।८ ]

अथ नवमः —

**आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।**
**अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ ६१ ॥**

**आयन्तु । नः । पितरः । सोम्यासः । अग्निष्वात्ताः । पथिभिः । देवयानैः ॥**
**अस्मिन् । यज्ञे । स्वधया । मदन्तः । अधिब्रुवन्तु । ते । अवन्तु । अस्मान् ॥ ६१ ॥**

अग्निर्यान् आस्वादयति ते अग्निष्वात्ताः, सोमार्हाः सोम्यासः, नोऽस्माकं पितरो देवयानैर्मार्गैर्वाहकदेवताविशिष्टैः, पथिभिर्मार्गैः, आयन्तु आगच्छन्तु । आगत्य अस्मिन् सौत्रामण्याख्ये यज्ञे, स्वधया हविर्लक्षणेनान्नेन मदन्तस्तृप्यन्तोऽस्मान् अधिब्रुवन्तु । ते पितरः अवन्तु च ।
[ —अ० २१।४।९ ]

अथ दशमः—

**ये अग्निष्वात्ता ये अनग्निष्वात्ता मध्ये दिवः स्वधया मादयन्ते ।**
**तेभ्यः स्वराळसुनीतिमेतां यथावशं तन्वं कल्पयाति ॥ ६२ ॥**

ये। अग्निष्वात्ताः। ये। अनग्निष्वात्ताः। मध्ये। दिवः। स्वधया। मादयन्ते॥
तेभ्यः। स्वराट्। असुनीतिम्। एताम्। यथावशम्। तन्वम्। कल्पयाति॥ ६२॥

ये अग्निष्वात्ता अग्निना हविषो भक्षयितारः, ये वा नाग्निष्वात्तास्तद्रहिता दाहादिशवकर्मरहिताः पितरो दिवः स्वर्गस्य मध्ये, स्वधया स्वकर्मफलोपभोगेन मादयन्ते तृप्यन्ति[1], तेभ्यः पितृभ्यः स्वराट् स्वतन्त्रः परमेश्वरः, असुनीतिम्[2] चक्षुरादयः प्राणान् पालयन्ते[3], ताम् एतां प्रसिद्धां तन्वं मूर्तिम्, यथावशं "वश कान्तौ" यथाकामं कल्पयाति कल्पयति। [ —अ० २१।४।१० ]

अथैकादशः—

अ॒ग्नि॒ष्वा॒त्तानृ॑तु॒मतो॑ हवामहे नाराश॒ꣳसे सो॑मपी॒थँय्य आ॒शुः।
ते नो॒ विप्रा॑सस्सु॒हवा॑ भवन्तु व॒यꣳ स्या॑म॒ पत॑यो र॒यी॒णाम्॥ ६३॥

अग्निष्वात्तान्। ऋतुमतः। हवामहे। नाराशंसे। सोमपीथम्। ये। आशुः॥
ते। नः। विप्रासः। सुहवाः। भवन्तु। वयम्। स्याम। पतयः। रयीणाम्॥ ६३॥

ये पितरो नराशंसेन युक्ते नाराशंसे चमसे, सोमपीथं सोमपानम्, आशुः प्रापुः, तान् अग्निष्वात्तान् ऋतुमतः ऋतुसंयुक्तान् पितॄन् हवामहे आह्वयामः। नोऽस्माकं ते पितरो विप्रासो मेधाविनः सुहवाः शोभनाह्वाना भवन्तु च। किं च एवं कुर्वन्तो वयं रयीणां धनानां पतयः स्याम। [ —अ० २१।४।११ ]

अथ द्वादशः—

[4]आच्या॒ जानु॑ दक्षिण॒तो नि॒षद्ये॒मँय्य॒ज्ञम॒भिगृ॑णीत॒ विश्वे॑।
मा हिꣳसिष्ट पि॒तरः॒ केन॑चिन्नो॒ यद्व॒ आग॑ः पुरु॒षता॑ करा॒म॥ ६४॥

आच्या। जानु। दक्षिणतः। निषद्य। इमम्। यज्ञम्। अभि। गृणीत। विश्वे॥
मा। हिंसिष्ट। पितरः। केन। चित्। नः। यत्। वः। आगः। पुरुषता। कराम॥ ६४॥

कराम कुर्मः[5]। तथा[6] हे पितरः, नोऽस्मान् मा हिंसिष्ट हिंसां मा कुरुत। [ —अ० २१।४।१२ ]

---

१. हृष्यन्ति उ. म्यु. २. असवः उ. म्यु. ३. यत्र नीयन्ते उ. म्यु.

४. अस्य पूर्णं भाष्यं नोपलब्धम् इति महीधरभाष्यमुपादीयते—

कात्यायनेन आच्या जान्वित्यनुवाकस्य विनियोगो नोक्तः। उदीरतामित्यनुवाकद्वयस्य श्राद्धेऽश्नत्सु द्विजेषु जपे विनियोगः। दशर्चोऽनुवाकः। आद्या नव पितृदेवत्याः। द्वे त्रिष्टुभौ। हे पितरः, विश्वे सर्वे सोमवन्तो बर्हिषदोऽग्निष्वात्ताश्च यूयमिमं यज्ञं सौत्रामणीमभिगृणीत अभिष्टुत। दक्षिणामन्त्रकालकर्तृहविर्यजयानोत्कर्षैः साध्वयं यज्ञइति स्तुतिं कुरुतेत्यर्थः। किं कृत्वा। जान्वाच्य वामजानु पातयित्वा। तथा दक्षिणतो निषद्य दक्षिणाभिमुखा उपविश्य। स हि तेषां स्वभावः। 'अथैनं पितरः प्राचीनावीतिनः। सव्यं जान्वाच्योपासीदन्। इति श्रुतेः। किं च हे पितरः. केनचित् केनाप्यपराधेन नोऽस्मान् मा हिंसिष्ट हिंसां मा कुरुत। हिनस्तेर्लुङ्। यत् यस्मात् पुरुषता पुरुषस्य भावः पुरुषता विभक्तिलोपः। पुरुषभावेन चलचित्तत्वेन वो युष्माकमागोऽपराधं वयं कराम कुर्मः। करोतेः शपि लङि रूपम् अडभावः। यद्यप्यपराधिनो वयं तथापि नास्मान् वधिष्टेत्यर्थः ( शु. मा. सं. १९।६२ )।

५. करवाम उ. म्यु. ६. तथापि उ. म्यु.

अथ त्रयोदशः—

आसीनासो अरुणीनामुपस्थे रयिन्धत्त दाशुषे मर्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्रयच्छत त इहोर्जन्दधात ॥ ६५ ॥

आसीनासः । अरुणीनाम् । उपस्थे । रयिम् । धत्त । दाशुषे । मर्त्याय ॥
पुत्रेभ्यः । पितरः । तस्य । वस्वः । प्र । यच्छत । ते । इह । ऊर्जम् । दधात ॥ ६५ ॥

हे पितरः, अरुणीनाम् अरुणवर्णानां तिलानाम्, उपस्थे उत्सङ्गे, आसीनासः आसीनाः, पितॄणां च तिलाश्च न तु अप्रसिद्धाः । अथवा अरुणीनाम् अरुणवर्णानां सूर्यरश्मीनाम् उपस्थे आसीनासः सायं सन्ध्यामुपासीना इत्यर्थः । दाशुषे हविर्दानशीलाय मर्त्याय रयिं धनं धत्त दत्त दानं कुरुत । किं च हे पितरः, वस्वो वसवो वसुरूपास्तस्य हविर्दानशीलस्य यजमानस्य पुत्रेभ्यः प्रयच्छत रयिं दत्त । अपि च ते यूयम्, इहास्मदीये यज्ञे ऊर्जं दधात स्थापयत । [ —अ० २१।४।१३ ]

अथ चतुर्दशः—

यमग्ने कव्यवाहन त्वञ्चिन्मन्यसे रयिम् ।
तन्नो गीर्भिः श्रवाय्यन्देवत्रा पनया युजम् ॥ ६६ ॥

यम् । अग्ने । कव्यवाहन । त्वम् । चित् । मन्यसे । रयिम् ॥
तत् । नः । गीर्भिः । श्रवाय्यम् । देवत्रा । पनय । युजम् ॥ ६६ ॥

हे कव्यवाहन पितृहविर्वाहक अग्ने, त्वं चित् त्वमपि यं रयिं यद्धविर्लक्षणं मन्यसे जानासि, अभिगच्छसीत्यर्थः । तद्धविर्लक्षणं नोऽस्माकं संबन्धिनीभिः[१] पुरोऽनुवाक्यायाज्यादिरूपाभिः ( अग्नि ) श्रवाय्यं श्रवणीययुक्तं देवतासम्बन्धि, देवत्रा देवेषु, पनय 'पन व्यवहारे' व्यवहर देवेभ्यः प्रयच्छेत्यर्थः । [ —अ० २१।४।१४ ]

अथ पञ्चदशः—

यो अग्निः कव्यवाहनः पितॄन्यक्षदृतावृधः ।
प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥ ६७ ॥

यः । अग्निः । कव्यवाहनः । पितॄन् । यक्षत् । ऋतावृधः ॥
प्र । इत् । उ । हव्यानि । वोचति । देवेभ्यः । च । पितृभ्यः । आ ॥ ६७ ॥

यः कव्यवाहनोऽग्निः, ऋतावृधः ऋतं सत्यं यज्ञं वा वर्धयतीति ऋतावृधः । दीर्घश्छान्दसः । तान् पितॄन् यक्षत् अयजत्, सोऽग्निरपि[२] देवेभ्यः [३]पितृभ्य एवेति विभज्य एव हव्यानि हवींषि[४], आभिमुख्येन प्रवोचति प्रब्रवीतु । [ —अ० २१।४।१५ ]

---

१. गीर्भिरिति योज्यम् । २. मन्त्रोक्तौ इत्, उ, अप्यर्थे ।
३. पितृभ्यश्च इत्येवकारार्थः, इमानि देवेभ्य एवेमानि पितृभ्य एवेति उ. म्यु. ।
४, यजूंषि उ. म्यु. ।

अथ षोडशः—

त्वमग्न ईळितो जातवेदो वाड्ढव्यानि सुरभीणि कृत्वी ।
प्रादाः पितृभ्यस्स्वधया ते अक्षन्नद्धि त्वन्देव प्रयता हवीꣳषि ॥ ६८ ॥

त्वम् । अग्ने । ईडितः । जातवेदः । अवाट् । हव्यानि । सुरभीणि । कृत्वी ॥
प्र । अदाः । पितृभ्यः । स्वधया । ते । अक्षन् । अद्धि । त्वम् । देव । प्रयता । हवींषि ॥ ६८ ॥

हे जातवेदः जातप्रज्ञ अग्ने, त्वम् ईडितः स्तुतः सन्, हव्यानि हवींषि, अवाट् प्रापितवानसि । किं च तानि सुरभीणि सुगन्धयुक्तानि कृत्वा पितृभ्यः, प्रादाः दत्तवानसि । ततः स्वधया स्वदत्तेन हविषा, ते पितरः, अक्षन् अभुञ्जन् । किं च देव द्योतमान अग्ने, त्वमपि प्रयता प्रयतानि शुद्धानि हवींषि, अद्धि भक्षय । [—अ० २१।४।१६]

अथ सप्तदशः—

इदम्पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।
ये पार्थिवे रजस्यानिषत्ता ये वा नूनꣳ सुवृजनासु विक्षु ॥ ६९ ॥

इदम् । पितृभ्यः । नमः । अस्तु । अद्य । ये । पूर्वासः । ये । उपरासः । ईयुः ॥
ये । पार्थिवे । रजसि । आ । निषत्ता । ये । वा । नूनम् । सुवृजनाः । सुविक्षु ॥ ६९ ॥

ये पितरः, अद्य इदानीं वर्त्तन्ते, पूर्वासः पूर्वे ये च स्वर्गं प्राप्य वर्त्तन्ते, येऽपि उपरासः उपराः कृतव्यापाराः, अथवा उप समीपे व्यवहिते आत्मनि रमन्त इत्युपराः, ये ईयुः परंब्रह्म प्राप्ताः, ये च पार्थिवे भौमे रजसि तेजोमयेऽग्नौ, आनिषत्ता आनिषण्णाः, ये वा नूनं निश्चयेन सुवृजनाः सु उत्पन्नाः, तेभ्यः सर्वेभ्यः पितृभ्यः इदं यद् दृश्यमानं नमोऽस्तु । [—अ० २१।४।१७]

अथाष्टादशः—

ये चेह पितरो ये च नेह याꣳश्च विद्म याँ२ उ च न प्रविद्म ।
त्वँवेत्थ यति ते जातवेदस्स्वधाभिर्यज्ञꣳ सुकृतञ्जुषस्व ॥ ७० ॥

ये । च । इह । पितरः । ये । च । न । इह । यान् । च । विद्म । यान् । उ । च । न । प्र । विद्म ॥
त्वम् । वेत्थ । यति । ते । जातवेदः । स्वधाभिः । यज्ञम् । सुकृतम् । जुषस्व ॥ ७० ॥

इह लोके ये च पितरो ये चेह लोके न वर्त्तन्ते, याँश्च यानपि पितॄन्, वयं विद्म जानीमः, यान् उ च याँश्चैव न प्रविद्म, हे जातवेदो जातप्रज्ञाग्ने, त्वम् ते [1]तान् वेत्थ जानासि । यति यान् ( वर्ण-लोपव्यत्ययौ छान्दसौ ) अवगच्छन्नित्यर्थः । स्वधाभिर्हविर्लक्षणैरन्नैः, सुकृतम् अस्मदीयं यज्ञम्, जुषस्व सेवस्व । ( —अ० २१।४।१८ )

अथैकोनविंशः—

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥ ७१ ॥

१. व्यत्ययः ।

**अधा । यथा । नः । पितरः । परासः । प्रत्नासः । अग्ने । ऋतम् । आ । शुषाणाः ॥**
**शुचि । इत् । अयन् । दीधितिम् । उक्थशासः । क्षामा । भिन्दन्तः । अरुणीः । अप । व्रन् ॥ ७१ ॥**

अधा यथा एवं सति, हे अग्ने, यथा येन प्रकारेण, नोऽस्माकं पितरः, परासः परा उत्कृष्टाः, प्रत्नासः पुराणाः, ऋतं यज्ञं सत्यं वा, आशुषाणा व्याप्नुवन्तः, उक्थशास उक्थशंसिनः, क्षामा व्यत्ययः, क्षामां भूमिं भिन्दन्तो यूपादिना विदारयन्तश्च, शुचि दीप्तं सौरं तेजः, दीधितिं सुषुम्णारश्मिम्, अयन् प्राप्ताः । प्राप्य च अरुणीः दीधितीः, तदुपलक्षितमार्गपर्वदेवता इत्यर्थः । अपव्रन् 'वृङ् संभक्तौ' अभजन्त । तथा कुर्विति शेषः । [—अ० २१।४।१९ ]

अथ विंशः—

**उशन्तस्त्वा निधीमह्युशन्तस्समिधीमहि ।**
**उशन्नुशत आ वह पितॄन् हविषे अत्तवे ॥ ७२ ॥**

**उशन्तः । त्वा । नि । धीमहि । उशन्तः । सम् । इधीमहि ॥**
**उशन् । उशतः । आ । वह । पितॄन् । हविषे । अत्तवे ॥ ७२ ॥**

हे अग्ने, त्वा त्वाम्, उशन्तः कामयमाना वयं निधीमहि उचिताधारे स्थापयामः, स्थाप्य च त्वां समिधीमहि सन्दीपयामः । अतस्त्वम् उशन् कामयमानः, उशतो हविः कामयमानपितॄन्, हविषे अत्तवे हविरत्तुम्, आवह । [ —अ० २१।४।२० ]

अथैकविंशः—

**अपाम्फेनेन नमुचेश्शिर इन्द्रोदवर्तयः ।**
**विश्वा यदजय स्पृधः ॥ ७३ ॥**

**अपाम् । फेनेन । नमुचेः । शिरः । इन्द्र । उद् । अवर्तयः ॥**
**विश्वाः । यत् । अजयः । स्पृधः ॥७३॥**

हे इन्द्र, यत् यदा, विश्वाः सर्वाः, स्पृधः समितीः, संग्रामानित्यर्थः । अजयः, तदा अपां फेनेन वज्रीभूतेन, नमुचेर्नमुचिनामकस्य राक्षसस्य शिरः, उदवर्तयश्छिन्धि । [ —अ० २१।४।२१ ]

इत्येकविंशेऽध्याये चतुर्थोऽनुवाकः ।

[ पञ्चमोऽनुवाकः ७४–७९ ]

चतुर्थे यजमानवाचनार्थाः पित्र्यादिमन्त्रा उक्ताः । पञ्चमे ग्रहोपस्थानमन्त्रा आम्नायन्ते ।

**सोमो राजामृतꣳ सुत ऋजीषेणाजहान्मृत्युम् ।**
**ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥७४॥**

**सोमः । राजा । अमृतम् । सुतः । ऋजीषेण । अजहात् । मृत्युम् ॥**
**ऋतेन । सत्यम् । इन्द्रियम् । वि । पानम् । शुक्रम् । अन्धसः । इन्द्रस्य । इन्द्रियम् । इदम् । पयः । अमृतम् । मधु ॥ ७४ ॥**

सोमो राजा दीप्तिमान्, सुतोऽभिषुतोऽमृतम् अमृतसमानमविनाशीत्यर्थः। यतोऽयं सोम ऋजीषेण गतरसेन सूक्ष्मावयवं पूजात्मकेनान्नरूपेण मृत्युमजहात् परित्यक्तवान्। किं चास्य सोमस्य रूपम् ऋतेन सत्याचरितेन सत्यमभूत्। इन्द्रियं वीर्यं बलहेतुत्वेनाभूत्। विपानं नमुचिशिरश्छेद-संजातलोहिताद्यविकृतत्वेन विशिष्टं पानार्हं चाभूत्। अत एव शुक्रं शुद्धम्, अपि च अन्धसोऽन्नात् सम्भृतम्, इन्द्रस्य सम्बन्धि पयः, इन्द्रियं वीर्यम् अमृतं च मधुरवर्णं संजातम्। [ —अ० २१।५।१ ]

अद्भ्यः क्षीरँ व्यपिबत्क्रुङ्ङाङ्गिरसो धिया।
ऋतेन सत्यमिन्द्रियँ विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु।
सोममद्भ्यो व्यपिबच्छन्दसा हँसः शुचिषत्।
ऋतेन सत्यमिन्द्रियँ विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु॥७५॥

अद्भ्यः। क्षीरम्। वि। अपिबत्। क्रुङ्। आङ्गिरसः। धिया॥
ऋतेन। सत्यम्। इन्द्रियम्। वि। पानम्। शुक्रम्। अन्धसः। इन्द्रस्य। इन्द्रियम्। इदम्। पयः। अमृतम्। मधु॥
सोमम्। अद्भ्यः। वि। अपिबत्। छन्दसा। हंसः। शुचिषत्॥
ऋतेन। सत्यम्। इन्द्रियम्। वि। पानम्। शुक्रम्। अन्धसः। इन्द्रस्य। इन्द्रियम्। इदम्। पयः। अमृतम्। मधु॥ ७५॥

य आङ्गिरसः प्राणः, अङ्गिरस्त्वात् प्राणस्य। क्रुङ् हंसः सन्, यद्यपि क्रुङ् क्रौञ्चस्तथापि [१]कुटिलगतिर्हंसोऽत्र विवक्षितः। धिया प्रज्ञया, क्षीरनीरयोर्मिश्रितयोः, अद्भ्यः सकाशात् क्षीरं व्यपिबत्। तस्य[२] च ऋतेन [३]सत्याचरितेन, इन्द्रियं वीर्यम्, विपानं विविच्य पानार्हम्, शुक्रं शुद्धम्, अन्धसोऽन्नात् संभृतं सत्यं भवतु। किञ्च इन्द्रसम्बन्धि इन्द्रियं वीर्यम्, पयः, अमृतं मधुररसवच्च भवतु। अथ हंसः आदित्यः, शुचिषत् शुचौ देशे वर्तमानः, छन्दसा छन्दोनिवहेन वेदेन, स्वभावेन मिश्रितयोः सोमोदकयोरद्भ्यः सकाशात्, सोमं व्यपिबद् विविच्यापिबत्। अन्यत् समानम्।
[ —अ० २१।५।२

अन्नात् परिस्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः।
ऋतेन सत्यमिन्द्रियँ विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु॥७६॥

अन्नात्। परि। स्रुतः। रसम्। ब्रह्मणा। वि। अपिबत्। क्षत्रम्। पयः। सोमम्। प्रजापतिः॥
ऋतेन। सत्यम्। इन्द्रियम्। वि। पानम्। शुक्रम्। अन्धसः। इन्द्रस्य। इन्द्रियम्। इदम्। पयः। अमृतम्। मधु॥ ७६॥

प्रजापतिः, रसं सारभूतं पयः सोमं च अन्नात् परिस्रुतः परिस्रवणं कुर्वतः सकाशात्, ब्रह्मणा वेदेन, व्यपिबत् विविच्यापिबत्। अनन्तरं क्षत्रियजातिं व्यपिबत् वशीकृतवानित्यर्थः। अन्यत् समानम्। [ —अ० २१।५।३ ]

१. कुटिलगतित्वयोगो उ. म्यु.। २. अस्य उ. म्यु.। ३. सत्येस्यावरणेन उ. म्यु.।

रेतो मूत्रं वि जहाति योनिम्प्रविशदिन्द्रियम् ।
गर्भो जरायुणावृत उल्वञ्जहाति जन्मना ।
ऋतेन सत्यमिन्द्रियँ विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥७७॥

रेतः । मूत्रम् । वि । जहाति । योनिम् । प्र । विशत् । इन्द्रियम् ।।
गर्भः । जरायुणा । आ । वृतः । उल्बम् । जहाति । जन्मना ॥
ऋतेन । सत्यम् । इन्द्रियम् । वि । पानम् । शुक्रम् । अन्धसः । इन्द्रस्य । इन्द्रियम् । इदम् ।
पयः । अमृतम् । मधु ॥ ७७ ॥

यथा लोके योनिं प्रविशत् प्रविशतः पुरुषस्य इन्द्रियं रेतो मूत्रं विजहाति विभज्य परित्यजति, बहिर्मूत्रं त्यजति गर्भाशये रेतस्त्यजतीत्यर्थः । यथा जरायुणा गर्भवेष्टनेन, आवृतो गर्भो जन्मना प्रसवेन, तद्रूपम् उल्बं जहाति, तथा देवताऽपि संस्पृष्टयोः सारासारयोरसारं परित्यज्य सारमेव स्वीकरोतीत्यर्थः । अन्यत् समानम् । [ —अ० २१।५।४ ]

दृष्ट्वा रूपे व्याकरोत्सत्यानृते प्रजापतिः ।
अश्रद्धामनृते दधाच्छ्रद्धाꣳ सत्ये प्रजापतिः ।
ऋतेन सत्यमिन्द्रियँ विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥७८॥

दृष्ट्वा । रूपे । वि । आकरोत् । सत्यानृते । प्रजापतिः ॥
अश्रद्धाम् । अनृते । अदधात् । श्रद्धाम् । सत्ये । प्रजापतिः ॥
ऋतेन । सत्यम् । इन्द्रियम् । वि । पानम् । शुक्रम् । अन्धसः । इन्द्रस्य । इन्द्रियम् । इदम् ।
पयः । अमृतम् । मधु ॥ ७८ ॥

प्रजापतिः सत्यानृते यथार्थायथार्थरूपे, दृष्ट्वा सत्यस्येदं रूपम् इत्यसाधारणे स्वरूपे उपलभ्येत्यर्थः, व्याकरोद् विभज्य कृतवान्[२] । अनृते अयथार्थरूपे, अश्रद्धाम् आस्तिक्यबुद्धिराहित्यम्, अदधात् स्थापितवान् । श्रद्धाम् आस्तिक्यबुद्धिं सत्ये परमार्थरूपे अदधात् । अन्यत् समानम् ।
[ —अ० २१।५।५ ]

वेदेन रूपे व्यपिबत्सुतासुतौ प्रजापतिः ।
ऋतेन सत्यमिन्द्रियँ विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ।
दृष्ट्वा परिस्रुतो रसꣳ शुक्रेण शुक्रं व्यपिबत्पयः सोमम्प्रजापतिः ।
ऋतेन सत्यमिन्द्रियँ विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु॥७९॥

वेदेन । रूपे । वि । अपिबत् । सुतासुतौ । प्रजापतिः ॥
ऋतेन । सत्यम् । इन्द्रियम् । वि । पानम् । शुक्रम् । अन्धसः । इन्द्रस्य । इन्द्रियम् । इदम् ।
पयः । अमृतम् । मधु ॥
दृष्ट्वा । परि । स्रुतः । रसम् । शुक्रेण । शुक्रम् । वि । अपिबत् । पयः । सोमम् । प्रजापतिः ॥
ऋतेन । सत्यम् । इन्द्रियम् । वि । पानम् । शुक्रम् । अन्धसः । इन्द्रस्य । इन्द्रियम् । इदम् ।
पयः । अमृतम् । मधु ॥ ७९ ॥

---

१. पाठस्तु उ. म्यु. ।
२. इत्यर्थः उ. म्यु. ।

प्रजापतिर्वेदेन त्रयीविद्यया, सुतासुतौ अभिषुतानभिसुतौ सोमपयोरूपौ[१] अङ्गौ, रूपे व्यपिबत्, इदमस्य रूपम् इदमस्य रूपमिति। सोमपयसोः रूपे विविच्यापिबत्। ऋतेनेत्यादि समानम्। प्रजापतिः शुक्रेण शुद्धेन मन्त्रेण, शुक्रं शुद्धम्, परिस्रुतः स्रवणं कुर्वतोऽन्नस्य, रसं रूपं दृष्ट्वा पयः सोमं च व्यपिबत्। अन्यत् समानम्। [ —अ० २१।५।६ ]

इत्येकविंशेऽध्याये पञ्चमोऽनुवाकः।

[ षष्ठोऽनुवाकः ८०—९५ ]

पञ्चमे ग्रहोपस्थानमन्त्रा उक्ताः षष्ठेऽनुवाके वसाग्रहहोममन्त्रा आम्नायन्ते। कात्यायनः—

"खुरैर्वसाग्रहान् द्वात्रिंशतं जुहोति सीसेनेति प्रत्यृचं द्वौ द्वौ हुत्वा शेषान्त्सते करोति" इति ( अ० १९।४।१२-१३ )। तथा च ब्राह्मणम्—

"शफग्रहा भवन्ति, शफैर्वै पशवः प्रतितिष्ठन्ति, प्रतिष्ठामेवैनं गमयति। त्रयस्त्रिंशद् ग्रहा भवन्ति, त्रयस्त्रिंशद् वै सर्वा देवताः, सर्वाभिरेवैनमेतद् देवताभिरभिषिञ्चति। जगतीभिर्जुहोति, जागता वै पशवो जगत्यैवास्मै पशूनवरुन्धे। षोडशभिः ऋग्भिर्जुहोति, षोडशकला वै पशवोऽनुकलमेवास्मिञ्छ्रियन्दधाति। सीसेन तन्त्रं मनसा मनीषिण इति। द्वौ द्वौ समासं हुत्वा सते संस्रवान्त्समवनयति" इति ( श०, का० १२। प्र० ४। ब्रा० २। अ० ८। ब्रा० ३। क० १३-१४ )।

तत्र प्रथमा—

सीसेन तन्त्रम्मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति।
अश्विना यज्ञꣳ सविता सरस्वतीन्द्रस्य रूपँव्वरुणो भिषज्यन् ॥ ८० ॥

सीसेन। तन्त्रम्। मनसा। मनीषिणः। ऊर्णासूत्रेण। कवयः। वयन्ति।।
अश्विना। यज्ञम्। सविता। सरस्वती। इन्द्रस्य। रूपम्। वरुणः। भिषज्यन्।। ८०।।

कवयः क्रान्तदर्शिनो मनीषिणो बुद्धिमन्तः, अस्मिन् सरस्वत्यादयो देवाः मनसा पर्यालोच्य, सीसेन सीसकृतेन आज्यकुम्भादिद्रव्येण, तन्त्रं सौत्रामण्याख्यं यज्ञप्रयोगम्, ऊर्णासूत्रेण अविशलाकाकम्बलं वयन्ति रचयन्ति। गुणतोऽभिहितमेव नामतो विविच्यते। अश्विना अश्विनौ, सविता च सरस्वती च वरुणश्चैते सर्वे देवा इन्द्रस्य स्वरूपभूतं सौत्रामण्याख्यं यज्ञं भिषज्यन् अचिकित्सन्त अरचयन्नित्यर्थः। [ —अ० २१।६।१ ]

अथ द्वितीया—

तदस्य रूपममृतꣳ शचीभिस्तिस्रो दधुर्देवताः सꣳरराणाः।
लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य माꣳसमभवन्न लाजाः ॥ ८१ ॥

तद्। अस्य। रूपम्। अमृतम्। शचीभिः। तिस्रः। दधुः। देवताः। सम्। रराणाः।। लोमानि। शष्पैः। बहुधा। न। तोक्मभिः। त्वक्। अस्य। मांसम्। अभवत्। न। लाजाः।।८१।।

---

१. च वर्णौ उ. म्यु.

अश्विनौ सरस्वती चेति तिस्रो देवताः, रराणाः परस्परं रममाणाः, शचीभिः कर्मभिः शक्तिभिर्वा, अस्येन्द्रस्य भैषज्यात्मकं यज्ञरूपम्, अमृतं मरणरहितं संदधुः। शष्पैर्बालतृणैः, तोक्मभिः, चकारोऽत्र समुच्चये। अङ्कुरितैर्व्रीहिभिश्च, बहुधा नानाविधैर्यज्ञात्मकस्येन्द्रियस्य लोमानि संदधुः। लाजा अस्य यज्ञात्मकस्य इन्द्रियस्य। नकार इवकारार्थः। त्वगिव मांसमिव वाऽभवन्। [—अ० २१।६।२]

अथ तृतीया—

**तदुश्विना भिषजा रुद्रवर्तनी सरस्वती वयति पेशो अन्तरम्।**
**अस्थि मुज्जानम्मासरैः कारोतरेण दधतो गवान्त्वचि ॥ ८२ ॥**

तत्। अश्विना। भिषजा। रुद्रवर्तनी। सरस्वती। वयति। पेशः। अन्तरम्॥
अस्थि। मज्जानम्। मासरैः। कारोतरेण। दधतः। गवाम्। त्वचि॥ ८२॥

रुद्रवर्तनी रुद्रस्येव वर्तनी मार्गो ययोस्तौ, क्षिप्रं रोगविनाशकावित्यर्थः। अश्विना अश्विनौ, भिषजा भिषजौ, सरस्वती च, अन्तरं शरीरमध्ये, पेशो रूपम्, वयति निष्पादयति। किं च अस्थि मज्जानं च, मासरैः, व्रीहिश्यामाकौदनानां चूर्णस्य संसर्गेण मासराणि भवन्ति, तैः सह गवां त्वचि, व्यवस्थितेन कारोतरेण, गोचर्ममयः सुराधारको वराहमुखः कारोतरः, यद् वा अवटसदृशो वेणुदलनिर्मितश्चर्मणा सर्वत्र परिवेष्टितः सुरास्रवणार्थं भाण्डाकारपदार्थविशेषः कारोतरः, तेन च दधतोऽश्विनावधारयताम्। [—अ० २१।६।३]

अथ चतुर्थः—

**सरस्वती मनसा पेशलँव्वसु नासत्याभ्याँव्वयति दर्शतँव्वपुः।**
**रसम्परिस्रुता न रोहितन्नग्नहुर्धीरस्तसरन्न वेम ॥ ८३ ॥**

सरस्वती। मनसा। पेशलम्। वसु। नासत्याभ्याम्। वयति। दर्शतम्। वपुः॥
रसम्। परि। स्रुता। न। रोहितम्। नग्नहुः। धीरः। तसरम्। न। वेम॥ ८३॥

सरस्वती, नासत्याभ्याम् अश्विभ्यां सहिता, मनसा, दर्शतं दर्शनाय, पेशलं कोमलम्, वसु देवासने निवासयोग्यम्, वपुः शरीरम्, वयति निष्पादयति। वपुर्निष्पाद्य पश्चात् सरस्वती परिस्रुता, "निधारया स्रवन्ती सुरा परिस्रुता" इत्युच्यते। न इवार्थे, तया सुरयेव, रसं सारभूतम्, रोहितं रक्तम्, वयति तस्मिन् शरीरे निष्पादयति। तत्र दृष्टान्तः—धीरो बुद्धिमान्, नग्नहुर्नग्नं वस्त्ररहितं ह्वयतीति नग्नहुः, कुविन्दोऽत्र विवक्षितः। वेम, व्यत्ययः। वेम्ना (१वेम) तसरम् अन्नतन्तुसम्पत्तियुक्तं वस्त्रं तसरमिति कुविन्दानां परिभाषा। अर्थात् सरस्वती वपुश्च रक्तं च वयतीति पूर्वेण संबन्धः। [—अ० २१।६।४]

अथ पञ्चमः—

**पयसा शुक्रममृतञ्जनित्रँ सुरया मूत्राज्जनयन्त रेतः।**
**अपामतिन्दुर्मतिम्बाधमाना ऊवध्यँ व्वातँ सुवन्तदारात् ॥८४॥**

---

१. वाचा दण्डेन वेम्ना पदम् उ. म्यु.।

पयसा । शुक्रम् । अमृतम् । जनित्रम् । सुरया । मूत्रात् । जनयन्त । रेतः ॥
अप । अमतिम् । दुर् । मतिम् । बाधमानाः । ऊवध्यम् । वातम् । सवम् । तत् । आरात् ॥८४॥

अमतिम् अज्ञानम्, दुर्मतिं विपरीतज्ञानं च, अपबाधमाना यं हरन्ति अश्विनौ सरस्वती चेति तिस्रो देवताः । पयसा क्षीरेण सुरया च, शुक्रं दीप्तिमत्, अमृतं मरणरहितम्, जनित्रं पुत्रोत्पादकं रेतः, मूत्राद् मूत्रद्वारात्, जनयन्त उत्पादयन्ति, उत्पाद्ये शरीरे, आरात् समीपे उदरमध्ये, ऊवध्यम् ईषत्पाकमन्नं पुरीषम्, सवं श्वासवातान् शब्दरहितं पाकस्य साधनं वा, वातं वायुं च जनयन्तीत्यर्थः । [ —अ० २१।६।५ ]

अथ षष्ठः—

इन्द्रस्सुत्रामा हृदयेन सत्यम्पुरोळाशेन सविता जजान ।
यकृत्क्लोमानँ वरुणो भिषज्यन्मतस्ने वायव्यैर्न मिनाति पित्तम् ॥८५॥

इन्द्रः । सुत्रामा । हृदयेन । सत्यम् । पुरोडाशेन । सविता । जजान ॥
यकृत् । क्लोमानम् । वरुणः । भिषज्यन् । मतस्ने । वायव्यैः । न । मिनाति । पित्तम् ॥८५॥

सुत्रामा [1]सम्यग् रक्षकः, पशुपुरोडाशदेवता इन्द्रः पशुहृदयेन, सत्यं यज्ञात्मकस्येन्द्रियस्य सत्यं धर्मयुक्तं हृदयं ज्ञानं वा, जजान जनयति । सविता च पुरोडाशेन यकृत्–क्लोमानौ उभयपार्श्ववर्त्तिनौ द्वौ मांसखण्डौ तौ जनयति । भिषज्यन् भेषजं कुर्वन् वरुणश्च, वायव्यैः सोमग्रहपात्रैः, मतस्ने स्नायुविशेषौ यकृत्क्लोमानौ समीपवर्त्तिनि मांसे, पित्तं च मिनाति जनयतीत्यर्थः ।
[ —अ० २१।६।६ ]

अथ सप्तमः—

आन्त्राणि स्थालीर्मधु पिन्वमाना गुदाः पात्राणि सुदुघा न धेनुः ।
श्येनस्य पत्रन्न प्लीहा शचीभिरासन्दी नाभिरुदरन्न माता ॥ ८६ ॥

आन्त्राणि । स्थालीः । मधु । पिन्वमानाः । गुदाः । पात्राणि । सुदुघा । न । धेनुः ॥
श्येनस्य । पत्रम् । न । प्लीहा । शचीभिः । आसन्दी । नाभिः । उदरम् । न । माता ॥ ८६ ॥

मधु पिन्वमाना मधुररसक्षीरादिसेवनार्थाः, स्थालीः स्थाल्यः, आन्त्राणि पुरीतत आसन्नित्यर्थः । पिष्टादि—[2]स्थापनाय यानि पात्राणि, गुदा अपानस्थानीया ह्यासन् । धेनुर्नवप्रसूता गौरपि, सुदुघा न सुष्ठु पयसो दोग्ध्रीवाभूत् । श्येनस्य पत्रम्, प्लीहा गुल्मवद् अभूत् । आसन्दी राष्ट्रम्, शरीर-नाभिरभूत् । माता भूमिरुदरम् उदरमिवाभूत् । [ —अ० २१।६।७ ]

अथाष्टमः—

कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्याङ्गर्भो अन्तः ।
प्लाशिर्व्यक्तश्शतधार उत्सो दुहे न कुम्भी स्वधाम्पितृभ्यः ॥ ८७ ॥

१. सुष्ठु उ. म्यु. ।
२. स्थाल्यां निधाय उ. म्यु. ।

कुम्भः । वनिष्ठुः । जनिता । शचीभिः । यस्मिन् । अग्रे । योन्याम् । गर्भः । अन्तः ॥
प्लाशिः । व्यक्तः । शतधारः । उत्सः । दुहे । न । कुम्भी । स्वधाम् । पितृभ्यः ॥ ८७ ॥

द्रवद्रव्याधारकः कुम्भो वनिष्ठुरुलूकपक्षिसदृशः शरीरान्तर्वर्त्तिमांसविशेषोऽभूत् । स च शचीभिः कर्मभिः शक्तिभिर्वा जनिता, यस्मिन् वनिष्ठौ, अग्रे पुरोभागे, योन्याम् अन्तर्गर्भो वर्त्तते, प्लाशिर्व्यक्तः सुराचयनार्थं शतच्छिद्रोपेतो यः कुम्भः प्रसिद्धः, शतच्छिद्रोपेतत्वात् कुम्भाधाराः सुराः ता आवरणयुक्तत्वात्, उत्सः श्वासग्राहि नासिकाच्छिद्रम् अभूत् । अत्र द्रवद्रव्याधारभूता या कुम्भी ताम् अध्वर्युः, पितृभ्यः स्वधाम् अमृतरसं दुहे न दोग्ध्रीव । [ —अ० २१।६।८ ]

अथ नवमः—

मुख॑ꣳ सद॑स्य॒ शिर॒ इत्सते॑न जि॒ह्वा प॒वित्र॑म॒श्विना॒सन्त्सर॑स्वती ।
चप्यं॒न्न* पा॒युर्भि॒षग॑स्य॒ वालो॑ व॒स्तिर्न शेपो॒ हर॑सा तर॒स्वी ॥ ८८ ॥

मुखम् । सत् । अस्य । शिरः । इत् । सतेन । जिह्वा । पवित्रम् । अश्विना । आसन् । सरस्वती ॥
चप्यम् । न । पायुः । भिषक् । अस्य । वालः । वस्तिः । न । शेपः । हरसा । तरस्वी ॥ ८८ ॥

सतेन [1]यजमानेन पात्रेण वा, अस्य निरूप्यमाणेन्द्रशरीरस्य मुखम्, शिर इत् शिरश्च सम्पन्नम्, पवित्रं ब्रह्मशोधकं वस्त्रं जिह्वाऽभूत् । अश्विनौ सरस्वती च देवता आसन्, एतस्य सर्वस्य कारणभूता अभवन् । चप्यं[2] पिष्टपात्रम्, पायुरपानस्थानमिवाभूत् । द्रव्यशोधनार्थो वालोऽस्येन्द्रस्य भिषगभूत् । शेपः पशोर्मेढ्रोऽस्येन्द्रस्य, वस्तिर्मूत्रस्थानमिवाभवत् । हरसा तेजसा वीर्येण वा, तरस्वी अयं निरूप्यमाणो देहो वेगवानिव वर्त्तते । [ —अ० २१।६।९ ]

अथ दशमः—

अ॒श्विभ्यां॒ चक्षु॑र॒मृत॒ङ्ग्रहा॑भ्या॒ञ्छाग॑ने॒न तेजो॑ ह॒विषा॑ शृ॒तेन॑ ।
पक्ष्मा॑णि गो॒धूमैः॒ कुव॑लैरु॒तानि॒ पेशो॒ न शु॒क्रमसि॑तँ व्वसाते ॥ ८९ ॥

अश्विभ्याम् । चक्षुः । अमृतम् । ग्रहाभ्याम् । छागेन । तेजः । हविषा । शृतेन ॥
पक्ष्माणि । गोधूमैः । कुवलैः । उतानि । पेशः । न । शुक्रम् । असितम् । वसाते ॥ ८९ ॥

अश्विभ्यां देवताभ्याम् इन्द्रस्य चक्षुः संस्क्रियते इति शेषः । ग्रहाभ्याम् अश्विभ्याम्, अमृतं तच्च विनाशरहितं क्रियते । शृतेन पक्वेन, हविषा हविरात्मकेन छागेन आज्येन, तेजस्तस्य चक्षुषो दीप्तिः क्रियते । तस्य चक्षुषः पक्ष्माणि सक्तुनिष्पादनार्थे गोधूमैः क्रियन्ते । कुवलैर्बदरविशेषैः, उतानि पक्ष्माणि परस्परसंबद्धानि क्रियन्ते । पक्ष्म चक्षुषो रूपम् । शुक्रम् असितं न वसाते कृष्णं च अश्विनौ पक्ष्मभिराच्छादयतः । [ —अ० २१।६।१० ]

अथैकादशः—

अवि॒र्न मे॒षो न॒सि वी॒र्या॑य प्रा॒णस्य॒ पन्था॑ अ॒मृतो॒ ग्रहा॑भ्याम् ।
सर॑स्वत्युप॒वाकै॒र्व्या॒नन्नस्या॑नि ब॒र्हिर्बद॑रैर्जजान ॥ ९० ॥

---

* चप्यन्न, सा. [1]. देव उ. म्यु. [2]. तयी पिप्पप उ. म्यु.

अविः । न । मेषः । नसि । वीर्याय । प्राणस्य । पन्थाः । अमृतः । ग्रहाभ्याम् ॥
सरस्वती । उपवाकैः । व्यानम् । नस्यानि । बर्हिः । बदरैः । जजान ॥ ९० ॥

अविर्न मेषो नसि सारस्वतो मेषश्च नसि इन्द्रस्य नासिकायां वीर्याय श्वासप्रवृत्तिसामर्थ्याय वर्त्तत इति शेषः । प्राणस्य प्राणाख्यस्य वायोः पन्था गमनागमनहेतुमार्गः । अमृतो विनाशरहितो ग्रहाभ्यां सारस्वताभ्यां क्रियते । सरस्वती, उपवाकैर्हरितयवसक्तुभिः, व्यानं व्यानाख्यं वायुं जनयति । नस्यानि नसि भवानि लोमानि, बर्हिः, व्यत्ययः, बर्हिषो यज्ञस्य संबन्धिभिर्बदरैः सक्तुसम्पादनार्थैर्बदरफलैर्जजान सरस्वती जनयति । [—अ० २१।६।११]

अथ द्वादशः—

इन्द्रस्य रूपमृषभो बलाय कर्णाभ्याꣳ श्रोत्रममृतङ्ग्रहाभ्याम् ।
यवा न बर्हिर्भ्रुवि केसराणि कर्कन्धु जज्ञे मधु सारघम्मुखात् ॥ ९१ ॥

इन्द्रस्य । रूपम् । ऋषभः । बलाय । कर्णाभ्याम् । श्रोत्रम् । अमृतम् । ग्रहाभ्याम् ॥
यवाः । न । बर्हिः । भ्रुवि । केसराणि । कर्कन्धु । जज्ञे । मधु । सारघम् । मुखात् ॥ ९१ ॥

य ऋषभ इन्द्रस्य इन्द्रदेवतात्मकत्वेन तत्स्वरूपभूतस्य बलाय इन्द्रशरीरस्य बलार्थं सम्पद्यत इति शेषः । कर्णाभ्यां पशोः श्रोत्राभ्याम्, ग्रहाभ्यां पयः सुराग्रहाभ्यां चामृतं विनाशरहितं श्रोत्रम् इन्द्रस्य श्रोत्रस्येन्द्रियं सम्पद्यते । यवा न यज्ञार्थं सम्पादिता यवाश्च बर्हिश्च, भ्रुवि भ्रुवोः, केसराणि लोमानि सम्पद्यन्ते । कर्कन्धु स्थूलबदरपिष्टम्, सारघं मधुमक्षिकाभिः सम्पादितं मधुसदृशं सत्, मुखाद् यज्ञस्य प्रारम्भे इत्यर्थः । जज्ञे जातम् । [—अ० २१।६।१२]

अथ त्रयोदशः—

आत्मन्नुपस्थे न वृकस्य लोम मुखे श्मश्रूणि न व्याघ्रलोम ।
केशा न शीर्षन्यशसे श्रियै शिखा सिꣳहस्य लोम त्विषिरिन्द्रियाणि ॥ ९२ ॥

आत्मन् । उपस्थे । न । वृकस्य । लोम । मुखे । श्मश्रूणि । न । व्याघ्रलोम ॥
केशाः । न । शीर्षन् । यशसे । श्रियै । शिखा । सिंहस्य । लोम । त्विषिः । इन्द्रियाणि ॥९२॥

वृकस्य लोम, [1]प्रतिकृतिभूतायां [2]सौत्रामण्यामतिदेशप्राप्तानि ग्रहत्रये प्रक्षिप्यन्ते । तत्र यद् वृकस्य लोम तद् आत्मन् आत्मनि सम्पाद्यमाने इन्द्रस्य देहे, उपस्थे न गुह्यप्रदेश इव वर्तते । व्याघ्र[3]लोम यद् व्याघ्रस्य लोम तदिन्द्रस्य मुखे, वर्त्तमानश्मश्रूणि न[4] श्मश्रूणीव, यत् सिंहस्य लोम च तत् शीर्षन् इन्द्रशीर्ष्णि वर्त्तमानाः, केशा न केशा इव, तैः केशैर्निष्पन्ना इन्द्रस्य शिखा, यशसे कीर्त्त्यै, श्रियै सम्पदे न भवति । त्विषिर्या केशगता दीप्तिः सा, इन्द्रियाणि सम्पाद्य, अस्येन्द्रियस्थानानीत्यर्थः । [—अ० २१।६।१३]

---

१. प्रकृति उ. म्यु. । २. त्रयाणि लोमानीति विहितानि वृकव्याघ्रसिंहलोमानि यस्यां विकृतिभूतायां सौत्रामण्यामवशेषप्राप्तानि गर्भत्रये प्रक्षिप्यन्ते । ३. व्याघ्रलोमप्रकृतिभूतायां सौत्रमण्यां त्रयाणि लोमानि विहितानि । वृकव्याघ्रसिंहलोमानि यस्यां विकृतिभूतायां सौत्रमण्यामवशेषप्राप्तानि गर्भत्रये प्रक्षिप्यन्ते, उ. म्यु. । ४. च उ. म्यु.

अथ चतुर्दशः—

**अङ्गा॑न्या॒त्मन्भि॒षजा॒ तद॒श्विना॒त्मान॒मङ्गैः॒ सम॑धा॒त्सर॑स्वती ।**
**इन्द्र॑स्य रू॒पꣳ श॒तमा॑न॒मायु॑श्च॒न्द्रेण॒ ज्योति॑र॒मृत॒न्दधा॑नाः ॥ ९३ ॥**

अङ्गानि । आत्मन् । भिषजा । तत् । अश्विना । आत्मानम् । अङ्गैः । सम् । अधात् । सरस्वती ॥
इन्द्रस्य । रूपम् । शतमानम् । आयुः । चन्द्रेण । ज्योतिः । अमृतम् । दधानाः ॥ ९३ ॥

देवानां वैद्यावश्विनौ, आत्मन् आत्मनः संबन्धिभिः स्वकीयैरङ्गैस्तत्र यागकाले इन्द्रस्याङ्गानि सम्पादितवन्तौ। सरस्वती च स्वकीयेन देहेन, इन्द्रस्याऽऽत्मानं देहं समदधात्। तथा स्वकीयेन रूपेणेन्द्रस्य देहं समदधात्। आयुः इन्द्रस्याऽऽयुरपि, शतमानं दैवेन मानेन शतसंवत्सरपरिमितं सरस्वती समदधात्। ईदृशी शक्तिरश्विनोः सरस्वत्याश्च कथमित्यत आह-चन्द्रेणोपलक्षितम् आह्लाद-करं ज्योतिः स्वप्रकाशं तेजः, अमृतम् अविनाशि परंब्रह्म [1]आत्मत्वेन दधाना अश्विसरस्वत्य इन्द्रस्याऽऽत्मनि समदधुः। अचिन्त्यशक्तिपरंब्रह्मस्वरूपधारकत्वेनाश्विसरस्वतीनामेवैतादृशी शक्ति-रुपपन्नेति भावः। [—अ० २१।६।१४]

अथ पञ्चदशः—

**सर॑स्वती॒ योन्या॒ङ्गर्भ॑म॒न्तर॒श्विभ्या॒म्पत्नी॒ सुकृ॑त॒म्बिभ॑र्त्ति ।**
**अ॒पाꣳ रसे॑न॒ वरु॑णो॒ न साम्नेन्द्र॑ꣳ श्रि॒यै ज॒नय॑न्न॒प्सु राजा॑ ॥ ९४ ॥**

सरस्वती । योन्याम् । गर्भम् । अन्तः । अश्विभ्याम् । पत्नी । सुकृतम् । बिभर्त्ति ॥
अपाम् । रसेन । वरुणः । न । साम्ना । इन्द्रम् । श्रियै । जनयन् । अप्सु । राजा ॥ ९४ ॥

पत्नी सृष्टेः कर्तृब्रह्मणो जाया जगतां पालयित्री वा सरस्वती, योन्याम् उत्पत्तिस्थाने, अन्तर्मध्ये, सुकृतं सर्वप्राणिपुण्यकर्मरूपम् उत्पाद्यशरीरकारणं गर्भम्, अश्विभ्यां सहिता बिभर्ति। राजा दीप्तिमान् वरुणोऽपि, अपां रसेन सारेण, साम्ना सामोपलक्षितेन ऋगादिसर्वमन्त्रजातेन चेन्द्रं पुष्णातीति शेषः। एवमेताः सर्वा अश्विसरस्वत्यादयो देवताः, अप्सु स्वस्वकर्मसु निमित्तभूतेषु, श्रियै सर्वैश्वर्यार्थम्, जनयन् इन्द्रमुत्पादितवत्य इत्यर्थः। [—अ० २१।६।१५]

अथ षोडशः :—

**तेजः॑ प॒शू॒नाꣳ ह॒विरि॑न्द्रि॒याव॑त् प॒रि॒स्रुता॒ पय॑सा सार॒घम्मधु॑ ।**
**अ॒श्विभ्या॑न्दु॒ग्धम्भि॒षजा॒ सर॑स्वत्या सुतासु॒ताभ्या॑म॒मृत॒स्सोम॒ इन्दुः॑ ॥ ९५ ॥**

तेजः । पशूनाम् । हविः । इन्द्रियावत् । परिस्रुता । पयसा । सारघम् । मधु ॥
अश्विभ्याम् । दुग्धम् । भिषजा । सरस्वत्या । सुतासुताभ्याम् । अमृतः । सोमः । इन्दुः ॥ ९५ ॥

परिस्रुता परितः स्रवणं कुर्वता, पयसा क्षीरेण जातम्, पशूनां सम्बन्धि तेज आज्यम्—"तेजो वा आज्यम्" इति श्रुतेः ( श०, का० १३ । प्र० १ । ब्रा० १ । अ० १ । ब्रा० १ । क० १ )। हविः, सारघं मधुमक्षिकाभिः संजातं मधु। इन्द्रियावद् इन्द्रियाभिवृद्धिकारणं सामर्थ्यलब्धिसम्पन्नम्, अश्विसरस्वतीप्रसादादिति शेषः। [2]भिषजा व्यत्ययः, भिषग्भ्याम् अश्विभ्याम्, सरस्वत्या च, दुग्धम्

१. विनाशिशरीरे उ. म्यु. २. एवम् उ. म्यु.

इन्द्रस्य सोमस्वरूपं परिपूरितम् । यस्मात् सुतासुताभ्याम् अभिषुतानभिषुताभ्यां सोमपयोभ्यां सह सर्वं हविर्वीर्यंवज्जातम्, तस्मादिन्दुः क्लेदनादिगुणयुक्तः, सोमोऽमृतः अविनाशी, अमरत्वसाधकोऽभूदित्यर्थः । [—अ० २१।६।१६]

इत्येकविंशेऽध्याये षष्ठोऽनुवाकः ।

## [ सप्तमोऽनुवाकः ९६–१११ ]

सप्तमेऽनुवाके आसन्दीनिधान [1]मन्त्रा आम्नायन्ते । तत्र कात्यायनः—"**आसन्दीं जानुमात्रपादीं वेद्योर्निदधाति क्षत्रस्य नाभिरसि**" इति (अ० १९।४।८) । पाठस्तु—

**क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि ॥ ९६ ॥**

***( मा त्वा हिꣳसीन्मा मा हिꣳसीः ॥ )**

**क्षत्रस्य । नाभिः । असि । क्षत्रस्य । योनिः । असि ॥**

**(मा । त्वा । हिंसीत् । मा । मा । हिंसीः ।) ॥ ९६ ॥**

हे आसन्दि त्वं क्षत्रस्य क्षत्रजातेर्नाभिस्थितस्थानमसि । किं च त्वं क्षत्रस्य योनिरुत्पत्तिस्थानमसि । तथा च ब्राह्मणम्—"**अथैनां कृष्णाजिने स्तृणाति मा त्वा हिꣳसीन्मा मा हिꣳसीरिति यज्ञो वै कृष्णाजिनं यज्ञस्य चैवाऽऽत्मनश्च हिꣳसाया**" इति ( श०, का० १२ । प्र० ४ । ब्रा० २ । अ० ८ । ब्रा० ३ । क० ९ ) । [—अ० २१।७।१]

कात्यायनः—"**तस्मिन्नास्ते यजमानो निषसाद**" इति (अ० १९।४।९) ब्राह्मणे त्वन्यथा विनियोगः श्रूयते—"**अथाधिरोहति वारुण्यर्चेति**" इति ( श०, का० १२ । प्र० ४ । ब्रा० २ । अ० ८ । ब्रा० ३ । क० १० ) । पाठस्तु—

**निषसाद धृतव्रतो वरुणः पस्त्यास्वा ।**

**साम्राज्याय सुक्रतुः ॥ ९७ ॥**

**नि । ससाद । धृतव्रतः । वरुणः । पस्त्यासु । आ ॥**

**साम्राज्याय । सुक्रतुः ॥ ९७ ॥**

पस्त्यासु पश्चिमासु दिक्षु, सुक्रतुः शोभन—[2]स्तुत्या याजी, धृतव्रतः स्वीकृतव्रतो वरुणः, साम्राज्याय साम्राज्यार्थम्, आनिषसाद आनिषण्णः, यद्वा सुक्रतुः शोभनसंकल्पोऽयं यजमानो धृतव्रतः स्वीकृतनियमो वरुणः, फलप्रतिबन्धपापनिवारकः सन् साम्राज्याय, पस्त्यासु गृहसमानेषु आसन्दीस्थानेषु, आनिषसाद सम्यगुपनिविष्टवानित्यर्थः । [—अ० २१।७।२]

कात्यायनः—"**पादयो रुक्ममुपन्यस्यति राजतꣳ सव्ये मृत्योरिति सौवर्णꣳ शिरस्येके विद्योद्**" इति ( अ० १९।४।१०-११ ) । पाठस्तु—

**मृत्योः पाहि विद्योत्पाहि ॥ ९८ ॥**

**मृत्योः । पाहि । विद्योत् । पाहि ॥ ९८ ॥**

१. निधान्यादि उ. म्यु. *. अयं मन्त्रांशः तालदलपुस्तके नोपलब्धः । २. राजसूय उ. म्यु.

हे राजतरुक्म मृत्योः सकाशात् पाहि मां रक्ष। हे सुवर्णज रुक्म, विद्योद् विद्युतः सकाशात् पाहि। तथा च ब्राह्मणम्—"अथ सुवर्णरजतौ रुक्मौ व्युपास्यति मृत्योः पाहीति विद्योत्पाहीति। वृष्टिर्वै विराट् तस्या एते घोरे तन्वौ विद्युच्च ह्रादुनिश्च, तत। सुवर्ण एव रुक्मो विद्युतो रूपꣳ रजतो ह्रादुनेस्ताभ्यामेवास्मै देवताभ्याꣳ शर्म यच्छति। तस्मात्सौत्रामण्येजानस्यैताभ्यां देवताभ्यां न शङ्का भवत्यथो य एवमेतद् वेद" इति ( श०, का० १२। प्र० ४। ब्रा० २। अ० ८। ब्रा० ३। क० ११ )। [ —अ० २१।७।३ ]

कात्यायनः—"शेषैरभिषिञ्चत्या मुखादवस्रावयन् प्रतिदिशꣳ सर्वत्र सावित्रमश्विनोः सरस्वत्या इन्द्रस्येति प्रतिमन्त्रम्" इति ( अ० १९।४।१४ )। तथा च ब्राह्मणमपि—आश्विनेन प्रथमेन यजुषाभिषिञ्चत्यथ सारस्वतेनाथैन्द्रेण" इति ( श०, का० १२। प्र० ४। ब्रा० २। अ० ८। ब्रा० ३। क० १८ )। पाठस्तु—

**दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्या॑म्पू॒ष्णो हस्ता॑भ्याम्। अ॒श्विनो॒र्भैष॑ज्येन॒ तेज॑से ब्रह्मवर्च॒साया॒भिषि॑ञ्चा॒मि॒ सर॑स्वत्यै॒ भैष॑ज्येन वी॒र्या॑या॒न्नाद्या॑या॒भिषि॑ञ्चामीन्द्र॑स्येन्द्रि॒येण॒ बला॑य श्रि॒यै यश॑से॒ऽभिषि॑ञ्चामि ॥ ९९ ॥**

देवस्य। त्वा। सवितुः। प्रसवे। अश्विनोः। बाहुभ्याम्। पूष्णः। हस्ताभ्याम् ॥ अश्विनोः। भैषज्येन। तेजसे। ब्रह्मवर्चसाय। अभि। सिञ्चामि। सरस्वत्यै। भैषज्येन। वीर्याय। अन्नाद्याय। अभि। सिञ्चामि। इन्द्रस्य। इन्द्रियेण। बलाय। श्रियै। यशसे। अभि। सिञ्चामि ॥ ९९ ॥

सवितुर्देवस्य, प्रसवे प्रेरणे सति, अश्विनोः संबन्धिभ्यां बाहुभ्यां पूष्णः पूषसंबन्धिभ्यां हस्ताभ्याम्, अश्विनोः संबन्धिना, भैषज्येन ओषधिरूपेण हुतशेषेण, त्वा त्वां यजमानम्, तेजसे कान्त्यै, ब्रह्मवर्चसाय वृत्ताध्यायेन सम्पत्त्यै वाऽभिषिञ्चामि। सावित्रं यजुरुत्तरत्रानुषञ्जनीयम्। सरस्वत्यै सरस्वत्याः संबन्धिना, भैषज्येन औषधरूपेण हुतशेषेण, वीर्याय सामर्थ्यार्थम्, अन्नाद्याय अन्नाद्यार्थं च, त्वामभिषिञ्चामि। इन्द्रस्य संबन्धिना, इन्द्रियेण सामर्थ्यरूपेण हुतशेषेण, बलाय बलार्थम् , श्रियै ऐश्वर्यार्थम्, यशसे कीर्त्यर्थं च त्वामभिषिञ्चामि। [ —अ० २१।७।४ ]

कात्यायनः—"यजमानमालभते कोऽसि" इति ( अ० १९। ४। १९ )। पाठस्तु—

**कोऽसि कत॒मो॑ऽसि॒ कस्मै॑ त्वा॒ काय॑ त्वा ॥ १०० ॥**

कः। असि। कतमः। असि। कस्मै। त्वा। काय। त्वा ॥ १०० ॥

हे यजमान त्वं कः प्रजापतिरसि, "प्रजापतिर्वै कः" ( श०, का० ४। प्र० ४। ब्रा० ७। अ० ५। ब्रा० ६। क० ४ ) इति श्रुतेः। अतस्त्वं कतमोऽविज्ञातरूपविशेषोऽसि। प्रजापतेः सर्वात्मकत्वरूपविशेषस्य दुर्ज्ञातत्वात्। अतः कस्मै अप्रमेयस्वरूपसिद्धयर्थम्, त्वा त्वामालभते स्पृशामीत्यर्थः। काय प्रजापतिरूपसिद्धयर्थं च, त्वा त्वां स्पृशामीति शेषः। [ —अ० २१।७।५ ]

कात्यायनः—"सुश्लोकेत्यालब्धो ह्वयति" इति ( अ० १९।४।२० )। पाठस्तु—

**सुश्लो॒क्॒ सुम॑ङ्ग॒ल॒ सत्य॑राजन् ॥ १०१ ॥**

सुश्लोक। सुमङ्गल। सत्यराजन् ॥ १०१ ॥

हे सुरलोक हे सुकीर्त्ते, हे सुमङ्गल सुमङ्गलाचरण, हे सत्यराजन्, सत्येन राजत इति सत्यराजः, तस्य संबोधने, छान्दसत्वात् नकारान्तम्, आह्वयतीति शेषः। [ —अ० २१।७।६ ]

कात्यायनः—"अङ्गानि चाऽऽलभते यथालिङ्गꣳ शिरो म इति प्रतिमन्त्रम्" इति ( अ० १९।४।२१ ) शिरो म इत्यादिना सार्धपञ्चर्चेन शिरःप्रभृतीनि अङ्गानि यथालिङ्गं संस्पृशेदित्यर्थः।

तत्र प्रथमा—

**शिरो॑ मे॒ श्रीर्यशो॒ मुख॒न्त्विषिः॒ केशा॑श्च॒ श्मश्रू॑णि ।**
**राजा॑ मे प्रा॒णो अ॒मृत॑ꣳ स॒म्राट् चक्षु॑र्वि॒राट् श्रोत्र॑म् ॥ १०२ ॥**

**शिरः । मे । श्रीः । यशः । मुखम् । त्विषिः । केशाः । च । श्मश्रूणि ॥**
**राजा । मे । प्राणः । अमृतम् । सम्राट् । चक्षुः । विराट् । श्रोत्रम् ॥ १०२ ॥**

मे मदीयं शिरः, श्रीरनुवर्ततामिति शेषः। मे मुखं यशोऽनुवर्तताम्। केशाश्च मदीयान् केशानपि, त्विषिः कान्तिरप्यनुवर्तताम्। मे [1]श्मश्रूणि, राजा दीप्यमानः सोमोऽनुवर्तताम्। मे प्राणः प्राणममृतं सुधा विनाशरहितं ब्रह्मानुवर्तताम्। मे चक्षुः सम्राडनुवर्तताम्। मे श्रोत्रम्, विराट् स्थूलदेहाभिमानी देवोऽनुवर्तताम्। [ —अ० २१।७।७ ]

अथ द्वितीया—

**जि॒ह्वा मे॑ भ॒द्रँ व्वाङ् म॒हो मनो॑ म॒न्युस्स्व॒राड् भाम॑: ।**
**मोदा॑: प्रमो॒दा अ॒ङ्गुली॒रङ्गा॑नि मि॒त्रम्मे॒ सह॑: ॥ १०३ ॥**

**जिह्वा । मे । भद्रम् । वाक् । महः । मनः । मन्युः । स्वराट् । भामः ॥**
**मोदाः । प्रमोदाः । अङ्गुलीः । अङ्गानि । मित्रम् । मे । सहः ॥ १०३ ॥**

मे जिह्वा, भद्रं कल्याणम् अनुवर्तताम्। मे वाक् वाचम्, महः पूजा अनुवर्तताम्। मे मनः, मन्युः क्रतुरनुवर्तताम्। मे भामः [2]क्रोधः, स्वराड् भ्रातृव्यनिराकरणे स्वतन्त्रोऽस्तु। मोदा हर्षाः, प्रमोदाः प्रकृष्टहर्षाः, यथाक्रमं मे अङ्गुलीः, अनुक्तान्यङ्गानि यथाक्रममनुवर्तन्ताम्। मे सहो बलम्, मित्रं सुहृदनुवर्तताम्। [ —अ० २१।७।८ ]

अथ तृतीया—

**बा॒हू मे॒ बल॑मिन्द्रि॒यꣳ हस्तौ॑ मे॒ कर्म॑ वी॒र्य॑म् ।**
**आ॒त्मा क्ष॒त्रमुरो॒ मम॑ ॥ १०४ ॥**

**बाहू । मे । बलम् । इन्द्रियम् । हस्तौ । मे । कर्म । वीर्यम् ॥**
**आत्मा । क्षत्रम् । उरः । मम ॥ १०४ ॥**

मे बाहू बलं सामर्थ्यम्, इन्द्रियसाहाय्यं[3] चानुवर्तताम्। मम[4] हस्तौ मणिबन्धस्याग्रिम-[5]भागौ, वीर्यं वीर्यवत् कर्मानुवर्तताम्। ममाऽऽत्मा क्षत्रं बाह्यशरीरम्, उरश्चानुवर्तताम् [—अ० २१।७।९]

---

१. मम उ. म्यु.। २. अति उ. म्यु.।
३. शौर्यम् उ० म्यु०, ४. मे उ० म्यु०, ५. अग्र उ० म्यु०,

अथ चतुर्थी—

पृष्टीर्मे राष्ट्रमुदरमश्सौ ग्रीवाश्च श्रोणी।
ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वतः ॥ १०५ ॥

पृष्टीः। मे। राष्ट्रम्। उदरम्। अंसौ। ग्रीवाः। च। श्रोणी॥
ऊरू। अरत्नी। जानुनी। विशः। मे। अङ्गानि। सर्वतः॥ १०५॥

मे पृष्टीः [1]पायोरुपरिस्थितान्यस्थीनि, राष्ट्रमनुवर्तताम्। उदरादीनि जान्वन्तानि प्रसिद्धानि मे एतानि अन्यान्यपि सर्वाण्यङ्गानि, विशः सर्वतोऽनुवर्तन्ताम्। [—अ० २१।७।१०]

अथ पञ्चमी—

नाभिर्मे चित्तं विज्ञानम्पायुर्मेऽपचितिर्भसत्।
आनन्दनन्दा आण्डौ मे भगस्सौभाग्यम्पसः॥ १०६॥

नाभिः। मे। चित्तम्। विज्ञानम्। पायुः। मे। अपचितिः। भसत्॥
आनन्दनन्दौ। आण्डौ। मे। भगः। सौभाग्यम्। पसः॥ १०६॥

मे नाभिश्चित्तं चैतन्यम्, विज्ञानं बुद्धिमनुवर्तताम्। मे पायुरपानस्थानम्, भसत् मदीयानां स्त्रीणां प्रजननस्थानं च, अपचितिः पूजामनुवर्तताम्। मे आण्डौ, आनन्दनन्दौ, आनन्दः प्रकृष्टं सुखम्, नन्दः सुखमात्रमनुवर्तताम्। मे पसः शिश्नः, भग ऐश्वर्यम्, सौभाग्यं सुभगत्वं वाऽनुवर्तताम्। [—अ० २१।७।११]

[2] अथ षष्ठी—

जङ्घाभ्याम्पद्भ्यान्धर्मोऽस्मि विशि राजा प्रतिष्ठितः॥ १०७॥

जङ्घाभ्याम्। पद्भ्याम्। धर्मः। अस्मि। विशि। राजा। प्रति। स्थितः॥ १०७॥

जङ्घाभ्यां जान्वधोभागाभ्याम्, धर्मः पुण्यकृद्[3] देहस्य धारको वाऽस्मि। अतो विशिष्टप्रज्ञायां प्रतिष्ठितो राजाऽस्मि। [—अ० २१।७।१२]

कात्यायनः—"कृष्णाजिनेऽवरोहति प्रतिक्षत्र इति" (अ० १९।४।२३)। पाठस्तु—

प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रति तिष्ठामि गोषु।
प्रत्यङ्गेषु प्रति तिष्ठाम्यात्मन्प्रति प्राणेषु प्रति तिष्ठामि पुष्टे।
प्रति द्यावापृथिव्योः प्रति तिष्ठामि यज्ञे॥ १०८॥

प्रति। क्षत्रे। प्रति। तिष्ठामि। राष्ट्रे। प्रति। अश्वेषु। प्रति। तिष्ठामि। गोषु॥
प्रति। अङ्गेषु। प्रति। तिष्ठामि। आत्मन्। प्रति। प्राणेषु। प्रति। तिष्ठामि। पुष्टे॥
प्रति। द्यावापृथिव्योः। प्रति। तिष्ठामि। यज्ञे॥ १०८॥

---

१. पार्श्वयोः उ० म्यु०। २. अवशेषार्थपाठस्तु उ० म्यु०। ३. कर्म उ० म्यु०।

प्रतिक्षत्रे क्षत्रं क्षत्रं बलं बलं क्षत्रियजातिर्वा। तत्र सर्वत्र प्रतितिष्ठामि। स्थैर्येणावस्थितोऽस्मि। तथा राष्ट्रे सर्वस्मिन् देशे प्रतितिष्ठामि। प्रतिष्ठितेषु सर्वेष्वश्वेषु प्रतितिष्ठामि। तथा गोषु प्रतितिष्ठामि। तथा प्रत्यङ्गेषु प्रत्यङ्गं सर्वेष्वङ्गेषु प्रतितिष्ठामि। आत्मन् आत्मनि शरीरे प्रतितिष्ठामि। तथा प्रतिप्राणेषु सर्वेषु प्राणेषु प्रतितिष्ठामि। तथा पृष्ठे शरीरस्य पृष्ठे प्रतितिष्ठामि। प्रतिद्यावापृथिव्योः सर्वत्र द्यावापृथिव्योः प्रतितिष्ठामि। [—अ० २१।७।१३]

कात्यायनः —"त्रया देवा इति शस्त्रान्ते जुहोति" इति ( अ० १९।५।८)।

**त्रया देवा एकादश त्रयस्त्रिꣳशास्सुराधसः।**
**बृहस्पति पुरोहिता देवस्य सवितुस्सवे।**
**देवा देवैरवन्तु मा॥ १०९॥**

**त्रयाः। देवाः। एकादश। त्रयस्त्रिशाः। सुराधसः॥**
**बृहस्पतिपुरोहिताः। देवस्य। सवितुः। सवे॥**
**देवाः। देवैः। अवन्तु। मा॥ १०९॥**

एकादश एकादशसंख्याका देवाः, त्रयाः त्रयस्त्रिविधाः पृथिव्यामेकादश, अन्तरिक्ष एकादश, दिव्येकादश इति। तथा च श्रुतिः—"ये देवा दिव्येकादशस्थ पृथिव्यां मध्ये एकादशस्थ अप्सु क्षितौ महिनैकादश" इति ( शुक्लयजुः०, अ० ७। अनु० ८।१ )। त्रयस्त्रिशाः सुराधसः शोभनस्य कर्मणः साधकाः शोभनसाधना वा बृहस्पतिः पुरोहितो येषां ते बृहस्पतिपुरोहिताः, देवस्य सवितुः, सवे प्रेरणे सति एते देवा इतरैर्देवैः सहिता मामवन्तु। [—अ० २१।७।१४]

**प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयास्सत्येन।**
**सत्यँय्यज्ञेन यज्ञो यजुर्भिर्यजूꣳषि सामभिः।**
**सामान्यृग्भिरृचः पुरोऽनुवाक्याभिः पुरोऽनुवाक्या याज्याभिर्याज्या वषट्कारैः।**
**वषट्कारा आहुतिभिराहुतयो मे कामान्त्समर्धयन्तु भूस्स्वाहा॥ ११०॥**

**प्रथमाः। द्वितीयैः। द्वितीयाः। तृतीयैः। तृतीयाः। सत्येन॥**
**सत्यम्। यज्ञेन। यज्ञः। यजुर्भिः। यजूंषि। सामभिः॥**
**सामानि। ऋग्भिः। ऋचः। पुरोऽनुवाक्याभिः। पुरोऽनुवाक्याः। याज्याभिः। याज्याः। वषट्कारैः॥**
**वषट्काराः। आहुतिभिः। आहुतयः। मे। कामान्। समर्धयन्तु। भूः स्वाहा॥ ११०॥**

तत्र प्रथमाः प्रथमगणस्था देवाः, द्वितीयैर्द्वितीयगणस्थैः सहिता मामवन्तु। द्वितीयास्तृतीयगणस्थैः सहिताः, तृतीयाः सत्येन सहिताश्च, सत्यं यज्ञेन सहितम्, यज्ञो यजुर्भिः सहितः, तानि यजूंषि सामभिः सहितानि, सामानि ऋग्भिः सहितानि, ऋचश्च पुरोऽनुवाक्यासहिताः, पुरोऽनुवाक्याश्च याज्याभिः सहिताः, याज्याश्च वषट्कारैः सहिताः, वषट्कारा आहुतिभिः सहिता मामवन्त्विति सर्वत्रान्वयः। ताश्च आहुतयो मे मदीयान् कामान् समर्धयन्तु। समृद्धान् कुर्वन्तु। भूः स्वाहा भूमौ स्वाहुतमस्तु। ब्राह्मणानुसारेण प्रथमा द्वितीयैरित्यारभ्य आहुतिभिरित्यन्तेषु पर्यायेषु यजमानमभि-

षिञ्चतीत्यध्याहारः कार्यः। प्रथमा द्वितीयैरिति प्रथमा ह्येतं द्वितीयैरभिषिञ्चति। द्वितीयास्तृतीयैरिति द्वितीया ह्येतं तृतीयैरभिषिञ्चतीति। [—अ० २१।७।१५]

कात्यायनः—"प्रत्यक्षभक्षं यजमानो लोमानि प्रयतिरिति" इति (अ०१९।५।१०)। [1]इति शेषः।

लोमा॑नि॒ प्रय॑ति॒र्मम॒ त्वङ्म॒ आन॑ति॒राग॑तिः।
मा॒ꣳसम्म॒ उप॑नति॒र्वस्व॒स्थि॑ म॒ज्जा म॒ आन॑तिः॥ १११॥

लोमानि। प्र। यतिः। मम। त्वक्। मे। आ। नतिः। आ। गतिः॥
मांसम्। मे। उप। नतिः। वसु। अस्थि। मज्जा। मे। आ। नतिः॥ १११॥

मम मदीयानि लोमानि, प्रयतिः प्रयत्नस्य शुद्धेर्वा कारणानि सन्तीत्यर्थः। मे मदीया त्वग् आनतिः प्रह्वीभावकारणम्, आगतिर्द्रव्यागमनकारणं वाऽस्तु। मे मदीयं मांसमुपनतिरिष्टसम्पत्तिहेतुरस्तु। मे मदीयमस्थि च वसु धनकारणमस्तु। मे [2]मज्जा वाऽऽनतिरितरवशीकरणहेतुरस्तु। [—अ० २१।७।१६]

इत्येकविंशेऽध्याये सप्तमोऽनुवाकः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्तक-श्रीवीरबुक्कणभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीयवेदार्थप्रकाशे काण्वसंहिताभाष्ये एकविंशोऽध्यायः।



१. भक्षयति उ. म्यु.। २. मम उ. म्यु.।

# अथ द्वाविंशोऽध्यायः

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

[ प्रथमोऽनुवाकः १—११ ]

अथ द्वाविंशेऽध्यायेऽवभृथेष्टिमासरकुम्भप्लावन्यादिमन्त्रा आम्नायन्ते । कात्यायन :—"अवभृथेऽष्टेर्मासरकुम्भं प्लावयति" इति (अ० १९।५।१३) । यद्देवेत्यादिभिः पञ्चभिर्मन्त्रैरवभृथेष्टिमासरकुम्भं प्लावयतीत्यर्थः । तत्र प्रथमः—

यद्देवा देवहेळनन्देवासश्चकृमा वयम् ।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ १ ॥

यत् । देवाः । देवहेडनम् । देवासः । चकृम । वयम् ॥
अग्निः । मा । तस्मात् । एनसः । विश्वात् । मुञ्चतु । अंहसः ॥ १ ॥

हे देवासः, द्योतनात्मका हे देवाः, द्विरुक्तिरादरार्था वा । देवहेडनं देवविषयमपराधं वयं चकृम अकार्ष्म, तस्मादपराधकृतात्, एनसः पापात्, मा माम्, अग्निः मुञ्चतु मोचयतु । किं च तत्प्रसङ्गात्, विश्वात् सर्वस्मात्, अंहसः पापात्, मा मां मुञ्चतु । [ —अ० २२।१।१ ]

अथ द्वितीयः—

यदि दिवा यदि नक्तमेनांꣳसि चकृमा वयम् ।
वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ २ ॥

यदि । दिवा । यदि । नक्तम् । एनांसि । चकृम । वयम् ॥
वायुः । मा । तस्मात् । एनसः । विश्वात् । मुञ्चतु । अंहसः ॥ २ ॥

यदि दिवा अहनि, यदि नक्तं रात्रौ, एनांसि निषिद्धकर्मकृतानि पापानि, वयं चकृम, वायुरिति। अन्यत् स्पष्टम् । [—अ० २२।१।१]

अथ तृतीयः—

यदि जाग्रद्यदि स्वप्न एनांꣳसि चकृमा वयम् ।
सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ ३ ॥

यदि । जाग्रत् । यदि । स्वप्ने । एनांसि । चकृम । वयम् ॥
सूर्यः । मा । तस्मात् । एनसः । विश्वात् । मुञ्चतु । अंहसः ॥ ३ ॥

यदि जाग्रति निद्राक्षयकाले, यदि वा स्वप्ने सायंकाले । अन्यत् स्पष्टम् । [—अ० २२।१।३]

अथ चतुर्थः—

यद्ग्रामे यदरण्ये यत्सभायाँय्यदिन्द्रिये।
यच्छूद्रे यदर्ये यदेनश्चकृमा वयम्।
यदेकस्याधिधर्मणि तस्यावयजनमसि।
यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च।
अवभृथ निचुम्पुण निचेरुरसि निचुम्पुण।
अवदेवैर्देवकृतमेनो यक्ष्यव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देवरिषस्पाहि ॥४॥

यत्। ग्रामे। यत्। अरण्ये। यत्। सभायाम्। यत्। इन्द्रिये ॥
यत्। शूद्रे। यत्। अर्ये। यत्। एनः। चकृम। वयम् ॥
यत्। एकस्य। अधिधर्मणि। तस्य। अव। यजनम्। असि ॥
यत्। आपः। अघ्न्याः। इति। वरुण। इति। शपामहे। ततः। वरुण। नः। मुञ्च ॥
अवभृथ। निचुम्पुण। निचेरुः। असि। निचुम्पुण ॥
अव। देवैः। देवकृतम्। एनः। यक्षि। अव। मर्त्यैः। मर्त्यकृतम्। पुरुराव्णः। देव।
रिषः। पाहि ॥ ४ ॥

ग्रामे यद् एनश्चकृम कृतवन्तः, अरण्ये च यद् एनश्चकृम, सभायां सदसि यदेनश्चकृम, इन्द्रिये चक्षुरादीन्द्रिय विषये यदेनश्चकृम, शूद्रे शूद्रजातौ, अर्ये स्वामिनि वैश्ये वा, वयं यदेनश्चकृम, एकस्याधिधर्मणि पत्नीयजमानयोरेकाधिकारतया विहितेऽधिधर्मणि च यदेनश्चकृम, तस्य सर्वस्य एनसः, अवयजनम्, अवपूर्वो यजिर्नाशार्थे वर्त्तते, विनाशकारणमसि। आपः प्रसिद्धाः, अघ्न्या गावः, उपलक्षणमेतत्। यद् विश्वमस्ति तदस्मिन् विषये। हे वरुण इत्यनेन प्रकारेण सत्यरूपेणानृतरूपेण वा शपामहे शपथं कुर्मह इति यत् पापं शपथकारणं निमित्तमस्ति हे वरुण, द्विः संबोधनमादरार्थम्। ततः शपथकृतात् पापात्, नोऽस्मान्मुञ्च।

हे अवभृथकर्माभिमानिन् वरुण, निचुम्पुण नितरां मन्दं गच्छ। निचेरुः यद्यपि नितरां चरणशीलोऽसि तथाप्यत्र निचुम्पुण मन्दं गच्छ। देव-[1]विषयापराधं कृतमेनः पापम्, [2]देवैरितरैः सहितः सन्, अवयक्षि विनाशय। किं च मर्त्यकृतं मर्त्येषु ऋत्विक्षु कृतमेनो मर्त्यैः ऋत्विग्भिः सहितः सन् अवयक्षि विनाशय। हे देव द्योतमानावभृथ, पुरुराव्णो बहुविधविरुद्धफलदायिनः, रिषो हिंसकात् पापात्, पाहि रक्ष। [ —अ० २२।१।४ ]

अथ पञ्चमः—

समुद्रे ते हृदयमप्स्वन्तस्सन्त्वा विशन्त्वोषधीरुतापः ॥ ५ ॥

समुद्रे। ते। हृदयम्। अप्सु। अन्तः। सम्। त्वा। विशन्तु। ओषधीः। उत। आपः ॥५॥

हे मासरकुम्भ ते हृदयम्, समुद्रे समुद्रसदृशासु, अप्सु, अन्तर्मध्ये विशतु। किं च त्वा त्वाम्, ओषधीः ओषधयः संविशन्तु, उत अपि च, आपस्त्वां संविशन्तु। [—अ० २२।१।५]

१. कृत उ. म्यु.। २. तत् उ. म्यु.।

कात्यायनः—"सुमित्रिया न इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं प्रतिमुञ्चति" इति ( अ० १९।५।१५ )।

सुमित्रिया न आप ओषधयस्सन्तु दुर्मित्रियास्तस्मै सन्तु।
योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः॥ ६॥

सुमित्रियाः। नः। आपः। ओषधयः। सन्तु। दुर्मित्रियाः। तस्मै। सन्तु॥
यः। अस्मान्। द्वेष्टि। यम्। च। वयम्। द्विष्मः॥ ६॥

हे आपः ओषधयश्च, नोऽस्मान् प्रति, सुमित्रियाः शोभनमित्रार्हाः सन्तु। योऽस्मान् उदासीनानपि द्वेष्टि, यश्च वयं द्विष्मः, तस्मै द्विषे, आप ओषधयश्च दुर्मित्रिया अकल्याणार्हाः सन्तु। [—अ० २२।१।६]

कात्यायनः—"वा सोपासनं द्रुपदादिव" इति ( अ० १९।५।१६ )।

द्रुपदादिव मुमुचानस्स्विन्नस्स्नातो मलादिव।
पूतम्पवित्रेणेवाज्यमापश्शुन्धन्तु मैनसः॥७॥

द्रुपदात्। इव। मुमुचानः। स्विन्नः। स्नातः। मलात्। इव॥
पूतम्। पवित्रेण। इव। आज्यम्। आपः। शुन्धन्तु। मा। एनसः॥ ७॥

तस्करस्य पादम् अच्छिद्रेण दारुणा कीलयन्ति तद् द्रुपदम्, तस्मान्मुमुचान इव मुच्यमान इव यथा[1] शुद्धो भवति, यथा वा स्विन्नो गमनागमनपरिश्रमेण युक्तः स्वेदयुक्तः पुमान् स्वेदनिवृत्त्यर्थं स्नातः सन्, मलात् स्वेदान्मुच्यमानो निर्मलो भवति, यथा वाऽऽज्यमुत्पवनपवित्रेण पूतं भवति तद्वत्, मा माम्, आपः एनसः पापात् शुन्धन्तु शुद्धं कुर्वन्तु। [—अ० २२।१।७]

"उद्वयं तमसस्परि" इत्युत्क्रामति। अत एव कात्यायनः—"सोमवदुत्क्रमणम्" इति ( अ० १९।५।१७ )। पाठस्तु—

उद्वयन्तमसस्परि स्वः पश्यन्त उत्तरम्।
देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥ ८॥

उत्। वयम्। तमसः। परि। स्वः। पश्यन्तः। उत्तरम्॥
देवम्। देवत्रा। सूर्यम्। अगन्म। ज्योतिः। उत्तमम्॥ ८॥

तमसस्तमःप्रचुरस्यास्य लोकस्यान्धकारस्योपर्युपरि वर्त्तमानम्, स्वः स्वर्गं लोकम्, उत्तरम् उत्तरकम्, प्रकृष्टं च[1] पश्यन्तो वयं देवत्रा देवेषु मध्ये, देवं द्योतमानम्, सूर्यं सर्वप्रेरकम्, उत्तमम् उत्कृष्टतमम्, ज्योतिरगन्म उद्याताःस्म। [—अ० २२।१।८]

कात्यायनः—"आहवनीयमुपतिष्ठत अपो अद्य" इति ( अ० १९।५।१८)। पाठस्तु—

अपो अद्यान्वचारिषꣳ रसेन समसृक्ष्महि।
पयस्वानग्न आगमन्तम्मा सꣳसृज वर्चसा प्रजया च धनेन च॥९॥

---

१. वा उ. म्यु.

अपः । अद्य । अनु । अचारिषम् । रसेन । सम् । असृक्ष्महि ॥
पयस्वान् । अग्ने । आ । अगमम् । तम् । मा । सम् । सृज । वर्चसा । प्रजया । च । धनेन । च ॥९॥

अद्य अस्मिन्नहनि, अहम् अपोऽनुसृत्य, अचारिषम् अवभृथकर्म अकार्षम् । अतो रसेन अपां रसेन सर्वे वयं समसृक्ष्महि संसृष्टा अभूम । [1]अग्ने पयस्वान् जलसारयुक्तोऽहम् आगतोऽस्मि । तं तादृशम्, मा मां वर्चसा तेजसा, प्रजया पुत्रादिना धनेन, संसृज संयोजय । [—अ० २२।१।९]

कात्यायनः—"एधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसि" इति (अ० १९।५।१९)।

पाठस्तु—

एधोऽस्येधिषीमहिँ समिदसि तेजोऽसि तेजो मयि धेहि ॥ १० ॥

एधः । असि । एधिषीमहि । समित् । असि । तेजः । असि । तेजः । मयि । धेहि ॥१०॥

हे समित् त्वम् एधोऽसि त्वमिन्धनमसि अतस्त्वामाधाय वयमेधिषीमहि समृद्धिं प्राप्नुमः, अग्निं समर्धयामो वा । यतस्त्वं [2]समिदसि, अतस्तेजोऽसि तेजःकारणमसि, तस्मात् तेजो मयि धेहि स्थापय । [ —अ० २२।१।१० ]

कात्यायनः—"जुहोति च समाववर्ति" इति (अ० १९।५।२०) । पाठस्तु—

समाववर्ति पृथिवी समुषाः समु सूर्यः ।
समु विश्वमिदं जगत् ।
वैश्वानर ज्योतिर्भूयासँ विभून् कामान् व्यश्नवै भूस्स्वाहा ॥ ११ ॥

सम् । आ । ववर्ति । पृथिवी । सम् । उषाः । सम् । उ । सूर्यः ॥
सम् । उ । विश्वम् । इदम् । जगत् ॥
वैश्वानर । ज्योतिः । भूयासम् । विभून् । कामान् । वि । अश्नवै । भूः । स्वाहा ॥ ११ ॥

पृथिवी समाववर्ति मया सह समागता । तथा उषाः उषःकालः समाववर्ति । सूर्यः सूर्योऽपि समाववर्ति । इदं विश्वं जगत् सर्वं जगदपि समाववर्ति । अतो वैश्वानर विश्वनरहित, अहं ज्योतिर्भूयासम्, त्वत्प्रसादाद् विभून् व्याप्तान्, कामान् अभीष्टान्, व्यश्नवै व्याप्नुयाम् । भूः पृथिवी स्वाहा त्वयि स्वाहुतमस्तु । [—अ० २२।१।११]

इति द्वाविंशेऽध्याये प्रथमोऽनुवाकः ।

[ द्वितीयोऽनुवाकः १२—१९ ]

द्वितीयेऽनुवाके समिदभ्याधानादिमन्त्रा आम्नायन्ते । कात्यायन :—"अभ्यादधामीति प्रत्यृचमाहवनीये तिस्रः समिधोऽभ्यादधाति" इति (अ० १९।१।१२) । तत्र प्रथमा—

---

१. हे उ. म्यु. । २. समिन्धनम् उ. म्यु. ।

अभ्यादधामि समिधमग्ने व्रतपते त्वयि ।
व्रतञ्च श्रद्धाञ्चोपैमीन्धे त्वा दीक्षितो अहम् ॥ १२ ॥

अभि । आ । दधामि । समिधम् । अग्ने । व्रतपते । त्वयि ॥
व्रतम् । च । श्रद्धाम् । च । उप । एमि । इन्धे । त्वा । दीक्षितः । अहम् ॥ १२ ॥

हे व्रतपते व्रतपालकाग्ने, त्वयि समिधम् अभ्यादधामि, व्रतं पयोव्रतादिनियमं च श्रद्धाम् आस्तिक्यबुद्धिं चोपैमि; अतो दीक्षितोऽहम्, त्वा त्वाम् इन्धे समिधा दीपयामि। [—अ० २२।२।१]

अथ द्वितीया—

यत्र ब्रह्म च क्षत्रञ्च सम्यञ्चौ चरतस्सह ।
तँल्लोकम्पुण्यम्प्रज्ञेषँय्यत्र देवास्सहाग्निना ॥ १३ ॥

यत्र । ब्रह्म । च । क्षत्रम् । च । सम्यञ्चौ । चरतः । सह ॥
तम् । लोकम् । पुण्यम् । प्र । ज्ञेषम् । यत्र । देवाः । सह । अग्निना ॥ १३ ॥

यत्र यस्मिन् लोके, ब्रह्म ब्राह्मणजातिश्च, क्षत्रं क्षत्रियजातिश्च उभे, सम्यञ्चौ, व्यत्ययः, समीचीनम्, सह पूज्यपूजकभावेन चरतः, तं लोकं पुण्यं धर्मसाधनं प्रज्ञेषं जानीयाम्। यत्र यस्मिंश्च लोके देवा इन्द्रादयोऽग्निना सह चरन्ति तमपि लोकं प्रज्ञेषमित्यर्थः। [—अ० २२।२।२]

यत्रेन्द्रश्च वायुश्च सम्यञ्चौ चरतस्सह ।
तँल्लोकम्पुण्यम्प्रज्ञेषँय्यत्र सेदिर्न विद्यते ॥ १४ ॥

यत्र । इन्द्रः । च । वायुः । च । सम्यञ्चौ । चरतः । सह ॥
तम् । लोकम् । पुण्यम् । प्र । ज्ञेषम् । यत्र । सेदिः । न । विद्यते ॥ १४ ॥

यत्र यस्मिन् लोके, इन्द्रश्च वायुश्च उभौ सम्यञ्चौ सम्यग् गतिमन्तौ सह चरतस्तं लोकम्, पुण्यं पुण्यहेतुम्, प्रज्ञेषम् अवगच्छेयम्। किं च यत्र लोके, सेदिर्निषेधो न विद्यते शास्त्रतो नास्ति तमपि लोकम् अवगच्छेयमित्यर्थः। [—अ० २२।२।३]

कात्यायनः—"संसृज्य स्वार्द्रौं त्वा अंशुना इति त्रिरात्रं निदधाति" इति (अ० १६।१।२२)।

पाठस्तु—

अंशुना ते अंशुः पृच्यताम्परुषा परुः ।
गन्धस्ते सोममवतु मदाय रसो अच्युतः ॥ १५ ॥

अंशुना । ते । अंशुः । पृच्यताम् । परुषा । परुः ॥
गन्धः । ते । सोमम् । अवतु । मदाय । रसः । अच्युतः ॥ १५ ॥

सुरासन्धाने द्वितीयमन्त्रोऽयम् । हे सुरे, ते तव, अंशुः सूक्ष्मावयवः, अंशुना सूक्ष्मावयवेन, पृच्यतां संसृज्यताम् । ते परुः पर्व च सोमस्य परुषा पर्वणा संपृच्यताम् । किं च हे सुरे, ते गन्धः सोममवतु रक्षतु । किं च तेऽच्युतो विनाशरहितो रसो मदाय भवतु । [—अ० २२।२।४]

कात्यायनः—"पूतामादत्ते सिञ्चन्ति परिषिञ्चन्ति" इति (अ० १९।२।६) । पाठस्तु—

सिञ्चन्ति परि षिञ्चन्त्युत्सिञ्चन्ति पुनन्ति च ।
सुरायै बभ्र्वै मदे किन्त्वो वदति किन्त्वः ॥ १६ ॥

सिञ्चन्ति । परि । सिञ्चन्ति । उत् । सिञ्चन्ति । पुनन्ति । च ॥
सुरायै । बभ्र्वै । मदे । किन्त्वः । वदति । किन्त्वः ॥ १६ ॥

यस्याः सुरायाः सेचनं कुर्वन्ति पयःप्रभृतिभिः, परिषिञ्चन्ति उत्सिञ्चन्ति च, ग्रहे यां गोबाल—हिरण्यादिभिः पुनन्ति शोधयन्ति तस्या एव, सुरायै व्यत्ययः, सुरायाः । बभ्र्वै बभ्रुवर्णाया मदे स्थित इन्द्रः, किन्त्वः कस्य त्वं कस्य त्वं ब्रूहीति वदतीत्यर्थः । [—अ० २२।२।५]

"धानावन्तं करम्भिणम्" इति प्रातःसवनपुरोडाशे पुरोऽनुवाक्या । पाठस्तु—

धानावन्तङ्करम्भिणमपूपवन्तमुक्थिनम् ।
इन्द्र प्रातर्जुषस्व नः ॥ १७ ॥

धानावन्तम् । करम्भिणम् । अपूपवन्तम् । उक्थिनम् ॥
इन्द्र । प्रातः । जुषस्व । नः ॥ १७ ॥

हे इन्द्र, नोऽस्मदीयम्, धानावन्तम्, करम्भिणं करम्भयुक्तम्, अपूपवन्तम् अपूपयुक्तं च, उक्थिनं स्तुतिमन्तं च पुरोडाशं प्रातः प्रातःसवने जुषस्व सेवस्व । [—अ० २२।२।६]

कात्यायन :—"ऐन्द्रयां बृहत्यां गायति बृहदिन्द्राय" इति (अ० १९।५।२) । पाठस्तु—

बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
येन ज्योतिरजनयन्नृतावृधो देवन्देवाय जागृवि ॥ १८ ॥

बृहत् । इन्द्राय । गायत । मरुतः । वृत्रहन्तमम् ॥
येन । ज्योतिः । अजनयन् । ऋतावृधः । देवम् । देवाय । जागृवि ॥ १८ ॥

हे मरुतः, बृहद् बृहदाख्यं साम, देवाय देवनादिगुणयुक्ताय, इन्द्राय इन्द्रार्थं गायत उपशब्दयत । एतस्यैव विशेषणम् ऋतावृधः, सत्यवर्द्धका यज्ञवर्द्धका ऋतावृधः, येन बृहत्साम्ना जागृवि जागरणशीलं स्वप्रकाशज्योतिरजनयन् उत्पादितवन्तः प्राप्नुवन्नित्यर्थः । तद् बृहत्साम, वृत्रहन्तमम् अतिशयेन पापहन्तारम्, इन्द्रं देवं प्रति मरुतो गायत इत्यर्थः । [—अ० २२।२।७]

कात्यायनः—"अध्वर्यो अद्रिभिरिति" इति ( अ० १९।२।११ ) । पयोग्रहान् गृह्णातीति । पाठस्तु—

अध्वर्यो अद्रिभिस्सुतꣳ सोमम्पवित्र आनय ।
पुनीहीन्द्राय पातवे ॥ १९ ॥

अध्वर्यो । अद्रिभिः । सुतम् । सोमम् । पवित्रे । आ । नय ॥
पुनीहि । इन्द्राय । पातवे ॥ १९ ॥

हे अध्वर्यो अद्रिभिर्ग्राविभिः, सुतम् अभिषुतं सोमम्, पवित्रे पात्रे आनय। [१]आनीय तं च सोमम्, इन्द्राय इन्द्रस्य, पातवे पातुम्, पुनीहिं पावय। [—अ० २२।२।८]

इति द्वाविंशेऽध्याये द्वितीयोऽनुवाकः ।

[ तृतीयोऽनुवाकः २०-२३ ]

कात्यायनः—"त्रयस्त्रिꣳशं वसाग्रहं गृह्णाति यो भूतानामिति" इति(अ० १९।४।२४)।पाठस्तु—

**यो भूतानामधिपतिर्यस्मिँल्लोका अधिश्रिताः ।**
**य ईशे महतो महाꣳस्तेन गृह्णामि त्वामहम्मयि गृह्णामि त्वामहम् ॥ २० ॥**

यः । भूतानाम् । अधिपतिः । यस्मिन् । लोकाः । अधिश्रिताः ॥
यः । ईशे । महतः । महान् । तेन । गृह्णामि । त्वाम् । अहम् । मयि । गृह्णामि ।
त्वाम् । अहम् ॥ २० ॥

यः स्वतन्त्रः परमेश्वरो भूतानां पृथिव्यादीनां सर्वेषामधिपतिरीश्वरः, यस्मिँश्च स्वप्ननिष्ठे परमात्मनि लोका दृश्याः पृथिव्यादयोऽधिश्रिता आश्रित्य वर्त्तन्ते, यश्च महान् सर्वव्यापी देशकालादि-परिच्छेदरहितः परमात्मा, महतो महदादिकार्यजातस्य, ईशे प्रभुर्भवति। तेन परमात्मनाऽनुगृहीतो-ऽहम्, हे ग्रह त्वां गृह्णामि। किं च मयि विषयभूतेऽस्मदभिलषिते निमित्तमित्यर्थः। अहं त्वां गृह्णामि। [—अ० २२।३।१]

कात्यायनः—"ग्रहान् गृहीत्वा सादयत्युपयामगृहीतोऽसि" इति (अ० १५।१०।१२)।

पाठस्तु—

**उपयामगृहीतोऽस्यश्विभ्यान्त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ।**
**एष ते योनिरश्विभ्यान्त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ॥ २१ ॥**

उपयामगृहीतः । असि । अश्विभ्याम् । त्वा । सरस्वत्यै । त्वा । इन्द्राय । त्वा । सुत्राम्णे ॥
एषः । ते । योनिः । अश्विभ्याम् । त्वा । सरस्वत्यै । त्वा । इन्द्राय । त्वा । सुत्राम्णे ॥ २१ ॥

हे गृह्यमाण हविर्विशेष, उपयामगृहीत उपयामपात्रेण गृहीतोऽसि, अश्विभ्याम् अश्विनोरर्थे, त्वां गृह्णामीति शेषः। तथा सरस्वत्यै त्वां गृह्णामि, तथा सुत्राम्णे सुष्ठु रक्षकाय इन्द्राय त्वां गृह्णामि। एष खरप्रदेशस्तव योनिः स्थानम्। अस्मिन् स्थाने, अश्विभ्याम् अश्विनोरर्थे सम्पादयामीति शेषः। सरस्वत्यै सरस्वत्यर्थं त्वाम् अस्मिन् खरप्रदेशे सादयामि। सुत्राम्णे इन्द्राय, त्वामस्मिन् खर-प्रदेशे सादयाम। [—अ० २२।३।२]

कात्यायन.—"ऋत्विजः प्राणभक्षं भक्षयन्ति प्राणपा मे इति" इति (अ० १९।५।९)।

[२]पाठस्तु—

१. आनीतम् उ. म्यु. २. "प्रथममन्त्र" इति उ. म्यु.

प्राणपा मे अपानपाश्चक्षुष्पाः श्रोत्रपाश्च मे ।
वाचो मे विश्वभेषजो मनसोऽसि विलायकः ॥ २२ ॥

प्राणपाः । मे । अपानपाः । चक्षुष्पाः । श्रोत्रपाः । च । मे ॥
वाचः । मे । विश्वभेषजः । मनसः । असि । वि । लायकः ॥ २२ ॥

हे [1]रक्ष्यमाणहविर्विशेष, त्वं मे मम प्राणपाः प्राणपालकोऽसि, तथा अपानपाः अपानपालकोऽसि, तथा चक्षुष्पाश्चक्षुषः पालकोऽसि । मे श्रोत्रपाः श्रोत्रस्य पालकोऽसि । तथा मे वाचः पालकोऽसि ।[2] विश्वभेषजः सर्वस्य भेषजकार्यसि, तथा मे मनसोऽसि । विलायकः विशेषेण श्लेषकोऽसि, 'लीङ् श्लेषणे' इति धातुः । [—अ० २२।३।३]

पाठस्तु—

अश्विनकृतस्य ते सरस्वतिकृतस्येन्द्रेण सुत्राम्णा कृतस्य ।
उपहूत उपहूतस्य भक्षयामि ॥ २३ ॥

अश्विनकृतस्य । ते । सरस्वतिकृतस्य । इन्द्रेण । सुत्राम्णा । कृतस्य ॥
उप । हूतः । उप । हूतस्य । भक्षयामि ॥ २३ ॥

अश्विनकृतस्य अश्विभ्यां कृतस्य जुष्टस्य, सरस्वत्या दृष्टस्य च, सुत्राम्णा इन्द्रेण कृतस्य दृष्टस्योपहूतस्य, एताभिर्देवताभिरनुज्ञातस्य, ते तव सोमस्य भागम्, उपहूतोऽनुज्ञातोऽहं भक्षयामि । [—अ० २२।३।४]

इति द्वाविंशेऽध्याये तृतीयोऽनुवाकः ।

[ चतुर्थोऽनुवाकः २४-३४ ]

इत उत्तरं हौत्रमभिधीयते । कात्यायनः—"समिद्ध इन्द्र इत्याप्रियः प्रथमस्य" इति ( अ० १९।६।१२ ) । तत्र प्रथमा—

समिद्ध इन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः ।
त्रिभिर्देवैस्त्रिंशता वज्रबाहुर्जघान वृत्रँविदुरो ववार ॥ २४ ॥

सम् । इद्धः । इन्द्रः । उषसाम् । अनीके । पुरोरुचा । पूर्वकृत् । वावृधानः ॥
त्रिभिः । देवैः । त्रिंशता । वज्रबाहुः । जघान । वृत्रम् । विदुरः । ववार ॥ २४ ॥

उषसां प्रभातानाम्, अनीके मुखे, पुरोरुचाऽग्रगामिन्या दीप्त्या, समिद्ध आदित्यात्मना संदीप्तः, इन्द्रः, वावृधानोऽतिशयेन वर्द्धमानः, पूर्वकृत्, पूर्वादिदिग्विशेषं करोतीति पूर्वकृत्, आदित्योपलक्षितत्वात् पूर्वदिग्विशेषस्य स एव मध्यस्थितो भूत्वा त्रिंशता त्रिभिश्च देवैस्त्रयस्त्रिंशत्संख्याकैर्देवैः सहित इत्यर्थः । अष्टौ वसवः, एकादश रुद्राः, द्वादशाऽऽदित्यास्ते एकत्रिंशा इत्याम्नानात् । वज्रबाहुर्वज्रपाणिः सन् वृत्रं वृत्राख्यमसुरं जघान आहतवान् । ततः विदुरः स्वर्गस्य द्वाराणि ववार विवृतानि चकार । [—अ० २२।४।१]

१. व उ. म्यु. । २. किं च उ. म्यु. ।

अथ द्वितीया—

नराशंसः प्रतिशूरो मिमानस्तनूनपात् प्रति यज्ञस्य धाम ।
गोभिर्वपावान् मधुना समञ्जन् हिरण्यैश्चन्द्री यजति प्रचेताः ॥ २५ ॥

नराशंसः । प्रति । शूरः । मिमानः । तनूनपात् । प्रति । यज्ञस्य । धाम ॥
गोभिः । वपावान् । मधुना । सम् । अञ्जन् । हिरण्यैः । चन्द्री । यजति । प्र । चेताः ॥ २५ ॥

य इन्द्रो नराशंसो नरैः ऋत्विग्भिरासमन्तात् शंसनीयः शत्रूणां हन्ता च, प्रतिमिमानो वैरिणां बलानि प्रतिच्छन्दन्, यज्ञस्य धाम फलभूतं स्थानं प्रतिमिमानः परिगणयन्, तनून् न पातयतीति तनूनपाद् देहधारकश्च गोभिः स्वकीयें रश्मिभिर्वपावान् शरीरपुष्टिमान् पशुसंबन्धिहविर्लक्षणवपावान् वा, हिरण्यैर्वपाधारभूतैर्हिरण्यशकलैश्चन्द्री चन्द्रं हिरण्यं तस्मिश्च वर्तते । तम् एतादृशमिन्द्रं प्रचेताः [1]प्रच्छन्नज्ञो यजमानः मधुमान् मधुरसेनाऽऽज्येन समञ्जन् हवींषि [2]भक्षीकुर्वन् यजति ।
[—अ० २२।४।२]

अथ तृतीया—

ईळितो देवैर्हरिवाँ२ अभिष्टिराजुह्वानो हविषा शर्द्धमानः ।
पुरन्दरो गोत्रभिद्वज्रबाहुरायातु यज्ञमुप नो जुषाणः ॥ २६ ॥

ईडितः । देवैः । हरिवान् । अभिष्टिः । आ । जुह्वानः । हविषा । शर्द्धमानः ॥
पुरन्दरः । गोत्रभिद् । वज्रबाहुः । आ । यातु । यज्ञम् । उप । नः । जुषाणः ॥ २६ ॥

देवैरीडितः पूजितः स्तुतो वा, हरिवान् हरिनामकाभ्याम् अश्वाभ्यां युक्तः, अभितः क्रियमाणेष्टिर्यस्य सोऽयमभिष्टिः, अभ्येषणवान् वा, आजुह्वानः संग्रामे प्रतिभटानामाह्वाता हविषा शर्द्धमानो बलं प्राप्नुवानः, असुरपुराणां दारयिता, गोत्रं पर्वतं मेघं वा भिनत्तीति गोत्रभिद्, वज्रबाहुर्वज्रपाणिः, नोऽस्माकं यज्ञं जुषाणः प्रीयमाणः, उपायातु पृथिव्याः समीपमागच्छतु । [—अ०२२।४।३]

अथ चतुर्थी—

जुषाणो बर्हिर्हरिवान्न इन्द्रः प्राचीनꣳ सीदत् प्रदिशा पृथिव्याः ।
उरुप्रथाः प्रथमानꣳ स्योनमादित्यैरक्तँ व्वसुभिस्सजोषाः ॥ २७ ॥

जुषाणः । बर्हिः । हरिवान् । नः । इन्द्रः । प्राचीनम् । सीदत् । प्र । दिशा । पृथिव्याः ॥
उरुप्रथाः । प्रथमानम् । स्योनम् । आदित्यैः । अक्तम् । वसुभिः । सजोषाः ॥ २७ ॥

नोऽस्मदीयं प्रथमानं विस्तीर्यमाणम्, स्योनं सुखकरम्, अक्तम् आज्येन श्लक्ष्णीकृतं बर्हिर्हविर्जुषाणः सेवमानो हरिवान् अश्वयुक्तः सम्बन्धिन्या प्रदिशा प्रकृष्टया पूर्वदिशा युक्तं प्राचीनम् आहवनीयस्थानम्, सीदत् आसीदन्, उरुप्रथाः विस्तृतकीर्त्तिः, द्वादशभिरादित्यैरष्टभिर्वसुभिश्च सजोषाः समानप्रीतियुक्तः सन् इन्द्र आयात्विति शेषः । [—अ० २२।४।४ ]

१. प्रयच्छप्रज्ञः उ. म्यु. २. श्लक्ष्णी उ. म्यु.

अथ पञ्चमी—

इन्द्रन्दुरः कवष्यो धावमाना वृषाणँय्यन्तु जनयस्सुपत्नीः ।
द्वारो देवीरभितो विश्रयन्ताꣳ सुवीरा वीरम्प्रथमाना महोभिः ॥ २८ ॥

इन्द्रम् । दुरः । कवष्यः । धावमानाः । वृषाणम् । यन्तु । जनयः । सुपत्नीः ॥
द्वारः । देवीः । अभितः । वि । श्रयन्ताम् । सुवीराः । वीरम् । प्रथमानाः । महोभिः ॥ २८ ॥

कवष्यः कवाटवत्यो महावकाशवत्यो वा, धावमानाः प्रवेशनिर्गमनगतिमत्यः शुद्धिमत्यो वा, जनयः यज्ञानां जनयन्त्यः, सुपत्नीः, व्यत्ययः, सुष्ठु पालयित्र्यो दुरो यज्ञगृहद्वारः, छान्दसं संप्रसारणम् । वृषाणं कामानां वर्षितारं कामानां वर्द्धितारम्, इन्द्रं यन्तु प्राप्नुवन्तु । किं चैवमिन्द्रं प्राप्ताः, देवीः व्यत्ययः, देव्यो देवनादिगुणयुक्ताः सुवीराः शोभनादिगुणयुक्तर्त्विगादिपुरुषाधिष्ठिताः । महोभिरुत्सवैः प्रथमानाः पृथ्व्यो भवन्त्यः, यज्ञगृहस्य द्वारो वीरं युद्धेषु शूरम् इन्द्रम् अभितो विश्रयन्तां समन्तात् [1]सेवन्ताम् । [—अ० २२।४।५]

अथ षष्ठी—

उषासानक्ता बृहती बृहन्तम्पयस्वती सुदुघे शूरमिन्द्रम् ।
तन्तुन्ततम्पेशसा सँव्वयन्ती देवानान्देवँय्यजतस्सुरुक्मे ॥२९॥

उषासानक्ता । बृहती । बृहन्तम् । पयस्वती । सु । दुघे । शूरम् । इन्द्रम् ॥
तन्तुम् । ततम् । पेशसा । सम् । वयन्ती । देवानाम् । देवम् । यजतः ।
सुरुक्मे ॥ २९ ॥

बृहती व्यत्ययः, बृहत्यौ, पयस्वती क्षीरवत्यौ सुदुघे साधुदोहने सुष्ठु दोग्धुं शक्ये वा, तन्तुं ततं व्यत्ययः, ततेन विस्तृतेन तन्तुना पटेनेव, पेशसा विचित्ररूपेण, संवयन्ती अलं कुर्वाणे, सुरुक्मे शोभनसुवर्णाभरणे, उषासानक्ता, व्यत्ययः, उषासानक्ते, उषासा प्रभातम्, नक्ता रात्रिः, उभे बृहन्तं महान्तं शूरं शत्रुहिंसकं देवानां देवं स्वामिनम्, इन्द्रं यजतः पूजयतः संगतं कुरुतो वा । [—अ० २२।४।६ ]

अथ सप्तमी—

दैव्या मिमाना मनुषः पुरुत्रा होतारा इन्द्रम्प्रथमा सुवाचा ।
मूर्धन्यज्ञस्य मधुना दधाना प्राचीनञ्ज्योतिर्हविषा वृधातः ॥ ३० ॥

दैव्या । मिमाना । मनुषः । पुरुत्रा । होतारौ । इन्द्रम् । प्रथमा । सुवाचा ॥
मूर्धन् । यज्ञस्य । मधुना । दधाना । प्राचीनम् । ज्योतिः । हविषा । वृधातः ॥ ३० ॥

दैव्या व्यत्ययः, दैव्यौ देवसंबन्धिनौ होतारावग्निवायू असावग्निरयं वायुश्च मध्यमः, "दैव्यौ प्रथमौ होतारौ"—इति श्रुतेः ( शुक्लयजुः०, अ० ३१।४४ ) । मिमाना मनसा कार्याणि परिगणयन्तौ, मनुषो मनुष्यस्य यजमानस्य होतारौ सन्तौ, पुरुत्रा बहुषु प्रथमा प्रथमौ मुख्यभूतौ,

---

१. शेरताम् ड. म्यु.

सुवाचा शोभनवाचौ शोभनस्तुतियुक्तौ वा, मूर्धन् मूर्धनि शिरःस्थानीये आहवनीये प्राचीनमुत्तमं ज्योतिर्दधाना उत्पादयन्तौ, मधुना मधुरसोपेतेन हविषा, इन्द्रं वृधातो वर्द्धयतः। [—अ० २२।४।७]

अथाष्टमी—

**तिस्रो देवीर्हविषा वर्धमाना इन्द्रञ्जुषाणा जनयो न पत्नीः।**
**अच्छिन्नन्तन्तुम्पयसा सरस्वतीळा देवी भारती विश्वतूर्तिः॥ ३१॥**

तिस्रः। देवीः। हविषा। वर्धमानाः। इन्द्रम्। जुषाणाः। जनयः। न। पत्नीः॥
अच्छिन्नम्। तन्तुम्। पयसा। सरस्वती। इडा। देवी। भारती। विश्वतूर्तिः॥ ३१॥

देवीः द्योतमानाः, सरस्वती, इडा, भारती चेति तिस्रो देवीः, व्यत्ययः। विश्वतूर्तिः विश्वतूर्तयः, सर्वाणि औषधानि संहरन्तीत्यर्थः। हविषा आज्यादिना वर्धमानाः, जनयः पुत्राणां जनयित्र्यः, पत्नीर्न पत्न्य इव, इन्द्रं जुषाणाः सेवमानाः, अच्छिन्नमपि ग्रस्तं तन्तुं यज्ञम्, पयसा विदधुरिति शेषः।
[—अ० २२।४।८]

अथ नवमी—

**त्वष्टा दधच्छुष्ममिन्द्राय वृष्णेऽपाकोऽचिष्टुर्यशसे पुरूणि।**
**वृषा यजन् वृषणम्भूरिरेता मूर्धन् यज्ञस्य समनक्तु देवान्॥ ३२॥**

त्वष्टा। दधत्। शुष्मम्। इन्द्राय। वृष्णे। अपाकः। अचिष्टुः। यशसे। पुरूणि॥
वृषा। यजन्। वृषणम्। भूरिरेताः। मूर्धन्। यज्ञस्य। सम्। अनक्तु। देवान्॥ ३२॥

अपाकः आवाहकः, चिष्टुः सेचकः, "चिष्टु सेचने" इति धातुः, न विद्यते चिष्टुरन्यः सेचक इति सोऽयमचिष्टुः, चेष्टारहितो वा, त्वष्टा वृष्णे सेचनसमर्थायेन्द्राय शुष्मं बलं दधद् धारयत्, यशसे कीर्त्यै, पुरूणि बहूनि, भैषज्यान्यकरोदिति शेषः। अपि च वृषा सेक्ता भूरिरेता बहुवीर्यवान् त्वष्टा, वृषणं सेचनसमर्थम्, इन्द्रं यज्ञस्य मूर्धन् मूर्धनि शिरःस्थानीये आहवनीये, यजन् हविषा पूजयन् देवान् समनक्तु सम्यग् हविः प्रापयतु। [—अ० २२।४।९]

अथ दशमी—

**वनस्पतिरवसृष्टो न पाशैस्त्मन्या समञ्जञ्छमिता न देवः।**
**इन्द्रस्य हव्यैर्जठरम्पृणानस्स्वदाति यज्ञम्मधुना घृतेन॥ ३३॥**

वनस्पतिः। अव। सृष्टः। न। पाशैः। त्मन्या। सम्। अञ्जन्। शमिता। न। देवः॥
इन्द्रस्य। हव्यैः। जठरम्। पृणानः। स्वदाति। यज्ञम्। मधुना। घृतेन॥ ३३॥

वनस्पतिर्यूपः, अवसृष्टो न अध्वर्युणाऽनुज्ञात इव, त्मन्या आत्मनि, आकारलोपश्छान्दसः। आत्मानं नयतीति आत्मनीः, तया मुख्यभूतया रज्ज्वा, पाशैरवान्तरैश्च समञ्जन् संबन्धीकुर्वन् देवो देवनादिगुणयुक्तः, शमिता न पशुविशसनस्य कर्त्तेव, इन्द्रस्य जठरम् उदरम्, हव्यैः पृणानः पूरयन् मधुना मधुरसेन घृतेन यज्ञं स्वदाति आस्वादयति। [—अ० २२।४।१०]

अथैकादशी—

स्तोकानामिन्दुम्प्रति शूर इन्द्रो वृषायमाणो वृषभस्तुराषाट् ।
घृतप्रुषा मनसा मोदमानास्स्वाहा देवा अमृता मादयन्ताम् ॥ ३४ ॥

स्तोकानाम् । इन्दुम् । प्रति । शूरः । इन्द्रः । वृषायमाणः । वृषभः । तुराषाट् ॥
घृतप्रुषा । मनसा । मोदमानाः । स्वाहा । देवाः । अमृताः । मादयन्ताम् ॥ ३४ ॥

स्तोकानामल्पानाम्[१], आज्यानां संबन्धिनमिन्दुं सोमं प्रति, शूरो विक्रान्त आदरवान् इत्यर्थः । यद्वा स्तोकानामल्पानां हविषां मध्ये इन्दुमिन्दुमण्डलेशमपि प्रति शूर आदरवान् । अल्पमपि हविर्भागं नावजानातीत्यर्थः । वृषायमाणो वृषवदाचरन्, वृषभः कामानां वर्षयिता, तूर्णं शत्रून् सहतेऽभिभवतीति तुराषाड् इन्द्रः । घृतप्रुषा घृतस्य बिन्दुना स्वजठरं पूरयन्निति शेषः । मनसा मोदत इत्यर्थः । किं च देवा इन्द्रस्यानुचराः, इतरे देवा मोदमाना हृष्यन्तः, अमृता अमरा मादयन्ताम् । स्वाहा तेभ्यो दत्तं हविः स्वाहुतमस्तु । [—अ० २२।४।११ ]

इति द्वाविंशेऽध्याये चतुर्थोऽनुवाकः ।

[ पञ्चमोऽनुवाकः ३५–४२ ]

अधुना प्रथमस्य याज्या आम्नायन्ते । कात्यायनः—"ऐन्द्रस्य पशोर्याज्यनुवाक्याश्च । वपापुरोडाशपशूनामायात्विन्द्र इति" ( अ० १९।६।१३ ) इति ।

तत्र प्रथमा—

आयात्विन्द्रोऽवस उप न इह स्तुतस्सधमादस्तु शूरः ।
वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥ ३५ ॥

आ । यातु । इन्द्रः । अवसे । उप । नः । इह । स्तुतः । सधमात् । अस्तु । शूरः ॥
वावृधान । तविषीः । यस्य । पूर्वीः । द्यौः । न । क्षत्रम् । अभि । भूति । पुष्यात् ॥ ३५ ॥

नोऽस्माकम् उप समीपे इह यज्ञेऽस्माभिः स्तुतः सन् वावृधानोऽतिशयेन वर्धमानः, शूरः शत्रुहिंसक इन्द्रः सधमात्, मदिरत्र भोजनार्थः । आभोजनोऽस्तु । किं च यस्येन्द्रस्य पूर्वीः पूर्वा वृत्रवधादिप्रयुक्ताः, तविषीः तविष्यो बलानि, द्यौर्न द्यौरिवात्युन्नतानीत्यर्थः । यस्य क्षत्रं शत्रूणां क्षात्रं बलम्, अभिभूति अभिभवति, यश्च विश्वान् पुष्यात् पुष्णाति, स इन्द्रोऽवसे अस्मद्रक्षणाय, अस्मदीयं यज्ञमायातु[२] आगच्छतु । [—अ० २२।५।१]

अथ द्वितीया—

आ न इन्द्रो दूरादा न आसादभिष्टिकृदवसे यासदुग्रः ।
ओजिष्ठेभिर्नृपतिर्वज्रबाहुस्सङ्गे समत्सु तुर्वणिः पृतन्यून् ॥ ३६ ॥

---

१. द्रव्याणाम् उ. म्यु. २. प्रति उ. म्यु.

आ । नः । इन्द्रः । दूरात् । आ । नः । आसात् । अभिष्टिकृत् । अवसे । यासत् । उग्रः ॥
ओजिष्ठेभिः । नृपतिः । वज्रबाहुः । सङ्गे । समत्सु । तुर्वणिः । पृतन्यून् ॥ ३६ ॥

नोऽस्माकम्, अभिष्टिकृद् अभीष्टार्थकृत्, इन्द्रो दूराद् द्युलोकादेः, आसाद् इत्यन्तिकनाम समीपात् प्रदेशात्, नोऽस्माकम्, अवसे रक्षणाय, आ आभिमुख्येन, यासद् आगच्छतु। किं च ओजिष्ठेभिरतिशयितैर्बलैः, उग्रोऽतिविषमः नृपतिर्नराणां पालकः, वज्रबाहुर्वज्रपाणिः सङ्गे संग्रामे उपस्थिते सति, समत्सु बहुषु संग्रामेषु, तुर्वणिस्तूर्णम् अतिवेगेन संभक्ता। पृतन्यून् संग्राममात्मन इच्छतो वैरिणः प्रत्यागच्छतु।[१] [—अ० २२।५।२]

अथ तृतीया—

आ न इन्द्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसे च।
तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनु नो वाजसातौ ॥ ३७ ॥

आ । नः । इन्द्रः । हरिभिः । यातु । अच्छ । अर्वाचीनः । अवसे । राधसे । च ॥
तिष्ठति । वज्री । मघवा । विरप्शी । इमम् । यज्ञम् । अनु । नः । वाजसातौ ॥ ३७ ॥

अच्छ स्वच्छगतिरिन्द्रः, अर्वाचीनो ह्वानं च नोऽस्मदभिमुखतयाऽऽगमन इति यावत्। नोऽस्माकम्, अवसे रक्षणाय, राधसे धनाय च हरिभिरश्वैरायातु। आगत्य च वज्री वज्रवान्, मघवा धनवान्, इन्द्रः, तिष्ठाति तिष्ठतु। किं च विरप्शी विरमणशीलः सन् इन्द्रः, इमं यज्ञं नोऽस्माकं वाजसातौ अन्नसंभजने निमित्ते अनुतिष्ठतीत्यनुशेषः[२]। [—अ० २२।५।३]

अथ चतुर्थी—

त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम्।
ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥ ३८ ॥

त्रातारम् । इन्द्रम् । अवितारम् । इन्द्रम् । हवे । हवे । सुहवम् । शूरम् । इन्द्रम् ॥
ह्वयामि । शक्रम् । पुरुहूतम् । इन्द्रम् । स्वस्ति । नः । मघवा । धातु । इन्द्रः ॥ ३८ ॥

त्रातारम् अनिष्टनिरसनेन पालकम्, इन्द्रम् इरां वाणीं धारयतीतीन्द्रस्तम्, अवितारम् इष्टप्रदानेन रक्षितारम्, इरां[३] भुवं धारयतीतीन्द्रस्तम्, हवे हवे संग्रामे संग्रामे सर्वेष्वपि युद्धेषु सुहवं शोभनाह्वानयुक्तम्, शूरं विक्रान्तम्, इन्द्रं शत्रूणां विदारकम्, शक्रं सर्वेषु कार्येषु शक्तम्, पुरुहूतं बहुभिराहूतम्, इन्द्रं परमैश्वर्ययुक्तं देवं ह्वयामि। आहूतः स मघवा धनवान् इन्द्रो नोऽस्माकम्, स्वस्ति मङ्गलं दधातु। [—अ० २२।५।४]

अथ पञ्चमी—

इन्द्रः सुत्रामा स्ववाँ २ अवोभिः सुमृळीको भवतु विश्ववेदाः।
बाधतान्द्वेषो अभयङ्कृणोतु सुवीर्यस्य पतयः स्याम ॥ ३९ ॥

१. इत्यर्थः उ. म्यु.  २. षङ्गः उ. म्यु.  ३. वज्रम् उ. म्यु.

इन्द्रः । सुत्रामा । स्ववान् । अवोभिः । सुमृडीकः । भवतु । विश्ववेदाः ॥
बाधताम् । द्वेषः । अभयम् । कृणोतु । सु । वीर्यस्य । पतयः । स्याम ॥ ३९ ॥

सुत्रामा शोभनत्राणवान्, स्ववान् धनवान्, विश्ववेदाः सर्वज्ञः सर्वधनो वा इन्द्रः, अवोभी रक्षणैः, सुमृडीकः शोभनसुखकारी भवतु । किं च द्वेषो व्यत्ययः, द्विषः शत्रून्, द्वेषोऽप्रीतीः बाधताम् अपगमयतु[१] । तन्निवारणेन अभयं भयराहित्यं कृणोतु करोतु । किं च वयं सुवीर्यस्य शोभनसामर्थ्यस्य सुवीरकर्मणो वा पतयः स्याम भवेम । [—अ० २२।५।५]

अथ षष्ठी—

तस्य॑ व॒यꣳ सु॑म॒तौ य॒ज्ञिय॒स्यापि॑ भ॒द्रे सौ॑मन॒से स्या॑म ।
स सु॒त्रामा॒ स्ववाँ॒२ इन्द्रो॑ अ॒स्मे आ॒राच्चि॒द्द्वेषः॒ सनु॒तर्यु॑योतु ॥ ४० ॥

तस्य । वयम् । सु । मतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥
सः । सुत्रामा । स्ववान् । इन्द्रः । अस्मे । आरात् । चित् । द्वेषः । सनुतः । युयोतु ॥ ४० ॥

यज्ञियस्य यज्ञसंबन्धिनः, तस्य सुत्राम्ण इन्द्रस्य, सुमतौ शोभनमतौ वयं स्याम शोभनबुद्धिविषया भवेमेत्यर्थः । अपि च भद्रे भजनीये, सौमनसे सौमनस्ययोग्या भवेमेत्यर्थः । किं च स प्रसिद्धः सुत्रामा शोभनत्राणवान्, स्ववान् धनवान्, इन्द्रः सनुतो हविषां दातुः, अस्मे, व्यत्ययः अस्मद् द्विषः शत्रून्, द्वेषम् अप्रीतिं वा, आराद् दूरादेव, युयोतु पृथक् करोतु । [—अ० २२।५।६]

अथ सप्तमी—

आ म॒न्द्रैरि॑न्द्र॒ हरि॑भिर्या॒हि म॒यूर॑रोमभिः ।
मा त्वा॒ केचि॒न्नि य॑मन्वि॒न्न पा॒शिनोऽति॒ धन्वे॑व॒ ताँ२ इ॑हि ॥ ४१ ॥

आ । मन्द्रैः । इन्द्र । हरिभिः । याहि । मयूररोमभिः ॥
मा । त्वा । के । चित् । नियमन् । विम् । न । पाशिनः । अति । धन्वा । इव ।
तान् । इहि ॥४१॥

हे इन्द्र मन्द्रैर्हर्षयुक्तैः, मयूररोमभिर्मयूररोमसमानवर्णैः, हरिभिरश्वैः, आयाहि आगच्छ । किं च त्वा त्वाम् आगच्छन्तम्, पाशिनः क्षुद्रपाशवन्तः, विं न उत्पतन्तं श्येनादिकं पक्षिणम् इव, केचिद् विरोधिनो मा नियमन् नियमनाय समर्था न भवन्तु । अतस्तान् प्रसिद्धान् विरोधिनो राक्षसान् अतिक्रम्य, धन्वेव धनुष्मान् रामादिरिव, इहि आगच्छ । [—अ० २२।५।७]

अथाष्टमी—

ए॒वेदिन्द्रँ॒ वृष॑णँ॒ वज्र॑बाहुँ॒ वसि॑ष्ठासो अ॒भ्य॑र्चन्त्य॒र्कैः ।
स न॑ स्तु॒तो वी॒रव॑द्धातु॒ गोम॑द्यू॒यम्पा॑त स्व॒स्तिभि॒स्सदा॑ नः ॥ ४२ ॥

एव । इत् । इन्द्रम् । वृषणम् । वज्रबाहुम् । वसिष्ठासः । अभि । अर्चन्ति । अर्कैः ॥
सः । नः । स्तुतः । वीरवत् । धातु । गोमत् । यूयम् । पात । स्वस्तिभिः । सदा । नः ॥ ४२ ॥

---

१. अपबाधयतु उ. म्यु.

एवेत् अपि च, वृषणं कामानां वर्षितारम्, वज्रबाहुं वज्रपाणिम्, यम् इन्द्रं वसिष्ठासो वसिष्ठा वसिष्ठप्रमुखाः, तद्गोत्रोत्पन्नानाम् अर्कैरैन्द्रैर्मन्त्रैरभ्यर्चन्ति सम्यक् पूजयन्ति। सः स्तुत इन्द्रो वीरवत् पुत्रादियुक्तम्, गोमद् गोभिर्युक्तं वा[१] अभीष्टफलम्, [२]नोऽस्मभ्यं धातु दधातु। एवम् इन्द्रियसामर्थ्यं तदानीं तत्पूजकान् प्रार्थयन्ते, हे इन्द्रपूजका यूयं नोऽस्मान्, सर्वदा स्वस्तिभिरविनाशिभिः कल्याणैः, पात रक्षत। [—अ० २२।५।८]

इति द्वाविंशेऽध्याये पञ्चमोऽनुवाकः।

[ षष्ठोऽनुवाकः ४३—५४ ]

षष्ठेऽनुवाके त्रिपशोराप्रिय उच्यन्ते। कात्यायनः—"त्रिपशोराप्रियश्च समिद्धो अग्निरश्विना" इति (अ० १९।६।१५)। अथ प्रथमा—

**समि॑द्धो अ॒ग्निर॑श्विना त॒प्तो घ॒र्मो वि॒राट् सु॒तः।**
**दु॒हे धे॒नुस्सर॑स्वती॒ सोम॑ꣳ शु॒क्रमि॒हेन्द्रि॒यम् ॥ ४३ ॥**

सम्। इद्धः। अग्निः। अश्विना। तप्तः। घर्मः। वि। राट्। सुतः॥
दुहे। धेनुः। सरस्वती। सोमम्। शुक्रम्। इह। इन्द्रियम्॥ ४३॥

अश्विना हे अश्विनौ, अग्निः समिद्धः संदीप्तः, घर्मः प्रवर्ग्यः, तप्तः संतप्तः, विराड् विशेषेण राजमानः सोमः, सुतोऽभिषुतः, तथा धेनुः प्रीणयित्री, सरस्वती शुक्रं शुद्धम्, सोमम् इन्द्रियं वीर्यं च, इह यज्ञे, दुहे प्रपूरयति। [—अ० २२।६।१]

अथ द्वितीया—

**त॒नू॒पा भि॒षजा॑ सु॒तेऽश्वि॒नोभा सर॑स्वती।**
**मध्वा॒ रजा॑ꣳसीन्द्रि॒यमिन्द्रा॑य प॒थिभि॒र्व॑हान् ॥ ४४ ॥**

तनूपा। भिषजा। सुते। अश्विना। उभा। सरस्वती॥
मध्वा। रजांसि। इन्द्रियम्। इन्द्राय। पथिभिः। वहान्॥ ४४॥

तनूपा तनूनां पाता पातारौ, भिषजा भिषजौ, उभा उभौ, अश्विना अश्विनौ, सरस्वती चेति यास्तिस्रो देवताः, रजांसि भूरादीन् लोकान्, इन्द्रियं वीर्यं चेन्द्राय इन्द्रोपभोगार्थम्, पथिभिर्मार्गैः, वहान् वहन्तु सम्पादयन्तु इत्यर्थः। [—अ० २२।६।२]

अथ तृतीया—

**इन्द्रा॒येन्दु॑ꣳ सर॑स्वती॒ नरा॒शꣳसे॑न न॒ग्नहु॑म्।**
**अधा॑तामश्वि॒ना मधु॑ भेष॒जम्भि॒षजा॑ सु॒ते ॥ ४५ ॥**

१. च. उ. म्यु. २. अस्माकम् उ. म्यु.

इन्द्राय । इन्दुम् । सरस्वती । नराशंसेन । नग्नहुम् ॥
अधाताम् । अश्विना । मधु । भेषजम् । भिषजा । सुते ॥ ४५ ॥

सरस्वती इन्द्राय इन्द्रार्थम्, इन्दुं सोमम् अभिषुणोतीति शेषः । अश्विना अश्विनौ, नराशंसेन यज्ञेन सहिताम्, नग्नहुं सुरां सपयश्च सर्पिः सक्तुं वा, अधातां सम्पादितवन्तौ । किं च सुते सोमे अभिषुते, भिषजा चिकित्सकौ, अश्विनौ भेषजं भेषजात्मकं मधु, अधाताम् अधारयताम्[1]

[ –अ० २२।६।३ ]

अथ चतुर्थी—

आजुह्वाना सरस्वतीन्द्रायेन्द्रियाणि वीर्यम् ।
इळाभिरश्विना इषꣳ समूर्जꣳ सꣳ रयिन्दधुः ॥ ४६ ॥

आ । जुह्वाना । सरस्वती । इन्द्राय । इन्द्रियाणि । वीर्यम् ॥
इडाभिः । अश्विना । इषम् । सम् । ऊर्जम् । सम् । रयिम् । दधुः ॥ ४६ ॥

इडाभिर्वाग्भिः, आजुह्वाना आहूयमाना, सरस्वती अश्विना अश्विनौ चेति तिस्रो देवताः, पूर्वे (?) तिस्रस्ताः, इन्द्राय इन्द्रियाणि चक्षुरादीनि, वीर्यं सामर्थ्यं च; इषम् अन्नं च, ऊर्जं क्षीरं रसं च, रयिं धनं च, संदधुः सम्यक् संपादितवत्यः । [–अ० २२।६।४ ]

अथ पञ्चमी—

अश्विना नमुचेस्सुतꣳ सोमꣳ शुक्रम्परिस्रुता ।
सरस्वती तमाभरद्बर्हिषेन्द्राय पातवे ॥ ४७ ॥

अश्विना । नमुचेः । सुतम् । सोमम् । शुक्रम् । परि । स्रुता ॥
सरस्वती । तम् । आ । भरत् । बर्हिषा । इन्द्राय । पातवे ॥ ४७ ॥

सरस्वती सुतम् अभिषुतम्, परिस्रुता परितः स्रवणेन, शुक्रं शुद्धं तं पूर्वं नमुचिना कृतं[1] सोमम्, आस्तीर्णेन बर्हिषा उपलक्ष्ये यज्ञे, इन्द्राय पातवे पातुम्, नमुचेः सकाशाद् आभरद् बलाद् आदायाहरत् । अश्विना अश्विनावपि, नमुचेः सकाशात् तं सोमम्, इन्द्राय पातवे आहरतामित्यर्थः ।

[–अ० २२।६।५]

अथ षष्ठी—

कवष्यो न व्यचस्वतीरश्विभ्यान्न दुरो दिशः ।
इन्द्रो न रोदसी उभे दुहे कामान्त्सरस्वती ॥ ४८ ॥

कवष्यः । न । व्यचस्वतीः । अश्विभ्याम् । न । दुरः । दिशः ॥
इन्द्रः । न । रोदसी । उभे । दुहे । कामान् । सरस्वती ॥ ४८ ॥

कवष्यो न कवाटवत्य इव, व्यचस्वतीः विशिष्टगति[2]मत्यः, अश्विभ्याम् अध्वर्युभ्यां सहिताः, "अश्विनावध्वर्यू" इति श्रुतेः ( श०, का० १२ । प्र० ४ । ब्रा० १ । अ० ८ । ब्रा० २ । क० २२ ) ।

१. हुतम् | उ. म्यु. २. मति उ. म्यु.

दुरः, छान्दसं संप्रसारणम्, द्वारः । यज्ञद्वारभूता दिशो दिग्रूपाः, इन्द्रो न इन्द्रश्च, उभे न रोदसी द्यावापृथिव्यौ च, कामान् यजमानस्य अभीष्टान् अर्थान् दुदुहुः । सरस्वती च यजमानस्य कामान् दुहे दुदोह । [—अ० २२।६।६]

अथ सप्तमी—

उषासा नक्तमश्विना दिवेन्द्रꣳ सायमिन्द्रियैः ।
सञ्जानाने सुपेशसा समञ्जाते सरस्वत्या ॥ ४९ ॥

उषासा । नक्तम् । अश्विना । दिवा । इन्द्रम् । सायम् । इन्द्रियैः ॥
सम् । जानाने । सु । पेशसा । सम् । अञ्जाते । सरस्वत्या ॥४९॥

अश्विना अश्विनौ, संजानाने समानमतिरूपे, उषासा उषः प्रभातम्, नक्तं रात्रिस्ते उभे समञ्जाते व्यक्तीकुरुताम् । किं च दिवा अहः, सायं रात्रिस्ते उभे, सुपेशसा शोभनरूपेण, इन्द्रियैः वीर्यैश्च सरस्वत्या सह, इन्द्रं समञ्जाते । [—अ० २२।६।७]

अथाष्टमी—

पातन्नो अश्विना दिवा पाहि नक्तꣳ सरस्वति ।
दैव्या होतारा भिषजा पातमिन्द्रꣳ सचा सुते ॥ ५० ॥

पातम् । नः । अश्विना । दिवा । पाहि । नक्तम् । सरस्वति ॥
दैव्या । होतारा । भिषजा । पातम् । इन्द्रम् । सचा । सुते ॥ ५० ॥

अश्विना हे अश्विनौ, नोऽस्मान्, दिवा अहनि, पातं रक्षतम् । हे सरस्वति, नक्तं रात्रौ, पाहि रक्ष, दैव्या हे देवसंबन्धिनौ, होतारा होतारौ भिषजा भिषजौ, सचा परस्परसंयुक्तौ युवाम्, सुते अभिषुते, इन्द्रं पातं रक्षतम् । [—अ० २२।६।८]

अथ नवमी—

तिस्रस्त्रेधा सरस्वत्यश्विना भारतीळा ।
तीव्रम्परिस्रुता सोममिन्द्राय सुषुवुर्मदम् ॥ ५१ ॥

तिस्रः । त्रेधा । सरस्वती । अश्विना । भारती । इडा ॥
तीव्रम् । परि । स्रुता । सोमम् । इन्द्राय । सुषुवुः । मदम् ॥ ५१ ॥

सरस्वती भारती, इडा च, तिस्रो देवताः, त्रेधा लोकत्रयरूपेण वर्त्तमानाः । अश्विना अश्विनौ च, परिस्रुता परिस्रवन्त्या सुरया सहितम्, तीव्रम् उग्रगन्धं मदं मादकं तर्पणकरं वा सोमम्, इन्द्राय इन्द्रार्थम्, सुषुवुरभिषवं चक्रुः । [—अ० २२।६।९]

अथ दशमी—

अश्विना भेषजम्मधु भेषजन्नस्सरस्वती ।
इन्द्रे त्वष्टा यशः श्रियꣳ रूꣳपꣳ रूपमधुस्सुते ॥ ५२ ॥

अश्विना । भेषजम् । मधु । भेषजम् । नः । सरस्वती ॥
इन्द्रे । त्वष्टा । यशः । श्रियम् । रूपम् । रूपम् । अधुः । सुते ॥ ५२ ॥

अश्विना अश्विनौ सरस्वती चेति त्वष्टा च एताः प्रयाजदेवताः, भेषजं सर्वेषामौषधं मधु मधुरूपम्, नोऽस्माकम्, विशेषेण भेषजम्, यशः कीर्त्ति च, श्रियं सम्पदं च, रूपं सुरूपतां च, सुते सोमे अभिषुते सति, इन्द्रे, अधुः स्थापयाञ्चक्रुः । [—अ० २२।६।१०]

अथैकादशी—

ऋतुथेन्द्रो वनस्पतिश्शशमानः परिस्रुता ।
कीलालमश्विभ्याम्मधु दुहे धेनुस्सरस्वती ॥ ५३ ॥

ऋतुथा । इन्द्रः । वनस्पतिः । शशमानः । परि । स्रुता ॥
कीलालम् । अश्विभ्याम् । मधु । दुहे । धेनुः । सरस्वती ॥ ५३ ॥

ऋतुथा तस्मिन् काले, इन्द्रः, व्यत्ययः, इन्द्राय, वनस्पतिर्नानाशाखाभिर्बहुकृतो बृहस्पतिर्धर्मो वा यजमानः, शशमानः स्तुवन्, अश्विभ्यां शशमानः सन्, परिस्रुता व्यत्ययः, परिगच्छन्तीम्, धेनुर्धेनुम्, कीलालम् उदकम् अन्नरसम्, दुहे दोग्धि । किं च सरस्वतीरूपां धेनुम्[1] अमृतम् इन्द्राय दुहे दोग्धि । [—अ० २२।६।११]

अथ द्वादशी—

गोभिर्न सोममश्विना मासरेण परिस्रुता ।
समधातꣳ सरस्वत्या स्वाहेन्द्रे सुतम्मधु ॥ ५४ ॥

गोभिः । न । सोमम् । अश्विना । मासरेण । परि । स्रुता ॥
सम् । अधातम् । सरस्वत्या । स्वाहा । इन्द्रे । सुतम् । मधु ॥ ५४ ॥

गोभिर्न ऋषभच्छागमेषात्मकैः पशुभिरपि युक्तम्, मासरेण मासरवर्णेनैव सक्तुना युक्तम्, परिस्रुता गच्छन्त्या वाज्यसरस्वत्या, सुतम् अभिषुतम्, मधु मधुररसं सोमम्, अश्विना हे अश्विनौ, सरस्वत्या स्वाहा स्वाहाशब्दवाच्येन प्रयाजदेवेन च सहितौ युवाम् इन्द्रे च समधातं सम्यक् तर्पयतम् । [—अ० २२।६।१२]

इति द्वाविंशेऽध्याये षष्ठोऽनुवाकः ।

## [ सप्तमोऽनुवाकः ५५–६७ ]

उक्तास्त्रिपशोराप्रियः । सप्तमेऽनुवाके तस्यैव पशोर्याज्यानुवाक्यादय आम्नायन्ते । कात्यायनः— "अश्विना हविरिति" ( अ० १९।६।१६) इति । तिस्रो वपानां याज्यानुवाक्याः, प्रथमामनूच्य द्वितीया याज्या, द्वितीयामनूच्य तृतीया याज्या, तृतीयामनूच्य प्रथमा याज्येति तिसृषु याज्यासु तिस्रः ऋचः । तत्र प्रथमयाज्या पुरोऽनुवाक्या तृतीयायां योज्या । तामाह—

१. मधु इति योजनीयम्

अश्विना हविरिन्द्रियन्नमुचेर्धिया सरस्वती ।
आ शुक्रमासुराद्वसु मघमिन्द्राय जभ्रिरे ॥ ५५ ॥

अश्विना । हविः । इन्द्रियम् । नमुचेः । धिया । सरस्वती ॥
आ । शुक्रम् । आसुरात् । वसु । मघम् । इन्द्राय । जभ्रिरे ॥ ५५ ॥

अश्विनौ सरस्वती चेति तिस्रो देवताः, इन्द्रियं वीर्यकरम्, शुक्रं लोहितादिदोषरहितम्, वसु वसूनि वासकरम्, मघं देवानां धनरूपम्, हविरिन्द्राय इन्द्रार्थम्, आसुराद् असुरपुत्रात्, नमुचेः सकाशात्, धिया निश्चयात्मिकया बुद्धया, आहरणप्रकारं निश्चित्य, जभ्रिरे, व्यत्ययः, आजभ्रिरे आहृतवत्यः । [—अ० २२।७।१]

अथ प्रथमायां वपायां या याज्या, द्वितीयस्यां पुरोऽनुवाक्या तामृचमाह—

यमश्विना सरस्वती हविषेन्द्रमवर्द्धयन् ।
स बिभेद बलम्मघन्नमुचा आसुरे सचा ॥ ५६ ॥

यम् । अश्विना । सरस्वती । हविषा । इन्द्रम् । अवर्द्धयन् ॥
सः । बिभेद । बलम् । मघम् । नमुचा । आसुरे । सचा ॥ ५६ ॥

अश्विना अश्विनौ, सरस्वती चैतास्तिस्रो देवताः हविषा यम् इन्द्रम् अवर्द्धयन्, स इन्द्र आसुरे नमुचौ व्यत्ययः, असुरपुत्रेण नमुचिना, सचा सह, मघं महनीयं कितवलक्षणं वा, तत्र च "मघ कैतवे" इति धातुः, बलं बलनामकमसुरं बिभेद विदारितवान् । [—अ० २२।७।२]

या याज्या द्वितीयस्यां या याज्या, तृतीयस्यां पुरोऽनुवाक्या तामृचमाह—

तमिन्द्रम्पशवस्सचाश्विनोभा सरस्वती ।
दधाना अभ्यनूषत हविषा यज्ञ इन्द्रियैः ॥ ५७ ॥

तम् । इन्द्रम् । पशवः । सचा । अश्विना । उभा । सरस्वती ॥
दधानाः । अभि । अनूषत । हविषा । यज्ञे । इन्द्रियैः ॥ ५७ ॥

पशवः ऋषभमेषाजाः, अश्विनोभा उभावश्विनौ, सरस्वती च, सचा परस्परसहिताः, दधानाः पोषकाः, सत्यं तं प्रसिद्धमिन्द्रम्, यज्ञे हविषा इन्द्रियैः सामर्थ्यैश्चाभ्यनूषत, अनूषतिरत्र वृद्धचर्थः, बहु अवर्द्धयन् । [—अ० २२।७।३]

कात्यायनः—"य इन्द्र इति पुरोडाशानाम्" ( अ० १९।६।१८ ) इति त्रयाणां पुरोडाशानां तिस्र ऋचः । तत्र प्रथमपुरोडाशे या पुरोऽनुवाक्या, तृतीये याज्या तां पठति—

य इन्द्र इन्द्रियन्दधुस्सविता वरुणो भगः ।
स सुत्रामा हविष्पतिर्यजमानाय सश्चत ॥ ५८ ॥

ये । इन्द्रे । इन्द्रियम् । दधुः । सविता । वरुणः । भगः ।
सः । सुत्रामा । हविष्पतिः । यजमानाय । सश्चत ॥ ५८ ॥

सविता वरुणश्च भगश्च [1]प्रसिद्धः। सुत्रामा हविष्पतिश्चेति ये देवा इन्द्रे इन्द्रियं सामर्थ्यं दधुः। हे देवाः, ते यूयं यजमानाय यजमानार्थम्, सश्चत समवेता भवत। [—अ० २२।७।४]

प्रथमस्य पुरोडाशस्य याज्यां, द्वितीयस्य पुरोऽनुवाक्यां पठति—

**सविता वरुणो दधद्यजमानाय दाशुषे।**
**आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम्॥ ५९॥**

**सविता। वरुणः। दधत्। यजमानाय। दाशुषे॥**
**आदत्त। नमुचेः। वसु। सुत्रामा। बलम्। इन्द्रियम्॥ ५९॥**

सविता देवः, दाशुषे दत्तवते, यजमानाय, वसु दानादिकम्, दधद् दधातु। तथा वरुणोऽपि यजमानाय वसु धारयतु। किं च यः सुत्रामा इन्द्रः, नमुचेः सकाशाद् इन्द्रियम् इन्द्रियवृद्धिकरम्, बलं सामर्थ्यकरं च वसु हविःस्वरूपं धनम्, आदत्त स्वीकृतवान्, सोऽपि दाशुषे यजमानाय, वसु धारयत्वित्यर्थः। [—अ० २२।७।५]

अथ द्वितीयपुरोडाशस्य याज्यां, तृतीयस्य पुरोऽनुवाक्यामृचमाह—

**वरुणः क्षत्रमिन्द्रियम्भगेन सविता श्रियम्।**
**सुत्रामा यशसा बलन्दधाना यज्ञमाशत॥ ६०॥**

**वरुणः। क्षत्रम्। इन्द्रियम्। भगेन। सविता। श्रियम्॥**
**सुत्रामा। यशसा। बलम्। दधानाः। यज्ञम्। आशत॥ ६०॥**

वरुणो देवः, क्षत्रं क्षतात् त्राणात्मकधर्मम्, इन्द्रियं वीर्य्यं च धत्ते। सविता भगेन सह श्रियं धत्ते। सुत्रामा च यशसा कीर्त्या सह बलं धत्ते। एवं दधाना यद् वीर्य्य-श्री-बलानि पृथक् पृथग् धारयन्ते वरुणसवितृसुत्रामाणो [2]देवताः, यज्ञमाशत व्याप्नुवन्तः। [—अ० २२।७।६]

कात्यायनः—"अश्विना गोभिरिति च हविषाम्" इति ( अ० १९।६।१९)। याज्यानुवाक्याः पूर्ववदित्यर्थः। तत्र प्रथमस्य हविषः पुरोऽनुवाक्यां, तृतीयस्य याज्यामाह—

**अश्विना गोभिरिन्द्रियमश्वेभिर्वीर्य्यम्बलम्।**
**हविषेन्द्रꣳ सरस्वती यजमानमवर्द्धयन्॥ ६१॥**

**अश्विना। गोभिः। इन्द्रियम्। अश्वेभिः। वीर्य्यम्। बलम्॥**
**हविषा। इन्द्रम्। सरस्वती। यजमानम्। अवर्द्धयन्॥ ६१॥**

अश्विना अश्विनौ सरस्वती चैतास्तिस्रो देवताः, दक्षिणारूपाभिर्गोभिः, अश्वेभिर्दक्षिणारूपैरश्वैश्चेति व्यत्ययः। इन्द्रियम् [3]इन्द्राहेंण वीर्य्यम्, वीर्येण बलम्, बलेन च, अन्येन हविषा च स इन्द्रं यजमानं वाऽवर्द्धयन्। हविर्भोक्तृत्वम् इन्द्रस्य वृद्धिः, हविःप्रदातृत्वं यजमानस्येति द्रष्टव्यम्। [—अ० २२।७।७]

---

१. सु उ. म्यु. २. देवाः उ. म्यु. ३. इन्द्रियेण उ. म्यु.

प्रथमस्य हविषो याज्यायां, द्वितीयस्य पुरोऽनुवाक्यामृचमाह—

ता नासत्या सुपेशसा हिरण्यवर्त्तनी नरा ।
सरस्वती हविष्मतीन्द्र कर्मसु नोऽवत ॥ ६२ ॥

ता । नासत्या । सुपेशसा । हिरण्यवर्त्तनी । नरा ॥
सरस्वती । हविष्मती । इन्द्र । कर्मसु । नः । अवत ॥ ६२ ॥

ता तौ प्रसिद्धौ, सुपेशसा सुरूपौ, 'हिरण्यालङ्कारयुक्तौ'[1], हिरण्यवर्त्तनी हिरण्यदानोपलक्षितमार्गौ, नरा विश्वस्य नेतारौ नासत्यौ अश्विनौ, हविष्मती हविर्युक्ता सरस्वती च यास्तिस्रो देवताः, हे इन्द्र तास्त्वं च यूयं सर्वकर्मस्वनुष्ठीयमानेषु प्रकृतेषु व्यापारेषु, नोऽस्मान्, अवत रक्षत ।
[ —अ० २२।७।८ ]

अथ द्वितीयहविषो याज्यां, तृतीयपुरोऽनुवाक्यामृचमाह—

ता भिषजा सुकर्मणा सा सुदुघा सरस्वती ।
स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियम् ॥ ६३ ॥

ता । भिषजा । सुकर्मणा । सा । सुदुघा । सरस्वती ॥
सः । वृत्रहा । शतक्रतुः । इन्द्राय । दधुः । इन्द्रियम् ॥ ६३ ॥

ता तौ प्रसिद्धौ, सुकर्मणा शोभनकर्मयुक्तौ, भिषजा देवचिकित्सकौ, सा प्रसिद्धा, सुदुघा कामानां सुष्ठु दोग्ध्री, सरस्वती च, सः प्रसिद्धः, वृत्रस्य पापस्यासुरस्य वा हन्ता शतक्रतुरिन्द्रश्च, एते देवा इन्द्राय इन्द्रार्थम्, इन्द्रियं दधुः सम्पादयामासुः । इन्द्रोऽपि स्वार्थं स्वयमेव[3] वर्तत इत्यविरोधः ।
[ —अ० २२।७।९ ]

कात्यायनः—"ग्रहाणां युवꣳ सुरामं पुत्रमिवेति" इति ( अ० १९।६।२० ) । याज्यानुवाक्ये इति शेषः । तत्र प्रथमा—

युवꣳ सुराममश्विना नमुचा आसुरे सचा ।
विपिपानाः सरस्वतीन्द्रङ्कर्मस्वावत ॥ ६४ ॥

युवम् । सुरामम् । अश्विना । नमुचौ । आसुरे । सचा ॥
वि । पिपानाः । सरस्वती । इन्द्रम् । कर्मसु । आ । अवत ॥ ६४ ॥

अश्विना हे अश्विनौ, हे सरस्वति, युवं व्यत्ययः, यूयम्, सचा परस्परसहिताः, आसुरे असुरपुत्रे नमुचौ, वर्तमानं सुरामं सुरामयं पेयम्, विपिपाना विविधं पानं कुर्वाणाः, कर्मसु वर्त्तमानाः, इन्द्रम् आवत आ समन्ताद् रक्षत ।
[ —अ० २२।७।१० ]

---

१. हिरण्मय उ. म्यु.
२. भिषजौ देवचिकित्सकावश्विनौ वा उ. म्यु.
३. प्र. उ. म्यु.

अथ द्वितीया ।

**पु॒त्रमि॑व पि॒तरा॑ अ॒श्विनो॒भेन्द्रा॒वथुः॒ काव्यै॑र्द॒ꣳसना॑भिः ।**
**यत् सु॒राम॒ꣳ व्यपि॑ब॒श्शची॑भि॒स्सर॑स्वती त्वा मघव॒न्नभिष्णक् ॥ ६५ ॥**

**पुत्रम् । इव । पितरा । अश्विना । उभा । इन्द्र । आवथुः । काव्यैः । दंसनाभिः ॥**
**यत् । सुरामम् । व्यपिबः । शचीभिः । सरस्वती । त्वा । मघवन् । अभिष्णक् ॥ ६५ ॥**

हे इन्द्र त्वाम्, उभा उभौ, अश्विना अश्विनौ, पितरौ मातापितरौ, पुत्रमिव काव्यैः कविसंबन्धिभिर्मन्त्रैः, दंसनाभिः कर्मभिश्च, आवथुः रक्षताम् । यद् यस्मात् कारणात् शचीभिर्नमुचिवधादिरूपैः कर्मभिः, हे मघवन् धनवन् इन्द्र, सुरामं सुरामयं रमणीयं वा पेयद्रव्यम्, व्यपिबः विशेषेण [1]पानमकार्षीः, सरस्वती च हे मघवन् त्वा त्वाम् अभिष्णक् अभ्यशोधयत् । तस्मात् त्वाम् अश्विनौ पालयाञ्चक्रतुरिति पूर्वेण संबन्धः । [ —अ० २२।७।११ ]

कात्यायनः—"पशुस्विष्टकृतो यस्मिन्नश्वासोऽहाव्यग्न" इति (अ० १९।६।२१) । तत्र प्रथमा—

**यस्मि॒न्नश्वा॑स ऋष॒भास॑ उ॒क्षणो॑ व॒शा मे॒षा अ॑वसृ॒ष्टास॒ आहु॑ताः ।**
**की॒ला॒ल॒पे सोम॑पृष्ठाय वे॒धसे॑ हृ॒दा म॒तिं ज॑नय॒ चारु॑म॒ग्नये॑ ॥ ६६ ॥**

**यस्मिन् । अश्वासः । ऋषभासः । उक्षणः । वशाः । मेषाः । अव । सृष्टासः । आहुताः ॥**
**कीलालपे । सोमपृष्ठाय । वेधसे । हृदा । मतिम् । जनय । चारुम् । अग्नये ॥ ६६ ॥**

अश्वासः अश्वाः, उक्षणः, [2]दीर्घलोपश्छान्दसः, उक्षाणः सेचनसमर्थाः, ऋषभासः ऋषभाश्च, वशा वन्ध्या गावश्च मेषाश्च यस्मिन् आहवनीयादिरूपेऽग्नौ, अवसृष्टासः अवदायावदाय विसृष्टाः, आहुता आदायाऽऽदाय यज्ञे उपहुताः, कीलालम् उदकसदृशम् अन्नरसं पिबतीति कीलालपास्तस्मै, सोमः पृष्ठे यस्यासौ सोमपृष्ठस्तस्मै, ( सोमपृष्ठेऽपि ) सोमवाहने इत्यर्थः । वेधसे मेधाविने अग्नये । हे अग्ने हृदा त्वद्हृदयेन, चारुं प्रौढ़ां मतिम् जनय उत्पादय । [ —अ० २२।७।१२ ]

अथ द्वितीया —

**अहा॒व्यग्ने ह॒विरा॒स्ये॑ ते स्रु॒चीव घृ॒तं च॒म्वी॑व॒ सोमः॑ ।**
**वा॒ज॒स॒निꣳ र॒यिम॒स्मे सु॒वीर॑म्प्रश॒स्तं धे॑हि य॒शस॑म्बृ॒हन्त॑म् ॥ ६७ ॥**

**अहावि । अग्ने । हविः । आस्ये । ते । स्रुचि । इव । घृतम् । चम्वि । इव । सोमः ॥**
**वाजसनिम् । रयिम् । अस्मे । सु । वीरम् । प्रशस्तम् । धेहि । यशसम् । बृहन्तम् ॥ ६७ ॥**

हे अग्ने, ते तव, आस्ये मुखे, स्रुचि घृतमिव चम्वि अधिषवणचर्मणि, सोम इव संस्थितं हविः, अहावि देवतोद्देश्येन त्यक्त्वा प्रक्षिप्तम् । अतस्त्वं वाजसनिमन्नदानम्, रयिं धनं च, प्रशस्तं श्रेष्ठम्, यशसं कीर्त्तिमन्तम्, बृहन्तं महान्तं सुवीरं शोभनं पुत्रं च अस्मे अस्मासु, धेहि धारय ।

**इति द्वाविंशेऽध्याये सप्तमोऽनुवाकः ।**

---

१. पालन उ. म्यु. २. ह्रस्व इति युक्तम्

[ अष्टमोऽनुवाकः ६८—७८ ]

अष्टमेऽनुवाके एकादश ऋचः, ता आम्नायन्ते। कात्यायन :—"अश्विना तेजसेत्यनुवाकꣳ शꣳसति" इति ( अ० १९।७।१ )। तत्र प्रथमा—

**अश्विना तेजसा चक्षुः प्राणेन सरस्वती वीर्यम्।**
**वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियम्॥ ६८॥**

**अश्विना। तेजसा। चक्षुः। प्राणेन। सरस्वती। वीर्यम्॥**
**वाचा। इन्द्रः। बलेन। इन्द्राय। दधुः। इन्द्रियम्॥ ६८॥**

अश्विना अश्विनौ, तेजसा सह चक्षुर्दधतुः, सरस्वती प्राणेन वाचा सह, वीर्य्यं दधौ, इन्द्रश्च बलेन सह वीर्य्यं दधौ। एवम् अश्विसरस्वतीन्द्रास्तेजःप्रभृतिद्वारेणेन्द्राय इन्द्रार्थम्, इन्द्रियं सामर्थ्यं दधुः। [—अ० २२।८।१]

अथ द्वितीया—

**गोमदू षु णासत्याश्वावद्यातमश्विना।**
**वर्त्ती रुद्रा नृपाय्यम्॥ ६९॥**

**गोमत्। ऊ। सु। नासत्या। अश्वावत्। यातम्। अश्विना।**
**वर्त्तिः। रुद्रा। नृपाय्यम्॥ ६९॥**

नासत्याः हे सत्यभृतो रुद्रा दुःखनिवारणसमर्थाः, अश्विना अश्विनौ, सुगोमत् शोभनगोयुक्तमेव, अश्वावद् अश्वयुक्तम्, नृपाय्यं नरः ऋत्विजो यस्मिन् यज्ञे सोमादिकं पिबन्ति, तं यज्ञम्, वर्त्तिर्व्यत्ययः, वर्त्तिना मार्गेण यातं गच्छतम्। [—अ० २२।८।२]

अथ तृतीया—

**न यत्परो नान्तर आदधर्षद् वृषण्वसू।**
**दुःशꣳसो मर्त्यो रिपुः॥ ७०॥**

**न। यत्। परः। न। अन्तरः। आ। अदधर्षत्। वृषण्वसू॥**
**दुःशंसः। मर्त्यः। रिपुः॥ ७०॥**

हे वृषण्वसू वृष्टिधनावश्विनौ, यद् धनम्, परो बाह्यः अन्तरोऽन्तर्वर्त्ती वा, दुःशंसो दुष्टवाक्, स मर्त्यो मनुष्यः, रिपुः शत्रुः, न आदधर्षद् अपहर्तुं न समर्थोऽभूत्, [1]तद्धनमादाय नृपाय्यं यातमिति पूर्वेणान्वयः। [—अ० २२।८।३]

अथ चतुर्थी—

**ता न आवोढमश्विना रयिम्पिशङ्गसन्दृशम्।**
**धिष्ण्या वरिवोविदम्॥ ७१॥**

**ता। नः। आ। अवोढम्। अश्विना। रयिम्। पिशङ्गसंदृशम्।**
**धिष्ण्या। वरिवोविदम्॥ ७१॥**

---

१. तच्च उ. म्यु.

हे अश्विना अश्विनौ, ता तौ प्रसिद्धौ, धिष्ण्या धिष्ण्यावग्निरूपौ धातारौ वा, युवां पिशङ्ग-संदृशं पिङ्गलरूपसदृशम्, रयिं धनम्, नोऽस्माकम्, वरिवोविदं धनलाभकारणयज्ञं च, आवोढम् आवहतम् । [—अ० २२।८।४]

अथ पञ्चमी—

**पा॒व॒का न॒स्सर॑स्वती॒ वाजे॑भिर्वा॒जिनी॑वती ।**

**य॒ज्ञँव्व॑ष्टु धि॒याव॑सुः ॥ ७२ ॥**

**पावका । नः । सरस्वती । वाजेभिः । वाजिनीवती ॥**

**यज्ञम् । वष्टु । धियावसुः ॥ ७२ ॥**

पावका पापानां शोषयित्री, वाजेभिरन्नैः वाजिनीवती अन्नरसवती, धियावसुर्ज्ञानधनवती कर्मधनवती वा सरस्वती, नोऽस्माकं यज्ञं वष्टु कामयताम् । [—अ० २२।८।५]

अथ षष्ठी—

**चो॒द॒यि॒त्री सू॒नृता॑ना॒श्चेत॑न्ती सुम॒ती॒नाम् ।**

**य॒ज्ञं द॑धे॒ सर॑स्वती ॥ ७३ ॥**

**चोदयित्री । सूनृतानाम् । चेतन्ती । सु । मतीनाम् ।**

**यज्ञम् । दधे । सरस्वती ॥ ७३ ॥**

सूनृतानां यथार्थवचनानां चोदयित्री, सुमतीनां शुभार्थविषयमतीनां[१] मध्ये चेतन्ती, **"चिती संज्ञाने"** इति धातुः । ज्ञानवती सरस्वती यज्ञं दधे धृतवती । [—अ० २२।८।६]

अथ सप्तमी—

**म॒हो अर्ण॒स्सर॑स्वती॒ प्र चे॑तयति के॒तुना॑ ।**

**धियो॒ विश्वा॒ वि रा॑जति ॥ ७४ ॥**

**महः । अर्णः । सरस्वती । प्र । चेतयति । केतुना ।**

**धियः । विश्वाः । वि । राजति ॥ ७४ ॥**

सरस्वती महो महत्, अर्णः उदकम्, केतुना प्रज्ञया, प्रचेतयति प्रज्ञापयति । किं च विश्वा सर्वाः धियो बुद्धीर्विराजति दीपयति । [अ० २२।८।७]

अथाष्टमी—

**इन्द्रा या॑हि चित्रभानो सु॒ता इ॒मे त्वा॒यव॑ः ।**

**अण्वी॑भि॒स्तना॑ पू॒तास॑ः ॥ ७५ ॥**

**इन्द्र । आ । याहि । चित्रभानो । सुताः । इमे । त्वायवः ॥**

**अण्वीभिः । तना । पूतासः ॥ ७५ ॥**

हे चित्रभानो विचित्रप्रभासम्पन्नेन्द्र, अण्वीभिरङ्गुलीभिः, तना विस्तृतेन दशापवित्रेण च, पूतासः पूताः शोधिताः । [२]इमे सोमाः, त्वायवस्त्वदीयास्त्वामिच्छन्तो वर्त्तन्ते । अतस्त्वम् आयाहि, आगच्छ । [—अ० २२।८।८]

---

१. वतीनाम् उ. म्यु. २. सुता अभिषुता इति योजनीयम् ।

अथ नवमी—

**इन्द्रा याहि धियेषितो विप्रजूतस्सुतावतः ।**
**उप ब्रह्माणि वाघतः ॥ ७६ ॥**

**इन्द्र । आ । याहि । धिया । ईषितः । विप्रजूतः । सुतावतः ॥**
**उप । ब्रह्माणि । वाघतः ॥ ७६ ॥**

हे इन्द्र, धिया स्वकीयबुद्धया ( इव ), ईषितः प्रेरितः, विप्रजूतो मेधाविभिः सेवितस्त्वम्, सुतावतः अभिषुतः सोमवतो यजमानस्य, वाघतः ऋत्विजश्च उप समीपस्थानानि ब्रह्माणि हवींषि, आयाहि ।। [ अ० २२।८।९ ]

अथ दशमी—

**इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः ।**
**सुते दधिष्व नश्चनः ॥ ७७ ॥**

**इन्द्र । आ । याहि । तूतुजानः । उप । ब्रह्मणि । हरिवः ॥**
**सुते । दधिष्व । नः । चनः ॥ ७७ ॥**

हरिवो हरिताश्वेन्द्र, तूतुजानस्त्वरमाणस्त्वम् , उपब्रह्मणि उपहवींषि, आयाहि । किं च सुते सोमेऽभिषुते सति, नोऽस्माकम्, चनः सोमरूपमन्नम्, दधिष्व उदरे धारयस्व । [अ० २२।८।१०]

अथैकादशी—

**अश्विना पिबताम्मधु सरस्वत्या सजोषसा ।**
**इन्द्रस्सुत्रामा वृत्रहा जुषन्ताꣳ सोम्यम्मधु ॥ ७८ ॥**

**अश्विना । पिबताम् । मधु । सरस्वत्या । सजोषसा ॥**
**इन्द्रः । सुत्रामा । वृत्रहा । जुषन्ताम् । सोम्यम् । मधु ॥ ७८ ॥**

अश्विना अश्विनौ, सरस्वत्या सह सजोषसा प्रीतियुक्तौ, मधु पिबताम् । वृत्रहा वृत्रस्य हन्ता, सुत्रामा सुपालक इन्द्रश्च, मधु पिबतु । किं च अश्विसरस्वतीन्द्राः सर्वे सम्भूय, सोम्यं सोमयुक्तं मधु जुषन्तां सेवन्ताम् । [ अ० २२।८।११ ]

इति द्वाविंशेऽध्यायेऽष्टमोऽनुवाकः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः ॥

इति श्रीमद्राजाधिराज–परमैश्वर्य–वैदिकमार्गप्रवर्त्तक–वीरबुक्कणभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये द्वाविंशोऽध्यायः ॥



# अथ त्रयोविंशोऽध्यायः

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

[ प्रथमोऽनुवाकः १–१२ ]

अथ त्रयोविंशाध्यायस्य प्रथमानुवाके हौत्रमभिधीयते ।
[1]कात्यायनः—"इमं मे तत्त्वेत्येककपालस्य" इति (अ० १९।७।१३) । याज्यानुवाक्ये इत्यर्थः ।

तयोः प्रथमा—

**इमम्मे वरुण श्रुधी हवमद्या च मृळय ।**
**त्वामवस्युराचके ॥१॥**

इमम् । मे । वरुण । श्रुधि । हवम् । अद्य । आ । च । मृडय ॥
त्वाम् । अवस्युः । आ । चके ॥ १ ॥

हे वरुण, मेऽस्मदीयम् इमं क्रियमाणम्, हवम् आह्वानम्, श्रुधि शृणु । किं च अद्य अस्मिन्नहनि, मृडय मां सुखय । अपि च अवस्युरात्मनोऽवनं पालनमिच्छन् अहम्, त्वाम्, आचके कामये ।
[—अ० २३।१।१]

अथ द्वितीया—

**तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।**
**अहेळमानो वरुणेह बोध्युरुशꣳस मा नआयुः प्र मोषीः ॥ २ ॥**

तत् । त्वा । यामि । ब्रह्मणा । वन्दमानः । तत् । आशास्ते । यजमानः । हविर्भिः ॥
अहेडमानः । वरुण । इह । बोधि । उरुशंश । मा । नः । आयुः । प्र । मोषीः ॥ २ ॥

हे वरुण, त्वा त्वाम्, तद् अभिलषितम्, ब्रह्मणा [2]वैदिकमन्त्रेण, वन्दमानः स्तुवन्, यामि याचे । यजमानोऽपि त्वां हविर्भिस्तदा दीर्घमायुराशास्ते । त्वम् अहेडमानः अक्रुध्यन्, इह अस्मिन् यजमाने, तद् दीर्घमायुः, बोधि बुध्यस्व । हे उरुशंस बहुस्तोतव्य वरुण, नोऽस्माकमायुर्मा प्रमोषीः प्रमुष्टं मा कुरु ।
[—अ० २३।१।२]

कात्यायनः—"अग्निवरुणयोस्त्वं नः सत्वं न इति" इति ( अ० १८।७।१४ ) स्विष्टकृतो याज्यानुवाक्येत्यर्थः ।

तत्र प्रथमा—

**त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेळो अव यासिसीष्ठाः ।**
**यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांꣳसि प्र मुमुग्ध्यस्मत् ॥ ३ ॥**

---

१. तत्र उ. म्यु.     २. वैदिकेन उ. म्यु.

त्वम् । नः । अग्ने । वरुणस्य । विद्वान् । देवस्य । हेडः । अव । यासिसीष्ठाः ।।
यजिष्ठः । वह्नितमः । शोशुचानः । विश्वा । द्वेषांसि । प्र । मुमुग्धि । अस्मत् ॥ ३ ॥

हे अग्ने, त्वं नोऽस्मान्, विद्वान् जानन्, देवस्य द्योतमानस्य वरुणस्य, हेडः क्रोधम्, अवयासिसीष्ठा अपगमय। [1]यस्मात् त्वं यजिष्ठः श्रेष्ठः यष्टृतमो वा, [2]शोशुचानो हविर्भिर्देदीप्यमानः, तस्माद् विश्वा विश्वानि, द्वेषांसि द्वेषाणि दौर्भाग्यानि, अस्मत् अस्मत्तः प्रमुमुग्धि प्रमोचय।
[ —अ० २३।१।३ ]

अथ द्वितीया—

स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अव यक्ष्व नो वरुणꣳ रराणो वीहि मृळीकꣳ सुहवो न एधि ॥ ४ ॥

सः । त्वम् । नः । अग्ने । अवमः । भव । ऊती । नेदिष्ठः । अस्याः । उषसः । व्युष्टौ ॥
अव । यक्ष्व । नः । वरुणम् । रराणः । वीहि । मृडीकम् । सुहवः । नः । एधि ॥ ४ ॥

हे अग्ने एवं प्रार्थ्यमानत्वम्, नोऽस्माकम्, नेदिष्ठोऽन्तिकतमः सन्, ऊती ऊत्या पालनेन, अवमः पालयितृतमो भव। किंच अस्या उपस्थिताया उषसो, व्युष्टौ अपगमे सति अस्मिन्नहनीत्यर्थः। नोऽस्माकम्, वरुणम् आवरणरूपं पापम्, अवयक्ष्व नाशय। किं च त्वं रराणो रममाणः, अभिलषितं ददानो वा, मृडीकं सुखकरम् अस्मदीयं हविः, वीहि भक्षय। नोऽस्माकम् सुहवः शोभनाह्वानश्च, एधि भव।
[ —अ० २३।१।४ ]

कात्यायनः—"आदित्यस्य सुत्रामाणं महीमूषु मातरम्" इति ( अ० १९।७।१५ )। अदितिदेवताकस्य चरोर्याज्यानुवाक्येत्यर्थः।

तत्र प्रथमा—

महीमू षु मातरꣳ सुव्रतानामृतस्य पत्नीमवसे हुवेम ।
तुविक्षत्रामजरन्तीमुरूचीꣳ सुशर्माणमदितिꣳ सुप्रणीतिम् ॥ ५ ॥

महीम् । ऊ । सु । मातरम् । सु । व्रतानाम् । ऋतस्य । पत्नीम् । अवसे । हुवेम ॥
तुविक्षत्राम् । अजरन्तीम् । ऊरूचीम् । सुशर्माणम् । अदितिम् । सुप्रणीतिम् ॥ ५ ॥

महीं महतीम्, सुव्रतानां शोभनकर्मणाम्, मातरं निर्मात्रीम्, ऋतस्य यज्ञस्य, पत्नीं जायाम्, सत्यस्य पालयित्रीं वा, तुविक्षत्रां बहुक्षतत्राणाम्, अजरन्तीं जरारहिताम्, ऊरूचीं बहुधावनीम्, सुशर्माणं कल्याणाश्रयां कल्याणशरणां वा, सुप्रणीतिं विश्वस्य सम्यक् [3]प्रणेत्रीम्, अदितिम् अदित्याख्यां देवताम्, अवसे रक्षणाय, सुहुवेम सम्यगाह्वयाम।
[ —अ० २३।१।५ ]

अथ द्वितीया—

सुत्रामाणम्पृथिवीन्द्यामनेहसꣳ सु शर्माणमदितिꣳ सु प्रणीतिम् ।
दैवीन्नावꣳ स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये ॥ ६ ॥

---

१. अस्मात् उ. म्यु.।    २. वह्नितमः हविषां वोढा इति योज्यम्।
३. पालयित्रीम् उ. म्यु.।

**सुत्रामाणम् । पृथिवीम् । द्याम् । अनेहसम् । सु । शर्माणम् । अदितिम् । सु । प्रणीतम् ॥**
**दैवीम् । नावम् । स्वरित्राम् । अनागसम् । अस्रवन्तीम् । आ । रुहेम । स्वस्तये ॥ ६ ॥**

सुत्रामाणं सम्यक् परिपालयित्रीम्, पृथिवीं विस्तीर्णाम्, द्यां दीप्तिमतीम्, अनेहसं निष्पापाम्, सुशर्माणं साधुशरणाम्, सुप्रणीतिं साधुप्रणयित्रीम्, दैवीं देवसंबन्धिनीम्, नावं तरणीरूपाम्, स्वरित्रां सुष्ठु अरिभ्यः त्रायत इति अरित्रं शस्त्रं तद्वतीं तरणीप्रेरणसाधनवतीं वा, अनागसम् अपराधरहिताम्, अस्रवन्तीं वृथा स्रवणरहिताम्, साधुकर्मफलदायिनीमित्यर्थः। अदितिम् अदित्याख्यां देवताम्, स्वस्तये अविनाशाय इष्टफलाय च, आरुहेम वयमारोहणं कुर्मः। शरणंप्राप्ता भवेम इत्यर्थः। [ —अ० २३।१।१६ ]

सुनावमारुहेयमित्यस्या ऋचो लिङ्गाद् विनियोगो द्रष्टव्यः। पाठस्तु—

**सु नावमारुहेयमस्रवन्तीमनागसम् ।**
**शतारित्राꣳ स्वस्तये ॥ ७ ॥**

**सु । नावम् । आ । रुहेयम् । अस्रवन्तीम् । अनागसम् ॥**
**शतारित्राम् । स्वस्तये ॥ ७ ॥**

अस्रवन्तीं वृथास्रवणरहितां साधुकर्मफलदायिनीमित्यर्थः। अनागसम् अपराधरहिताम्, शतारित्रां बह्वरित्रवतीम्, सुनावं शोभनतरणीरूपाम्, स्वस्तये अविनाशाय कल्याणाय [1]वाऽऽरुहेयं यजमानोऽहमारोहणं कुर्याम्। [ —अ० २३।१।१७ ]

कात्यायनः—आ नः प्रबाहवेति पयस्याया" इति ( अ० १९।७।१६ )। आ न इति प्रबाहवेति[2] द्वे ऋचौ[3] मैत्रावरुण्याः पयस्याया याज्यानुवाक्ये इत्यर्थः।

तत्र प्रथमा—

**आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।**
**मध्वा रजाꣳसि सुक्रतू ॥ ८ ॥**

**आ । नः । मित्रावरुणा । घृतैः । गव्यूतिम् । उक्षतम् ॥**
**मध्वा । रजांसि । सुक्रतू ॥ ८ ॥**

सुक्रतू शोभनक्रतुवन्तौ, मित्रावरुणा हे मित्रावरुणौ, युवां नोऽस्माकम्, गव्यूतिम्। यद्यपि गव्यूतिशब्दो रूढया क्रोशयुगमाचष्टे तथापि पूर्वाचार्यैरर्थसंकोचे कारणाभावाद् योगमाश्रित्य गवि पृथिव्याम् ऊतिं पालनक्षमां भूमिमिति रक्षणक्षमक्षेत्रपरतया व्याख्यातः। तद् व्याख्यानानुसारेण पृथिव्यां रक्षणक्षमं क्षेत्रमित्यर्थः। यद्वा गव्यूतिं गोप्रचारपर्याप्तां भूमिमित्यर्थः। घृतैः क्षरणसाधनैरुदकैः, आ उक्षतं समन्तात् सिञ्चतम्। किं च मध्वा मधुररसवतोदकेन रजांसि भूरादीनपि लोकान् आ उक्षतम्। [—अ० २३।१।१८]

अथ द्वितीया—

**प्रबाहवा सिसृतञ्जीवसे न आ नो गव्यूतिमुक्षतङ्घृतेन ।**
**आ मा जने श्रवयतँय्युवाना श्रुतम्मे मित्रावरुणा हवेमा ॥ ९ ॥**

---

१. चा उ. म्यु.। २. च उ. म्यु.। ३. तन् उ. म्यु.।

**प्र । बाहवा । सिसृतम् । जीवसे । नः । आ । नः । गव्यूतिम् । उक्षतम् । घृतेन ।।**
**आ । मा । जने । श्रवयतम् । युवाना । श्रुतम् । मे । मित्रावरुणा । हवा । इमा ।। ९ ।।**

युवाना युवानौ, मित्रावरुणा हे मित्रावरुणौ, युवां बाहवा, व्यत्ययः, बाहू, नोऽस्माकम्, जीवसे जीवनाय, प्रसिसृतं प्रसारयतम् । [1]बाहुप्रसारस्य [2]बलहेतुत्वं प्रतिपक्षनिवारणेनेति द्रष्टव्यम् । किं च नोऽस्माकम्, गव्यूतिं घृतेनोदकेन आ उक्षतम् । किं च मा माम्, जने सर्वस्मिन् लोके, आश्रावयतम् । असौ यजमान इमं यज्ञं करोतीति प्रख्यापयतम् । किं च मे मदीयान्, इमा इमान् क्रियमाणान्, हवा हवान्, श्रुतं शृणुतम् । [—अ० २३।१।९]

कात्यायनः—"वाजिनस्य शन्न इति" ( अ० १६।७।१७ ) इति । शन्न इत्याद्यास्तिस्रस्तिस्रो याज्यानुवाक्या भवन्तीत्यर्थः । तत्र प्रथमा—

**शन्नो भवन्तु वाजिनो हवेषु देवताता मितद्रवस्स्वर्काः ।**
**जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः ।। १० ।।**

**शम् । नः । भवन्तु । वाजिनः । हवेषु । देवताता । मितद्रवः । स्वर्काः ।।**
**जम्भयन्तः । अहिम् । वृकम् । रक्षांसि । सनेमि । अस्मत् । युयवन् । अमीवाः ।। १० ।।**

ये मितद्रवः परिमितगतिमन्तः, स्वर्काः सुष्ठु दीप्तिमन्तः, अहिं सर्पम्, वृकम् अरण्यश्वानं च, रक्षांसि असुरांश्च, जम्भयन्तः क्षोभयन्तः, सनेमि पूर्वम्, अस्मत् अस्मत्तः, अमीवाः सर्पादिकृतानुपद्रवान्, युयवन् पृथक् कृतवन्तस्ते वाजिनोऽश्वाः, नोऽस्माकम्, देवताता देवतातौ, यज्ञे, हवेषु आह्वानेषु सत्सु, शं भवन्तु सुखकरा भवन्तु । [—अ० २३।१।१०]

अथ द्वितीया—

**ते नो अर्वन्तो हवनश्रुतो हवँविश्वे शृण्वन्तु वाजिनो मितद्रवः ।**
**सहस्रसा मेधसाता इव त्मना महो ये धनꣳ समिथेषु जभ्रिरे ।। ११ ।।**

**ते । नः । अर्वन्तः । हवनश्रुतः । हवम् । विश्वे । शृण्वन्तु । वाजिनः । मितद्रवः ।।**
**सहस्रसाः । मेधसाता । इव । त्मना । महः । ये । धनम् । समिथेषु । जभ्रिरे ।। ११ ।।**

[3]ते अर्वन्तो गतिकुशलाः, हवनश्रुत आह्वानं शृण्वन्तः, मितद्रवो मितगामिनः, सहस्रसा अपरिमितस्यान्नस्य दातारः, वाजिनोऽश्वाः, त्मना, मेधसाता मेधसातौ यज्ञशालायामिव, समिथेषु संग्रामेषु, धनं रत्नं श्रेष्ठं महो महद्धनं जभ्रिरे अरिभ्यः सकाशादाहृतवन्तः । ते विश्वे सर्वेऽश्वाः, नोऽस्मदीयं हवमाह्वानं शृण्वन्तु । [—अ० २३।१।११]

अथ तृतीया—

**वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।**
**अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ।। १२ ।।**

**वाजे । वाजे । अवत । वाजिनः । नः । धनेषु । विप्राः । अमृताः । ऋतज्ञाः ।।**
**अस्य । मध्वः । पिबत । मादयध्वम् । तृप्ताः । यात । पथिभिः । देवयानैः ।। १२ ।।**

---

१. प्रसारण उ. म्यु. २. जीवनबलहेतुत्वम् उ. म्यु.
३. ये उ. म्यु.

हे वाजिनो यूयम्, वाजे वाजे सर्वस्मिन्नन्ने, धनेषु चोपस्थितेषु, नोऽस्मान्, अवत पालयत। किं च हे विप्रा मेधाविनः, हे अमृता मरणधर्मरहिताः, ऋतज्ञाः सत्यज्ञाः, हे वाजिनो यूयम्, अस्य मध्वः इदं मधुसदृशं वाजिनं पिबत। [1]पीत्वा मादयध्वं हृष्टा भवत। तृप्ताः पीताः सन्तः, देवयानैर्देवाधिष्ठितैः, पथिभिर्मार्गैः, यात गच्छत। [—अ० २३।१।१२]

इति त्रयोविंशेऽध्याये प्रथमोऽनुवाकः।

[ द्वितीयोऽनुवाकः १३-२३ ]

द्वितीयेऽनुवाके आप्रिय उच्यन्ते। कात्यायनः—"वायोधस आप्रियः समिद्धो अग्निः समिधेति" इति ( अ० १८।७।१८ )।

समिद्धो अग्निस्समिधा सुसमिद्धो वरेण्यः।
गायत्रीच्छन्द इन्द्रियं त्र्यविर्गौर्वयो दधुः ॥ १३ ॥

सम्। इद्धः। अग्निः। समिधा। सु। सम्। इद्धः। वरेण्यः ॥
गायत्रीच्छन्दः। इन्द्रियम्। त्र्यविः। गौः। वयः। दधुः ॥ १३ ॥

समिधा समिन्नाम्ना यागेन तद्देवतया वा समिद्धः, सुसमिद्धस्तदीयहवीरूपेण घृतेन सम्यक् [2]सुदीप्तः, वरेण्यः संभजनीयोऽग्निः, गायत्रीच्छन्दो गायत्र्याख्यं छन्दश्च त्र्यविर्गौः सार्द्धसंवत्सरो गौरपि, एते सर्वे देवाः, इन्द्रियं वीर्यम्, वयो दीर्घमायुश्च, दधुः सम्पादितवन्तः। [—अ० २३।२।१]

अथ द्वितीया—

तनूनपाच्छुचिव्रतस्तनूपाश्च सरस्वती
उष्णिहाच्छन्द इन्द्रियन्दित्यवाड् गौर्वयो दधुः ॥१४॥

तनूनपात्। शुचिव्रतः। तनूपाः। च। सरस्वती ॥
उष्णिहा। छन्दः। इन्द्रियम्। दित्यवाट्। गौः। वयः। दधुः ॥ १४ ॥

तनूनपान्नामकप्रयाजदेवः[3], तनूनाम् अपां नपाद् अपत्यम् अग्निः, "अग्निरूपः प्रविश्य प्रातर्जायत" इति श्रवणात्। शुचिव्रत उज्ज्वलकर्मा, तनूनपाद् रक्षणहेतुः सरस्वती च, उष्णिहा, व्यत्ययः, उष्णिगाख्यं छन्दः[4], दित्यवाट्, दित्यां भवं दित्यम्, तद् वहतीति दित्यवाट्। यद्वा संवत्सरद्वयोपेतो दित्यवाडित्युच्यते। एते सर्वे इन्द्रियं वयश्च दधुः, इन्द्रे सम्पादितवन्तः। [—अ० २३।२।२]

अथ तृतीया—

इळाभिरग्निरीड्यस्सोमो देवो अमर्त्यः।
अनुष्टुप्छन्द इन्द्रियम्पञ्चाविर्गौर्वयो दधुः ॥ १५ ॥

---

१. तत् उ. म्यु.
२. संदीप्तः उ. म्यु.
३. देवता उ. म्यु.
४. च उ. म्यु.

इडाभिः । अग्निः । ईड्यः । सोमः । देवः । अमर्त्यः ॥
अनुष्टुप् । छन्दः । इन्द्रियम् । पञ्चाविः । गौः । वयः । दधुः ॥ १५ ॥

इडाभिः स्तुतिभिः, ईड्यः स्तुत्यः, अग्निः, अमर्त्यो मरणरहितो देवो द्योतमानः सोमश्च, अनुष्टुबाख्यं छन्दश्च, पञ्चाविः सार्द्धसंवत्सरद्वयोपेतो गौश्च, एते सर्वे इन्द्रियं वयश्च इन्द्रे दधुः । [—अ० २३।२।३]

अथ चतुर्थी—

सुबर्हिरग्निः पूषण्वान्त्स्तीर्णबर्हिरमर्त्यः ।
बृहतीच्छन्द इन्द्रियन्त्रिवत्सो गौर्वयो दधुः ॥ १६ ॥

सु । बर्हिः । अग्निः । पूषण्वान् । स्तीर्णबर्हिः । अमर्त्यः ॥
बृहती । छन्दः । इन्द्रियम् । त्रिवत्सः । गौः । वयः । दधुः ॥ १६ ॥

सुबर्हिः शोभनं बर्हिरस्य प्रयाजदेवः, पूषण्वान् पूष्णा देवेन युक्तः, वेद्यां स्तीर्णं बर्हिर्यस्यासौ स्तीर्णबर्हिः, अमर्त्यो मरणधर्मरहितः, अग्निः, बृहती बृहत्याख्यं छन्दश्च, त्रिवत्सो वत्सरत्रयवान् गौः पशुश्चेति सर्वे इन्द्रियं वयश्च इन्द्रे दधुः । [—अ० २३।२।४]

अथ पञ्चमी—

दुरो देवीर्दिशो महीर्ब्रह्मा देवो बृहस्पतिः ।
पङ्क्तिश्छन्द इहेन्द्रियन्तुर्यवाड् गौर्वयो दधुः ॥ १७ ॥

दुरः । देवीः । दिशः । महीः । ब्रह्मा । देवः । बृहस्पतिः ॥
पङ्क्तिः । छन्दः । इह । इन्द्रियम् । तुर्यवाट् । गौः । वयः । दधुः ॥ १७ ॥

दुरः, छान्दसं सम्प्रसारणम्, द्वारः प्रयाजदेवताः, देवीः देव्यो द्योतमानाः, दिशः विदिक्सहिता दिग्रूपा वा, महीः महत्यः, देव्यो द्योतमानाः, ब्रह्मा च बृहस्पतिश्च, पङ्क्तिः पङ्क्त्याख्यं छन्दश्च तुर्यवाट् तुर्यं वहतीति तुर्यवाट् सार्द्धसंवत्सरत्रयोपेतो वा गौः पशुश्च, एते इन्द्रे इन्द्रियं वयश्च दधुः । [—अ० २३।२।५ ]

अथ षष्ठी—

उषे यह्वी सुपेशसा विश्वेदेवा अमर्त्याः ।
त्रिष्टुप् छन्द इहेन्द्रियम्पष्ठवाड् गौर्वयो दधुः ॥ १८ ॥

उषे । यह्वी । सु । पेशसा । विश्वेदेवाः । अमर्त्याः ॥
त्रिष्टुप् । छन्दः । इह । इन्द्रियम् । पष्ठवाट् । गौः । वयः । दधुः ॥ १८ ॥

सुपेशसा शोभनरूपे, यह्वी महत्यौ प्रयतमाने वा, उषे इति द्विवचनसामर्थ्यात् तत्सहचारिणी रात्रिस्तदीया गृह्यते, प्रभातदात्रीत्यर्थः । यद्वा उषे इति षष्ठप्रयाजदेवते विवक्षिते, अमर्त्या मरणधर्मरहिता विश्वेदेवाश्च, त्रिष्टुप्छन्दः, पष्ठं वहतीति षष्ठवाट्, संवत्सरचतुष्टयवान् गौश्च, एते इह यज्ञे इन्द्रे वा इन्द्रियं वयश्च दधुः । [—अ० २३।२।६ ]

अथ सप्तमी—

दैव्या॒ होता॑रा भि॒षजेन्द्रे॑ण स॒युजा॑ यु॒जा ।
जग॑ती॒च्छन्द॑ इन्द्रि॒यम॑न॒ड्वान् गौर्वयो॑ दधुः ॥ १९ ॥

दैव्या । होतारा । भिषजा । इन्द्रेण । सयुजा । युजा ॥
जगती । छन्दः । इन्द्रियम् । अनड्वान् । गौः । वयः । दधुः ॥ १९ ॥

दैव्या देवसम्बन्धिनौ होतारा होतारौ, सप्तमप्रयाजदेवौ आङ्गिरसौ वा, भिषजा भिषजौ वा, इन्द्रेण सयुजा सह वर्तमानौ, युजा परस्परमपि संयुक्तौ देवौ, जगतीच्छन्दश्च, अनो वहतीति अनड्वान्, इन्द्रियं वयश्च इन्द्रे दधुः ।। [ —अ० २३।२।७ ]

अथाष्टमी—

ति॒स्र इळा॒ सर॑स्वती॒ भार॑ती म॒रुतो॒ विशः॑ ।
वि॒राट् छन्द॑ इ॒हेन्द्रि॒यन्धे॒नुर्गौर्न वयो॑ दधुः ॥ २० ॥

तिस्रः । इडा । सरस्वती । भारती । मरुतः । विशः ॥
विराट् । छन्दः । इह । इन्द्रियम् । धेनुः । गौः । न । वयः । दधुः ॥ २० ॥

इडा सरस्वती भारती चैतास्तिस्रो देवताः, देवानां विशो मरुतो विशश्च—"मरुतो वै देवानां विशः" इति श्रुतेः ( ऐ० ब्रा० १।९ )। विराट्छन्दश्च, धेनुर्नवप्रसूतिका गौरपि, एते सर्वे इहेन्द्रियं वयश्च इन्द्रे दधुः । [—अ० २३।२।८ ]

अथ नवमी—

त्वष्टा॑ तु॒रीपो॒ अद्भु॑त इन्द्रा॒ग्नी पु॑ष्टि॒वर्ध॑ना ।
द्वि॒पदा॒च्छन्द॑ इन्द्रि॒यमु॒क्षा गौर्न वयो॑ दधुः ॥ २१ ॥

त्वष्टा । तुरीपः । अद्भुतः । इन्द्राग्नी । पुष्टिवर्धना ॥
द्विपदा । छन्दः । इन्द्रियम् । उक्षा । गौः । न । वयः । दधुः ॥ २१ ॥

तुरीपः आशुप्राप्तिमान्, अद्भुतः आश्चर्यविग्रहः, त्वष्टा, पुष्टिवर्धना पुष्टिवर्धनौ, इन्द्राग्नी च, द्विपदा पादद्वयोपेतं छन्दश्च, उक्षा सेचनसमर्थः, गौर्न पशुरपि, एते सर्वे इन्द्रियं वयश्च इन्द्रे दधुः । [—अ० २३।२।९ ]

अथ दशमी—

श॒मि॒ता नो॒ वन॒स्पतिः॑ सवि॒ता प्र॑सु॒वन् भग॑म् ।
क॒कुप्छन्द॑ इ॒हेन्द्रि॒यँ व॒शा वे॒हद्वयो॑ दधुः ॥ २२ ॥

शमिता । नः । वनस्पतिः । सविता । प्र । सुवन् । भगम् ॥
ककुप् । छन्दः । इह । इन्द्रियम् । वशा । वेहत् । वयः । दधुः ॥ २२ ॥

नोऽस्माकं शमिता सर्वोपद्रवाणां शमयिता, वनस्पतिः, वनस्पतिर्दशमप्रयाजदेवता, भगम् ऐश्वर्यादिरूपम्, प्रसुवन् प्रेरयन् ( शमयिता ) ककुप् ककुब्वाच्यं छन्दश्च, वशा वन्ध्या गौश्च, वेहद् गर्भपातिका[1] गौश्च, एते वनस्पत्यादयः सर्वेऽपि देवा इह इन्द्रे यज्ञे वा, इन्द्रियं वयश्च दधुः ।
[—अ० २३।२।१० ]

अथैकादशी—

स्वाहा॑ य॒ज्ञँव्वरु॑णस्सुक्ष॒त्रो भे॑ष॒जङ्क॑रत् ।
अति॑च्छन्दा इन्द्रि॒यम्बृ॑ह॒दृ॑ष॒भो गौर्वयो॑ दधुः ॥ २३ ॥

स्वाहा । यज्ञम् । वरुणः । सु । क्षत्रः । भेषजम् । करत् ॥
अतिच्छन्दाः । इन्द्रियम् । बृहत् । ऋषभः । गौः । वयः । दधुः ॥ २३ ॥

सुक्षत्त्रः शोभनक्षत्रधर्मयुक्तः, वरुणो भेषजं भेषजात्मकं यज्ञम्, स्वाहा स्वाहाकारेण, करत् अकरोत्, किं च अतिच्छन्दा अतिच्छन्दाख्यं छन्दो बृहत्यौ च, ऋषभः सेचनसमर्थो गौश्चेत्येते सर्वे इन्द्रियं वयश्च इन्द्रे दधुः ।
[ —अ० २३।२।११ ]

इति त्रयोविंशेऽध्याये द्वितीयोऽनुवाकः ।

[ तृतीयोऽनुवाकः २४—२९ ]

तृतीयेऽनुवाके पुरोडाशपशूनां याज्यानुवाक्या उच्यन्ते । तथा च कात्यायनः—"याज्यापुरोऽनुवाक्याश्च वपापुरोडाशपशूनां वसन्तेन ऋतुना" ( अ० १९।७।२० ) इति । तत्र प्रथमा—

व॒स॒न्तेन॑ ऋ॒तुना॑ दे॒वा वस॑वस्त्रि॒वृता॑ स्तु॒ताः ।
र॒थ॒न्त॒रेण॒ तेज॑सा ह॒विरिन्द्रे॒ वयो॑ दधुः ॥ २४ ॥

वसन्तेन । ऋतुना । देवाः । वसवः । त्रिवृता । स्तुताः ॥
रथन्तरेण । तेजसा । हविः । इन्द्रे । वयः । दधुः ॥ २४ ॥

देवा द्योतमाना वसवः, 'द्रोणः, प्राणः, धृतः, अर्कः, अग्निः, दोषः, वसुः, विभावसुः' इत्येतन्नामका अष्टौ वसवो वसन्तेन ऋतुना सह त्रिवृता स्तोमेन तेजसा तेजस्विना रथन्तरेण साम्ना च स्तुताः सन्तः, वपाख्यं हविर्वयश्च इन्द्रे दधुः सम्पादितवन्तः । [ —अ० २३।३।१ ]

अथ द्वितीया—

ग्री॒ष्मेण॑ ऋ॒तुना॑ दे॒वा रु॒द्राः प॑ञ्चद॒शे स्तु॒ताः ।
बृ॒ह॒ता यश॑सा॒ बल॑ꣳ ह॒विरिन्द्रे॒ वयो॑ दधुः ॥ २५ ॥

ग्रीष्मेण । ऋतुना । देवाः । रुद्राः । पञ्चदशे । स्तुताः ॥
बृहता । यशसा । बलम् । हविः । इन्द्रे । वयः । दधुः ॥ २५ ॥
ग्रीष्मेण ऋतुना सह देवा द्योतमाना रुद्राः—

---

१. गर्भघातिनी उ. म्यु.

"रैवताजो भगो भीमो वाम उग्रो वृषापतिः ।
अनेकपादहिर्बुध्न्यो बहुरूपो महानिति ॥"

एकादश रुद्राः । पञ्चदश[1] स्तोमे यशसा यशस्विना बृहता बृहदाख्येन साम्ना स्तुताः सन्तः, बलं सामर्थ्यं हविर्वयश्च इन्द्रे दधुः । [—अ० २३।३।२ ]

अथ तृतीया—

वर्षाभिर्ऋतुनादित्याः स्तोमे सप्तदशे स्तुताः ।
वैरूपेण विशौजसा हविरिन्द्रे वयो दधुः ॥ २६ ॥

वर्षाभिः । ऋतुना । आदित्याः । स्तोमे । सप्तदशे । स्तुताः ॥
वैरूपेण । विशा । ओजसा । हविः । इन्द्रे । वयः । दधुः ॥ २६ ॥

वर्षाभिः "भूम्नि वर्षा" इत्यभिधानाद् बहुवचनम् । ऋतुना सह आदित्याः—
"विवस्वान्, अर्यमा, पूषा, त्वष्टा च, सविता, भगः ।
धाता, विधाता, वरुणो, मित्रः, शुक्रः, उरुक्रमः ॥"

इति द्वादशादित्याः । सप्तदशस्तोमेन विशा वैश्यहितकारिणा, ओजसा ओजस्विना, वैरूपेण वैरूपाख्येण साम्ना स्तुताः सन्तो हविर्वयश्च इन्द्रे दधुः । [—अ० २३।३।३]

अथ चतुर्थी—

शारदेन ऋतुना देवा एकविंश ऋभवः स्तुताः ।
वैराजेन श्रिया श्रियं हविरिन्द्रे वयो दधुः ॥ २७ ॥

शारदेन । ऋतुना । देवाः । एकविंशे । ऋभवः । स्तुताः ॥
वैराजेन । श्रिया । श्रियम् । हविः । इन्द्रे । वयः । दधुः ॥ २७ ॥

शारदेन शरदाख्येन ऋतुना सह, ऋभवः ऋभुनामकदेवाः, एकविंशस्तोमेन, श्रिया [2]श्रीप्रदेन वैराजेन वैराजाख्येन साम्ना, स्तुताः सन्तः, श्रियं श्रीप्रदं हविर्वयश्च, इन्द्रे दधुः । [—अ० २३।३।४]

अथ पञ्चमी—

हेमन्तेन ऋतुना देवास्त्रिणवे मरुतः स्तुताः ।
बलेन शक्वरीः सहो हविरिन्द्रे वयो दधुः ॥ २८ ॥

हेमन्तेन । ऋतुना । देवाः । त्रिणवे । मरुतः । स्तुताः ॥
बलेन । शक्वरीः । सहः । हविः । इन्द्रे । वयः । दधुः ॥ २८ ॥

हेमन्तेन हेमन्ताख्येन ऋतुना सह मरुतः, शुक्रः ज्योतिश्च चित्रज्योतिश्च[3] ज्योतिष्मांश्च सत्यश्च इत्येवमादय एकोनपञ्चाशन्मरुतो देवाः । त्रिणवे स्तोमे[4] बलेन बलहेतुना, शक्वरीः, व्यत्ययः, शक्वर्या युक्तेन शाक्वरेण साम्ना स्तुताः सन्तः, सहो बलकरं हविर्वयश्च इन्द्रे दधुः ।[—अ० २३।३।५]

---

१. पञ्चदशेन स्तोमेन इति युक्तम् । २. श्रीप्रसादेन उ. म्यु.
३. सत्यज्योतिश्च उ. म्यु. । ४. त्रिणवेन स्तोमेन इति युक्तम् ।

अथ षष्ठी—

शैशिरेण ऋतुना देवास्त्रयस्त्रिंशेऽमृताः स्तुताः ।
सत्येन रेवतीः क्षत्रꣳ हविरिन्द्रे वयो दधुः ॥ २९ ॥

शैशिरेण । ऋतुना । देवाः । त्रयस्त्रिंशे । अमृताः । स्तुताः ॥
सत्येन । रेवतीः । क्षत्रम् । हविः । इन्द्रे । वयः । दधुः ॥ २९ ॥

शैशिरेण ऋतुना सह, अमृता अमृतनामधेया देवाः, त्रयस्त्रिंशे स्तोमे[1] सत्येन सत्यवचनहेतुना, रेवतीः, व्यत्ययः, रेवतीभिरुपलक्षितेन रैवताख्येन साम्ना स्तुताः, क्षत्रं बलकरम्, हविर्वयश्च इन्द्रे दधुः । [—अ० २३।३।६]

इति त्रयोविंशेऽध्याये तृतीयोऽनुवाकः ।

[ चतुर्थोऽनुवाकः ३०–४१ ]

अथ चतुर्थेऽनुवाके प्रयाजप्रैषमन्त्रा उच्यन्ते । तथा च कात्यायनः—"होता यक्षत् समिधाग्निमिति प्रयाजप्रैषास्त्रिंशतः" ( अ० १९।६।१४ ) इति । तत्र प्रथमा—

होता यक्षत्समिधाग्निमिळस्पदेऽश्विनेन्द्रꣳ सरस्वतीमजो धूम्रो न गोधूमैः कुवलैर्भेषजम्मधु ।
शष्पैर्न तेज इन्द्रियम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥३०॥

होता । यक्षत् । समिधा । अग्निम् । इडस्पदे । अश्विना । इन्द्रम् । सरस्वतीम् । अजः । धूम्रः । न । गोधूमैः । कुवलैः । भेषजम् । मधु ॥
शष्पैः । न । तेजः । इन्द्रियम् । पयः । सोमः । परि । स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज ॥ ३० ॥

दैव्यो होता इडस्पदे, इडा गौस्तस्याः पदे सोमक्रयणी पदपांशुयुक्ता आहवनीया इत्यर्थः । समिधा समिन्नामकप्रयाजदेवेन सह स्थितमग्निं यक्षत् यजति । तथा अश्विना अश्विनौ, इन्द्रं च सरस्वतीं च यक्षत् । धूम्रः धूम्रवर्णो यः "आश्विनं धूम्रलालाममालभेत" ( तै० सं०, का० २ । प्र० १ । अनु० १० ) इति विधानाद् गोधूमैः सूक्तैः कुवलैर्बदरफलैश्च सहितो भेषजं मधु सम्पद्यते । शष्पैर्न बालतृणैश्च सहिताज्येन मधु सम्पद्यते । तथा सम्भवात्तेजो यजमानस्येन्द्रस्य वा तेज इन्द्रियं च सम्पद्यते । तस्माद् अश्विसरस्वतीन्द्रा दैव्येन होत्रा इज्यमानाः सन्तः परिस्रुता परिस्रवन्त्या सुरया सह, पयः सोमः, व्यत्ययः, सोमं च, घृतं च मधु च व्यन्तु प्राप्नुवन्तु । हे होतस्त्वमपि आज्यस्य आज्येन यज । [—अ० २३।४।१]

अथ द्वितीया—

होता यक्षत्तनूनपात्सरस्वतीमविर्मेषो न भेषजम्पथा मधुमता भरन्नश्विनेन्द्राय वीर्यम् ।
बदरैरुपवाकाभिर्भेषजन्तोक्मभिः पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३१ ॥

१. त्रयस्त्रिंशेन स्तोमेन इति युक्तम् ।

होता । यक्षत् । तनूनपात् । सरस्वतीम् । अविः । मेषः । न । भेषजम् । पथा । मधुमता । भरन् । अश्विना । इन्द्राय । वीर्यम् ॥
बदरैः । उपवाकाभिः । भेषजम् । तोक्मभिः । पयः । सोमः । परि । स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज ॥ ३१ ॥

दैव्यो होता, मधुमता मधुररसवता, पथा यज्ञमार्गेण, भरन् आत्मनि हवींषि धारयन् आहरन् वा, तनूनपात्, व्यत्ययः, तनूनपातं प्रयाजदेवम्, अग्निं सरस्वतीं च यक्षत् अयजत्। अविः अजो मेषो न श्वा च सूतो मेषश्च, बदरैर्बदरफलैः सह भेषजं सम्पद्यते। अश्विनौ च इन्द्राय वीर्यं कुरुताम्[१]। किं च बदरैः, उपवाकाभिर्हरितयवैः, तोक्मभिर्व्रीह्यङ्कुरैश्च, भेषजं वीर्यं च सरस्वती करोतु इति शेषः। अश्विसरस्वतीन्द्राश्च सर्वे पयः सोमं च परिस्रुता सह घृतं मधु च व्यन्तु प्राप्नुवन्तु। हे मानुष होतः, त्वमपि आज्यस्य आज्येन यज। [ —अ० २३।४।२ ]

अथ तृतीया—

होता यक्षन्नराशꣳसन्न नग्नहुम्पतिꣳ सुरया भेषजम्मेषस्सरस्वती भिषग्रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य वीर्यम्।
बदरैरुपवाकाभिर्भेषजन्तोक्मभिः पयस्सोमः परिस्रुता घृतमम्धु व्यन्त्वाज्यस्य होतर्यज ॥ ३२ ॥

होता । यक्षत् । नराशंसम् । न । नग्नहुम् । पतिम् । सुरया । भेषजम् । मेषः । सरस्वती । भिषक् । रथः । न । चन्द्री । अश्विनोः । वपा । इन्द्रस्य । वीर्यम् ॥
बदरैः । उप । वाकाभिः । भेषजम् । तोक्मभिः । पयः । सोमः । परि । स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज ॥ ३२ ॥

दैव्यो होता, नग्नहुम्, व्यत्ययः, नग्नहुस्त्वम्, नग्नः सन् आहुतिपरिणामरूपेण जगद् बिभर्तीति नराशंसो न नग्नहुः, तं पतिं जगत्पालकं नराशंसं च प्रयाजदेवम्, अग्निं च सुरया सह यक्षत् अयजत्। सारस्वतो मेषो भेषजं सम्पद्यते। सरस्वती च भिषक् सम्पद्यते। अश्विनोश्चन्द्री सुवर्णखचितः, रथो न रथश्च इन्द्रश्च भिषक् सम्पद्यते इत्यर्थः। वपाश्च इन्द्रश्च वीर्यं कुर्वन्तु इति शेषः। बदरैरित्यादि पूर्ववत्। [ —अ० २३।४।३ ]

अथ चतुर्थी—

होता यक्षदिडेळित आजुह्वानस्सरस्वतीमिन्द्रम्बलेन वर्धयन्नृषभेण गवेन्द्रियमश्विनेन्द्राय भेषजम्।
यवैः कर्कन्धुभिर्मधु लाजैर्न मासरम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३३ ॥

---

१. इति शेषः उ. म्यु.

होता । यक्षत् । इडा । ईडितः । आ । जुह्वानः । सरस्वतीम् । इन्द्रम् । बलेन । वर्धयन् । ऋषभेण । गवा । इन्द्रियम् । अश्विना । इन्द्राय । भेषजम् ॥
यवैः । कर्कन्धुभिः । मधु । लाजैः । न । मासरम् । पयः । सोमः । परि । स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज ॥ ३३ ॥

दैव्यो होता, ईडितो मन्त्रैः स्तुतः सन्, आजुह्वानः देवतामाह्वयन्, इन्द्रम् अश्विना अश्विनौ च बलेन वर्द्धयन्, गवा गोजातीयेन ऋषभेण, इन्द्रस्येन्द्रियं वर्द्धयन्, यवैः कर्कन्धुभिर्बदरफलैश्च, इन्द्राय भेषजं वर्द्धयन्, लाजैर्न लाजैश्च, मधु मधुररसोपेतं मासरम्, ओदनं निस्रावं वर्द्धयन्, इडा इडाख्यया प्रयाजदेवतया सह सरस्वतीं यक्षत् अयजत्। पय इत्यादि समानम्। [—अ० २३।४।४ ]

अथ पञ्चमः—

होता यक्षद् बर्हिरूर्णम्रदा भिषङ् नासत्या भिषजाश्विनाश्वा शिशुमती भिषग्धेनुस्सरस्वती भिषक्।
दुह इन्द्राय भेषजम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३४ ॥

होता । यक्षत् । बर्हिः । ऊर्णम्रदाः । भिषक् । नासत्या । भिषजा । अश्विना । अश्वा । शिशुमती । भिषक् । धेनुः । सरस्वती । भिषक् ॥
दुहे । इन्द्राय । भेषजम् । पयः । सोमः । परि । स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज ॥ ३४ ॥

दैव्यो होता, बर्हिर्बर्हिराख्यं प्रयाजदेवं यक्षत् अयजत्। सः कीदृश इत्यत उक्तम्। ऊर्णम्रदाः कम्बलवन्मृदुः, भिषग् इन्द्रस्य चिकित्सकः, नासत्या सत्यभूतौ [1]त्वष्टुर्नासिकाप्रभवौ वा, अश्विना अश्विनौ, भिषजा इन्द्रस्य चिकित्सकावभूताम्। तथा अश्वा इन्द्रस्याश्वौ भिषजावभूताम्। शिशुमती वत्सोपेता धेनुश्च इन्द्रस्य भिषगभूत्। सरस्वती च भिषक् स्वयमेव भिषग्रूपिणी सती, इन्द्राय इन्द्रार्थम्, भेषजम् औषधरूपम्, इदं कर्म, दुहे अपूरयत्। पय इत्यादि समानम्। [—अ० २३।४।५]

अथ षष्ठः—

होता यक्षद् दुरो दिशः कवष्यो न व्यचस्वतीरश्विभ्यान्न दुरो दिश इन्द्रो न रोदसी दुघे दुहे धेनुस्सरस्वत्यश्विनेन्द्राय भेषजम्।
शुक्रन्न ज्योतिरिन्द्रियम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३५ ॥

होता । यक्षत् । दुरः । दिशः । कवष्यः । न । व्यचस्वतीः । अश्विभ्याम् । न । दुरः । दिशः । इन्द्रः । न । रोदसी । दुघे । दुहे । धेनुः । सरस्वती । अश्विना । इन्द्राय । भेषजम् ॥
शुक्रम् । न । ज्योतिः । इन्द्रियम् । पयः । सोमः । परि । स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज ॥ ३५ ॥

दैव्यो होता दुरः दुरशब्दाभिधेया द्वाराभिमानिन्यः प्रयाजदेवता अयजत्। कीदृश्यस्ता इत्यत आह दिशो दिशानामिकाः[2] कवष्यो न कवाटवत्य इव, ससुषिरा इव वा व्यचस्वतीः व्याप्तिमत्यः,

१. त्वष्टुः उ. म्यु.

२. दिशात्मिकाः उ. म्यु.

किं च तादृशो द्वाराभिमानिन्यो दिशो दिग्रूपा देवताः, अश्विभ्यां न अश्विभ्यां सह वर्तन्ते । इन्द्रो न इन्द्रश्च रोदसी द्यावापृथिव्यौ, दुघे व्यत्ययः दुहे, तत्रत्यरसान् सम्पादितवानित्यर्थः । सरस्वती च धेनुर्भूत्वा दुहे, यजमानस्य कामानिति शेषः । अश्विना अश्विनौ च इन्द्राय भेषजम्, औषधरूपं शुक्रं न शुद्धमेव ज्योतिः प्रकाशम् इन्द्रियं दुदुहतुरित्यर्थः । पय इत्यादि समानम् । [—अ० २३।४।६ ]

अथ सप्तमः—

**होता यक्षत् सुपेशसोषे नक्तन्दिवाश्विना समञ्जाते सरस्वत्या त्विषिमिन्द्रे न भेषजम् ।**
**श्येनो न रजसा हृदा श्रिया न मासरम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३६ ॥**

होता । यक्षत् । सु । पेशसा । उषे । नक्तम् । दिवा । अश्विना । सम् । अञ्जाते । सरस्वत्या । त्विषिम् । इन्द्रे । न । भेषजम् ॥
श्येनः । न । रजसा । हृदा । श्रिया । न । मासरम् । पयः । सोमः । परि । स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज ॥ ३६ ॥

दैव्यो होता द्विवचनसामर्थ्योषाशब्देन प्रयाजदेवस्याहोरात्ररूपं मूर्तिद्वयम् उच्यते । तद् द्वे उषेऽयक्षत् । किं च यावश्विनौ, नक्तं दिवा रात्रावहनि तु[1] सुपेशसा शोभनरूपेण समञ्जाते संश्लेषयतः सरस्वत्या सहितौ, त्विषिं दीप्तिम्, भेषजं न भेषजं च, इन्द्रे समञ्जाते । तावपि होता यक्षत् । अपि च श्येनो न श्येनाख्यः पक्षी च, रजसा रञ्जकेन, हृदा हृदयेन संयुक्तावश्विनौ, श्रिया न श्रिया च सह, मासरमोदननिस्रवमादाय यस्मिन्निन्द्रे संश्लेषयतस्तमिन्द्रमपि होता अयक्षत् । पय इत्यादि समानम् । [—अ० २३।४।७]

अथाष्टमः—

**होता यक्षद् दैव्या होतारा भिषजाश्विनेन्द्रन्न जागृवि दिवा नक्तन्न भेषजैः ।**
**शूषꣳ सरस्वती भिषक् सीसेन दुह इन्द्रियम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३७ ॥**

होता । यक्षत् । दैव्या । होतारा । भिषजा । अश्विना । इन्द्रम् । न । जागृवि । दिवा । नक्तम् । न । भेषजैः ॥
शूषम् । सरस्वती । भिषक् । सीसेन । दुहे । इन्द्रियम् । पयः । सोमः । परि । स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज ॥ ३७ ॥

होता दैव्या दैव्यो होतारा[2] प्रयाजदेवौ यक्षत् । भिषजा चिकित्सकावश्विनौ, इन्द्रं न इन्द्रं च होता यक्षदिति सम्बन्धः । दिवा अहनि नक्तं रात्रौ च जागृवि जागरणशीलावश्विनौ, भेषजैरौषधैश्च,

---

१. च उ. म्यु. २. होतारा होतारौ इत्यादि युक्तम् ।

शूषं बलम्, इन्द्राय दधतुरिति शेषः। सरस्वती च भिषक् चिकित्सकसमाना सती, सीसेन पात्रेण सीसक्रीतेन शष्पेण वा, इन्द्रियं चक्षुरादिपाटवम्, इन्द्रे दुहे इत्यादि स्पष्टम्। [ —अ० २३।४।८ ]

अथ नवमः—

होता यक्षत्तिस्रो देवीर्न भेषजन्त्रयस्त्रिधातवोऽपसो रूपमिन्द्रे हिरण्ययमश्विनेळा न भारती।
वाचा सरस्वती मह इन्द्राय दुह इन्द्रियम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३८ ॥

होता। यक्षत्। तिस्रः। देवीः। न। भेषजम्। त्रयः। त्रिधातवः। अपसः। रूपम्। इन्द्रे। हिरण्ययम्। अश्विना। इडा। न। भारती॥
वाचा। सरस्वती। महः। इन्द्राय। दुहे। इन्द्रियम्। पयः। सोमः। परि। स्रुता। घृतम्। मधु। व्यन्तु। आज्यस्य। होतः। यज॥ ३८॥

दैव्यो होता इडा भारती सरस्वती चेति तिस्रो देवीः प्रयाजदेवताः[1] यक्षत् अयजत्। किं च त्रिधातवस्त्रिविधा अजमेषवृषभास्त्रयः पशवः, अपसः कर्मसम्बन्धिनो देवतोद्देश्येन त्यक्ताः सन्त इत्यर्थः। ओषधिसदृशं हिरण्ययं हिरण्य[2]रूपम्, इन्द्रे दधुरिति शेषः। अश्विना अश्विनौ इडा च भारती च वाचा सहिता सरस्वती चेत्येताः सर्वा देवताः, महस्तेजः, इन्द्रियं बलं च, इन्द्राय इन्द्रार्थम्, दुहे, व्यत्ययः, प्रपूरयामासुः। पय इत्यादि समानम्। [—अ० २३।४।६]

अथ दशमः—

होता यक्षत्सुरेतसमृषभन्नर्यापसन्त्वष्टारमिन्द्रमश्विना भिषजन्न सरस्वतीमोजो न जूतिरिन्द्रियँवृको न रभसो भिषक्।
यशस्सुरया भेषजꣳ श्रिया न मासरम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३९ ॥

होता। यक्षत्। सु। रेतसम्। ऋषभम्। नर्यापसम्। त्वष्टारम्। इन्द्रम्। अश्विना। भिषजम्। न। सरस्वतीम्। ओजः। न। जूतिः। इन्द्रियम्। वृकः। न। रभसः। भिषक्॥
यशः। सुरया। भेषजम्। श्रिया। न। मासरम्। पयः। सोमः। परि। स्रुता।
घृतम्। मधु। व्यन्तु। आज्यस्य। होतः। यज॥ ३६॥

सुरेतसं शोभनवीर्यम्, ऋषभं श्रेष्ठम्, नर्यापसं नराणां हितकर्मकरम्, भिषजं चिकित्सकस्वरूपम्,[3] त्वष्टारं प्रयाजदेवम् इन्द्रम्, अश्विना अश्विनौ च, सरस्वतीं च दैव्यो होता यक्षत्। तस्माद् ओजो न बलं च, जूतिः प्रज्ञा च, इन्द्रियं सामर्थ्यं च, इन्द्रे सम्पद्यते इति शेषः। वृकलोम्ना

१. देवाः उ. म्यु. २. हिरण्मयम् उ. म्यु.
३. सदृशम् उ. म्यु.

मन्त्रसम्पादितत्वात् तल्लोम्ना लक्षकः वृकशब्दः । स वृको रभसस्तीव्रम्, भिषक् न चिकित्सक इव, सुरया इन्द्रस्य पयो भेषजं च करोतीत्यर्थः । किं चास्मिन् कर्मणि, मासरं यवसक्तुरूपद्रव्यम्, श्रिया सम्पदा समं सम्पद्यते । पय इत्यादि समानम् । [—अ० २३।४।१०]

अथैकादशः—

**होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुम्भीमन्न मन्युꣳ राजानँ व्याघ्रन्नमसाश्विना ।**

**भामꣳ सरस्वती भिषगिन्द्राय दुह इन्द्रियम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ४० ॥**

होता । यक्षत् । वनस्पतिम् । शमितारम् । शतक्रतुम् । भीमम् । न । मन्युम् । राजानम् । व्याघ्रम् । नमसा । अश्विना ॥

भामम् । सरस्वती । भिषक् । इन्द्राय । दुहे । इन्द्रियम् । पयः । सोमः । परि । स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज ॥ ४० ॥

दैव्यो होता शमितारं शतक्रतुं बहुकर्माणम्, भीमं शत्रूणां भयङ्करं च, मन्युं शत्रून् प्रति क्रोधात्मानं, राजानं रञ्जकम्, व्याघ्रं श्रेष्ठम्, वनस्पतिं प्रयाजदेवम्, अश्विना अश्विनौ च नमसा यक्षत् । किं च सरस्वती भिषग् भूत्वा, इन्द्राय इन्द्रार्थम्, भामं रिपुविषयं कोपम्, इन्द्रियं सामर्थ्यं च, दुहे दोग्धि । पय इत्यादि समानम् । [—अ० २३।४।११]

अथ द्वादशः—

**होता यक्षदग्निꣳ स्वाहाज्यस्य स्तोकानाꣳ स्वाहा मेदसाम्पृथक् स्वाहाच्छागमश्विभ्याꣳ स्वाहा मेषꣳ सरस्वत्यै ।**

**स्वाहा ऋषभमिन्द्राय सिꣳहाय सहस इन्द्रियꣳ स्वाहाग्निन्न भेषजꣳ स्वाहा सोममिन्द्रियम् ।**

**स्वाहेन्द्रꣳ सुत्रामाणꣳ सवितारँ वरुणम्भिषजाम्पतिꣳ स्वाहा वनस्पतिम्प्रियम्पाथो न भेषजम् ।**

**स्वाहा देवा आज्यपा जुषाणो अग्निर्भेषजम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ४१ ॥**

होता । यक्षत् । अग्निम् । स्वाहा । आज्यस्य । स्तोकानाम् । स्वाहा । मेदसाम् । पृथक् । स्वाहा । छागम् । अश्विभ्याम् । स्वाहा । मेषम् । सरस्वत्यै ॥

स्वाहा । ऋषभम् । इन्द्राय । सिंहाय । सहसे । इन्द्रियम् । स्वाहा । अग्निम् । न । भेषजम् । स्वाहा । सोमम् । इन्द्रियम् ॥

स्वाहा । इन्द्रम् । सुत्रामाणम् । सवितारम् । वरुणम् । भिषजाम् । पतिम् । स्वाहा । वनस्पतिम् । प्रियम् । पाथः । न । भेषजम् ॥

**स्वाहा । देवाः । आज्यपाः । जुषाणः । अग्निः । भेषजम् । पयः । सोमः । परि । स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज ॥ ४१ ॥**

दैव्यो होता, स्वाहाख्यं प्रयाजदेवम् अग्निम्, यक्षत् अयजत् । किं च आज्यस्य स्तोकानाम्, कर्मणि षष्ठी ( पा० २।३।३५) । आज्यस्य विन्दून् स्वाहा होता सुष्ठु जुहुयात् । तथा मेदसां मेदांसि पृथक् विभज्य स्वाहा जुहुयात् । एवं छागम्, अश्विभ्यां स्वाहा जुहुयात् । एवमेव मेषम्, सरस्वत्यै स्वाहा जुहुयात् । तथा सहसे वलरूपाय सिंहाय, शत्रूणाम् अभिभवित्रे इन्द्राय, इन्द्रियं बलकरं स्वाहा जुहुयात् । किं च भेषजं न औषधमिव वर्तमानमग्निं प्रथमाज्यभागं देवं स्वाहा होमेन[1] तर्पयेत् । तथा इन्द्रियं सोमं द्वितीयाज्यभागं देवं स्वाहा होमेन तर्पयेत् । अपि च सुत्रामाणं सुष्ठु रक्षकमिन्द्रं च सवितारं च भिषजां[2] च स्वाहा, एकादशकपाल-द्वादशकपाल-दशकपालपुरोडाशहोमैर्यथाविधि तर्पयेत् । अत एव श्रूयते—**"ऐन्द्रमेकादशकपालं निर्वपति, सावित्रं द्वादशकपालम्, वारुणं दशकपालम्"** इति ( तै० सं०, का० १ । प्र० ८ । अनु० २१ ) । किं च प्रियं पाथोऽन्नम् इष्टमन्नमुदकं वा, यथा क्षुत्पिपासयोर्निवारकत्वेनौषधम्, तद्वद् भेषजं सर्वानिष्टनिवारकं वनस्पतिं यूपदेवं स्वाहा होमेन तर्पयेत् । तथा आज्यपा आज्यपाख्यदेवा देवान् स्वाहा होमेन तर्पयेत् । किं च जुषाणः एवं हविः सेवमानोऽग्निः भेषजम् इन्द्राय करोत्विति शेषः । एवं दैव्येन होत्रा इज्यमाना अश्विसरस्वतीन्द्राः पयः सोमं च परिस्रुता सुराकुम्भात् परितः स्रवन्त्या सुरया सह घृतं च मधु च व्यन्तु प्राप्नुवन्तु । हे मानुष होतस्त्वमपि आज्यस्य आज्येन यज । [—अ० २३।४।११ ]

**इति त्रयोविंशेऽध्याये चतुर्थोऽनुवाकः ।**

**[ पञ्चमोऽनुवाकः ४२-५० ] .**

अथ पञ्चमेऽनुवाके वपादिप्रैषमन्त्रा आम्नायन्ते । तत्र कात्यायनः—**"होता यक्षदश्विनाविति त्रयो वपानां प्रैषा यथालिङ्गमिति"** । (अ० १९।६।२२) । तत्र प्रथमा—

**होता यक्षदश्विनौ छागस्य वपाया मेदसो जुषेताᳬं हविर्होतर्यज ॥ ४२ ॥**

**होता । यक्षत् । अश्विनौ । छागस्य । वपायाः । मेदसः । जुषेताम् । हविः । होतः । यज ॥४२॥**

दैव्यो होता, अश्विनौ यक्षत् अयजत् । तावश्विनौ छागस्य सम्बन्धिन्या वपायाः, मेदसो मेदस्विन्याः सम्बन्धि हविः, जुषेतां सेवेताम् । हे मानुष होतस्त्वमपि यज याज्यां पठ । [—अ० २३।५।१]

अथ द्वितीया—

**होता यक्षत् सरस्वतीम्मेषस्य वपाया मेदसो जुषताᳬं हविर्होतर्यज ॥ ४३ ॥**

**होता । यक्षत् । सरस्वतीम् । मेषस्य । वपायाः । मेदसः । जुषताम् । हविः । होतः । यज ॥४३॥**

दैव्यो होता, सरस्वतीं यक्षत् अयजत् । सा सरस्वती, मेषस्य वपायाः, मेदसो मेदस्विन्याः सम्बन्धि हविः, जुषतां सेवताम् । हे मानुष होतस्त्वमपि यज । [ —अ० २३।५।२ ]

---

१. सोमेन उ. म्यु. २. चिकित्सकानां पतिं वरुणम् उ. म्यु.

अथ तृतीया—

होता यक्षदिन्द्रमृषभस्य वपाया मेदसो जुषताᳬ हविर्होतर्यज ॥ ४४ ॥

होता । यक्षत् । इन्द्रम् । ऋषभस्य । वपायाः । मेदसः । जुषताम् । हविः । होतः । यज ॥४४॥
अत्र 'इन्द्रम्, ऋषभस्य' इति पदद्वयम् अधिकम् । अन्यत् समानम् । [ —अ० २३।५।३ ]

कात्यायनः—"ग्रहाणां चतुर्थः" ( अ० १९।६।२३ ) इति । पाठस्तु—

होता यक्षदश्विनौ सरस्वतीमिन्द्रᳬ सुत्रामाणमिमे सोमाः ।
सुरामाणश्छागैर्न मेषैर्ऋषभैस्सुताः ।
शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तो मदा मासरेण परिष्कृताः ।
शुक्राः पयस्वन्तोऽमृताः प्रस्थिता वो मधुश्च्युतस्तानश्विना सरस्वतीन्द्रस्सुत्रामा
वृत्रहा जुषन्ताᳬ सोम्यम्मधु ।
पिबन्तु मदन्तु व्यन्तु होतर्यज ॥ ४५ ॥

होता । यक्षत् । अश्विनौ । सरस्वतीम् । इन्द्रम् । सुत्रामाणम् । इमे । सोमाः ॥
सु । रामाणः । छागैः । न । मेषैः । ऋषभैः । सुताः ॥
शष्पैः । न । तोक्मभिः । लाजैः । महस्वन्तः । मदाः । मासरेण । परि । कृताः ॥
शुक्राः । पयस्वन्तः । अमृताः । प्र । स्थिताः । वः । मधुश्च्युतः । तान् । अश्विना । सरस्वती ।
इन्द्रः । सुत्रामा । वृत्रहा । जुषन्ताम् । सोम्यम् । मधु ॥
पिबन्तु । मदन्तु । व्यन्तु । होतः । यज ॥ ४५ ॥

दैव्यो होता, अश्विना अश्विनौ, सरस्वतीं च, सुत्रामाणम् इन्द्रं च यक्षत्[1] । किं च सुरामाणः सुष्ठु रमणीयाः सुरामया वा, इमे पुरतोऽवस्थिताः सोमाः, छागैश्च मेषैश्च ऋषभैश्च सहिताः, सुताः अभिषुताः, शष्पैर्न बालतृणैश्च, तोक्मभिर्यवाङ्कुरैः, मासरेण अन्नरसेन, परिष्कृताः अलङ्कृताः, शुक्राः प्रकाशवन्तः, पयसा संयुक्ता अमृताः सुधाकल्पाः प्रस्थिताः होमाभिमुखीभूताः, मधुश्च्युतो मधुस्रावाश्च सन्तः, हे अध्वर्यवः युष्मत्सम्बन्धिनो वर्तन्ते । तान् एतान् सोमान्, अश्विना अश्विनौ, सरस्वती च सुत्रामा च, वृत्रहा इन्द्रश्च देवा जुषन्ताम् । जुषित्वेदं सौम्यं सोमसम्बन्धि मधु पिबन्तु, पीत्वा मदन्तु । एवं दैव्येन होत्रा, अध्वर्युभिश्च यजमानश्च अश्विसरस्वतीन्द्रा व्यन्तु इदं सौम्यं मधु प्राप्नुवन्तु । हे मानुष होतस्त्वमपि, यज याज्यां पठ । [ —अ० २३।५।४ ]

कात्यायन :—"हविषामुत्तरे यथालिङ्गम्" ( अ० १९।६।२४ ) इति । तत्र प्रथमा—

होता यक्षदश्विनौ छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतम्पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः ।

---

१. अयजत् इति शेष इति युक्तम् ।

घस्तान्नूनङ्घासे अज्राणाँय्यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणामग्निष्वात्तानाम्पीवोपवसनानाम् ।
पार्श्वतः श्रोणितश्शितामुत उत्सादतोऽङ्गादङ्गादवत्तानाङ्करत एवाश्विना जुषेताꣳ हविर्होतर्यज ॥ ४६ ॥

होता । यक्षत् । अश्विनौ । छागस्य । हविषः । आत्ताम् । अद्य । मध्यतः । मेदः । उद् । भृतम् । पुरा । द्वेषोभ्यः । पुरा । पौरुषेय्याः । गृभः ॥

घस्ताम् । नूनम् । घासे । अज्राणाम् । यवसप्रथमानाम् । सुमत्क्षराणाम् । शतरुद्रियाणाम् । अग्निष्वात्तानाम् । पीवोपवसनानाम् ॥

पार्श्वतः । श्रोणितः । शितामतः । उत् । सादतः । अङ्गात् । अङ्गात् । अवत्तानाम् । करतः । एव । अश्विना । जुषेताम् । हविः । होतः । यज ॥ ४६ ॥

दैव्यो होता अश्विनौ यक्षत् । तावश्विनौ, अद्य अस्मिन् अहनि यागे वा, हविषो हविरात्मकस्य छागस्य, मध्यतो मध्यप्रदेशाद् उद्भृतम् उद्धृत्य सम्पादितं वपालक्षणं मेदः, आत्ताम् अभक्षताम् । द्वेषोभ्यो यागस्य द्वेष्टृभ्यो रक्षोभ्यः, पुरा पूर्वं रक्षांसि यावन्नोपघ्नन्ति ततः पूर्वम्, तथा पौरुषेय्याः पुरुषसम्बन्धिन्याः, गृभः ग्रहणात् गृप् च, पुरा पूर्वम्, यद्वा पौरुषेय्याः पुरुषार्थाया गृभो गृह्यमाणाया इला सा पूर्वम् इत्यर्थः । घासे अदनविषये, नूनं निश्चयेन, घस्ताम् अश्विनौ भक्षयताम् । किं च अज्राणाम् अदनीयानां क्षेप्याणाम्, यवसप्रथमानां यवसमन्नम्, तन्मुख्यानाम् "एतद्वै परममन्नाद्यं यन्मांसम्" इति श्रुतेः ( श०, का० ११ । प्र ४ । ब्रा० ७। अ० ७। ब्रा० २। क० ३ ) । सुमत्क्षराणां सुमत् स्वयमेव क्षरन्तीति सुमत्क्षराणि तेषाम्, शतरुद्रियाणां बहुस्तुतीनाम्, यद्वा शतं रुद्रा येषाम् अधिष्ठातृभूतास्तेषामित्यर्थः अग्निष्वात्तानाम् अग्निना साधुपाकार्थं प्राप्तानां, पीवोपवसनानाम्, पीवा स्थूलत्वक्, उपवसनम् आच्छादनं येषां तेषाम्, पार्श्वतः पार्श्वभ्यां श्रोणितश्च, शितामतः, वक्षो मेढ्रो वा शितामत्, तस्माच्च । उत्सादतो गुदकन्दाच्च, अङ्गाद् अङ्गात् सर्वस्माद् अन्यस्माद् अङ्गाद् अवत्तानां पश्वङ्गानां यान्यवदानानि सन्ति तानि अश्विनावेव करतः कुरुतां वा । ततो हविर्जुषेताम्, हे मनुष्य होतस्त्वमपि यज । [—अ० २३।५।५ ]

अथ द्वितीया—

होता यक्षत्सरस्वतीम्मेषस्य हविष आवयदद्य मध्यतो मेद उद्भृतम्पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः ।
घसन्नूनङ्घासे अज्राणाँय्यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणामग्निष्वात्तानाम्पीवोपवसनानाम् ।
पार्श्वतः श्रोणितश्शितामुत उत्सादतोऽङ्गादङ्गादवत्तानाङ्करदेवꣳ सरस्वती जुषताꣳ हविर्होतर्यज ॥ ४७ ॥

होता । यक्षत् । सरस्वतीम् । मेषस्य । हविषः । आ । वयत् । अद्य । मध्यतः । मेदः । उद् । भृतम् । पुरा । द्वेषोभ्यः । पुरा । पौरुषेय्याः । गृभः ॥

घसत् । नूनम् । घासे । अज्राणाम् । यवसप्रथमानाम् । सुमत्क्षराणाम् । शतरुद्रियाणाम् । अग्निष्वात्तानाम् । पीवोपवसनानाम् ॥

पार्श्वतः । श्रोणितः । शितामतः । उत् । सादतः । अङ्गात् । अङ्गात् । अवत्तानाम् । करत् । एवम् । सरस्वती । जुषताम् । हविः । होतः । यज ॥ ४७ ॥

दैव्यो होता सरस्वतीं यक्षत् । सा सरस्वती । अद्य अस्मिन् अहनि, हविषो हविरात्मकस्य मेषस्य मध्यतः, उद्भृतं वपालक्षणं मेदः, आवयत् अत्तु । किं च द्वेषोभ्योऽसुररक्षोभ्यः, पुरा पूर्वम्, तथा पौरुषेय्या गृभः पुरुषसम्बन्धिनो ग्रहणात्, पुरा, घासे भक्षणविषये, नूनं निश्चयेन, तन्मेदो घसद् भक्षयतु । अज्राणामित्यादि अङ्गादङ्गादवत्तानामित्यन्तं पूर्ववत् । करत् तेषां पश्वङ्गानां तानि अवदानानि, सरस्वती करोतु । कृत्वा चैवं सरस्वती तद्धविर्जुषतां सेवताम् । हे [1]मनुष्य होतस्त्वमपि यज । [ —अ० २३।५।६ ]

अथ तृतीया—

**होता यक्षदिन्द्रमृषभस्य हविष आवयदद्य मध्यतो मेद उद्भृतम्पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः ।**
**घसन्नूनङ्घासे अज्राणांय्यवसप्रथमानाᳬ सुमत्क्षराणाᳬ शतरुद्रियाणामग्निष्वात्तानाम्पीवोपवसनानाम् ।**
**पार्श्वतः श्रोणितश्शितामत उत्सादतोऽङ्गादङ्गादवत्तानाङ्करदेवमिन्द्रो जुषताᳬ हविर्होतर्यज ॥ ४८ ॥**

होता । यक्षत् । इन्द्रम् । ऋषभस्य । हविषः । आ । वयत् । अद्य । मध्यतः । मेदः । उद् । भृतम् । पुरा । द्वेषोभ्यः । पुरा । पौरुषेय्याः । गृभः ॥
घसत् । नूनम् । घासे । अज्राणाम् । यवसप्रथमानाम् । सुमत्क्षराणाम् । शतरुद्रियाणाम् । अग्निष्वात्तानाम् । पीवोपवसनानाम् ॥
पार्श्वतः । श्रोणितः । शितामतः । उत् । सादतः । अङ्गात् । अङ्गात् । अवत्तानाम् । करत् । एवम् । इन्द्रः । जुषताम् । हविः । होतः । यज ॥ ४८ ॥

अत्र इन्द्रमृषभस्येति विशेषः । अन्यत् पूर्ववत् । [—अ० २३।५।७]

कात्यायनः—"उत्तमौ वनस्पतिस्विष्टकृतोः" इति ( अ० १६।६।२५ ) । तयोः प्रथमः—

**होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाधित ।**
**यत्राश्विनोश्छागस्य हविषः प्रिया धामानि यत्र सरस्वत्या मेषस्य हविषः प्रिया**

---

१. मानुष उ. म्यु.

धामा॑नि॒ यत्रेन्द्र॑स्य ऋष॒भस्य॑ ह॒विषः॑ प्रि॒या धामा॑नि ।
यत्रा॒ग्नेः प्रि॒या धामा॑नि॒ यत्र॒ सोम॑स्य प्रि॒या धामा॑नि॒ यत्रेन्द्र॑स्य सु॒त्राम्णः॑ प्रि॒या धामा॑नि ।
यत्र॑ सवि॒तुः प्रि॒या धामा॑नि॒ यत्र॒ वरु॑णस्य प्रि॒या धामा॑नि॒ यत्र॒ वन॒स्पतेः॑ प्रि॒या पाथा॑ꣳसि ।
यत्र॑ दे॒वाना॑माज्य॒पाना॑म्प्रि॒या धामा॑नि॒ यत्रा॒ग्नेर्होतुः॑ प्रि॒या धामा॑नि ।
तत्रै॒तान्प्र॒स्तुत्ये॑वोप॒स्तुत्ये॑वो॒पाव॑स्रक्ष॒द्रभी॑यस इव कृ॒त्वी कर॑देवन्दे॒वो वन॒स्पति॑र्जु॒ष॒ता॑ꣳ ह॒विर्होत॒र्यज॑ ॥ ४९ ॥

होता । यक्षत् । वनस्पतिम् । अभि । हि । पिष्टतमया । रभिष्टया । रशनया । अधित ॥ यत्र । अश्विनोः । छागस्य । हविषः । प्रिया । धामानि । यत्र । सरस्वत्याः । मेषस्य । हविषः । प्रिया । धामानि । यत्र । इन्द्रस्य । ऋषभस्य । हविषः । प्रिया । धामानि ।
यत्र । अग्नेः । प्रिया । धामानि । यत्र । सोमस्य । प्रिया । धामानि । यत्र । इन्द्रस्य । सुत्राम्णः । प्रिया । धामानि ॥
यत्र । सवितुः । प्रिया । धामानि । यत्र । वरुणस्य । प्रिया । धामानि । यत्र । वनस्पतेः । प्रिया । पाथांसि ॥
यत्र । देवानाम् । आज्यपानाम् । प्रिया । धामानि । यत्र । अग्नेः । होतुः । प्रिया । धामानि ॥
तत्र । एतान् । प्रस्तुत्य । इव । उप । स्तुत्य । इव । उप । अव । स्रक्षत् । रभीयसः । इव । कृत्वी । करत् । एवम् । देवः । वनस्पतिः । जुषताम् । हविः । होतः । यज ॥ ४९ ॥

दैव्यो होता वनस्पतिं यूपदेवं यक्षत् । वनस्पतिर्हि यस्मात् पिष्टतमया सुरूपया श्लक्ष्णया वा, रभिष्ठया शीघ्रवत्तमया रशनया अभ्यधित आत्मानमबध्नात् अभिधारितवान् वा। तस्मात् कारणाद् यत्र यस्मिन् देशे, अश्विनोः सम्बन्धिनश्छागस्य छागरूपहविषः, प्रियाणि धामानि, स्थानानि विद्यन्ते, यत्र सरस्वत्याः सम्बन्धिनो मेषस्य मेषात्मकस्य हविषः, प्रियाणि धामानि, यत्रापि इन्द्रस्य सम्बन्धिनः, ऋषभस्य ऋषभात्मकस्य हविषः, प्रियाणि धामानि, यत्रैव अग्नेः प्रियाणि धामानि, यत्र सोमस्य प्रियाणि धामानि, यत्र सुत्राम्ण इन्द्रस्य पुरोडाशदेवस्य प्रियाणि धामानि, यत्र[1]सवितुः पुरोडाशदेवस्य प्रियाणि धामानि यत्रापि वरुणस्य पुरोडाशदेवस्य प्रियाणि धामानि, "ऐन्द्रमेकादशकपालं निर्वपति सावित्रं द्वादशकपालं वारुणं दशकपालम्" इति श्रुतेः ( तै० सं, का० १। प्र० ८। अनु० २१ )। यत्र वनस्पतेः प्रियाणि पाथांसि अन्नानि विद्यन्ते, यत्रैव आज्यपानां देवानां प्रियाणि धामानि, यत्र यस्मिन् देशे होतुर्होमनिष्पादकस्याग्नेः स्विष्टकृतः प्रियाणि धामानि विद्यन्ते, तत्र तेषु स्थानेषु एतान् छागादीन् पशून् प्रस्तुत्य[2] प्रशस्यति, प्रस्तुत्य सन्निधाने स्तुत्वा उपावस्रक्षत् वनस्पतिरभिरूपं संप्रापयतु। रभीयस इव पशून् रभसभरानिव[3] कृत्वी[4] एवं करत्[5] वनस्पतिरेवमकरोत् । किं च प्रयाजदेवो वनस्पतिर्हविर्जुषतां सेवताम् । हे मानुष होतस्त्वमपि यज । [—अ० २३।५।८]

१. यत्रापि उ. म्यु. २. सन्निधानेव उ. म्यु. ३. रभस्वरभरानिव उ. म्यु.
४. कृत्वा इति शेष इति युक्तम् । ५. सः उ. म्यु.

अथ द्वितीयः—

होता यक्षदग्निꣳ स्विष्टकृतमयाळग्निरश्विनोश्छागस्य हविषः प्रिया धामान्ययाट् सरस्वत्या मेषस्य हविषः प्रिया धामान्ययाळिन्द्रस्य ऋषभस्य हविषः प्रिया धामानि ।
अयाळग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाडिन्द्रस्य सुत्राम्णः प्रिया धामानि ।
अयाट् सवितुः प्रिया धामान्ययाड् वरुणस्य प्रिया धामान्ययाड् वनस्पतेः प्रिया पाथाꣳसि ।
अयाड् देवानामाज्यपानाम्प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि ।
यक्षत् स्वम्महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषताꣳ हविर्होतर्यज ॥ ५० ॥

होता । यक्षत् । अग्निम् । सु । इष्टकृतम् । अयाट् । अग्निः । अश्विनोः । छागस्य । हविषः । प्रिया । धामानि । अयाट् । सरस्वत्याः । मेषस्य । हविषः । प्रिया । धामानि । अयाट् । इन्द्रस्य । ऋषभस्य । हविषः । प्रिया । धामानि ॥
अयाट् । अग्नेः । प्रिया । धामानि । अयाट् । सोमस्य । प्रिया । धामानि । अयाट् । इन्द्रस्य । सुत्राम्णः । प्रिया । धामानि ॥
अयाट् । सवितुः । प्रिया । धामानि । अयाट् । वरुणस्य । प्रिया । धामानि । अयाट् । वनस्पतेः । प्रिया । पाथांसि ॥
अयाट् । देवानाम् । आज्यपानाम् । प्रिया । धामानि । यक्षत् । अग्नेः । होतुः । प्रिया । धामानि ॥
यक्षत् । स्वम् । महिमानम् । आ । यजताम् । एज्याः । इषः । कृणोतु । सः । अध्वरा । जातवेदाः । जुषताम् । हविः । होतः । यज ॥ ५० ॥

दैव्यो होता स्विष्टकृत् , अग्नि यक्षत् अयजत् । अश्विनोः सम्बन्धिनश्छागस्य हविषः प्रियाणि धामानि, अग्निः अयाट् अपूजयत् । तथा सरस्वत्याः सम्बन्धिनो मेषस्य हविषः प्रियाणि धामानि, अयाट् अग्निरपूजयत् । एवम् अयाट् इन्द्रस्य इत्यादि व्याख्येयम् । होतुर्होमनिष्पादकस्य स्विष्टकृतोऽग्नेः, प्रियाणि धामानि, स्विष्टकृदग्निः स्वयमेव यक्षत् अयजत् । किं च स्वं स्वकीयं महिमानं[1] यक्षत् सोऽग्निः अपूजयत् । अपि च एज्या अभियष्टव्याः, इषः अन्नानि अभीष्टदेवता वा, आयजतां सोऽग्निः अभियजतु । किं च जातवेदाः उत्पन्नप्रसिद्धः, स्विष्टकृदग्निः, अध्वरा अध्वरे अस्मिन् यज्ञे, कृणोतु । ता इषः स्विष्टाः करोतु । हविश्च जुषतां सेवताम् । हे मनुष्य होतस्त्वमपि यज । [—अ० २३।५।६]

इति त्रयोविंशेऽध्याये पञ्चमोऽनुवाकः ।

१. यजमानम् उ. म्यु. ।

[ षष्ठोऽनुवाकः ५१-६४ ]

षष्ठेऽनुवाके अनुयाजप्रैषसूक्तवाकप्रैषा आम्नायन्ते। तथा च कात्यायनः—"अनुयाजप्रैषा देवं बर्हिः" इति (अ० १९।७।८)। तत्र प्रथमा—

**दे॒वम्ब॒र्हिस्सर॑स्वती सु॒दे॒वमिन्द्रे॑ अ॒श्विना॑।**
**तेजो॒ न चक्षु॑र॒क्ष्योर्ब॒र्हिषा॑ दधुरिन्द्रि॒यँ व्व॑सु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑॥ ५१॥**

देवम्। बर्हिः। सरस्वती। सु। देवम्। इन्द्रे। अश्विना॥
तेजः। न। चक्षुः। अक्ष्योः। बर्हिषा। दधुः। इन्द्रियम्। वसुवने। वसुधेयस्य। व्यन्तु। यज॥ ५१॥

देवं द्योतमानम्, सुदेवं शोभना देवा यस्य तत्, सर्वदेवप्रियम् इत्यर्थः। बर्हिः, बर्हिःशब्दवाच्यमनुयाजदेवतास्वरूपं सरस्वती, अश्विना अश्विनौ चैते सर्वे देवा इन्द्रे तेजो दधुः। अक्ष्योरिन्द्रस्य चक्षुर्गोलकयोश्चक्षुर्न, नकारः समुच्चयार्थः, चक्षुरिन्द्रियं तेजश्चोभयं दधुरित्यर्थः। किं च बर्हिषा बर्हिर्मुख्येन, इन्द्रियं सामर्थ्यम्, इन्द्रे दधुः। अपि च वसुधेयस्य वसुधारकस्य देवस्य वसुवने वसुदाननिमित्तं व्यन्तु। बर्हिरादयो देवा हविः प्राप्नुवन्तु। हे मानुष होतस्त्वमपि यज। याज्यां पठ।

[—अ० २३।६।१]

अथ द्वितीया—

**दे॒वीर्द्वारो॑ अ॒श्विना॑ भि॒षजेन्द्रे॒ सर॑स्वती।**
**प्रा॒णन्न वी॒र्य॑न्न॒सि द्वारो॑ दधुरिन्द्रि॒यँ व्व॑सु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑॥ ५२॥**

देवीः। द्वारः। अश्विना। भिषजा। इन्द्रे। सरस्वती॥
प्राणम्। न। वीर्यम्। नसि। द्वारः। दधुः। इन्द्रियम्। वसुवने। वसुधेयस्य। व्यन्तु। यज॥ ५२॥

देवीः देव्यः, द्वारो द्वारशब्दवाच्या अनुयाजदेवताः, भिषजा चिकित्सकौ, अश्विना अश्विनौ, सरस्वती च, नासिकायाम्, प्राणं न प्राणाख्यवायुमिव, इन्द्रे वीर्यं दधुः। किं च द्वार इति व्यत्ययः, द्वार्भिर्देवीभिः, इन्द्रियं सामर्थ्यम्, इन्द्रे, अश्विप्रभृतयो देवा दधुः। वसुवने इत्यादि पूर्ववत्।

[—अ० २३।६।२]

अथ तृतीया—

**दे॒वी उ॒षासा॑ अ॒श्विना॑ सु॒त्रामेन्द्रे॒ सर॑स्वती।**
**बल॒न्न वाच॑मा॒स्य॑ उ॒षाभ्या॑न्दधुरिन्द्रि॒यँ व्व॑सु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑॥ ५३॥**

देवी। उषासा। अश्विना। सुत्रामा। इन्द्रे। सरस्वती॥
बलम्। न। वाचम्। आस्ये। उषाभ्याम्। दधुः। इन्द्रियम्। वसुवने। वसुधेयस्य। व्यन्तु। यज॥ ५३॥

देवी द्योतमाने, उषासा उषःशब्दवाच्ये अनुयाजदेवते, अश्विना अश्विनौ च, सुत्रामा च शोभनत्राणवान्, इन्द्रश्च सरस्वती चैता देवताः आस्ये मुखे वाचं न वागिन्द्रियमिव इन्द्रे बलं दधुः। किं चैताः सर्वा देवताः, उषाभ्याम् अनुयाजदेवताभ्याम्, इन्द्रियम्,[१] इन्द्रे दधुः। वसुवन इत्यादि पूर्ववत्। [—अ० २३।६।३]

अथ चतुर्थी—

**देवी जोष्ट्री सरस्वत्यश्विनेन्द्रमवर्द्धयन्।**
**श्रोत्रन्न कर्णयोर्यशो जोष्ट्रीभ्यान्दधुरिन्द्रियँ व्वसुवने वसुधेयस्य व्यन्तु यज ॥५४॥**

देवी। जोष्ट्री। सरस्वती। अश्विना। इन्द्रम्। अवर्द्धयन्॥
श्रोत्रम्। न। कर्णयोः। यशः। जोष्ट्रीभ्याम्। दधुः। इन्द्रियम्। वसुवने। वसुधेयस्य। व्यन्तु। यज॥ ५४॥

देवी देव्यौ द्योतमाने, जोष्ट्री जोष्ट्र्यौ, जोष्ट्रीशब्दवाच्ये अनुयाजदेवते, सरस्वती अश्विनौ चेति एताः सर्वा देवताः, इन्द्रम् अवर्द्धयन् उन्नतिं प्रापयन्। किं चैता देवताः कर्णयोः कर्णशष्कुल्योः, श्रोत्रं न श्रोत्राख्यम् इन्द्रियम् इव, यशो यशःकारणं वीर्यम्, इन्द्रे दधुः। अपि च ता देवता जोष्ट्रीभ्याम् अनुयाजदेवताभ्याम्, इन्द्रियं सामर्थ्यं च, इन्द्रे दधुः। वसुवन इत्यादि समानम्।
[—अ० २३।६।४]

अथ पञ्चमः—

**देवी ऊर्जाहुती दुघे सुदुघेन्द्रे सरस्वत्यश्विना भिषजावतः।**
**शुक्रन्न ज्योतिस्तनयोराहुती धत्त इन्द्रियँ व्वसुवने वसुधेयस्य व्यन्तु यज ॥५५॥**

देवी। ऊर्जाहुती। दुघे। सु। दुघा। इन्द्रे। सरस्वती। अश्विना। भिषजा। अवतः॥
शुक्रम्। न। ज्योतिः। स्तनयोः। आ। हुती। धत्तः। इन्द्रियम्। वसुवने। वसुधेयस्य। व्यन्तु। यज॥ ५५॥

देवी देव्यौ द्योतमाने, दुघे कामानां दोग्ध्र्यौ, ऊर्जाहुतीनां मध्ये ये अनुयाजदेवते, सुदुघा शोभनदोहना सरस्वती च, भिषजा अश्विनौ चेत्येता देवताः, इन्द्रे व्यत्ययः, इन्द्रम्, अवतः व्यत्ययः, पालयन्तु। किं च स्तनयोर्ज्योतिः शुक्रं न, यथा काचित् स्वकीययोः स्तनयोः ज्योतीरूपं शुद्धं पयो दधाति तद्वद् इन्द्रियं सामर्थ्यम्, आहुती ऊर्जाहुतिशब्दवाच्ये देवते, इन्द्रे धत्तः। वसुवने इत्यादि समानम्। [—अ० २३।६।५]

अथ षष्ठः—

**देवा देवानाम्भिषजा होतारा इन्द्रमश्विना वषट्कारैस्सरस्वती त्विषिन्न हृदये मतिम्।**
**होतृभ्यान्दधुरिन्द्रियँ व्वसुवने वसुधेयस्य व्यन्तु यज ॥ ५६ ॥**

देवा। देवानाम्। भिषजा। होतारा। इन्द्रम्। अश्विना। वषट्कारैः। सरस्वती। त्विषिम्। न। हृदये। मतिम्॥
होतृभ्याम्। दधुः। इन्द्रियम्। वसुवने। वसुधेयस्य। व्यन्तु। यज॥ ५६॥

---

१. सामर्थ्यम् इति शेष इति युक्तम्।

होतारा होतृशब्दवाच्यौ, देवा द्योतनात्मकावनुयाजदेवौ, देवानां भिषजा चिकित्सकावश्विनौ च सरस्वती चैताः सर्वा देवताः, वषट्कारैर्वषट्कारदेवैः सहिताः, इन्द्रं दधुरित्यर्थः। किं च हृदये हृदयपुण्डरीके, मतिं नक्तम् इव, त्विषिं दीप्तिम्, इन्द्रे दधुरित्यर्थः। अपि च होतृभ्यां होतृशब्द-वाच्याभ्याम् अनुयाजदेवाभ्याम् इन्द्रियं सामर्थ्यं दधुः, इन्द्रं पोषयामासुः। वसुवने इत्यादि समानम्।
[—अ० २३।६।६]

अथ सप्तमः—

**दे॒वीस्ति॒स्रस्ति॒स्रो दे॒वीर॒श्विनेळा॒ सर॑स्वती ।**
**शूष॒न्न मध्ये॒ नाभ्या॒मिन्द्रा॑य दधुरिन्द्रि॒यँ व्वसु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑ ॥ ५७ ॥**

देवीः। तिस्रः। तिस्रः। देवीः। अश्विना। इडा। सरस्वती॥
शूषम्। न। मध्ये। नाभ्याम्। इन्द्राय। दधुः। इन्द्रियम्। वसुवने। वसुधेयस्य। व्यन्तु। यज॥ ५७॥

देवीः देव्यः द्योतमानाः, इडा, सरस्वती सामर्थ्यप्रकरा ताभ्यां भारती चेति गम्यते। एतास्तिस्रो देवीः देव्यः अनुयाजदेवता अन्योन्यं कदाचिदेव ता देवता अवियुक्ता इति विवक्षया एकस्या[1] देवताया मूर्तित्रयविवक्षया वा पुनस्तिस्र इत्युक्तिः। अश्विना अश्विनावित्येता देवताः, मध्ये शरीरस्य मध्ये मध्यप्रदेशे, नाभ्यां शूषं न बलम् इन्द्राय इन्द्रियं सामर्थ्यं दधुः पोषयाञ्चक्रुः। वसुवने इत्यादि समानम्।
[—अ० २३।६।७]

अथाष्टमः—

**दे॒व इन्द्रो॒ नरा॒शꣳस॑स्त्रिवरू॒थस्सर॑स्वत्या॒श्विभ्या॑मीयते॒ रथः॑ ।**
**रेतो॒ न रू॒पम॒मृतं॑ज्जनि॒त्रमिन्द्रा॑य॒ त्वष्टा॒ दध॑दिन्द्रि॒याणि॑ ।**
**वसु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑ ॥ ५८ ॥**

देवः। इन्द्रः। नराशंसः। त्रिवरूथः। सरस्वत्या। अश्विभ्याम्। ईयते। रथः॥
रेतः। न। रूपम्। अमृतम्। जनित्रम्। इन्द्राय। त्वष्टा। दधत्। इन्द्रियाणि॥
वसुवने। वसुधेयस्य। व्यन्तु। यज॥ ५८॥

देवः द्योतमानः इन्द्रः परमैश्वर्ययुक्तः, नराशꣳसः नराशंसाख्योऽनुयाजदेवः, त्रिवरूथः त्रिगृहः सेनात्रययुक्तो वा, रथः रथयुक्तश्च, सरस्वत्या अश्विभ्यां च सह ईयते कर्मणि व्याप्रियते नीयते वा। किं च अमृतम् अविनाशिरूपम्, जनित्रं प्रजोत्पादकं रेतो न रेतश्च, इन्द्रियाणि च त्वष्टा, त्वक्षतिरत्र करोत्यर्थः। जगतः कर्ता नराशंसाख्यो देवः, इन्द्राय इन्द्रार्थम्, इन्द्रे दधत् सम्पादयतु वा। वसुवने इत्यादि समानम्।
[—अ० २३।६।८]

अथ नवमः—

**दे॒वो दे॒वैर्वन॒स्पति॒र्हिर॑ण्यपर्णो अ॒श्विभ्या॒ꣳ सर॑स्वत्या सुपिप्प॒ल इन्द्रा॑य पच्यते॒ मधु॑ ।**
**ओजो॒ न जू॒तिर्ऋ॑ष॒भो न भामँ॒ व्वन॒स्पति॑र्नो॒ दध॑दिन्द्रि॒याणि॑ वसु॒वने॑ वसु॒धेय॑स्य**
**व्यन्तु॒ यज॑ ॥ ५९ ॥**

१. एकैकस्या उ. म्यु

**देवः । देवैः । वनस्पतिः । हिरण्यपर्णः । अश्विभ्याम् । सरस्वत्या । सु । पिप्पलः । इन्द्राय । पच्यते । मधु ॥**
**ओजः । न । जूतिः । ऋषभः । न । भामम् । वनस्पतिः । न । दधत् । इन्द्रियाणि । वसुवने । वसुधेयस्य । व्यन्तु । यज ॥ ५९ ॥**

देवो द्योतमानः, हिरण्यपर्णः हिरण्यपत्रः, वनस्पतिः वनस्पत्याख्योऽनुयाजदेवः, देवैरिन्द्रादिभिः सहितः सन् अश्विभ्यां सरस्वत्या च, इन्द्राय इन्द्रार्थम्, सुपिप्पलः सुकर्मफलः पच्यते। तादृशो वनस्पतिः, मधु, ओजो न ओजश्च, जूतिः व्यत्ययः जूतिं च, इन्द्रियाणि च, ऋषभो न भामम्, यथा वृषभः प्रतिपक्षे वृषभे क्रोधं धारयति तद्वद् नोऽस्मदर्थम् अस्मासु वा, दधद् धारयतु पोषयतु वा, वसुवने इत्यादि समानम् । [—अ० २३।६।९]

अथ दशमः—

**देवम्बर्हिर्वारितीनामध्वरे स्तीर्णमश्विभ्यामूर्णम्रदास्सरस्वत्या स्योनमिन्द्र ते सदः ।**
**ईशायै मन्युꣳ राजानम्बर्हिषा दधुरिन्द्रियँ व्वसुवने वसुधेयस्य व्यन्तु यज ॥६०॥**

**देवम् । बर्हिः । वारितीनाम् । अध्वरे । स्तीर्णम् । अश्विभ्याम् । उर्णम्रदाः । सरस्वत्या । स्योनम् । इन्द्र । ते । सदः ॥**
**ईशायै । मन्युम् । राजानम् । बर्हिषा । दधुः । इन्द्रियम् । वसुवने । वसुधेयस्य । व्यन्तु । यज ॥६०॥**

देवं द्योतमानं बर्हिः बर्हिःशब्दवाच्यम् अनुयाजदेवतात्मकं वारितीनाम् उदकजातानाम् ओषधीनां सम्बन्धि अध्वरे यागे, अश्विभ्याम् अध्वर्युभ्याम् "अश्विनावध्वर्यू" इति श्रुतेः (श०, का० १२ । प्र० ४ । ब्रा० १ । अ० ८ । ब्रा० २ । क० २२) । सरस्वत्या च स्तीर्णम्, सरस्वत्याः इति पाठे व्यत्ययः । ऊर्णम्रदा ऊर्णावत् मृदु च, अतो हे इन्द्र ते तव स्योनं सुखकरं सदः उपवेशन-स्थानं मनुताम्[1] । तस्मिन् सदसि ईशायै ईशितायै ऐश्वर्याय इत्यर्थः । मन्युं पापकारिणं प्रति क्रोधा-त्मकं राजानं दीप्तिमन्तम् इन्द्रं त्वां दधुः, अश्विप्रभृतयो देवाः स्थापितवन्तः । किं च बर्हिषा बर्हिः-शब्दवाच्यानुयाजदेवतामुखेन देवा इन्द्रियं सामर्थ्यं दधुः इन्द्रे स्थापयामासुः । वसुवने इत्यादि समानम् । [—अ० २३।६।१०]

अथैकादशः—

**देवो अग्निस्स्विष्टकृद्देवान्यक्षद् यथायथꣳ होतारा इन्द्रमश्विना वाचा वाचꣳ सरस्वतीमग्निꣳ सोमꣳ स्विष्टकृत् ।**
**स्विष्ट इन्द्रस्सुत्रामा सविता वरुणो भिषगिष्टो देवो वनस्पतिस्स्विष्टा देवा आज्यपाः । स्विष्टो अग्निरग्निना होता होत्रे स्विष्टकृद् यशो न दधदिन्द्रियमूर्जमपचितिꣳ स्वधाँ व्वसुवने वसुधेयस्य व्यन्तु यज ॥६१॥**

---

१. अनूनम् उ. म्यु.

देवः । अग्निः । सु । इष्टकृत् । देवान् । यक्षत् । यथायथम् । होतारा । इन्द्रम् । अश्विना । वाचा । वाचम् । सरस्वतीम् । अग्निम् । सोमम् । सु । इष्टकृत् ॥

सु । इष्टः । इन्द्रः । सुत्रामा । सविता । वरुणः । भिषक् । इष्टः । देवः । वनस्पतिः । सु । इष्टाः । देवाः । आज्यपाः ।।

सु । इष्टः । अग्निः । अग्निना । होता । होत्रे । सु । इष्टकृत् । यशः । न । दधत् । इन्द्रियम् । ऊर्जम् । अपचितिम् । स्वधाम् । वसुवने । वसुधेयस्य । व्यन्तु । यज ॥ ६१ ॥

देवो द्योतमानः स्विष्टकृच्छब्दवाच्यः अनुयाजदेवतारूपः, अग्निः, देवान् इन्द्रादीन्, यथायथं यो देवो येन प्रकारेण यष्टव्यः तं तथैव, यक्षत् इष्टवान् । कः कम् इष्टवान् इत्याशङ्क्य सामान्येन उक्तम् अर्थं विशेषतो दर्शयति, होतारा होतारौ, अयं च अग्निः, असौ च मध्यमो होता इत्युक्तौ होतृमैत्रावरुणौ वा, इन्द्रं च, अश्विनौ च, वाचं वाग्रूपां सरस्वतीं च, वाचा इन्द्रेण इष्टवान् । तथा स्विष्टकृदाख्योऽग्निः, प्रथमाज्यभागदेवम् अग्निम्, द्वितीयाज्यभागदेवं सोमं च इष्टवान् । तथा सुत्रामा सुष्ठु पालक इन्द्रः, स्विष्टः सुष्ठु पूजितः, तथा सविता स्विष्टः, भिषगात्मकः वरुणोऽपि स्विष्टः । तथा वनस्पतिः वनस्पत्याख्ययूपदेवः इष्टः । तथा आज्यपा आज्यपा देवाः स्विष्टाः, तथा देव्यो होत्राग्निः, अनेन अग्निना स्विष्टः । किं च स्विष्टकृदग्निः, होत्रे होमस्य कर्त्रे यजमानाय, यशो न यशश्च, इन्द्रियं च, ऊर्जं क्षीरादिरूपं रसम्[१], अपचितिं पूजां च स्वधा तृप्तिकरम् अन्नं च दधत् सम्पादयन्तु । वसुवने इत्यादि पूर्ववत् । [—अ० २३।६।११]

कात्यायनः—"अग्निमद्येति सूक्तवाकप्रैष" इति (अ० १९।७।१०) ।

**अ॒ग्निम॒द्य होता॑रमवृणीता॒यँ यज॑मानः॒ पच॒न् पक्तीः॒ पच॑न् पु॒रो॒ळाशा॒न्बध्न॒न्नश्वि-भ्या॒ञ्छाग॒ꣳ सर॑स्वत्यै मे॒षमिन्द्रा॑य ऋ॒ष॒भम् ।**

**सु॒न्वन्न॒श्विभ्या॒ꣳ सर॑स्वत्या॒ इन्द्रा॑य सु॒त्राम्णे॑ सुरा॒सोमा॒न् ॥ ६२ ॥**

अग्निम् । अद्य । होतारम् । अवृणीत । अयम् । यजमानः । पचन् । पक्तीः । पचन् । पुरोडाशान् । बध्नन् । अश्विभ्याम् । छागम् । सरस्वत्यै । मेषम् । इन्द्राय । ऋषभम् ॥

सुन्वन् । अश्विभ्याम् । सरस्वत्या । इन्द्राय । सुत्राम्णे । सुरासोमान् ॥ ६२ ॥

तथा अद्यास्मिन् अहनि कर्मणि वा, अयं प्रसिद्धो यजमानः, अग्निम् अग्निरूपं होतारम्, अवृणीत वरणम् अकार्षीत् । किं कुर्वन् इत्यत आह—पक्तीः पचनीयानीतराणि इन्द्रियाणि, पचन् पक्वानि कुर्वन्, तथा पुरोडाशान् पचन्, एवम् अश्विभ्याम् अश्विनोरर्थे छागम्, यूपे बध्नन्, तथा सरस्वत्यै सरस्वत्यर्थं मेषं यूपे बध्नन्, तथैव इन्द्रार्थम् ऋषभं यूपे, किं च अश्विभ्यां सरस्वत्यै च सुत्राम्णे इन्द्राय च, सुरासोमान् सुरामयान् सोमान् सुन्वन् अभिषवं कुर्वन्, यजमानो होतारम् अवृणीतेति पूर्वेणान्वयः । [—अ० २३।६।१२]

---

१. च उ. म्यु. २. पाठस्तु उ. म्यु. ३. यूपेन उ. म्यु.

सूपस्था अद्य देवो वनस्पतिरभवदश्विभ्याञ्छागेन सरस्वत्यै मेषेणेन्द्राय ऋषभेण। अक्षँस्तान्मेदस्तः प्रति पचताग्रभीषतावीवृधन्त पुरोळाशैरपुरश्विना सरस्वतीन्द्रः सुत्रामा सुरासोमान् ॥ ६३ ॥

सूपस्थाः। अद्य। देवः। वनस्पतिः। अभवत्। अश्विभ्याम्। छागेन। सरस्वत्यै। मेषेण। इन्द्राय। ऋषभेण॥
अक्षन्। तान्। मेदस्तः। प्रति। पचत। अगृभीषत। अवीवृधन्त। पुरोळाशैः। अपुः। अश्विना। सरस्वती। इन्द्रः। सुत्रामा। सुरासोमान्॥ ६३॥

अयं मन्त्रः साधुयज्ञोपस्थानार्थमपि भवति। तदुक्तम् आनन्दबोधाचार्यैः—"सूपस्था अद्येति साधुयज्ञमुपतिष्ठते" इति। अद्य अस्मिन् अहनि यूपदेवो वनस्पतिः, अश्विभ्यां बद्धेन मेषेण, बद्धेन ऋषभेण च, सूपस्थाः शोभनोपस्थानोऽभवत्। तान् छागादीन् पशून्, अक्षन् अश्विप्रभृतयो देवा अभक्षयन्। गृहे पक्तारः मेदस्तो वपामारभ्य हृदयाद्यङ्गानि, प्रति पचत प्रतिपाकं कुरुत। अपि च अगृभीषत तानि पक्वानि इष्ट्वा तानि अवदानानि अश्विप्रभृतयो देवा गृहीतवन्तः। किं च पुरोडाशैः ऐन्द्रसावित्रवारुणैरेकादशकपाल-द्वाशकपाल-दशकपालैः पुरोडाशैः, इन्द्रसवितृवरुणाः, अवीवृधन्त अभिवृद्धिं प्राप्तवन्तः। किं च अश्विना अश्विनौ सरस्वती च, सुत्रामा इन्द्रश्चैते ग्रहदेवाः [1]सुरासोमान्, वर्णलोपश्छान्दसः, अपुः पीतवन्तः। [—अ० २३।६।१३]

त्वामद्य ऋष आर्षेय ऋषीणान्नपादवृणीतायँ यजमानो बहुभ्य आसङ्गतेभ्य एष मे देवेषु वसु वार्या यक्षत इति।
ता या देवा देव दानान्यदुस्तान्यस्मा आ च शास्स्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषस्सूक्तवाकाय सूक्ता ब्रूहि ॥ ६४ ॥

त्वाम्। अद्य। ऋषे। आर्षेय। ऋषीणाम्। नपात्। अवृणीत। अयम्। यजमानः। बहुभ्यः। आ। सम्। गतेभ्यः। एषः। मे। देवेषु। वसु। वारि। आ। यक्षते। इति॥
ता। या। देवाः। देव। दानानि। अदुः। तानि। अस्मै। आ। च। शास्स्व। आ। च। गुरस्व। इषितः। च। होतः। असि। भद्रवाच्याय। प्र। इषितः। मानुषः। सूक्तवाकाय। सूक्ता। ब्रूहि॥ ६४॥

अद्य अस्मिन् अहनि कर्मणि वा, हे ऋषे अतीन्द्रियार्थानां द्रष्टः, हे आर्षेय ऋषिकुलोत्पन्न, ऋषीणां नपात् ऋषीणां मन्त्रद्रष्टॄणाम् अतीन्द्रियार्थदर्शिनां नप्तः, गोत्रप्रवर्तक ऋषिं प्रति चतुर्थ इत्यर्थः। हे देवानां होतः अग्ने, त्वाम् आसङ्गतेभ्यः बहुभ्य आगत्य परस्परं सङ्गतानां बहूनां देवानाम् अथऽयं यजमानः, अवृणीत वरणं कृतवान्। किमर्थमवृणीत इत्यत आह—एष देवानां होता अग्निः, मे मह्यम्, देवेषु वारि वरणीयम्, वसु धनम्, आयक्षते अत्यर्थं दास्यति इत्यनेनाभिप्रायेण आवृणीतेति पूर्वेण सम्बन्धः। किं च हे देव द्योतमानाग्ने, या यानि, दानानि दातव्यानि हवींषि सन्ति, तानि

१. सुरया च सोमान् उ. म्यु.

हवींषि, देवा द्योतमाना ऋत्विजः, अदुः दत्तवन्तः । तानि प्रसिद्धानि हविः फलानि, अस्मै यजमानाय आशास्स्व तत्सिद्धयर्थम् आशिषः कुरु, आगुरस्व च, तत्सिद्धयर्थं प्रयत्नं च कुरु, किं च हे होतः इषितः अभिलषितः, मया भद्रवाच्याय कल्याणवचनाय, प्रेषितो मानुषो मनुष्यसम्बन्धि, होता त्वम्, सूक्तवाकाय सूक्तस्य वाचकं वचनं यस्य देवस्य तस्मै सूक्ता सूक्तानि, "इदं द्यावापृथिवी" इत्यादीनि ब्रूहि कथय । [—अ० २३।६।१४]

इति त्रयोविंशेऽध्याये षष्ठोऽनुवाकः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः ।।

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कणभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये त्रयोविंशोऽध्यायः ।



# अथ चतुर्विंशोऽध्यायः

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

[ प्रथमोऽनुवाकः १–८ ]

उक्ताः सौत्रामण्या मन्त्राः । इत ऊर्ध्वं चतुर्षु अध्यायेषु आश्वमेधिका मन्त्रा आम्नाताः, ते व्याख्यायन्ते । तत्र प्रथमेऽनुवाके अश्वमेधाङ्गस्य अश्वसंस्कारका मन्त्राः । तत्र कात्यायनः—"निष्कं प्रतिमुञ्चन् वाचयति तेजोऽसि" (अ० २०।१।९) इति । सौवर्णं निष्कं रुक्माख्यम् आभरणं यजमानस्य ग्रीवायां बध्नन् "तेजोऽसि" इत्येतद् यजुर्यजमानं वाचयतीति सूत्रार्थः । तत्पाठस्तु—

**तेजोऽसि शुक्रममृतमायुष्पा आयुर्मे पाहि ॥ १ ॥**

**तेजः । असि । शुक्रम् । अमृतम् । आयुष्पाः । आयुः । मे । पाहि ॥ १॥**

हे बध्यमान सौवर्ण निष्क, त्वम् तेजोऽसि, सौरादितेज इव भास्वद् भवसीति । यद्वा सुवर्णस्य तैजसद्रव्यत्वात् त्वं[1] तेजोधातुरेवासि । अत एव शुक्रं निर्मलम् असि । तथा अमृतम् अमरणसाधनम् असि, सुवर्णेन अमृतत्वसाधनयोगादिनिष्पत्तेः । अथवा अत्यन्ताग्निसंयोगेऽपि जतुमधूच्छिष्टादिवद् विनाशाभावात् त्वं मरणरहितमेवासि । यस्मादेवं तस्मात् त्वम् आयुष्पाः आयुषो जीवनस्य पालयिता । अमृतं मे ममायुः आयुष्यम्, पाहि रक्ष । निर्विघ्नं यज्ञं समापयितुं ममायुष्यं देहीति प्रार्थ्यते ।
[—अ० २४।१।१]

कात्यायनः—"देवस्य त्वेति रशनामाददाति" इति ( अ० २०।१।२७ ) । अयमर्थः—द्वादशारत्निस्त्रयोदशारत्निर्वा दर्भमयी अश्वाभिधानी रशना, तां "देवस्य त्वेति" यजुषा "इमामगृभ्णन्" इति ऋचा च, "आददे" इति । तत्र यजुःपाठस्तु—

**देवस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्या॑म्पू॒ष्णो हस्ता॑भ्या॒माद॑दे ॥ २ ॥**

**देवस्य । त्वा । सवितुः । प्र । सवे । अश्विनोः । बाहुभ्याम् । पूष्णः । हस्ताभ्याम् । आ । ददे ॥ २ ॥**

देवस्य देवनशीलस्य, सवितुः सर्वस्य प्रेरकस्य, एतन्नाम्नो देवस्य, प्रसवे प्रेरणे सति, रशने, त्वाम् अश्विसम्बन्धिभ्यां बाहुदण्डाभ्यां पूषसम्बन्धिभ्यां पाणिभ्याम्, आददे स्वीकरोमि ।
[—अ० २४।१।२ ]

ऋचापाठस्तु—

**इ॒माम॑गृभ्णन्रश॒नामृ॒तस्य॒ पूर्व॒ आयु॑षि वि॒दथे॑षु क॒व्या ।**
**सा नो॑ अ॒स्मिन्त्सु॒त आब॑भूव ऋ॒तस्य॒ साम॑न्त्स॒रमा॒ऽऽरप॑न्ती ॥ ३ ॥**

---

१. प्रसिद्ध उ. म्यु,

इमाम् । अगृभ्णन् । रशनाम् । ऋतस्य । पूर्वे । आयुषि । विदथेषु । कव्या ॥
सा । नः । अस्मिन् । सुते । आ । बभूव । ऋतस्य । सामन् । सरम् । आ । रपन्ती ॥ ३ ॥

इमां पूर्वोक्तलक्षणस्य सत्फलस्य यज्ञस्य सत्यस्य वा सम्बन्धिनो रशनाम् अश्वाभिधानीं रज्जुम्, विदथेषु विद्वद्भिर्वेदनीयेषु यज्ञेषु, गवामयनादिषु, पूर्वे पुरातनाः, कव्या कवयः [1]क्रतुदर्शिनः तेषु साधवः कव्याः, "सुपां सुलुक्" (पा० ७।१।३९) इति जसो डादेशः । एवंभूता विश्वसृडङ्गिरः-प्रभृतयो महर्षयः आयुषि आयुरिति अन्ननाम । अश्वावयवलक्षणे देयान्नहविषि उद्भूते सति अगृभ्णन् "हृग्रहोर्भः" ( पा० ३।१।८४ ) इति भत्वम् । येयं रशना इत्थं चिरन्तनऋषिभिः पुरा गृहीता सा तादृशी रशना, नोऽस्माकम्, अस्मिन् सुते सोमयागे अश्वमेधाख्ये, आबभूव आगत्य प्रादुर्भूता, सैव पुनः कीदृशीभिर्विशिष्यते । ऋतस्य यज्ञस्य, सामन् सामनि सामोपलक्षिते अवसाने निमित्तभूते सति, सरं संसरणं शीघ्रानुष्ठानम्, आरपन्ती [2]आलपन्ती कथयन्ती, "रप लप व्यक्तायां वाचि" । अतो या एवं भूता महानुभावा[3] रशना त्वामाददे इति पूर्वेण सम्बन्धः । [—अ० २४।१।३]

कात्यायनः—"अभिधा असीति त्रिधा बध्नात्यश्वं त्रिरूपम्" ( अ० २०।१।२८ ) इति[4] ।

[5]पाठस्तु—

अभिधा असि भुवनमसि यन्तासि धर्ता ।
स त्वमग्निं वैश्वानरꣳ सप्रथसङ्गच्छ स्वाहाकृतस्स्वगा त्वा देवेभ्यः ॥ ४ ॥

अभि । धा । असि । भुवनम् । असि । यन्ता । असि । धर्ता ॥
सः । त्वम् । अग्निम् । वैश्वानरम् । सप्रथसम् । गच्छ । स्वाहाकृतः । स्वगा । त्वा । देवेभ्यः ॥ ४ ॥

हे अश्व त्वं प्रजापतिरसि परमात्मकत्वात् । अभिधा अभिधातव्यो बन्धनार्होऽसि । अभिपूर्वो दधातिर्बन्धनेऽपि वर्तते । तथा भुवनं लोक इव सर्वेषाम् आश्रयो भवसि । यन्ता यमनस्य कर्ता भवसि । उद्वृत्तानां शत्रूणाम्, वशीकरणसाधनत्वात् धर्ता धारयितव्योऽसि । स तादृशस्त्वं वैश्वानरं विश्वनरहितं विश्वनरात्मकं वा, सप्रथसम्, [6]प्रथो विस्तारः तेन सह वर्तते सप्रथसम् भृशम् अग्निं गच्छ रक्षकत्वेन प्राप्नुहि । त्वं स्वाहाकृतः स्वाहाकारेण, देवेभ्यो दातुं संकल्पितः । अतः सोऽग्निः, त्वा त्वाम्, देवेभ्यो देवतार्थं स्वागतम् । स्वयमेव गच्छतीति स्वगः, "अन्येष्वपि दृश्यते" ( पा० ३।२।१०१ ) इति गमेर्डप्रत्ययः, "सुपां सुलुक्" इति ( पा० ७।१।३९ ) द्वितीयाया डादेशः । स्वयमेव गन्तारं करोतु । [—अ० २४।१।४]

प्रजापतये ब्रह्मन्नश्वम्भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासम् ॥ ५ ॥

प्रजापतये । ब्रह्मन् । अश्वम् । भन्त्स्यामि । देवेभ्यः । प्रजापतये । तेन । राध्यासम् ॥ ५ ॥

एतद्बन्धनं ब्रह्माणमामन्त्र्य तदनुज्ञानेन कर्तव्यम् । "ईश्वरो वा एष आर्तिमार्तो यो ब्रह्मणे देवेभ्योऽप्रतिप्रोच्याश्वं बध्नातीति" ( श०, का० १३। प्र० १। ब्रा० २। अ० १। ब्रा० २। क० ४ ) ।

---

१. क्रान्त उ. म्यु. २. जल्पन्ति उ. म्यु.
३. समान्त उ. म्यु. ४. च उ. म्यु.
५. तत् उ. म्यु. ६. प्रथनम् उ. म्यु.

ब्रह्मणोऽनामन्त्रणेन दोषमभिधाय ब्रह्माणमामन्त्रयते इति पुनरुक्तिः। अश्वस्य प्रधानदेवता प्रजापतिरेवेति नान्या। 'बन्ध बन्धने' इत्यस्मात् लृटि स्यप्रत्यये "एकाच उपदेशेऽनुदात्तात्" (पा० ७।२।१०) इति इट्प्रतिषेधे, "एकाचो बश०" ( पा० ८।२।३७ ) इति भष्भावे भन्त्स्यामीति रूपं भवति। एवं भन्त्स्यमानो योऽश्वस्तेन राध्या कर्मफलप्राप्त्या समृद्धो भूयासम्। [—अ० २४।१।५]

कात्यायनः—"तं बधानेति ब्रह्मानुज्ञातः" ( अ० २०।१।२८ ) इति पूर्वेण मन्त्रेण [1]आमन्त्रितो ब्रह्मा "तं बधान" इति मन्त्रेण अनुजानीयात्। पाठस्तु—

**तम्बधान देवेभ्यः प्रजापतये तेन राध्नुहि ॥ ६ ॥**

**तम्। बधान। देवेभ्यः। प्रजापतये। तेन। राध्नुहि ॥ ६ ॥**

तत्र '(त्रि) रूपं सर्वरूपं' च (का० २०।१।२७) इत्यादिना सूत्रकृतोक्तलक्षणम्, अश्वं बधान, तस्य बन्धनं कुरु। देवेभ्यो देवानाम् अर्थाय प्रजापतये प्रजापत्यर्थाय, तेन च बद्धेन अश्वेन त्वं च, राध्नुहि कर्मफलसिद्धिं प्राप्नुहि। "राध साध संसिद्धौ" इति धातुः। [—अ० २४।१।६]

कात्यायनः—"स्थावरा अपो गत्वा प्रजापतये त्वेति प्रोक्षत्यश्वं प्रतिमन्त्रम्"(अ० २०।१।३७)। प्रजापतये त्वेति पञ्चभिर्मन्त्रैः प्रतिमन्त्रम् अश्वं प्रोक्षयेत् इत्यर्थः। तत्पाठस्तु—

**प्रजापतये त्वा जुष्टम्प्रोक्षामीन्द्राग्निभ्यान्त्वा जुष्टम्प्रोक्षामि वायवे त्वा जुष्टम्प्रोक्षामि विश्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामि सर्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामि ॥ ७ ॥**

**प्रजापतये। त्वा। जुष्टम्। प्र। उक्षामि। इन्द्राग्निभ्याम्। त्वा। जुष्टम्। प्र। उक्षामि। वायवे। त्वा। जुष्टम्। प्र। उक्षामि। विश्वेभ्यः। त्वा। देवेभ्यः। जुष्टम्। प्र। उक्षामि। सर्वेभ्यः। त्वा। देवेभ्यः। जुष्टम्। प्र। उक्षामि ॥ ७ ॥**

हे अश्व, त्वा त्वाम्, प्रजापतये प्रजापत्यर्थम्, जुष्टं सेवितुं योग्यम् अभिरुचितं प्रोक्षामि, तथा त्वाम्, इन्द्राग्निभ्याम् इन्द्राग्न्यर्थं जुष्टम् अभिरुचितं प्रोक्षामि। तथा वायवे वायुदेवतार्थं जुष्टम् अभिरुचितं प्रोक्षामि। तथा विश्वेभ्यो देवेभ्यः, विश्वेदेवा नामका देवताः[2] ताः, तेषामर्थम् अभिरुचितं त्वां प्रोक्षामि। किं बहुना सर्वेभ्यो देवेभ्यो निर्विशेषेण सर्वेषां देवानामर्थे अभिरुचितं त्वां प्रोक्षामि। "स प्रोक्षति प्रजापतये त्वा जुष्टं प्रोक्षामि" ( श०, का० १३। प्र० १। ब्रा० २। अ० १। ब्रा० २। क० ५ ) इत्यादिकं ब्राह्मणमनुसन्धेयम्। [—अ० २४।१।७]

कात्यायनः—"आयोगवमाह श्वानं चतुरक्षमभिमन्यस्वेति, पुंश्चलूमेके, सिध्रकमुसलेनैनं[3] हन्ति ( अ० २०।१।३८–४० )। योऽर्वन्तमिति वाचयति, वेतसकटेनाधोऽश्वं प्लावयति परो मर्त्त इति" ( अ० २०।२।१–२ ) इति। अयमर्थः—आयोगवः प्रतिलोमजातिः, तादृशपुरुषम् इत्थं ब्रूयात्—त्वं चतुरक्षं श्वानम् अभि अश्वं जहीति। एके शाखिनस्तु पौंश्चलेयं ब्रूयात् आयोगव इति मन्यन्ते। स च सिध्रकवृक्षनिर्मितेन मुषलेन एवं श्वानं हन्ति [3]हन्यात्। तदानीं 'योऽर्वन्तम्' इति यजमानं वाचयति। हतं च श्वानम् अश्वस्याधस्तात् प्रक्षिप्य तदुपरि प्लावयेत् 'परो मर्त्तं' इति अर्धर्चेनेति। पाठस्तु—

१. अभि उ. म्यु. २. देवगणाः उ. म्यु. ३. जले उ. म्यु.।

यो अर्वन्तञ्जिघांसति तमभ्यमीति वरुणः परो मर्त्तः परः श्वा ॥ ८ ॥

यः । अर्वन्तम् । जिघांसति । तम् । अभि । अमीति । वरुणः । परः । मर्त्तः । परः । श्वा ॥८॥

यः पुरुषः श्वा वा, अर्वन्तम् इमं यागसाधनम् अश्वम्, जिघांसति हन्तुमिच्छति च, वरुणो वा राजा जलाभिमानिदेवता तम् अभ्यमीति अभितः सर्वतः रुग्णं करोति। 'अम रोगे' इति धातुः। स मर्त्तो मनुष्यः परः परस्तात् अस्मात् सकाशात् अन्यत्र भवतु। स च श्वा सारमेयः परस्तात् अन्यत्र वर्तमानोऽस्तु। परशब्दोऽयम् असुप्रत्ययान्तोऽदन्तश्च परस्तादित्यर्थे वर्तते। "परो दिवा पर एना पृथिव्या" इत्यादौ दृष्टत्वात्। [ —अ० २४।१।८ ]

इति प्रथमोऽनुवाकः।

[ द्वितीयोऽनुवाकः ९ ]

कात्यायनः—"अग्निसमीपमानीयाग्नये स्वाहेति त्रिर्जुहोत्यनुवाकेन प्रतिमन्त्रं सहस्रं वावर्तमिति" ( अ० २०।२।३-४ ) इति। एवं प्रोक्षितमश्वम् अग्निसमीपमानीय अग्नये स्वाहेति दशभिर्मन्त्रैः जुहोति। अथवा एतान् मन्त्रान् सहस्रसंख्या यथा भवति तथा शतकृत्वः आवर्त्तयेत्। तत्पाठस्तु—

अग्नये स्वाहा सोमाय स्वाहापाम्मोदाय स्वाहा सवित्रे स्वाहा वायवे स्वाहा विष्णवे स्वाहा।
इन्द्राय स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहा ॥ ९ ॥

अग्नये। स्वाहा। सोमाय। स्वाहा। अपाम्। मोदाय। स्वाहा। सवित्रे। स्वाहा। वायवे। स्वाहा। विष्णवे। स्वाहा॥
इन्द्राय। स्वाहा। बृहस्पतये। स्वाहा। मित्राय। स्वाहा। वरुणाय। स्वाहा॥ ९॥

अग्नये अशनादिगुणयुक्ताय एतन्नामकदेवाय स्वाहा। इदं हविर्वः स्वाहुतमस्तु। सुनोतेः अभिषूयत इति सोमः। अपाम् उदकानां सम्बन्धी सन् मोदयति सर्वजनमिति अपां मोदः। सर्वत्र प्रेरयतीति सविता। वाति सर्वत्र गच्छतीति वायुः। वेवेष्टि व्याप्नोतीति विष्णुः। इन्दति परमैश्वर्ये, ईष्टे इतीन्द्रः। बृहतां पतिर्बृहस्पतिः, मात्रे त्रायते इति मित्रः। वृणोति सर्वपापिजनं स्वपाशजालेनेति वरुणः। अन्यत् पूर्ववत्। "यथा वै हविषो हुतस्य स्कन्देदेवम्" (श०, का० १३। प्र० १। ब्रा० ३। अ० १। ब्रा० ३। क० १) इत्यादि ब्राह्मणमत्रानुसन्धेयम्। [—अ० २४।२।१।]

इति द्वितीयोऽनुवाकः।

[ तृतीयोऽनुवाकः १० ]

कात्यायनः—"दक्षिणाग्नौ जुहोति हिंकाराय स्वाहेति प्रक्रमान्" इति ( अ० २०।३।३)। अयमर्थः—हिंकाराय स्वाहेत्यादिमन्त्रैः अश्वस्य रूपाणि, दक्षिणाग्नौ जुहुयात्। अत एव ब्राह्मणे श्रूयते—

"हिंकाराय स्वाहा हिंकृताय स्वाहा इत्येतानि वा अश्वस्य रूपाणि तान्येवावरुन्धे" (श०, का० १३। प्र० १। ब्रा० ३। अ० १। ब्रा० ३। क० ५) इति।

हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहावक्रन्दाय स्वाहा।
प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा।
निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहा।
आसीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा।
कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृत्ताय स्वाहा।
सꣳहानाय स्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा।
यते स्वाहा धावते स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा।
शूकाराय स्वाहा शूकृताय स्वाहा निषण्णाय स्वाहोत्थिताय स्वाहा।
जवाय स्वाहा बलाय स्वाहा विवर्तमानाय स्वाहा विवृत्ताय स्वाहा।
विधून्वानाय स्वाहा विधूताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते स्वाहा।
ईक्षमाणाय स्वाहेक्षिताय स्वाहा वीक्षिताय स्वाहा निमेषाय स्वाहा।
यदत्ति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मूत्रं करोति तस्मै स्वाहा कुर्वते स्वाहा कृताय स्वाहा ॥ १० ॥

पदच्छेदः स्पष्टः ॥ १० ॥

हिं करोतीति हिंकारः, हिमित्येतद् ह्रेषाशब्दस्यानुकरणम्[१], तत्कुर्वते एतदभिमानिदेवाय, स्वाहा इदं हविः स्वाहुतमस्तु। एवमुत्तरेष्वपि अश्वसम्बन्धिचेष्टितेषु तत्तदभिमानिदेवतापरत्वेन योजनीयम्। अचेतनेष्वपि चेतनेष्विव तदभिमानिदेवतासद्भावात्। अत एवासूत्रयद् भगवान् बादरायणः—"अभिमानिव्यपदेशस्तद्विशेषानुगतिभ्याम्" (ब्र० सू०, अ० २।१।५) इति। हिंकाराय हिंकारं कृतवते। क्रन्दते क्रन्दनं कुर्वते। 'कदि क्रदि क्लदि आह्वाने रोदने च'। अवशं क्रन्दते शब्दायते इति अवक्रन्दः, तस्मै। प्रोथति निष्ठीवनकर्मणि प्रोथते ष्ठीवनं कुर्वते। प्रप्रोथाय प्रकर्षेण प्रोथनवते। गन्धयतीति गन्धस्तस्मै गन्धाय गन्धगुणयुक्ताय, आघ्राताय आघ्राणधर्मयुक्ताय, निविष्टाय नितरां प्रविष्टाय, उपविष्टाय समीपविष्टाय, सन्दिताय सम्यक् दिताय, अवखण्डिताय, 'दो' अवखण्डने इत्यस्य निष्ठायाम् "द्यतिस्यतिमास्थाम्" (पा० ७।४।४०) इतीत्वम्, वल्गते वल्गनं कर्त्तनं कुर्वते, आसीनाय आसनभाजे, शयानाय शयनं कुर्वाणाय, स्वपते स्वपनं कुर्वते, जाग्रते जागरणं कुर्वते, कूजते 'कूज अव्यक्ते शब्दे' अव्यक्तशब्दकारिणे, प्रबुद्धाय स्वव्यापारं ज्ञातवते, विजृम्भमाणाय गात्रविनामं कुर्वाणाय, विचृत्ताय विगतबन्धनाय, संहानाय संभागयुक्ताय, उपस्थिताय जनैः सविभागाय, आयनाय आगममार्गरूपाय, प्रायणाय प्रगमनमार्गयुक्ताय, यते गच्छते, धावते धावनं शीघ्रगमनं कुर्वते, उद्द्रावाय उत्कृष्टद्रवणधर्मयुक्ताय, उद्द्रुताय ऊर्ध्वं द्रुताय उत्प्लुत्य गन्त्रे, शूकाराय शू इति क्षिप्रनाम,

१. अनूच्चारणम् उ. म्यु.

क्षिप्रगमनकारिणे, शूकृताय क्षिप्रगमनं कुर्वते, निषण्णाय स्वस्थानेऽपि स्थिताय, उत्थिताय उत्थानवते, जवाय अश्वसम्बन्धिवेगाय, बलाय स्पष्टम्, विवर्तमानाय विशेषेण वर्तनं कुर्वते[१], विवृत्ताय विविध-मण्डलाकारावर्तनवते, विधून्वानाय 'धूञ् कम्पने' धूननं कुर्वते, विधूताय विधूननावस्थिताय, शुश्रूषमाणाय श्रोतुमिच्छां कुर्वते, शृण्वते श्रवणं कुर्वते, ईक्षमाणाय ईक्षणं कुर्वाणाय, ईक्षिताय ईक्षितं कृतवते, वीक्षिताय विशेषेण ईक्षणं कुर्वते, निमेषाय निमेषधर्मयुक्ताय, अत्ति तृणादिकं भक्षयतीति यत् तस्मै भक्षणधर्मयुक्ताय, इदं हविः स्वाहुतमस्तु। उदकादिकं पिबति यत् तस्मै पानधर्मविशिष्टाय, मूत्रं करोतीति यत् तस्मै मूत्रकरणधर्मयुक्ताय, कुर्वते यं कंचन व्यापारं विदधते, कृताय यं कंचन व्यापारं कृतवते। एतदुक्तं भवति—हिंकारादयः सर्वे अश्वस्य चेष्टाविशेषाः, तदभिमानिदेवाय इदं स्वाहा स्वाहुतमस्तु इति। [—अ० २४।३।१]

इति तृतीयोऽनुवाकः।

[ चतुर्थोऽनुवाकः ११-१७ ]

अथास्मिन् काले सावित्र्यास्तिस्र इष्टयः कर्तव्याः। तासां क्रमेण याज्यानुवाक्याः षडृच आम्नायन्ते। तत्र सवित्रे प्रसवित्रे इत्यस्याः 'तत्सवितुर्हिरण्यपाणिम्' इति ते याज्यानुवाक्ये।

पाठस्तु—

तत्स॑वि॒तुर्वरे॑ण्य॒म्भर्गो॑ दे॒वस्य॑ धीमहि।
धियो॒ यो नः॑ प्रचो॒दया॑त्।
हिर॑ण्यपाणिमू॒तये॑ सवि॒तार॒मुप॑ह्वये।
स चेत्ता॑ दे॒वता॑ प॒दम् ॥११॥

तत्। सवितुः। वरेण्यम्। भर्गः। देवस्य। धीमहि॥
धियः। यः। नः। प्र। चोदयात्॥
हिरण्यपाणिम्। ऊतये। सवितारम्। उप। ह्वये॥
सः। चेत्ता। देवता। पदम्॥ ११॥

यो देवः सविता, नोऽस्माकम्, धियो बुद्धीः, प्रचोदयात् धर्मेषु प्रवर्तयेत्, तस्य सवितुः सर्व-प्रेरकस्य देवस्य, तत् प्रसिद्धं वरेण्यं[२]श्रेयोऽर्थिभिः संभजनीयं भर्गः पापस्य भर्जकं तेजः, धीमहि ध्यायेम इति प्रथमाया अर्थः।

अथ द्वितीयायास्तु हिरण्यपाणिं स्तोतृभ्यो दातुं हिरण्यं पाणौ यस्य स तथोक्तः स्तम्, यद्वा हिरण्मयः पाणिर्यस्य तथाविधं सवितारं देवम्, ऊतये रक्षणाय, उपह्वये आह्वयामि। यस्मात् सविता देवता, देवशब्दात् स्वार्थिकस्तल्प्रत्ययः ( पा० ५।४।२७ )। देवः पदम् उत्कृष्टं ब्रह्मणः पदं स्थानम्, चेत्ता ज्ञाता, 'चिती संज्ञाने' इत्यस्मात् तृनि ( पा० ३।२।११५ ) चेत्तेति शब्दः। अतो "न लोकाव्यय०" (पा० २।३।६९) इति कर्मणि षष्ठीप्रतिषेधः। तस्माद् देवं महानुभावं सवितारम् आह्वयामि। [—अ० २४।४।१]

"सवित्र आसवित्र" इत्यस्या "देवस्य चेततो महीम्" इत्यादिकं याज्यानुवाक्ये।

---

१. कृतवते उ. म्यु. २. वरणीयम् उ. म्यु.

दे॒वस्य॒ चेत॑तो म॒हीम्प्रस॑वि॒तुर्ह॑वामहे ।
सु॒म॒तिꣳ स॒त्यरा॑धसम् ।
सु॒ष्टु॒तिꣳ सु॒मती॒वृधो॑ रा॒तिꣳ स॑वि॒तुरी॑महे ।
प्र दे॒वाय॑ म॒ती॒विदे॑ ॥ १२ ॥

देवस्य । चेततः । महीम् । प्र । सवितुः । हवामहे ॥
सु । मतिम् । सत्यराधसम् ॥
सु । स्तुतिम् । सुमतीवृधः । रातिम् । सवितुः । ईमहे ॥
प्र । देवाय । मतीविदे ॥ १२ ॥

देवस्य देवनादिगुणयुक्तस्य, चेततो विजानतः सर्वम्, यज्ञस्य सवितुः सम्बन्धिनीं महतीं सत्यराधसम्, 'राध' इति धननाम। सत्यम् अवितथं राधो यस्याः सा सत्यराधाः, तादृशीं सुमतिं कल्याणीम् अनुग्रहबुद्धिम्, प्रहवामहे प्रकर्षेण हवामहे। सुमतीवृधः सुमतीं शोभनां बुद्धिं वर्धयतः, तत्सवितुः सुष्टुतिं शोभनां स्तुतिं रातिं तत्कर्तृकं धनदानम्, ईमहे याचामहे। किमर्थम्? मतीविदे मतीं बुद्धिं वेत्तीति मतीवित्, तस्मै देवाय, सवित्रे हविः प्रदातुम्। [—अ० २४।४।२]

अथ तृतीयस्या इष्टेर्याज्यानुवाक्ये आह—

रा॒तिꣳ सत्प॑तिम्म॒हे स॑वि॒तार॒मुप॑ह्वये ।
आ॒स॒वन्दे॒ववी॑तये ।
दे॒वस्य॑ सवि॒तुर्म॒तिमा॑स॒वँ व्विश्वदे॑व्यम् ।
धि॒या भग॑म्मनामहे ॥ १३ ॥

रातिम् । सत्पतिम् । महे । सवितारम् । उप । ह्वये ॥
आसवम् । देववीतये ॥
देवस्य । सवितुः । मतिम् । आसवम् । विश्वदेव्यम् ॥
धिया । भगम् । मनामहे ॥ १३ ॥

'रा' दाने इत्यस्मात् रातिशब्दः, रातिं धनस्य दातारम्, सत्पतिं सतां पालकम्, आसवम् आभिमुख्येन कर्माणि प्रसौतीत्यासवः, तादृशं सवितारम्, देववीतये देवान् तर्पयितुम्, महे महते धनाय उपह्वये उपगम्य आह्वयामि। देवस्य देवनशीलस्य सवितुः, मतिम् अनुग्रहबुद्धिम्, भगं भजनीयं धर्मम्, धिया बुद्ध्या, मनामहे। कीदृशीं मतिम्, आसवं कर्मसु आभिमुख्येन प्रेरयित्रीम्, विश्वदेव्यं सर्वदेवहिताम्। [—अ० २४।४।३]

तथैव आसु एव इष्टिषु प्रथमाज्यभागाः स्विष्टकृदर्थश्चितत्र आग्नेय्या ऋचः।

तत्र प्रथमा—

अ॒ग्निꣳ स्तोमे॑न बोधय समिधा॒नो अम॑र्त्यम् ।
ह॒व्या दे॒वेषु॑ नो दधत् ॥ १४ ॥

अग्निम् । स्तोमेन । बोधय । सम् । इधानः । अमर्त्यम् ॥
हव्या । देवेषु । नः । दधत् ॥ १४ ॥

हे अध्वर्यो, अमर्त्यम् अमरणधर्माणम् इमम् अग्निम्, स्तोमेन स्तुत्या, समिधानः सन्दीपयन्, बोधय अस्मान् ज्ञापय । स च बुद्धोऽग्निः, अस्माकं हव्या हव्यानि च, पुरोडाशानि हवींषि, देवेषु दधत् दधातु स्थापयतु । [—अ० २४।४।४]

अथ द्वितीया—

स हव्यवाळमर्त्य उशिग्दूतश्चनोहितः ।
अग्निर्धिया समृण्वति ॥ १५ ॥

सः । हव्यवाट् । अमर्त्यः । उशिक् । दूतः । चनोहितः ॥
अग्निः । धिया । सम् । ऋण्वति ॥ १५ ॥

हव्यं हविर्वहतीति हव्यवाट्, अमर्त्यो मरणरहितः, उशिक् कान्तः तेजस्वी मेधावी वा । दूतो देवानां दूत्यकर्मणि नियुक्तः, चनोहितः, "चन" इति अन्ननाम, चनसा हविर्लक्षणान्नेन हेतुना हितो यजमानैः स्थापितः । एवं भूतो महानुभावः सोऽग्निः, धिया अस्मदीयया स्तुत्या, समृण्वति संगच्छते । ऋण्वतिर्गतिकर्मा । [—अ० २४।४।५]

अथ तृतीया—

तन्त्वा घृतस्न ईमहे चित्रभानो स्वर्विदम् ।
देवाँ आ वीतये वह ॥ १६ ॥

तम् । त्वा । घृतस्नो । ईमहे । चित्रभानो । स्वर्विदम् ॥
देवान् । आ । वीतये । वह ॥ १६ ॥

हे घृतस्नो 'स्नु' प्रस्रवणे, घृतमस्मै स्नूयते इति घृतस्नुः । अथवा घृतं स्नु स्नवनं यस्य, हे तथाविध चित्रभानो, चित्राः श्लाघनीयाः पूजनीया भानवो दीप्तयो यस्य, हे तादृग्विधाग्ने, स्वर्विदं स्वर्गस्य वेत्तारं लम्भयितारं वा तादृशं त्वाम्, ईमहे याचामहे । किमर्थम् ? अस्मद्यागे हविर्भुजो देवान्, वीतये तर्पणाय, आवह आगमयेति । [—अ० २४।४।६]

अथ चतुर्थी—

अग्निन्दूतम्पुरो दधे हव्यवाहमुप ब्रुवे ।
देवाँ २ आसादयादिह ॥ १७ ॥

अग्निम् । दूतम् । पुरः । दधे । हव्यवाहम् । उप । ब्रुवे ॥
देवान् । आ । सादयात् । इह ॥ १७ ॥

हव्यवाहं हविषां वोढारं दूतम्, अग्निं प्रथमं पुरो दधे पुरस्तात् स्थापयामि, अथ तम् उपब्रुवे उपगम्य ब्रवीमि । किम् इह अस्मिन् यज्ञे, देवान् आसादयात् आगमयेत् इति । [—अ० २४।४।७]

इति चतुर्थोऽनुवाकः ।

[ पञ्चमोऽनुवाकः १८ ]

अथ एतासु एव इष्टिषु यः द्वितीयः सौम्यः आज्यभागस्तदनुवाक्यामाह—

**अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः ।**
**गोजीरया रंहमाणः पुरन्ध्या ॥ १८ ॥**

**अजीजनः । हि । पवमान । सूर्यम् । वि । धारे । शक्मना । पयः ॥**
**गोजीरया । रंहमाणः । पुरन्ध्या ॥ १८ ॥**

हे पवमान दशापवित्रेण शोध्यमान सोम त्वम्, सूर्यं सर्वस्य प्रेरकम् आदित्यम्, स्वर्भानुना ग्रस्तम्, अजीजनः हि यस्मात् जनितवान् प्रदर्शितवान् असि, तस्मात् पय उदकं गणद्रव्यभूतं क्षीरं वा, शक्मना कर्मनाम एतत्कर्मणा, विधारे विधारयसि । किं कुर्वन् गोजीरया गवां जीवनहेतुभूतया, पुरन्ध्या बह्वाधारया, रंहमाणः द्रोणकलशं प्रतिगच्छन्, एवंभूतं पवमानं सोमं त्वां स्तुम इत्यभिप्रायः । [—अ० २४।५।१]

इति पञ्चमोऽनुवाकः ।

[ षष्ठोऽनुवाकः १९–२१ ]

कात्यायनः—"अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतो विभूर्मात्रा" इति ( अ० २०।२।१८ ) ।

**विभूर्मात्रा प्रभूः पित्राश्वोऽसि हयोऽस्यत्योऽसि मयोऽस्यर्वासि**
**सप्तिरसि वाज्यसि वृषासि नृमणा असि ।**
**यजु ( ययु ) र्नामासि शिशुर्नामास्यादित्यानाम्पत्वान्विहि ॥ १९ ॥**

**विभूः । मात्रा । प्रभूः । पित्रा । अश्वः । असि । हयः । असि । अत्यः । असि । मयः । असि । अर्वा । असि । सप्तिः । असि । वाजी । असि । वृषा । असि । नृमणाः । असि ॥ यजुः ( ययुः ) । नाम । असि । शिशुः । नाम । असि । आदित्यानाम् । पत्वा । अनु । इहि ॥ १९ ॥**

मात्रा सर्वजनन्या अनया पृथिव्या, हे अश्व त्वम्, विभूः विभवनशीलोऽसि । तथा पित्रा पालकेन द्यावा, प्रभूः प्रभवनशीलोऽसि । "इयं वै माता असौ पिता" इति ब्राह्मणम् (श०, का० १३ । प्र० १ । ब्रा० ६ । अ० १ । ब्रा० ६ । क० १ ) । हे तुरङ्गम त्वम् अश्वोऽसि । "प्रजापतेरक्ष्यश्वयत्तत् परापतत्ततोऽश्वः समभवद् यदश्वयद्" इत्यादिश्रुतेः ( श०, का० १३ । प्र० २ । ब्रा० ७ । अ० ३ । ब्रा० १ । क० १ ) । त्वम् अश्वसंज्ञकोऽसि, 'हय गतौ' हयति गच्छतीति हयः, एतत्संज्ञोऽसि । 'अत सातत्यगमने' अतति सततं गच्छतीति अत्यः तथाविधोऽसि । मय इति सुखनाम, हे अश्व त्वं मयः सुखसाधनोऽसि । अर्वा गन्ताऽसि । सप्तिः सर्पणशीलोऽसि, वाजी आनन्दगन्ताऽसि, वृषा 'वृष सेचने' सेचने समर्थोऽसि, नृमणा नृषु मनुष्येषु आरोहिषु मनो यस्य तथाविधोऽसि । यजुः याजनशीलोऽसि, शिशुः शिशुवत् पालनीयोऽसि यतस्त्वमेवंप्रभावः अतस्त्वम् आदित्यानां पत्वं पतनं गमनम्, अन्विहि अनुगच्छ । तेनैव तेनैव मार्गेण तत् त्वमपि गच्छेत्यर्थः । [—अ० २४।६।१]

कात्यायनः—"देवा आशापाला इति रक्षिणोऽस्यादिशति" इति ( अ० २०।२।२० )। अस्याश्वस्य रक्षकान् अनेन मन्त्रेण प्रेषयेदित्यर्थः। तत्पाठस्तु—

**देवा आशापाला एतन्देवेभ्योऽश्वम्मेधाय प्रोक्षितꣳ रक्षत ॥ २० ॥**

**देवाः। आशापालाः। एतम्। देवेभ्यः। अश्वम्। मेधाय। प्र। उक्षितम्। रक्षत ॥ २० ॥**

हे आशापालाः आशानां दिशां पालकाः, देवाः देवनशीलाः हे इन्द्रादयः, मेधाय यज्ञाय तदर्थं प्रोक्षितं प्रोक्षणसंस्कारेण शुद्धिमापन्नम् एतम् अश्वम्, देवेभ्यो देवानामर्थे, रक्षत पालयत।

[—अ० २४।६।२]

कात्यायनः—"अस्तमिते चतस्रो धृतीरिह रन्तिरिति" ( अ० २०।३।४ ) इति। सूर्ये अस्तं गते सति विसृष्टाश्वस्य सम्बन्धनाय एतैर्मन्त्रैः धृतिसंज्ञकाश्चतस्र आहुतीर्जुहुयात्। तत्पाठस्तु—

**इह रन्तिरिह रमतामिह धृतिरिह स्वधृतिस्स्वाहा ॥ २१ ॥**

**इह। रन्तिः। इह। रमताम्। इह। धृतिः। इह। स्वधृतिः। स्वाहा ॥ २१ ॥**

अवसानगतः स्वाहाशब्दः पूर्वेषु अपि मन्त्रेषु आसञ्जनीयः। इह अस्मिन् स्थाने रन्तिः रमणम् अश्वस्य अस्तु। स्वाहा इदं हविस्तस्मै स्वाहुतमस्तु। असावश्वः, इह अस्मिन् स्थाने, रमताम् क्रीडने वर्तताम्, तथा धृतिर्धारणम् इह अश्वस्य अस्तु। इह अस्मिन् स्थाने, स्वधृतिः स्वेन आत्मना एव धारणमस्तु।

[—अ० २४।६।३]

इति षष्ठोऽनुवाकः।

## [ सप्तमोऽनुवाकः २२ ]

"काय स्वाहा" इत्यादिका आश्वमेधिका औद्ग्रभणमन्त्राः। तत्पाठस्तु—

**काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा।**
**स्वाहाधिमाधीताय स्वाहा मनः प्रजापतये स्वाहा चित्तँविज्ञाताय।**
**अदित्यै स्वाहादित्यै मह्यै स्वाहादित्यै सुमृळीकायै स्वाहा।**
**सरस्वत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहा।**
**पूष्णे स्वाहा [1]पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा।**
**त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा।**
**विष्णवे स्वाहा विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहा ॥२२॥**

**पदच्छेदः स्पष्टः ॥ २२ ॥**

कः प्रजापतिः तस्मै, इदं हविः स्वाहुतमस्तु, प्रजापतेरनिरुक्तस्वरूपत्वात्। सर्वनाम (शब्दः) 'किम्' शब्दोऽपि प्रजापतिवाचकः। तस्मै अनिर्देश्यरूपाय प्रजापतये, कतमस्मै सर्वेषां देवानां मध्ये कस्मै योऽयं मतिभिर्धार्यमाणस्तस्मै प्रजापतये, इदं हविः स्वाहुतमस्तु। स्वाहाधिमित्यादयस्त्रयो मन्त्राः परस्तात् स्वाहाकाराः। आधिम् आध्यातव्यम्, आधीताय आधिमाध्यातवते। ध्यायतेरिदं हविः स्वाहुतमस्तु। मनः मनसोऽन्तःकरणस्याधिपतये प्रजापतये, इदं हविः स्वाहुतमस्तु। तथा चित्तं

१. अत्रत्यभाष्यमंशतः तालपत्रपुस्तके नास्ति।

चेतव्यम् अर्थम्, विज्ञाताय विज्ञातवते, इदं हविः स्वाहुतमस्तु। अदित्यै दितिः खण्डनं तद्रहितायै अदीनायै वीर्य्यै, देवानाम् इदं हविः स्वाहुतमस्तु। मह्यै महत्यै पूजनीयायै अदित्यै स्वाहुतमस्तु। सुमृळीकायै सुष्ठु शुश्रूषयित्र्यै अदित्यै स्वाहुतमस्तु। सरस्वत्यै वाग्देवतायै स्वाहुतमस्तु। पावकायै पावनभूतायै सरस्वत्यै बृहत्यै परंब्रह्मात्मिकायै सरस्वत्या इदं हविः स्वाहुतमस्तु। [1]पुष्णातीति पूषा, तस्मै पूष्णे स्वाहुतमस्तु। निभूयपाय नीचैर्भूत्वा पातीति निभूयपः, तस्मै निभूयपाय विष्णवे स्वाहुतमस्तु। शिपिविष्टाय शिपयो रश्मयः, तैराविष्टाय विष्णवे स्वाहुतमस्तु। [—अ० २४।७।१]

इति सप्तमोऽनुवाकः

[ अष्टमोऽनुवाकः २२–२४ ]

"विश्वो देवस्य" इत्यनया पूर्णाहुतिं जुहोति। तत्पाठस्तु—

**विश्वो॑ दे॒वस्य॑ ने॒तुर्मर्त्तो॑ वुरीत स॒ख्यम्।**
**विश्वो॑ रा॒य इ॑षुध्यति द्यु॒म्नँव्वृ॑णीत पु॒ष्यसे॒ स्वाहा॑ ॥२३॥**

विश्वः। देवस्य। नेतुः। मर्त्तः। वुरीत। सख्यम् ॥
विश्वः। राये। इषुध्यति। द्युम्नम्। वृणीत। पुष्यसे। स्वाहा ॥ २३ ॥

व्याख्यातेयम्। संग्रहार्थस्तु सर्वो मर्त्यजनः, नेतुः देवस्य सवितुः सखित्वं ससृजे। ततश्च सर्वे जनाः, धनानि वर्धयन्ति ईशते। अयमपि यजमानः, द्युम्नं द्युतिहेतुं धनम्, पोषणाय वृणीत। अतस्तस्मै देवाय सवित्रे, स्वाहा स्वाहुतमस्तु। [—अ० २४।८।१]

कात्यायनः—"आब्रह्मन्निति जपति" इति ( अ० २४।४।११ )। कृष्णाजिनदीक्षां कृत्वा "आब्रह्मन्" इति मन्त्रं यजमानो जपेदित्यर्थः।

**आ ब्रह्म॑न्ब्राह्म॒णो ब्र॑ह्मवर्च॒सी जा॑यता॒मा रा॒ष्ट्रे रा॑ज॒न्यः॑।**
**शूर॑ इष॒व्यो॑ऽतिव्या॒धी म॑हार॒थो जा॑यताम्।**
**दोग्ध्री॑ धे॒नुर्वोढा॑न॒ड्वाना॒शुः सप्तिः॒ पुर॑न्धि॒र्योषा॑।**
**जि॒ष्णू र॑थे॒ष्ठाः स॒भेयो॒ युवा॒स्य यज॑मानस्य वी॒रो जा॑यताम्।**
**नि॒का॒मे नि॑कामे नः प॒र्जन्यो॑ वर्षतु॒ फल॑वत्यो न॒ ओष॑धयः पच्यन्ताम्।**
**यो॒ग॒क्षे॒मो नः॑ कल्पताम् ॥२४॥**

आ। ब्रह्मन्। ब्राह्मणः। ब्रह्मवर्चसी। जायताम्। आ। राष्ट्रे। राजन्यः ॥
शूरः। इषव्यः। अतिव्याधी। महारथः। जायताम् ॥
दोग्ध्री। धेनुः। वोढा। अनड्वान्। आशुः। सप्तिः। पुरन्धिः। योषा ॥

---

१. सायणभाष्यस्यानुपलम्भाद् महीधरभाष्यं योज्यते—पूष्णे प्रपथ्याय प्रगतः पन्थाः प्रपन्थास्तत्र भवः प्रपथ्यस्तस्मै पूष्णे। नरन्धिषाय 'धिष शब्दे' ह्वादिर्वैदिकः। नरं दिधेष्टि शब्दयति उदयेन स नरन्धिषस्तस्मै पूष्णे 'इगुपध०' ( पा० ३।१।१३५ ) इति कः। त्वष्ट्रे त्वक्षति तनूकरोति त्वष्टा तस्मै। तुरीपाय 'तुर वेगे' तस्य रूपम्। तुरी वेगस्तं पाति रक्षति तुरीपस्तस्मै। त्वष्ट्रे पुरुरूपाय, पुरूणि बहूनि रूपाणि यस्य तस्मै त्वष्ट्रे। वेवेष्टि व्याप्नोति विष्णुस्तस्मै ( शु० मा० सं० २२।२० )।

**जिष्णुः । रथेष्ठाः । सभेयः । युवा । अस्य । यजमानस्य । वीरः । जायताम् ॥**
**निकामे । निकामे । नः । पर्जन्यः । वर्षतु । फलवत्यः । नः । ओषधयः । पच्यन्ताम् ॥**
**योगक्षेमः । नः । कल्पताम् ॥ २४ ॥**

ब्रह्मन् ब्रह्मणि ब्राह्मणकुले, ब्रह्मवर्चसी यज्ञाध्ययनादिशीलो ब्रह्मतेजसा युक्तो ब्राह्मणः, आजायताम् आभिमुख्येन उत्पद्यताम् । तथा राष्ट्रे राज्ञा पालनीये भूमण्डले, शूरः शौर्यवान् परान् जेतुं शक्तः, इषव्यः इषुविषये साधुः, स्वभ्यस्तधनुर्वेदः, अतिव्याधी अतिशयेन विध्यति लक्ष्यं भित्त्वा यथा बाणोऽभ्येति तथा विध्यतीति अतिव्याधी, अत एव महारथः, एवं गुणविशिष्टो राजन्यो राजपुत्रः, आजायताम् । धेनुः नवप्रसूता गौः, सा दोग्ध्री बहुलस्य क्षीरस्य प्रदात्री, आजायताम् । अनड्वान् बलीवर्दः, वोढ्ला वोढा अतिशयेन समर्थः, आजायताम् । तथा सप्तिः सर्पणशीलः अश्वः आशुः शीघ्रगामी, आजायताम् । योषा स्त्री पुरन्धिः पुरुधाः पातिव्रत्यादिधर्मबुद्धियुक्ता, आजायताम् । रथेष्ठाः रथस्थः रथारूढो वीरः, जिष्णुः जयनशीलः, आजायताम् । युवा तरुणः, सभेयः सभायां साधुः, एवंभूतः पुत्रः अस्य यजमानस्य, आजायताम् । निकामे नितरां कामः[१] अभिलषितातिशये वृष्टिविषये, नोऽस्माकं जाते सति, पर्जन्यः वर्षतु वृष्टयभिमानी देवः सर्वत्र वृष्टिं करोतु । ततश्च नोऽस्माकम्, ओषधयः व्रीहियवगोधूमाद्या युक्ताः, फलवत्यः फलयुक्ताः, पच्यन्ताम् । एवं सर्वः सम्पूर्णो जायताम् । अतो नोऽस्माकम्, योगक्षेमः, अप्राप्तस्य फलस्य प्राप्तिः योगः, प्राप्तस्य रक्षणं क्षेमः, तदुभयं कल्पतां सम्पद्यताम् । [—अ० २४।८।२]

**इत्यष्टमोऽनुवाकः ।**

**[ नवमोऽनुवाकः २५ ]**

कात्यायनः—"आज्यसक्तुधान्यलाजानामेकैकं जुहोति प्राणाय स्वाहेति प्रतिदैवतं सर्वरात्रमावर्त्तम्" इति ( अ० २०।४।३१ ) । अयमर्थः—अश्वमेधः त्रिरात्रत्वादहीनः, तत्र प्रथममहः अग्निष्टोमः, द्वितीय उक्थ्यः, तृतीयः सर्वस्तोमोऽतिरात्रः । तत्र अग्निष्टोमे अग्निमारुते समाप्ते सति उक्थ्यार्थं वसतीवरीर्गृहीत्वा परिहृत्याज्यादीनां चतुर्णां द्रव्याणाम् एकैकं प्राणाय स्वाहेत्यादिभिश्चतुर्दशकण्डिकास्थितैर्मन्त्रैः प्रतिदैवतं जुहोति । यावत् सा रात्रिः समाप्यते तावदेतद् आवर्त्तयेदिति । तत्र प्रथमकण्डिकामाह—

**प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा ।**
**चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा ॥ २५ ॥**

**प्राणाय । स्वाहा । अपानाय । स्वाहा । व्यानाय । स्वाहा ॥**
**चक्षुषे । स्वाहा । श्रोत्राय । स्वाहा । वाचे । स्वाहा । मनसे । स्वाहा ॥ २५ ॥**

प्राणाय प्राणाभिमानिदेवाय, इदं हविः स्वाहुतमस्तु । अपानाय नासिकाविवरादुद्गतस्य प्राणवायोः पुनरयनम्[२] अपानम् । [३]भुञ्जानरसं त्वगादिसर्वधातुषु नाडीद्वारा विविधं नयतीति व्यानः । चक्षुः रूपज्ञानसाधनमिन्द्रियम् । श्रोत्रं शब्दसाधनमिन्द्रियम् । अभिवदनसाधनं वागिन्द्रियम् । बुद्धिसुखादीनां करणभूतम् आन्तरमिन्द्रियं मनः । सर्वेष्वपि अभिमानिदेवतासद्भावस्य प्रागुक्तत्वात् तदभिमानिदेवाय स्वाहुतमस्तु इति वाक्यार्थः । [—अ० २४।९।१]

**इति नवमोऽनुवाकः ।**

---

१. तस्मिन् इति शेष इति युक्तम् । २. पुनरपनयनमित्येव भवेत् । ३. भुज्यमानरसमिति भवेत् ।

[ दशमोऽनुवाकः २६ ]

एवम् उत्तरास्वपि कण्डिकासु योजनामाह । अथ द्वितीयकण्डिकामाह—

**प्राच्यै॑ दि॒शे स्वाहा॒र्वाच्यै॑ दि॒शे स्वाहा॑ दक्षि॑णायै दि॒शे स्वाहा॒र्वाच्यै॑ दि॒शे स्वाहा॑ । प्र॒तीच्यै॑ दि॒शे स्वाहा॒र्वाच्यै॑ दि॒शे स्वाहोदी॑च्यै दि॒शे स्वाहा॒र्वाच्यै॑ दि॒शे स्वाहा॑ । ऊ॒र्ध्वायै॑ दि॒शे स्वाहा॒र्वाच्यै॑ दि॒शे स्वाहावा॑च्यै दि॒शे स्वाहा॒र्वाच्यै॑ दि॒शे स्वाहा॑ ॥२६॥**

पदच्छेदः स्पष्टः ॥ २६ ॥

प्राच्यै दिशे प्राग्दिगभिमानिन्यै देवतायै स्वाहुतमस्तु । एवं दक्षिणाया इत्यादिष्वपि योज्यम् । सर्वत्र अर्वाच्यै दिशे, आग्नेयाद्याः कोणदिशः । ऊर्ध्वदिशोऽर्वाची दिगधरा अर्वाची उपरिदिशमन्यत् । [—अ० २४।१०।१ ]

इति दशमोऽनुवाकः ।

[ एकादशोऽनुवाकः २७ ]

तृतीयां कण्डिकामाह—

**अ॒द्भ्यस्स्वाहा॑ वा॒र्भ्यस्स्वाहो॑द॒काय॒ स्वाहा॒ तिष्ठ॑न्तीभ्य॒स्स्वाहा॒ स्रव॑न्तीभ्य॒स्स्वाहा॒ स्यन्द॑मानाभ्य॒स्स्वाहा॑ । कूप्या॑भ्य॒स्स्वाहा॒ सूद्या॑भ्य॒स्स्वाहा॒ धार्या॑भ्य॒स्स्वाहा॑र्ण॒वाय॒ स्वाहा॑ समु॒द्राय॒ स्वाहा॑ स॒रि॒राय॒ स्वाहा॑ ॥ २७ ॥**

पदच्छेदः स्पष्टः ॥ २७ ॥

अद्भ्यः प्लावनशीलाभ्यः प्रलयकालेनोद्धृताभ्यः तदभिमानिदेवतायै इदं हविः स्वाहुतमस्तु । एवम् उत्तरेष्वपि योज्यम् । विशेषस्तु वर्ण्यते—प्रलयकाले ऊर्ध्वं वार्यमाणा आपः वारणशब्दवाच्याः । उदकम् उदनशीलम्, वृष्टचाद्यन्वितम्, नीरम्, वृष्टेः ऊर्ध्वं खाततडागादिषु या आपस्तिष्ठन्ति ताः तिष्ठन्त्यः, याश्च नदीरूपेण स्रवन्ति वहन्ति ताः स्रवन्त्यः, याश्च कुल्यादिषु स्यन्दन्ते प्रवहन्ति ताः स्यन्दमानाः, कूपे भवाः कूप्याः, सूदः कदाचिदपि शोषणदुष्टः, इतः कर्दमः, तत्र भवाः सूद्याः, पर्वतादिषु या आपः दुर्गे प्रयत्नेन धार्यन्ते ताः धार्याः, अर्णः उदकम् अस्मिन् इति अर्णवः समुद्रः प्रसिद्धः । सरिरम् सरणशीलम, शीघ्रगतिमज्जलम् । अद्भ्य इत्यादिभिरेतदन्तैर्मन्त्रैः अन्वितशेषा एव परामृष्टाः । अतस्तदपि स्थापनोदकाभिमानिदेवतायै इति पूर्ववद् योजना । [—अ० २४।११।१]

इत्येकादशोऽनुवाकः ।

[ द्वादशोऽनुवाकः २८ ]

चतुर्थी कण्डिकामाह—

**वाता॑य॒ स्वाहा॑ धू॒माय॒ स्वाहा॒भ्राय॒ स्वाहा॑ मे॒घाय॒ स्वाहा॑ वि॒द्योत॑मानाय॒ स्वाहा॑ स्त॒नय॑ते॒ स्वाहा॑ ।**

अवस्फूर्जते स्वाहावर्षते स्वाहावर्वषते स्वाहोग्रँव्वर्षते स्वाहा शीघ्रँव्वर्षते स्वाहो-
द्गृह्णते स्वाहोद्गृहीताय स्वाहा ।
प्रुष्णते स्वाहा शीकायते स्वाहा प्रुष्वाभ्यस्स्वाहा ह्रादुनीभ्यस्स्वाहा नीहाराय
स्वाहा ॥ २८ ॥

पदच्छेदः स्पष्टः ॥ २८ ॥

वाति गच्छतीति वातो वायुः, धूमः प्रसिद्धः, आपो बिभर्त्तीत्यभ्रम्, मेहति सिञ्चतीति मेघः । अत्र पूर्वमुत्तरस्य कारणम् । वाताद् धूम उत्क्षिप्तात् धूमादभ्रं जायते । अभ्राच्च मेघः, ततश्च स मेघो विद्योतते विद्युद्युक्तो भवति । तस्मै विद्योतमानाय, विद्योतानन्तरं स्तनयते गर्जते शब्दकारिणे, अवस्फूर्जते गर्जनानन्तरम् अवस्फूर्जनम् अशनिपतनं कुर्वते, ततो वर्षते वृष्टया सेक्त्रे, अववर्षते अवाङ्मुखं वर्षते । उग्रम् उद्घूर्णजलैरसह्यं यथा भवति तथा वर्षते, शीघ्रं वेगयुक्तं वर्षते । उद्गृह्णाति सकलं भूम्यवस्थितम् इति उद्गृह्णन्, तस्मै, उद्गृहीताय उद्ग्रहणं कृतवते । प्रुष्णते पूरयते, शीकायते शीलकरणं तत्कुर्वते, प्रुष्वाभ्यः 'प्रुष प्लुष स्नेहनसेचनपूरणेषु' स्नेहनपूर्णाः प्रुष्वाः, ह्रादुन्यः प्रसिद्धाः । नीहारो हिमम् । अन्यत् समानं पूर्वेण । [—अ० २४।१२।१[

इति द्वादशोऽनुवाकः ।

## [ त्रयोदशोऽनुवाकः २९ ]

पञ्चमीं कण्डिकामाह—

अग्नये स्वाहा सोमाय स्वाहेन्द्राय स्वाहा पृथिव्यै स्वाहान्तरिक्षाय स्वाहा ।
दिवे स्वाहा दिग्भ्यस्स्वाहाशाभ्यस्स्वाहोर्व्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥२९॥

पदच्छेदः स्पष्टः ॥ २९ ॥

दिग्भ्यः प्राच्यादिमहादिग्भ्यः, आशेरते आसु प्राणिन इति आशा दिशः । उर्वी विस्तीर्णा ऊर्द्ध्वा दिक्, अर्वाची अधस्ताद् वर्तमाना अधरा दिक् । निगदसिद्धमन्यत् । [—अ० २४।१३।१]

इति त्रयोदशोऽनुवाकः ।

## [ चतुर्दशोऽनुवाकः ३०–३१ ]

अथ षष्ठीमाह—

नक्षत्रेभ्यस्स्वाहा नक्षत्रियेभ्यस्स्वाहाहोरात्रेभ्यस्स्वाहार्धमासेभ्यस्स्वाहा ।
मासेभ्यस्स्वाहा ऋतुभ्यस्स्वाहार्त्तवेभ्यस्स्वाहा सँव्वत्सराय स्वाहा द्यावापृथिवीभ्याᳬ
स्वाहा ॥ ३० ॥

पदच्छेदः स्पष्टः ॥ ३० ॥

नक्षन्ति दिवि आप्नुवन्तीति नक्षत्राणि । नक्षत्रमण्डले भवा नक्षत्रियाः । मासानाम् अर्द्धानि अर्द्धमासाः पक्षाः, मासाश्चैत्राद्याः, ऋतवः, सँव्वत्सरा अब्दाः । ऋतुसम्बन्धीनि दिनानि आर्त्तवानि इति । निगदसिद्धमन्यत् । [—अ० २४।१४।१]

अथ सप्तमीं कण्डिकामाह—

चन्द्राय स्वाहा सूर्य्याय स्वाहा रश्मिभ्यस्स्वाहा वसुभ्यस्स्वाहा ।
रुद्रेभ्यस्स्वाहादित्येभ्यस्स्वाहा मरुद्भ्यस्स्वाहा विश्वेभ्यो देवेभ्यस्स्वाहा ॥ ३१ ॥

पदच्छेदः स्पष्टः ॥ ३१ ॥

चन्द्र आह्लादकः चन्द्रमाः, सूर्य्यः सर्वस्य प्रेरकः आदित्यः, रश्मयस्तस्य किरणाः, वसवः अष्टसंख्याका देवाः, एकादश रुद्राः, द्वादशादित्याः, एकोनपञ्चाशत्संख्याः सप्तगणा मरुतः। गतमन्यत् । [—अ० २४।१४।२]

इति चतुर्दशोऽनुवाकः ।

[ पञ्चदशोऽनुवाकः ३२ ]

अथाष्टमीं कण्डिकामाह—

मूलेभ्यस्स्वाहा शाखाभ्यस्स्वाहा वनस्पतिभ्यस्स्वाहा ।
पुष्पेभ्यस्स्वाहा　फलेभ्यस्स्वाहौषधीभ्यस्स्वाहा ॥ ३२ ॥

पदच्छेदः स्पष्टः ॥ ३२ ॥

ओषधीभ्यो वनस्पतीनां यानि मूलानि तदभिमानिदेवेभ्यः स्वाहुतमस्तु । एवमुत्तरेष्वपि मन्त्रेषु योजना । सिद्धमन्यत् । [—अ० २४।१५।१]

इति पञ्चदशोऽनुवाकः ।

[ षोडशोऽनुवाकः ३३ ]

नवमीं कण्डिकामाह—

पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा ।
चन्द्राय स्वाहा नक्षत्रेभ्यस्वाहाद्भ्यस्स्वाहौषधीभ्यस्स्वाहा ।
वनस्पतिभ्यस्स्वाहा परिप्लवेभ्यस्स्वाहा चराचरेभ्यस्स्वाहा सरीसृपेभ्यस्स्वाहा ॥ ३३ ॥

पदच्छेदः स्पष्टः ॥ ३३ ॥

परितः प्लवन्ते संचरन्तीति परिप्लवाः, चरन्तीति चराचराः । चरेर्गत्यर्थात् पचाद्यचि ( पा० ३।१।१३४ ) । "चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्य" इति द्विर्वचनम्, अभ्यासस्य आगागमश्च । पुनः पुनर्भृशं वा सर्पन्तीति सरीसृपाः, स्पष्टमन्यत् । [—अ० २४।१६।१]

इति षोडशोऽनुवाकः ।

[ सप्तदशोऽनुवाकः ३४—३५ ]

दशमीं कण्डिकामाह—

असवे स्वाहा वसवे स्वाहा विभुवे स्वाहा विवस्वते स्वाहा ।
गणश्रिये स्वाहा गणपतये स्वाहाभिभुवे स्वाहाधिपतये स्वाहा ॥ ३४ ॥

पदच्छेदः स्पष्टः ॥ ३४ ॥

अस्यति सर्वमिति असुः प्राणः, तस्मै इदं हविः स्वाहुतमस्तु। आत्मा वसति देहे अनेनेति वसुरपानम्। विभवति व्याप्नोति सर्वं गात्रमिति विभुर्व्यानः, विवस्वते विवसति परिचरणकर्मविपाके सति परिचरतीति विवस्वानुदानः। इत्थं प्राणादिलक्षणं चतुष्टयलक्षणं गणं श्रयतीति गणश्रीः समानः। गणस्य उक्तस्य वायुसङ्घस्य इन्द्रियवर्गस्य पतिः स्वामी आत्मा गणपतिः। अभिभवति सर्वं तेजसा इति अभिभूः अग्निः। सर्वाधिक्येन वर्त्तमानः पतिः अधिपतिः प्रजापतिः। [—अ० २४।१७।१]

एकादशीं कण्डिकामाह—

**शषाय स्वाहा संसर्पाय स्वाहा चन्द्राय स्वाहा ज्योतिषे स्वाहा।**
**मलिम्लुचाय स्वाहा दिवापतयते स्वाहा॥ ३५॥**

पदच्छेदः स्पष्टः॥ ३५॥

शूष इति बलनाम, तद्युक्ताय देवाय स्वाहुतमस्तु। संसर्पाय संसर्पाख्याधिमासाय ज्योतिषे सूर्य्यचन्द्रादिषु सर्वानुस्यूताय तेजसे, मलिम्लुचाय मलमासाख्याय, दिवा अहनि पतयति गच्छतीति दिवापतयत्, तस्मै देवाय। [—अ० २४।१७।२]

इति सप्तदशोऽनुवाकः।

[ अष्टादशोऽनुवाकः ३६ ]

द्वादशीं कण्डिकामाह—

**मधवे स्वाहा माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा।**
**नभसे स्वाहा नभस्याय स्वाहेषाय स्वाहोर्जाय स्वाहा।**
**सहसे स्वाहा सहस्याय स्वाहा तपसे स्वाहा तपस्याय स्वाहांहसस्पतये स्वाहा॥ ३६॥**

पदच्छेदः स्पष्टः॥ ३६॥

मध्वादिशब्दैर्द्वादशभिश्चैत्राद्या दश मासा उच्यन्ते। संसर्पांहसस्पत्याख्यौ द्वावधिमासौ शेषौ। तत्र संसर्पः पूर्वकण्डिकोक्तः, अंहसस्पतिस्तु अत्रेति द्रष्टव्यः। [—अ० २४।१८।१]

इत्यष्टादशोऽनुवाकः।

[ एकोनविंशोऽनुवाकः ३७ ]

त्रयोदशीं कण्डिकामाह—

**वाजाय स्वाहा प्रसवाय स्वाहापिजाय स्वाहा क्रतवे स्वाहा।**
**स्वस्स्वाहा मूर्ध्ने स्वाहा व्यश्नुविने स्वाहा।**
**अन्त्याय स्वाहान्त्यायनाय स्वाहा भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा॥ ३७॥**

पदच्छेदः स्पष्टः॥ ३७॥

वाजः अन्नं बलं वा तस्मै तदभिमानिदेवाय, स्वाहुतमस्तु, एवम् उत्तरत्रापि। प्रसवः प्रेरणम् उत्पत्तिर्वा। अपिजायन्ते जनाः सम्भवन्ति इति अपिजः। क्रतुः संकल्पः यज्ञो वा, स्वः स्वर्गलोकः, विविधम् अश्नुते व्याप्नोतीति व्यश्नुवी, अन्ते भवः अन्त्यः, अन्त्यस्यापत्यम् आन्त्यायनः, भुवनस्यापत्यं भौवनः। तदुक्तं यास्केन—"विश्वकर्मा[1] भौवनः स्वात्मनि सर्वाणि जुहवांचकार" ( नि० अ० १०। खं० २६ ) इति। भुवनस्य लोकस्य पतिः पालयिता, "प्रजापतिर्वा भुवनस्य पतिः" (श०, का० ६। प्र० ३। ब्रा० ३। अ० ४। ब्रा० २। क० १६) इति श्रुत्यन्तरात्।

[—अ० २४।१९।१]

इत्येकोनविंशोऽनुवाकः।

[ विंशोऽनुवाकः ३८ ]

चतुर्दशीं कण्डिकामाह—

आयु॑र्य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑ प्रा॒णो य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑ऽपा॒नो य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑ व्या॒नो य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑।
उ॒दा॒नो य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑ स॒मा॒नो य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑।
चक्षु॑र्य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑।
श्रोत्रं॑ य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑।
वाग्य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा।
मनो॑ य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॒त्मा य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑।
पृ॒ष्ठँ य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑।
ब्र॒ह्म य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑ य॒ज्ञो य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑।
ज्योति॑र्य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॒ स्व॑र्य॒ज्ञेन॑ कल्पता॒ꣳ स्वाहा॑॥ ३८॥

पदच्छेदः स्पष्टः॥ ३८॥

आयुर्जीवनम्, यज्ञेन साधनेन, कल्पतां संपद्यताम्, एवम् उत्तरेष्वपि योजना। प्राणाद्याः पञ्च वायवः प्रसिद्धाः। चक्षुरादीनि इन्द्रियाणि च प्रसिद्धानि। एतेषामधिपतिः आत्मा जीवस्तदनुष्ठानभूतो देहो वा। देहं देहस्य पृष्ठभागः। ब्रह्म ब्राह्मणजातिः। सिद्धमन्यत्। [—अ० २४।२०।१]

इति विंशोऽनुवाकः।

[ एकविंशोऽनुवाकः ३९ ]

कात्यायनः—"व्युष्टचा इति व्युष्टायाꣳ स्वर्गायेत्युदित" इति (अ० २०। सू० ११४-११५)। अयमर्थः—एकस्मै स्वाहेति कण्डिकाम् आदितश्चतुर्भिर्मन्त्रैः अन्नहोमान् रात्रौ हुत्वा उषसि प्रादुर्भूतायां व्युष्टचा इति मन्त्रेण जुहुयात्। उक्थ्योपलक्षितेन सूर्योदये सति स्वर्गायेति जुहुयात्। तथा च

१. "विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवांचकार" इति मुद्रितपुस्तके।

ब्राह्मणम्—"तदाहुर्यदुभे दिवा वा नक्तं वा जुहुयात् । अहोरात्रे मोहयेद् व्युष्टचै स्वाहा इत्यनुदित आदित्ये जुहोति, स्वर्गाय स्वाहेत्युदितेऽहोरात्रयोरव्यतिमोहाय" ( श० का० १३ । प्र० १ । ब्रा० १० । अ० २ । ब्रा० १ । क० ७ ) इति । तत्पाठस्तु—

एकस्मै स्वाहा द्वाभ्याᳬ स्वाहा शताय स्वाहैकशताय स्वाहा ।
व्युष्टचै स्वाहा स्वर्गाय स्वाहा ॥ ३९ ॥

पदच्छेदः स्पष्टः ॥ ३९ ॥

एकस्मै एकत्वसंख्यादिदेवतायै, स्वाहुतमस्तु । एवमुत्तरास्वपि संख्यासु योजना । व्युष्टचै विवासनाकारिण्यै, स्वः दिवि गच्छतीति स्वर्गः आदित्यः तस्मै स्वर्गाय । [—अ० २४।२१।१]

इति चतुर्विंशेऽध्याये एकविंशोऽनुवाकः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः ॥

इति श्रीसायणाचार्यविरचिते माधवीयवेदार्थप्रकाशे काण्वसंहिताभाष्ये चतुर्विंशोऽध्यायः ।



# अथ पञ्चविंशोऽध्यायः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ।।

एवम् अश्वमेधस्य अग्निष्टोमसंस्थे प्रथमेऽहनि नियुक्तानां मन्त्रा व्याख्याताः । अथोक्थसंस्थे मध्यमेऽहनि ये विनियोज्याः इह पञ्चविंशेऽध्याये ते आम्नायन्ते ।

[ प्रथमोऽनुवाकः १–२ ]

कात्यायनः,—"प्रातरुक्थ्यो महिमानौ गृह्णाति सौवर्णेन पूर्वं हिरण्यगर्भ इति, द्वितीयं राजतेन यः प्राणत" ( अ० २०।५।१–२ ) इति । उक्थ्यसंस्थे द्वितीयेऽहनि प्रातःसवने ग्रहकाले सौवर्णेन पात्रेण "हिरण्यगर्भ" इति मन्त्रेण प्रथमं महिमाख्यग्रहं गृह्णाति । "यः प्राणत" इति मन्त्रेण राजतेन पात्रेण द्वितीयं महिमानं ग्रहं गृह्णाति "एष ते योनिः सूर्यस्ते महिमा" ( का० अ० ६।५।२५ ) इति महिमानं सादयति । "एष ते योनिश्चन्द्रमास्ते महिमा" ( का० अ० ६।५।२६ ) इत्युत्तरं सादयति । तत्र प्रथमस्य महिम्नो ग्रहणसाधनमन्त्रान् आह—

हिरण्यगर्भस्समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीन्द्यामतेमाङ्कस्मै देवाय हविषा विधेम ।
उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टङ्गृह्णाम्येष ते योनिस्सूर्य्यस्ते महिमा ॥१॥

हिरण्यगर्भः । सम् । अवर्त्तत । अग्रे । भूतस्य । जातः । पतिः । एकः । आसीत् ।।
सः । दाधार । पृथिवीम् । द्याम् । उत । इमाम् । कस्मै । देवाय । हविषा । वि । धेम ॥
उपयामगृहीतः । असि । प्रजापतये । त्वा । जुष्टम् । गृह्णामि । एषः । ते । योनिः । सूर्यः । ते । महिमा ॥ १ ॥

अग्रे सृष्टयादौ हिरण्यगर्भः हिरण्मयस्य ब्रह्माण्डस्य गर्भभूतः, यद्वा हिरण्मयाण्डो यस्मिन् गर्भभूतः, तादृशो. हिरण्यगर्भाख्यः पुरुषः, प्रथमशरीरं परस्माद् ब्रह्मणः सकाशात्, समवर्त्तत समजायत । स जातो जातमात्रस्य एवंभूतस्य भूतग्रामस्य सर्वस्य प्राणिजातस्य, पतिः अधिपतिः, एकः अद्वितीयः आसीत् । एतादृशो हिरण्यगर्भः पृथिवीं—प्रथनात् पृथिवीति व्युत्पन्ना, तत् पृथिवी-शब्देन अन्तरिक्षमुच्यते । अत एव अन्तरिक्षनामसु च पृथिवी पठिता—विस्तीर्णमन्तरीक्षम्, द्यां दिवं द्युलोकम्, अपि च इमाम् अस्माभिः अनुभूयमानां भूमिम्, दाधार धारितवान्, स्वे स्वे स्थाने स्थापित-वान्, यद्वा स्वात्मनि धृतवान् । एवं भूताय कस्मै 'क' शब्दाभिधेयाय प्रजापतये हिरण्यगर्भाख्याय, हविषा विधेम परिचरेम । तं हिरण्यगर्भाख्यं हविषा पूजयाम इत्यर्थः । विदधातिः परिचरणकर्मा । हे सोम त्वं तस्मै हिरण्यगर्भाय, उपयामगृहीतोऽसि उपेयते धार्यते अनेन सोम इति उपयामः, सौवर्णम् ऊर्द्ध्वपात्रम्, तेन गृहीतः स्वीकृतोऽसि । तथाविधं त्वां प्रजापत्यर्थं जुष्टं सेवितुमर्हम् अभिरुचितं

गृह्णामि। हे ग्रह ते तव, एषः खरप्रदेशः, योनिः कारणं निवेशस्थानम्, अतस्तत्र उपनिषीद। ते तव महिमा माहात्म्यम् एव असौ सूर्यः, तव महिम्ना एव सूर्यात्मना परिणतोऽभूदित्यर्थः। [—अ० २५।१।१]

अश्वादीनां वपाहोमात् पूर्वं "यस्तेऽहन्" इति मन्त्रेण एतं प्रथमं महिमग्रहं जुहोति अध्वर्युः। सर्वहुतेन महिम्ना चरति "यस्तेऽहन् इति जुहोति" (का०, अ० २०।७।१६) इति। तत्पाठस्तु—

**यस्तेऽहन्त्सँम्वत्सरे महिमा सम्बभूव यस्ते वायावन्तरिक्षे महिमा सम्बभूव। यस्ते दिवि सूर्ये महिमा सम्बभूव तस्मै ते महिम्ने प्रजापतये स्वाहा देवेभ्यः ॥२॥**

यः। ते। अहन्। सम्। वत्सरे। महिमा। सम्। बभूव। यः। ते। वायौ। अन्तरिक्षे। महिमा। सम्। बभूव॥

यः। ते। दिवि। सूर्ये। महिमा। सम्। बभूव। तस्मै। ते। महिम्ने। प्रजापतये। स्वाहा। देवेभ्यः॥ २॥

हे ग्रह, ते तव, यो महिमा माहात्म्यम्, अहन् अहनि, संवत्सरे द्वादशमासात्मके काले, सम्बभूव सम्भूतः उत्पन्न आसीत्। यद्वा, अहनि संवत्सरे च निमित्तभूते तत् कारणत्वेन निमित्तमभूत्, तथा वायौ अन्तरीक्षे च तव यो महिमा सम्बभूव, तथा दिवि द्युलोके सूर्ये च तव यो महिमा सम्बभूव, तथाविधाय ते तव महिम्ने, प्रजापतये प्रजापत्यात्मने, अन्येभ्यो देवेभ्यश्च स्वाहा, इदं हविः स्वाहुतमस्तु। [—अ० २५।१।२]

इति पञ्चविंशोऽध्याये प्रथमोऽनुवाकः।

[ द्वितीयोऽनुवाकः ३—४ ]

द्वितीयस्य महिमग्रहस्य ग्रहणसाधनमन्त्रावाह—

**यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम। उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिश्चन्द्रमास्ते महिमा ॥ ३ ॥**

यः। प्राणतः। नि। मिषतः। महित्वा। एकः। इत्। राजा। जगतः। बभूव॥
यः। ईशे। अस्य। द्विपदः। चतुष्पदः। कस्मै। देवाय। हविषा। वि। धेम॥
उपयामगृहीतः। असि। प्रजापतये। त्वा। जुष्टम्। गृह्णामि। एषः। ते। योनिः। चन्द्रमाः। ते। महिमा॥ ३॥

यः प्रजापतिः, महित्वा महित्वेन माहात्म्येन, प्राणतः प्राणनव्यापारं कुर्वतः, निमिषतः निमिषव्यापारं कुर्वतः, जगतः अस्य स्थावरजङ्गमात्मकस्य लोकस्य, एक इत् एक एव, राजा स्वामी बभूव, अपि च यः प्रजापतिः अस्य द्विपदः पादद्वययुक्तस्य मनुष्यादेः, चतुष्पदः पादचतुष्टयोपेतस्य गवादेश्च ईशे ईष्टे। 'ईश ऐश्वर्ये' "लोपस्त आत्मनेपदेषु" ( पा० ७।१।४१ ) इति तलोपः। तथाविधाय

तस्मै 'क' शब्दाभिधेयाय प्रजापतये इत्यादि पूर्ववत्। अयं तु विशेषः हे ग्रह, ते तव महिमा चन्द्रमाः चन्द्ररूपेण परिणतो दृश्यरूपेण परिणत इत्यर्थः। [—अ० २५।२।१]

वपाहोमादूर्ध्वम्, "यस्ते रात्रौ" इति मन्त्रेणैतं द्वितीयमहिमग्रहं जुहोति। तथा च कात्यायनः—"वपान्ते द्वितीयेन पूर्ववत् यस्ते रात्राविति जुहोति" ( अ० २०।७।२६ ) इति। तन्मन्त्रपाठस्तु—

यस्ते॒ रात्रौ॑ सँव्वत्स॒रे म॑हि॒मा स॑म्ब॒भूव॒ यस्ते॑ पृथि॒व्याम॒ग्नौ म॑हि॒मा स॑म्ब॒भूव॑।
यस्ते॒ नक्ष॑त्रेषु च॒न्द्रम॑सि महि॒मा स॑म्ब॒भूव॒ तस्मै॑ ते महि॒म्ने प्र॒जाप॑तये
दे॒वेभ्य॒स्स्वाहा॑ ॥ ४ ॥

यः। ते। रात्रौ। सम्। वत्सरे। महिमा। सम्। बभूव। यः। ते। पृथिव्याम्। अग्नौ। महिमा। सम्। बभूव॥
यः। ते। नक्षत्रेषु। चन्द्रमसि। महिमा। सम्। बभूव। तस्मै। ते। महिम्ने। प्रजापतये। देवेभ्यः। स्वाहा॥ ४॥

हे ग्रह, ते तव, यो महिमा, रात्रौ रजन्याम्, संवत्सरे च निमित्तभूते सम्बभूव समजनिष्ट। यश्च तव महिमा अग्नौ तदधिष्ठानायां पृथिव्यां च सम्बभूव। यः तव महिमा, नक्षत्रेषु ग्रहराशिषु तदधीशे चन्द्रमसि च सम्बभूव, तस्मै तथाविधायेत्यादि गतम्। [—अ० २५।२।२]

इति पञ्चविंशेऽध्याये द्वितीयोऽनुवाकः।

## [ तृतीयोऽनुवाकः ५-१३ ]

अथ[1] प्रधानभूतम् अश्वम् "युञ्जन्ति ब्रध्नम्" इति मन्त्रेण रथे बध्नाति। तथा च सूत्रकारः—"युनक्त्येनं युञ्जन्ति ब्रध्नम्" ( का०, अ० २०।५।११ ) इति। तत्पाठस्तु—

यु॒ञ्जन्ति॑ ब्र॒ध्नम॑रु॒षञ्चर॑न्त॒म्परि॑ त॒स्थुषः॑।
रोच॑न्ते रोच॒ना दि॒वि ॥ ५ ॥

युञ्जन्ति। ब्रध्नम्। अरुषम्। चरन्तम्। परि। तस्थुषः॥
रोचन्ते। रोचना। दिवि॥ ५॥

आदित्यात्मना अश्वः स्तूयते—"असौ वा आदित्यो ब्रध्नः" ( श०, का० १३। प्र० १। ब्रा० १५। अ० २। ब्रा० ६। क० १) इति श्रुतेः। ब्रध्न आदित्यः, आदित्यात्मकम् अरुषम् अरोषणं गमनशीलं वा, परि तस्थुषः परितः स्थितान् इमान् पृथिव्यादीन् लोकान्, चरन्तम् आचरन्तं सञ्चरन्तम्, अध्वर्युप्रमुखा ऋत्विजो रथे बध्नन्ति। तथा आदित्यरूपेण वर्त्तमानस्य अश्वतेजसा, रोचना रोचमानानि नक्षत्राणि, दिवि द्युलोके, रोचन्ते दीप्यन्ते। [—अ० २५।३।१ ]

कात्यायनः—"इतरांश्च युञ्जन्ति" ( अ० २०।५।११ ) इति। मुख्यादश्वात् इतरान् अश्वान् 'युञ्जन्त्यस्य' इत्यनया रथेषु युञ्जन्ति इत्यर्थः। तत्पाठस्तु—

१. एवम् उ. म्यु.

**युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।**
**शोणा धृष्णू नृवाहसा ॥ ६ ॥**

युञ्जन्ति । अस्य । काम्या । हरी । वि । पक्षसा । रथे ॥
शोणा । धृष्णू । नृवाहसा ॥ ६ ॥

अस्य प्रधानभूतस्य अश्वस्य यजमानस्य वा, काम्या काम्यौ कामसम्पादिनौ, विपक्षसा विशिष्टेन पक्षसा युक्तौ शीघ्रं गन्तुं शक्तौ, शोणा शोणौ रक्तवर्णौ, धृष्णू विपक्षधर्षणशीलौ, नृवाहसा नृणां मनुष्याणां वोढारौ, हरी अश्वौ, युञ्जन्ति रथे अस्य अश्वस्य पार्श्वयोः बध्नन्ति ।
[—अ० २५।३।२]

कात्यायनः—"अपो यात्वावगाढेषु वाचयति यद्वात" ( अ० २०।५।१४ ) इति । इत्थं संयुक्ताश्वेन रथेन अपो गत्वा अश्वेषु जलं प्रवेशितेषु "यद्वात" इति मन्त्रं वाचयतीत्यर्थः । तत्पाठस्तु—

**यद् वातो अपो अगनीगन् प्रियामिन्द्रस्य तन्वम् ।**
**एतꣳ स्तोतरनेन पथा पुनरश्वमावर्त्तयासि नः ॥ ७ ॥**

यत् । वातः । अपः । अगनीगन् । प्रियाम् । इन्द्रस्य । तन्वम् ॥
एतम् । स्तोतः । अनेन । पथा । पुनः । अश्वम् । आ । वर्त्तयासि । नः ॥ ७ ॥

वातो वायुवेगः शीघ्रगामी अश्वः, इन्द्रस्य परमैश्वर्ययुक्तस्य विष्णोः शिवस्य, प्रियां तन्वं प्रेमास्पदं शरीरभूता अपः, यत् येन पथा[1] अगनीगन् आगच्छत्, "दाधर्ति—"( पा० ७।४।६५ ) इत्यादौ गनीगन्ति इति गमेर्धातोः निपातितः । ततो हल्ङ्यादिलोपे (पा० ६।१।६८) "मो नो धातोः" ( पा० ८।२।६४ ) इति मकारस्य नत्वम् । हे स्तोतः स्तोत्रसदृशशब्दकरणात् वायुरत्र स्तोता इत्युच्यते । "वायुर्वै स्तोता" ( श०, का० १३ । प्र० १ । ब्रा. १५ । अ० २ । ब्रा० ६ । क. २ ) इति वाक्यशेषात् । हे स्तोतः वायो, एवं नोऽस्माकम्, अनेन पथा मार्गेण, पुनरावर्तयासि, अस्मान् अभिलक्षस्व आगमय ।
[—अ० २५।३।३ ]

कात्यायनः—"आगत्य ( आयाय ) विमुक्तमश्वं महिषी वावाता परिवृक्ताऽऽज्येनाभ्यञ्जन्ति पूर्वकायमध्यापरकायान्यथादेशं वसवस्त्वेति प्रतिमन्त्रम्" ( अ० २०।५।१५ ) इति । अश्वमेधाधिकारिणो राज्ञश्चतस्रो भार्या महिषी वावाता परिवृक्ता पालागल्याख्यास्तत्र महिष्याद्यास्तिस्रो जलाशयादागत्य रथाद् विमुक्तमश्वम् आज्येन अभ्यञ्जन्ति । तत्र च महिषी "वसवस्त्वा" इति मन्त्रेण अश्वस्य पूर्वकायम् अनक्ति । वावाता "रुद्रास्त्वा" इति मन्त्रेण मध्यकायम् अनक्ति । परिवृक्ता "आदित्यास्त्वा" इति मन्त्रेण अपरकायम् अनक्तीति सूत्राभिप्रायः । तन्मन्त्रपाठस्तु—

**वसवस्त्वाञ्जन्तु गायत्रेणच्छन्दसा रुद्रास्त्वाञ्जन्तु त्रैष्टुभेनच्छन्दसा ।**
**आदित्यास्त्वाञ्जन्तु जागतेनच्छन्दसा ।**
**भूर्भुवस्स्वः ॥ ८ ॥**

---

१. पथेन उ. म्यु.

वसवः । त्वा । अञ्जन्तु । गायत्रेण । छन्दसा । रुद्राः । त्वा । अञ्जन्तु । त्रैष्टुभेन । छन्दसा ॥
आदित्याः । त्वा । अञ्जन्तु । जागतेन । छन्दसा ॥
भूः । भुवः । स्वः ॥ ८ ॥

हे अश्व, त्वां वस्वाख्या देवाः, गायत्रेण छन्दसा अष्टाक्षरपादेन गायत्रेण छन्दसा साधनेन, अञ्जन्तु विकृतं[1] कुर्वन्तु । एवम् उत्तरयोरपि मन्त्रयोर्योजना ।

कात्यायनः—"मणीन् सौवर्णान् एकशतमेकशतं केशरपुच्छेष्वावयन्ति भूर्भुवः स्वरिति" इति ( अ० २०।५।१६ ) । ताः पूर्वोक्ता महिष्याद्याः सुवर्णनिर्मितान् मणीन् अश्वस्य केशररोमसु पुच्छरोमसु च प्रत्येकं शतसंख्यान् बध्नीयुः । तत्र भूरित्यनेन महिषी, भुवः इत्यनेन वावाता, स्वरित्यनेन परिवृक्ता । हे अश्व त्वं भूः भूलोकात्मकोऽसि । भुवः अन्तरीक्षलोकात्मकोऽसि । स्वः स्वर्गलोकात्मकोऽसीति तेषामर्थः । [—अ० २५।३।४]

कात्यायनः—"अश्वाय रात्रिहुतशेषं प्रयच्छति लाजीञ्छाचीनिति" ( अ०२०।५।१८ ) इति । आज्यसक्तुलाजाधान्यलाजात्मिकानि रात्रिहोमसाधनभूतानि द्रव्याणि । तत्र यावान् होमादवशिष्यते तं शेषं लाजीनिति मन्त्रेण अश्वाय ददातीति । तत्पाठस्तु—

**लाजीञ्छाचीन्यव्ये गव्ये ।**
**एतदन्नमत्त देवा एतदन्नमद्धि प्रजापते ॥ ९॥**

लाजीन् । छा(शा)चीन् । यव्ये । गव्ये ॥
एतत् । अन्नम् । अत्त । देवाः । एतत् । अन्नम् । अद्धि । प्रजापते ॥ ९ ॥

लाजानां समूहो लाजयस्तान् शिष्टान्, हे अश्व तुभ्यं प्रयच्छामि । शाचीन्, शचीति कर्मनाम, शच्या पेषणकर्मणा निष्पाद्यन्त इति शाचयः सक्तवस्तान् शाचीन् सक्तून्, तुभ्यं प्रयच्छामि । यवानां यवविकाराणां धान्यानां समूहो यव्यम् । गवि भवम् आज्यं गव्यम्, तस्मिन् यव्ये गव्ये च यावत् होमातिरिक्तं तत् सर्वं तुभ्यं प्रयच्छामीति अध्याहारेण योजना । हे देवाः अश्वावयवेषु वर्त्तमाना यूयम् एतत् अस्माभिर्दत्तं हुतशिष्टम् अन्नम्, अत्त भक्षयत । हे प्रजापते अश्वाधिदेवतारूप त्वमपि एतदन्नमद्धि भक्षय । [—अ०२५।३।५]

कात्यायनः—"ब्रह्मा पृच्छति होतारं यूपमभितः कः स्विदेकाकी चरति सूर्य इत्याचष्टे होता ब्रह्माणं का स्विदासीदिति प्रत्याह" (अ० २०।५।२०—२२) इति । यूपस्य दक्षिणतः उपस्थितः ब्रह्मा "कः स्विदेकाकी" इति मन्त्रेण होतारम् उत्तरस्थितं पृच्छेत् । स च होता "सूर्य्य एकाकी" इत्यनया तं प्रतिब्रूयात् । पुनः "का स्विदासीत्" इति ब्रह्माणं पृच्छेत् । "द्यौरासीत्" इति प्रतिब्रूयात् । तत्र प्रथमप्रश्नमन्त्रपाठस्तु—

**कस्स्विदेकाकी चरति क उ स्विज्जायते पुनः ।**
**किश्स्विद्धिमस्य भेषजङ्किम्वावपनम्महत् ॥ १० ॥**

कः । स्वित् । एकाकी । चरति । कः । उ । स्वित् । जायते । पुनः ॥
किम् । स्वित् । हिमस्य । भेषजम् । किम् । वा । आ । वपनम् । महत् ॥ १० ॥

---

१. व्यक्तम् उ. म्यु.

स्विदिति प्रश्ने । कः खलु एकाकी असहायः सन्, चरति गच्छति । केनचिद् हेतुना विनष्टः सन्, क उ स्वित् कः खलु पुनर्जायते । हिमस्य शीतस्य किं स्वित् किं खलु भेषजम् । आ उप्यते अस्मिन् इति आवपनम् । महत् बृहत् आवपनम्, किमु कीदृशम् ? [—अ० २५।३।६]

अस्य प्रश्नस्य प्रतिवचनम् । मन्त्रपाठस्तु—

**सूर्य्य एकाकी चरति चन्द्रमा जायते पुनः ।**
**अग्निर्हिमस्य भेषजम्भूमिरावपनम्महत् ॥ ११ ॥**

पदच्छेदः स्पष्टः ॥ ११ ॥

सूर्य्यः खलु एकाकी असहायः सन्, चरति अन्तरीक्षे संचरति । चन्द्रमाः खलु क्षयात् विनष्टोऽपि पुनर्जायते प्रादुर्भवति । अग्निः खलु हिमस्य शीतस्य, भेषजं निवर्त्तकम् औषधम् । भूमिः पृथिवी, महदावपनम् । अस्यां हि स्थावरजङ्गमात्मकं सर्वं प्राणिजातम् ओप्यते । [—अ०२५।३।७]

द्वितीयप्रश्नमन्त्रपाठस्तु—

**का स्विदासीत् पूर्वचित्तिः किश्स्विदासीद् बृहद्वयः ।**
**का स्विदासीत् पिलिप्पिला कास्विदासीत् पिशङ्गिला ॥ १२ ॥**

का । स्वित् । आसीत् । पूर्वचित्तिः । किम् । स्वित् । आसीत् । बृहत् । वयः ॥
का । स्वित् । आसीत् । पिलिप्पिला । का । स्वित् । आसीत् । पिशङ्गिला ॥ १२ ॥

पूर्वं सर्वैः प्राणिभिः चिन्त्यत इति पूर्वचित्तिः, सा खलु का कीदृशी आसीत् अभूत् । बृहत् प्रवृद्धं वयः जीवनम् आयुष्यं तद्धेतुभूतं किं स्विदासीत्, कीदृशं खलु चिरकालजीवनहेतुः अभवत् इत्यर्थः । पिलिप्पिला, अनुकरणशब्दोऽयम्, एवंरूपशब्दकारिणी का खलु आसीत् । पिश् इति रूपनाम, पिशं सर्वं रूपजातं गिलति निदानात् पिशङ्गिला, कीदृश्यासीत् । [—अ० २५।३।८]

अस्य प्रश्नचतुष्टयस्य यः प्रतिवचनमन्त्रः, तत्पाठस्तु—

**द्यौरासीत् पूर्वचित्तिरश्व आसीद् बृहद् वयः ।**
**अविरासीत् पिलिप्पिला रात्रिरासीत् पिशङ्गिला ॥ १३ ॥**

द्यौः । आसीत् । पूर्वचित्तिः । अश्वः । आसीत् । । बृहत् । वयः ॥
अविः । आसीत् । पिलिप्पिला । रात्रिः । आसीत् । पिशङ्गिला ॥ १३ ॥

"द्यौर्वै वृष्टिः पूर्वचित्तिः" इति श्रुतेः ( श०, का० १३ । प्र० १ । ब्रा० १५ । अ० २ । ब्रा० ६ । क० १४ ) । तत्र द्युशब्देन तत्सम्बन्धिनी वृष्टिर्लक्ष्यते । सा खलु पूर्वचित्तिः आसीत् । यतः सा सर्वैः प्राणिभिः पूर्वं चिन्त्यते । अश्वमेधयागफलस्य चिरकालजीवनस्य साधनभूतोऽश्व एव बृहद् वय आसीत् । अवति रक्षतीति अविः श्रीः, सैव पिलिप्पिला आसीत् । तस्यां हि सत्यां बहुभिः पुत्रपौत्रादिभिर्गवाश्वादिभिश्च संपूर्णं पिलिप्पिलेति शब्दयुक्तं भवति । अतः श्रीरेव पिलिप्पिलेति व्यपदिश्यते । "श्रीर्वै पिलिप्पिला" इति च श्रुतिः । ( श०, का० १३ । प्र० १ । ब्रा० १५ । अ० २ । ब्रा० ६ ।

क० १६ )। पिशङ्गिला सर्वस्य रूपजातस्य पिशं गिलनात् सा हि तमसारूपम् आच्छादयन्ती उद्गिरतीव दृश्यते। [—अ० २५।३।१९]

इति पञ्चविंशेऽध्याये तृतीयोऽनुवाकः।

[ चतुर्थोऽनुवाकः १४–१६ ]

कात्यायनः—"अश्वप्रोक्षणमद्भ्यस्त्वा वायुष्ट्वेति" ( अ० २०।६।७ )। "वायुष्ट्वा" इति मन्त्रेण अश्वस्य प्रोक्षणं कुर्यात्। "अद्भ्यस्त्वा" इति प्राकृतो मन्त्रः, "वायुष्ट्वा" इत्ययम् आश्वमेधिको वैशेषिकः। तत्पाठस्तु—

वायुष्ट्वा पचतैरवत्वसितग्रीवश्छागैः।
न्यग्रोधश्चमसैः शल्मलिर्वृद्ध्या ॥ १४ ॥

वायुः। त्वा। पचतैः। अवतु। असितग्रीवः। छागैः ॥
न्यग्रोधः। चमसैः। शल्मलिः। वृद्ध्या ॥ १४ ॥

हे अश्व, त्वा त्वाम्, शामिताग्नेः प्रेरको वायुः पचतैः अन्नसंयोगनिष्पाद्यैः पाकैः, अवतु रक्षतु। असितग्रीवः असिता कृष्ण[1]लक्षणा ग्रीवा अस्य[2] असित—( कृष्ण ) ग्रीवोऽग्निः[3]। छागैः अश्वावयवभूतैः यावदङ्गैः पशुभिः, त्वां रक्षतु। न्यग्रोहतीति न्यग्रोधो वटवृक्षः। असौ स्वविकारभूतैश्चमसैः सोमरसपात्रैः, त्वामवतु रक्षतु। शल्मलिः वृक्षविशेषः। स च वृद्ध्या स्वकीयोन्नत्या त्वामवतु रक्षतु। [—अ० २५।४।१]

"एष स्य राथ्यः" इत्यादयश्चतस्रो विनियोज्याः। तत्र प्रथमा—

एष स्य राथ्यो वृषा पड्भिश्चतुर्भिरेदगन्।
ब्रह्माकृष्णश्च नोऽवतु नमोऽग्नये ॥ १५ ॥

एषः। स्यः। राथ्यः। वृषा। पड्भिः। चतुर्भिः। आ। इत्। अगन् ॥
ब्रह्मा। अकृष्णः। च। नः। अवतु। नमः। अग्नये ॥ १५ ॥

त्यद् इति शब्दस्य रूपं स्यः। सः एषः, राथ्यः रथसम्बन्धी, वृषा सेचनसमर्थः, एवंभूतोऽश्वः चतुर्भिः पड्भिः पादैः, आ इदगन्, इत् इति अवधारणे, आगत्य एवाभवत्। ब्रह्मा प्रजापतिः, अकृष्णः न विद्यते कृष्णवर्णोऽस्मिन्निति व्युत्पत्त्या अकृष्णः चन्द्रमाः। प्रजापतिश्चन्द्रमाश्च, नोऽस्माकम्, आगतम् इमम् अश्वम्, अवतु रक्षतु। अग्नये देवाय नमोऽस्तु। सोऽपि रक्षतु इति भावः। [—अ० २५।४।२]

अथ द्वितीया—

सꣳशितो रश्मिना रथः सꣳशितो रश्मिना हयः।
सꣳशितो अप्स्वप्सुजा ब्रह्मा सोमपुरोगवः ॥ १६ ॥

१. कृष्णोपलक्षिता उ. म्यु. २. यस्य उ. म्यु. ३. अश्वः उ. म्यु.।

सम् । शितः । रश्मिना । रथः । सम् । शितः । रश्मिना । हयः ॥
सम् । शितः । अप्सु । अप्सुजाः । ब्रह्मा । सोमपुरोगवः ॥ १६ ॥

अयं रथः, रश्मिना अश्वस्य सम्बन्धनयोग्यया रज्ज्वा बन्धनेन, संशितः संस्कृतः, हयः अश्वः, रश्मिना प्रग्रहेण, रथे बन्धनात्, संशितः संस्कृतः । अप्सु जायते इति अप्सुजा अश्वः, "अप्सुयोनिर्वा अश्वः" इति श्रुतेः (श०, का० १३ । प्र० २ । ब्रा० १ । अ० २ । ब्रा० ७ । क० १०) । तादृशोऽश्वः, अप्सु स्वकारणभूतासु स्नानार्थमानीतः, स्नानेन संशितः संस्कृतः, ब्रह्माख्य ऋत्विक्, सोमपुरोगवः सोमः पुरतो गन्ता यस्य तादृशोऽभवत् । अनेनाश्वस्य संज्ञपनकालः समजनीति प्रतिपादनं भवति । औपवसथ्येऽहनि खलु अग्नीषोमप्रणयने ब्रह्मणः पुरस्तात् सोमस्य गमनम् । तस्मादौपवसथ्यमहर्गतम् । अद्य सौत्यमहः । तस्मादिदानीमश्वस्यालम्भाय संस्कारः सम्पन्न इत्यर्थः । [—अ० २५।४।३]

अथ तृतीया—

**स्वयँ॑व्वाजिँस्त॒न्व॑ङ्कल्पयस्व॒ स्वयँ॑य्यजस्व॒ स्व॒यञ्जु॑षस्व ।**
**म॒हि॒मा ते॒ऽन्येन॒ न स॒न्नशे॑ ॥ १७ ॥**

स्वयम् । वाजिन् । तन्वम् । कल्पयस्व । स्वयम् । यजस्व । स्वयम् । जुषस्व ॥
महिमा । ते । अन्येन । न । सम् । नशे ॥ १७ ॥

हे वाजिन् हे अन्नवन्नश्व, तन्वं शरीरम्, कल्पयस्व क्लृप्तं समर्थं योग्यं कुरु । कृत्वा च अनन्तरम्, स्वयमेव, यजस्व सा(स्वा)वयवैः देवान् पूजय । न च अल्पाभिज्ञस्तव यष्टा सम्भवतीत्यर्थः, यस्मादेवं तस्मात् स्वयमेव, जुषस्व यागनिर्वर्त्तकहवीरूपं सेवस्व । ते तव, महिमा माहात्म्यम्, अन्येन त्वद्व्यतिरिक्तेन केनचिदपि, न संनशे न संप्राप्यते । नशतिः व्याप्नोतिकर्मा । सर्वथा तव महिमा अत्यन्तप्रवृद्धात्मा[१], त्वं न परिच्छेदार्ह इत्यर्थः । [—अ० २५।४।४]

अथ चतुर्थी—

**न वा उ॑ ए॒तन्म्रि॑यसे॒ न रि॑ष्यसि दे॒वाँ इदे॑षि प॒थिभिः॑ सु॒गेभिः॑ ।**
**यत्रास॑ते सु॒कृतो॒ यत्र॒ ते य॒युस्तत्र॑ त्वा दे॒वः स॑वि॒ता द॑धातु ॥ १८ ॥**

न । वै । उ । एतत् । म्रियसे । न । रिष्यसि । देवान् । इत् । एषि । पथिभिः । सुगेभिः ॥
यत्र । आसते । सुकृतः । यत्र । ते । ययुः । तत्र । त्वा । देवः । सविता । दधातु ॥ १८ ॥

एष त्वया मरणान्न भेतव्यमिति अश्वम् उपच्छन्दयति तत् । एतर्हि एतस्मिन् समये हे अश्व, त्वं नैव खलु म्रियसे मरणं प्राप्नोषि । उ इति पादपूरणम् । ननु संज्ञपनाद् अश्वः प्रत्यक्षं म्रियते, कथम् अमरताप्रतिपादनमिति, अत्राह—न रिष्यसीति, 'रिष' हिंसायाम् कृतसंज्ञपनोऽपि नैव हिंसां प्राप्नोषि, अपि तु देवान् इत् देवान् एव प्रति, सुगेभिः साधुगमनैः, पथिभिर्मार्गैर्देवयानैरपि गच्छसि । अपि च सुकृतः शोभनं कर्म कृतवन्तो महर्षयः यत्र यस्मिन् कर्मफलभूते उत्कृष्टे स्थाने आसते निवसन्ति, ते सत्यपाः यत्र यत् स्थानं ययुः प्रापुस्तत्र तस्मिन् स्थाने स्वर्गादिलोके, देवः द्योतनशीलः सविता, हे अश्व, त्वा दधातु स्थापयतु ।[१] [—अ० २५।४।५]

---

१. प्रवृद्धत्वात् उ. म्यु. ।

१. प्रापयतु उ. म्यु. ।

कात्यायनः—"उपगृह्णात्यपां पेरुरग्निः पशुरिति" इति ( अ० २०।६।८ )। अप उपगृह्य आभ्यां मन्त्राभ्याम् अश्वं प्रापयेदित्यर्थः। तत्र "अपां पेरुः" इति ( अ० ६। क० १० ) प्राकृतो मन्त्रः, 'अग्निः पशुरि'त्याश्वमेधिकः। तत्पाठस्तु—

अ॒ग्निः प॒शुरा॑सी॒त्तेना॑यजन्त॒ स ए॒तँल्लो॒कम॑जय॒द्यस्मि॑न्न॒ग्निः स ते॑ लो॒को भ॑विष्यति॒ तं जे॑ष्यसि॒ पिबै॒ता अ॒पः।
वा॒युः प॒शुरा॑सी॒त्तेना॑यजन्त॒ स ए॒तँल्लो॒कम॑जय॒द्यस्मि॑न्वा॒युः स ते॑ लो॒को भ॑विष्यति॒ तं जे॑ष्यसि॒ पिबै॒ता अ॒पः।
सूर्यः॑ प॒शुरा॑सी॒त्तेना॑यजन्त॒ स ए॒तँल्लो॒कम॑जय॒द्यस्मि॑न्त्सू॒र्यः॒ स ते॑ लो॒को भ॑विष्यति॒ तं जे॑ष्यसि॒ पिबै॒ता अ॒पः॥ १९॥

अग्निः। पशुः। आसीत्। तेन। अयजन्त। सः। एतम्। लोकम्। अजयत्। यस्मिन्। अग्निः। सः। ते। लोकः। भविष्यति। तम्। जेष्यसि। पिब। एताः। अपः॥
वायुः। पशुः। आसीत्। तेन। अयजन्त। सः। एतम्। लोकम्। अजयत्। यस्मिन्। वायुः। सः। ते। लोकः। भविष्यति। तम्। जेष्यसि। पिब। एताः। अपः॥
सूर्यः। पशुः। आसीत्। तेन। अयजन्त। सः। एतम्। लोकम्। अजयत्। यस्मिन्। सूर्यः। सः। ते। लोकः। भविष्यति। तम्। जेष्यसि। पिब। एताः। अपः॥ १९॥

यतो यस्मिन् लोके अयमग्निः वर्त्तते, हे अश्व ते तव यागनिर्वर्त्तकस्य स एव लोको भविष्यति। तं च भूलोकं जेष्यसि स्वाधीनं करिष्यसि। अग्निर्यथा अधिदेवतारूपेण पृथिवीम् अधिष्ठाय तान्(म्) जितवान् तथैव त्वमपि भविष्यसीति यावत्। अतोऽतिशयितस्य फलस्य विद्यमानत्वात् मरणान् मा भैषीः, एता अस्माभिरानीताः प्रोक्षणीस्था अपः पिब, पीत्वा च यथासुखम् उक्तं फलं प्राप्नुहि। "यावानग्नेर्विजयो यावाँल्लोको यावदैश्वर्यं तावाꣳस्ते विजयस्तावाँल्लोकस्तावदैश्वर्यं भविष्यतीत्येवैनं तदाह" (श०, का० १३। प्र० २। ब्रा० १। अ० २। ब्रा० ७। क० १३) इत्यादि ब्राह्मणमत्रानुसन्धेयम्। एवमेव वायुः पशुरासीदित्येतावपि पर्यायौ योजनीयौ। एतावांस्तु विशेषः, यस्मिन् अन्तरीक्षलोके अधिदेवतारूपेण वायुः वर्त्तते, यस्मिन् स्वर्गलोके अधिदेवतारूपेण सूर्यो वर्तते इति।

[—अ० २५।४।६ ]

इति पञ्चविंशेऽध्याये चतुर्थोऽनुवाकः।

[ पञ्चमोऽनुवाकः २०–२५ ]

कात्यायनः—"हुत्वा प्राणाय स्वाहेति तिस्रः" ( अ० २०।६। ११ ) इति। अश्वे संज्ञप्यमाने प्राणाय स्वाहेत्याद्यास्तिस्र आहुतीर्जुहुयात्। तत्पाठस्तु—

प्रा॒णाय॒ स्वाहा॑पा॒नाय॒ स्वाहा॑ व्या॒नाय॒ स्वाहा॑॥ २०॥

पदच्छेदः स्पष्टः॥ २०॥

स्पष्टोऽर्थः। [—अ० २५।५।१]

कात्यायनः—"वाचयति पत्नीर्नयन्नमस्तेऽम्ब" ( अ० २०।६।१२ ) इति । "अम्बे अम्बिकेऽम्बालिके" इत्येतामृचं महिष्याद्याः पत्नीरानयन् वाचयेदित्यर्थः । पाठस्तु—

**अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन ।**
**ससस्त्यश्वकस्सुभद्रिकाङ्काम्पीलवासिनीम् ॥ २१ ॥**

**अम्बे । अम्बिके । अम्बालिके । न । मा । नयति । कः । चन ॥**
**ससस्ति । अश्वकः । सुभद्रिकाम् । काम्पीलवासिनीम् ॥ २१ ॥**

महिष्याद्याः पत्न्यः परस्परमामन्त्रयन्ते । अम्बे इत्यादीनि सम्बुद्ध्यन्तानि मातृशब्दसमानार्थानि, अत्र मातृवत् परस्परमनुकूलासु महिष्यादिषु वर्त्तन्ते । हे अम्बे महिषि, हे अम्बिके वावाते, हे अम्बालिके परिवृक्ते, मा मां कश्चन कोऽपि पुमान् अश्वं न नयति मिथुनकर्म कर्तुं न प्रापयति । ननु मा भूदन्यः कश्चित् प्रापकः, अश्वः स्वयमेव कामुको विट इवागमिष्यतीति तत्राह—ससस्तीति । अयमश्वकः कुत्सितः कौटिल्ययुक्तोऽश्वः, काम्पीलवासिनीं काम्पीलनगरे निवसन्तीं तत्रोद्भवां सुभद्रिकां [1]कुमारीमन्यां तरुणीं परिगृह्य परिरभ्य ससस्ति शेते । 'सस स्वप्ने' इति धातुः । अतः स्वयमेव रिरंसया अस्मान् आगमिष्यतीति आशाया दुर्लभत्वात् केनचित् प्रापकेण भवितव्यम्, स च नास्तीति पत्न्यः परस्परमामन्त्र्य संवादं कृतवत्य इत्यर्थः । [—अ० २५।५।२]

कात्यायनः—"अश्वं त्रिस्त्रिः परियन्ति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति" इति ( अ० २०।६।१३ ) । अश्वसमीपमानीतास्ताः पत्न्यः गणानामित्यादिभिस्त्रिभिर्मन्त्रैः पितृकर्मणीव अप्रादक्षिण्येन प्रत्येकं त्रिः परिगमनं कुर्युः । पाठस्तु—

**गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे वसो मम ॥ २२ ॥**

**पदच्छेदः स्पष्टः ॥ २२ ॥**

गणानां परिजनसमूहानां मध्ये गणपतिर्यः प्रशस्तः, पत्न्याख्यो गणस्तस्य पतिं स्वामिनम्, यद्वा सेवकानां मध्ये ये अश्वारोहक्षमास्ते, पालकं त्वाम् अश्वम् पत्न्यो वयं हवामहे मिथुनीभावाय आह्वयामः । तथा प्रियाणां प्रीतिविषयाणां कदलीफलसेवादीनां मध्ये ये अतिशयेन प्रियाः तेषां पतिं त्वाम् अश्वं हवामहे । तथा निधीनां निधिपतिम् अतिशयितसुखनिधानस्य पालकम्, हे मम वसो धनभूत हे अश्व त्वाम् आह्वयामहे । अतः सर्वगुणसम्पन्नस्त्वम्, अस्माभिः सह रन्तुं शीघ्रमागच्छ इति भावः । [—अ० २५।५।३]

कात्यायनः—"महिष्यश्वमुपसंविशत्याहमजानि" ( अ० २०।६।१४ ) इति । तत्पाठस्तु—

**आहमजानि गर्भधमा त्वमजासि गर्भधम् ।**
**ता उभौ चतुरः पदस्सम्प्रसारयाव ॥ २३ ॥**

**आ । अहम् । अजानि । गर्भधम् । आ । त्वम् । अजासि । गर्भधम् ॥**
**तौ । उभौ । चतुरः । पदः । सम् । प्र । सारयाव ॥ २३ ॥**

---

१. सुकुमारीम् उ. म्यु. ।

अहं स्त्री गर्भधं गर्भं धारयित्रीं योनिम्, आजानि आकृष्य विक्षिपामि, हे अश्व त्वमपि गर्भधं गर्भधारणकारणं पुंव्यञ्जनम्, आजासि आकृष्य मदीये गर्भधे विक्षिप। 'अज गतिक्षेपणयोः' इति धातुः, इत्येवं कृतसंकेतौ यौ आवाम् तौ उभौ त्वं च अहं च, चतुरः पदस्तव सम्बन्धिनः पादान् संप्रसारयावः सम्यक् प्रसारणं कुर्वः। लोके हि संवेशनकामा स्त्री पुंसः पादान् प्रसार्य खलु संविशति, तदनुकरणाय इत्यभिप्रायः। [—अ० २५।५।४]

कात्यायनः—"अधीवासेन प्रच्छादयति स्वर्गे लोक इति" (अ० २०।६।१५) इति। अधिवासो बहुमूल्यः कम्बलविशेषः, तेन महिषीम् अश्वं च "स्वर्गे लोक" इति मन्त्रेण प्रच्छादयेत्। तत्पाठस्तु—

**स्वर्गे लोके प्रोर्णुवाथाम् ॥ २४ ॥**

**स्वर्गे। लोके। प्र। ऊर्णुवाथाम् ॥ २४ ॥**

स्वर्गे स्वर्गसदृशे अस्मिन् संज्ञपनस्थाने, हे महिष्यश्वौ युवां प्रोर्णुवाथाम्। 'ऊर्णुञ् आच्छादने'। प्रोर्णनम् आच्छादनम्। अनेन अधिवासेन कुरुतम् इत्यर्थः। [—अ० २५।५।५]

कात्यायनः—"अश्वशिश्नमुपस्थे कुरुते वृषा वाजीति" ( अ० २०।६।१६ ) इति। अनेन मन्त्रेण अश्वस्य प्रजननं पत्नी स्वयोनौ प्रवेशयतीत्यर्थः। तत्पाठस्तु—

**वृषा वाजी रेतोधा रेतो दधातु ॥ २५ ॥**

**पदच्छेदः स्पष्टः ॥ २५ ॥**

वृषा सेचनसमर्थः, वाजी वाजोऽन्नम्, विशिष्टान्नवान्, अत एव रेतोधाः, रेतसो वीर्यस्य धाःप्रधाता, शुक्रबाहुल्यवान् इत्यर्थः। एवं भूतोऽश्वः रेतो वीर्यं दधातु मद्योनौ स्थापयतु। [ —अ० २५।५।६ ]

**इति पञ्चविंशेऽध्याये पञ्चमोऽनुवाकः।**

**[ षष्ठोऽनुवाकः २६-३७ ]**

कात्यायनः—"उत्सक्थ्या इत्यश्वं यजमानोऽभिमन्त्रयत" (अ० २०।६।१७) इति। तत्पाठस्तु—

**उत्सक्थ्या अव गुदं धेहि समञ्जिं चारया वृषन्।**
**यः स्त्रीणां जीवभोजनः ॥ २६ ॥**

**उत्। सक्थ्या। अव। गुदम्। धेहि। सम्। अञ्जिम्। चारय। वृषन् ॥**
**यः। स्त्रीणाम्। जीवभोजनः ॥ २६ ॥**

उच्छ्रिते विक्षिप्ते सक्थिनी उरुमूलप्रदेशौ यस्याः सा उत्सक्थिः, तादृश्या महिष्या, अवगुदम् अवाचीनं गुदं रेतो धेहि योनौ स्थापय सिञ्चेत्यर्थः। तदर्थं हे वृषन् सेचनसमर्थाश्व समञ्जि सम्यक् पुंस्त्वं व्यनक्तीति समञ्जिः मेढ्रम्, तं समञ्जि चारय योन्याम् अन्तर्बहिश्च संचारय, मिथुनकर्म निर्वर्त्तय इत्यर्थः। स्त्रीणां युवतीनाम्, जीवभोजनः जीवस्य भोगहेतुः सुखहेतुः, तम् ईदृशं[1] समञ्जिमिति सम्बन्धः। [ —अ० २५।६।१ ]

---

१. तादृशम् ज. म्यु.।

कात्यायनः—"अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते, यकासकाविति दशर्चस्य द्वाभ्याम्" ( अ० २०।६।१८ ) इति। यकासकाविति दशर्चस्य सूक्तस्य आदितः क्रमेण द्वाभ्यां द्वाभ्याम् अध्वर्य्वादयः पञ्च कुमारीभिः पत्नीभिश्च सह संवादं कुर्युः। तत्राध्वर्युसंवादे प्रथमा—

**य॒का॑ऽस॒कौ श॑कुन्ति॒का ह॒लगि॑ति॒ वञ्च॑ति।**
**आह॑न्ति ग॒भे प॒सो निग॑ल्गलीति॒ धार॑का॥ २७॥**

यका। असकौ। शकुन्तिका। हलक्। इति। वञ्चति॥
आ। हन्ति। गभे। पसः। निगल्गली। इति। धारका॥ २७॥

एतद् अध्वर्युवाक्यम्। यकासकाविति यत् शब्दात् अदस् शब्दाच्च प्रथमैकवचनान्तात् कुत्सिते गम्यमाने "अव्ययसर्वनाम्नामकच् प्राक् टेः" ( पा० ५।३।७१ ) इति अकच्। यका या, असकौ या असौ कुत्सिता, शकुन्तिका पक्ष्यात्मना महिषीरूपा, शकुन्तशब्दात् क प्रत्ययः। हला तरुणी पक्षिणी हलशब्दानुकरणमेतत्। हले हले इत्येवं रूपं शब्दं कुर्वती, वञ्चति त्वरितं गच्छति। एवं भूता कुत्सिता या असौ पक्षिणी तस्याः गभे, वर्णयोः व्यत्यासः। भगे योनौ पसः तत्स्पर्शनकर्मणो रूपमेतत् पसः स्पर्शसाधकं मेढ्रम् आहन्ति आगमयति अत्यर्थं प्रवेशयति। अथ च तदानीं धारका व्यत्ययः, रेतसो धारकं मेढ्रम्। निगल्गलीति रेतो मुञ्चति। अथवा धारका पुंबीजस्य धात्री योनिरपि। निगल्गली शब्दानुकरणमेतत्, एवंविधं शब्दं करोति। गिरतेः गृणातेर्वा छान्दसं रूपमेतत्।

[ —अ० २५।६।२ ]

अथाध्वर्युसंवादे द्वितीया—

**य॒कोऽस॒कौ श॑कुन्त॒क आ॒ह॒लगि॑ति॒ वञ्च॑ति।**
**विव॑क्षत इव ते॒ मुख॒मध्व॑र्यो॒ मा न॒स्त्वम॒भिभा॑षथाः॥ २८॥**

यकः। असकौ। शकुन्तकः। आ। हलक्। इति। वञ्चति॥
विवक्षतः। इव। ते। मुखम्। अध्वर्यो। मा। नः। त्वम्। अभि। भाषथाः॥ २८॥

अध्वर्युं प्रति कुमारीवाक्यमेतत्। यकोऽसकौ पूर्ववत् कुत्सितार्थे अकच्। योऽसौ कुत्सितः पक्षी, अश्व एव पक्षिरूपेण रूप्यते। आ हलक् आ।भिमुख्येन हले हले इति[1] शब्दं कुर्वन् वञ्चति त्वरितं गच्छति। तं पक्षिणं विवक्षतः वक्तुमिच्छतः इव स्थितस्य ते तव मुखमाननं हे अध्वर्यो पश्यामि, अतो नः अस्मान् अभिलक्ष्य त्वम् आभाषथाः। शकुन्तव्यापारस्य विस्मरणात्[2] अन्यत् एव अभिधित्ससि तन्मा कार्षीरित्यर्थः।

[ —अ० २५।६।३ ]

अथ ब्रह्मणः संवादे प्रथमा—

**मा॒ता च॑ ते पि॒ता च॒ तेऽग्र॑ँ वृ॒क्षस्य॑ रोहतः।**
**प्रति॑ला॒मीति॑ ते पि॒ता ग॒भे मु॒ष्टिम॑तꣳसयत्॥ २९॥**

माता। च। ते। पिता। च। ते। अग्रम्। वृक्षस्य। रोहतः॥
प्र। तिलामि। इति। ते। पिता। गभे। मुष्टिम्। अतंसयत्॥ २९॥

१. एवं रूपम् उ. म्यु.।
२. विस्मरणाय उ. म्यु.।

महिषीं प्रति ब्रह्मवाक्यमेतत् । हे महिषि तव माता च पिता च वृक्षस्य वृक्षविकारस्य पर्यङ्कस्य, अग्रम् उपरिभागम्, रोहतः मिथुनीभावाय आरोहतः, आरुह्य च ते तव[1] प्रतिलामि[2] 'तिल स्नेहने' इति धातुः, स्निह्यामि रेतसा आर्द्रीकरोमि इति बुद्धचा गभे, आद्यन्तयोर्वर्णयोर्विपर्यासः, तव मातुः भगे योनौ मुष्टयाकारं मेढ्रम् अतंसयत् प्रावेशयत् । अनेन खलु ग्राम्यकर्मणा त्वदुत्पत्तिरिति महिषीं प्रति अश्लीलभाषणम् । [ —अ० २५।६।४ ]

अथ द्वितीया—

माता च ते पिता च तेऽग्रं वृक्षस्य क्रीडतः ।
विवक्षत इव ते मुखं ब्रह्मन् मा त्वं वदो बहु ॥ ३० ॥

पदच्छेदः स्पष्टः ॥ ३० ॥

"यश्चोभयोः समो दोषः परिहारोऽपि वा समः । नैकस्तत्रानुयोक्तव्यः"

इति न्यायं हृदिकृत्य अनया महिषी ब्रह्माणं प्रत्याचष्टे । हे ब्रह्मन् तव माता च पिता च उभौ वृक्षस्य वृक्षविकारस्य पर्यङ्कस्य उपरिभागे खलु क्रीडतः मिथुनव्यापारेण विहरतः, तव व्युत्पत्तिः मिथुनादेव संजातेति आवयोः समो दोषः । तथापि हे ब्रह्मन् ते तव मुखं विवक्षतः अन्यत् वैषम्यं वक्तुमिच्छतो मुखमिव प्रतिभाति । स त्वं बहु मा वद बहुभाषणं मा कृथाः बहुप्रलापेनालम्[3] । तूष्णीमेव तिष्ठ इति अधिक्षेपः । [ —अ० २५।६।५ ]

वावातया सहोद्गातुः संवादे प्रथमा—

ऊर्ध्वामेनामुच्छ्रापय गिरौ भारꣳ हरन्निव ।
अथास्यै मध्यमेधताꣳ शीते वाते पुनन्निव ॥ ३१ ॥

ऊर्ध्वाम् । एनाम् । उत् । श्रापय । गिरौ । भारम् । हरन् । इव ॥
अथ । अस्यै । मध्यम् । एधताम् । शीते । वाते । पुनन् । इव ॥ ३१ ॥

अनया वावातामुद्दिश्य उद्गाता ब्रूते । एनां वावाताम् ऊर्ध्वाम् उच्छ्रापय, यथा ऊर्ध्वदेशे भवति तथा उन्नमय । किमिति, गिरौ पर्वते तृणकाष्ठादिभारं हरन् पुरुषो मध्येऽनुगृह्य यथा भारम् उन्नमयति तथैवैनां मध्येऽनुगृह्य उच्छ्रापय इति पार्श्वस्थमाचष्टे । अथोच्छ्रयणानन्तरम् अस्यै अस्याः वावातायाः मध्यं शरीरमध्यभूतो योनिप्रदेशः, एधतां वृद्धिं प्राप्नोतु । यथा अश्व एनां पश्येत् तथा भवतु इत्यर्थः । किं कुर्वन् इव, शीते वाते पुनन् इव "क्षेमो वै राष्ट्रस्य शीतम्" (श०, का० १३ । प्र० २ । ब्रा० ३ । अ० २ । ब्रा० ६ । क० ५ ) इति श्रुतेः । शीते वाते इत्यनेन राष्ट्रस्य क्षेमो लक्ष्यते । तन्निमित्तं पुनः नगरारण्यादिषु तस्करादिकं शोधय । यद्वा शीतले वाते मन्दानिले वाते सति पुनन् धान्यराशिं शोधयन् पुरुषो यथा वर्द्धयति धान्यराशिं तथैवेत्यर्थः । [—अ० २५।६।६]

एवम् उद्गात्रोक्ता वावाता तदनुचर्यं श्रुतं प्रत्याह इत्यनया द्वितीयया दर्शयति—

ऊर्ध्वमेनमुच्छ्रयताद् गिरौ भारं हरन्निव ।
अथास्य मध्यमेजतु शीते वाते पुनन्निव ॥ ३२ ॥

---

१. पितुः उ. म्यु. २. इति उ. म्यु. । ३. भाषणेन उ. म्यु. ।

ऊर्ध्वम् । एनम् । उत् । श्रयतात् । गिरौ । भारम् । हरन् । इव ॥
अथ । अस्य । मध्यम् । एजतु । शीते । वाते । पुनन् । इव ॥ ३२ ॥

हे उद्गातः पार्श्वस्थपुरुष, एवम् अश्वम् ऊर्ध्वम् उन्नमितदेहम्, उच्छ्रयतात् उद्गृह्णातु । यथा गिरौ पर्वते भारं हरन् पुरुषो मध्यं निगृह्य उच्छ्रयति तद्वत् एनम् उच्छ्रयतु । अथ अनन्तरम् अश्वस्य मध्यं मध्यदेहवर्त्ति प्रजननम्, एजतु योनिमध्ये चलतु । राष्ट्रस्य क्षेमं कुर्वन् इव । 'एजृ कम्पने' इति धातुः । [—अ० २५।६।७]

अथ होतुः संवादे प्रथमा—

**यदस्या अꣳहुभेद्याः कृधु स्थूलमुपातसत् ।**
**मुष्का इदस्या एजतो गोशफे शकुला इव ॥ ३३ ॥**

यत् । अस्याः । अंहुभेद्याः । कृधु । स्थूलम् । उप । अतसत् ॥
मुष्कौ । इत् । अस्याः । एजतः । गोशफे । शकुलौ । इव ॥ ३३ ॥

अनया होता परिवृक्तामभिलक्ष्य आचष्टे । यदस्या अंहुभेद्याः, भिद्यते इति भेद्यो योनिप्रदेशः, अंहुभेद्यो विदार्यो योनिप्रदेशो यस्याः सा अंहुभेद्याऽसंवृतयोनिद्वारेति यावत् । तादृश्याः परिवृक्तायाः योनिसंस्पर्शनात् पूर्वं कृधु, ह्रस्वनामैतत् । अल्पपरिमाणं सम्मेहनं पश्चात् स्पर्शनेच्छया स्थूलं प्राप्तस्थौल्यम्, उपातसत् उपागच्छत् । तदानीं योनेः संवृतत्वात् पुंव्यञ्जनस्य स्थौल्याद् अन्तःप्रवेशाभावेन अस्याः परिवृक्तायाः प्रजननस्योपरि मुष्का इत्, इत् शब्दोऽवधारणे, मुष्कौ वृषणावेव केवलम् एजतः चलतः, तदेव निदर्शनम् । गोशफे गोष्पदे शकुला मत्स्याः यथा चलन्ति तद्वत् । [—अ० २५।६।८]

अथ एवम् उपालब्धा होतृप्रमुखान् सर्वान् ऋत्विजः परिवदतीति यथा, तत्पाठस्तु—

**यद्देवासो ललामगुम्प्रविष्टीमिनमाविषुः ।**
**सक्थ्ना देदिश्यते नारी सत्यस्याक्षिभुवो यथा ॥ ३४ ॥**

यत् । देवासः । ललामगुम् । प्र । वि । स्तीमिनम् । आविषुः ॥
सक्थ्ना । देदिश्यते । नारी । सत्यस्य । अक्षिभुवः । यथा ॥ ३४ ॥

यत् यदा, देवासो देवाः क्रीडनशीलाः शिश्नव्यापारपराः ते होतृप्रमुखाः सर्वे एते ऋत्विजः, ललामं सुखं तत् गमयतीति तं ललामगुम्, प्रविष्टीमिनं प्रविश्य मिनोतीति प्रविष्टीमिनः । यद्वा प्रविष्टस्य माति परिच्छिनत्तीति । एवंभूतं मेढ्रं योनौ प्रवेश्य, आविषुः आलिङ्गनवर्द्धनादिभिः वनितां पर्यगृह्णन् इव[१] । तदानीमेतैरुपभुक्ता नारी सक्थ्ना प्रदेशेन संभोगसंभ्रमेण कुटिलभावमापन्नेन देदिश्यते लक्ष्यते । तत्रेदं निदर्शनम् । सत्यस्य सत्यभूतस्य एतदेव विशिष्यते, अक्षिभुवः, सत्यं हि द्वेधा भवति । अक्षिणि भवतीति अक्षिभु प्रत्यक्षप्रमाणम्, तद्विलक्षणम् अनुमानादिकम् अनक्षिभु, तत्र अक्षिभुवः सत्यस्य प्रत्यक्षप्रमाणस्य विषयो यथा स्फुटं लक्ष्यते तथैव एषा नारी सक्थ्ना प्रत्यक्षं कृतपरिभोगेति लक्ष्यते । [—अ० २५।६।९]

---

१. इत्यर्थः ब. म्यु.

अथ क्षत्रसंवादे प्रथमा—

यद्धरिणो यवमत्ति न पुष्टं पशु मन्यते ।
शूद्रा यदर्यजारा न पोषाय धनायति ॥ ३५ ॥

यत् । हरिणः । यवम् । अत्ति । न । पुष्टम् । पशु । मन्यते ॥
शूद्रा । यत् । अर्यजारा । न । पोषाय । धनायति ॥ ३५ ॥

अनया क्षत्ता पालागल्याख्यां राज्ञः स्त्रियम् आचष्टे । यत् यदा हरिणः कृष्णसाराख्यो मृगः यवं केदारस्थं शस्यम्, अत्ति भक्षयति, स क्षेत्री, "सुपां सुलुक्०" (पा० ७।१।३९) इति विभक्तेर्लुक् । तं हरिणरूपं पशुं पुष्टम् तृप्तं न मन्यते न जानाति स्वयं गृहे वर्त्तमानत्वात् । अनेन मृगेण क्षेत्रं भक्षितमिति मन्यते । एवमेव इयं शूद्रा शूद्रजात्युत्पन्ना परिवृक्ता स्त्री, अर्यजारा, अर्यः वैश्यः जारः उपपतिः यस्याः तादृशी सती सुपोषणार्थं न धनायति धनं नेच्छति । वैश्यस्य धनिकत्वात् ततो बहुधनं ग्रहीतुं शक्यते, तथाप्येषा धनं नाभिलषतीति एतत् सौराजकेति[1] तन्न जानातीत्यभिप्रायः ।

[ —अ० २५।६।१० ]

अथ द्वितीया—

यद्धरिणो यवमत्ति न पुष्टं बहु मन्यते ।
शूद्रो यदर्यायै जारो न पोषमनुमन्यते ॥ ३६ ॥

यत् । हरिणः । यवम् । अत्ति । न । पुष्टम् । बहु । मन्यते ॥
शूद्रः । यत् । अर्यायै । जारः । न । पोषम् । अनु । मन्यते ॥ ३६ ॥

अनया परिवृक्ता क्षत्तारं प्रत्याचष्टे । यत् यदा हरिणः कृष्णसाराख्यो मृगः, यवं शस्यम् अत्ति, तदा कृषिको वैश्यः पुष्टं पुष्टावयवं तं हरिणं न बहु मन्यते बहुमानं न करोति । केवलम् उदासीन एव भवति । यत् यदा शूद्रः शूद्रजातिजनः, अर्यायै वैश्यजात्यै स्त्रियै, जारः जरयिता उपपतिः भवति तदानीं तस्याः पोषणं नानुमन्यते पतिं नानुजानाति । परिवृक्तां प्रति तव वैश्यो जार इति क्षत्त्राभिहिते साऽपि त्वं वैश्यायै जार इति अश्लीलभाषणं कृतवतीति तात्पर्यार्थः ।

एवम् अध्वर्युब्रह्मोद्गातृक्षत्तॄणां महिषीवावातापरिवृक्तापालागलीभिः स्त्रीभिः तदनुचरीभिश्च अश्लीलभाषणप्रतिपादका दश मन्त्रा गताः । एतेषां ब्राह्मणम्—"ऊर्ध्वमेनामुच्छ्रापयेति श्रीर्वै राष्ट्रम्, अश्वमेधः श्रियमेवास्मै राष्ट्रमूर्ध्वमुच्छ्रयति" ( श०, का० १३ । प्र० २ । ब्रा० ३ । अ० २ । ब्रा० ९ । क० २ ) इत्यादिकं तात्पर्यार्थप्रतिपादनपरमिति व्याख्येयम् । (—अ० २५।६।११)

यज्ञमध्ये अश्लीलभाषणाद् या वाचोऽपवित्रता तत्परिहाराय सर्वे "दधिक्राव्ण" इति सुरभिमतीमृचं ब्रूयुः । तथा च श्रुतिः—"दधिक्राव्णो अकारिषमिति सुरभिमतीमृचमन्ततोऽन्वाहुर्वाचमेव पुनते" ( श०, का० १३ । प्र० २ । ब्रा० ४ । अ० २ । ब्रा० ९ । क० ९ ) इति । तत्पाठस्तु—

दधिक्राव्णो अकारिषञ्जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत् ॥ ३७ ॥

1. सौभाग्यमतीति भवितुमर्हति ।

**दधिक्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः ॥**
**सुरभि । नः । मुखा । करत् । प्र । नः । आयूंषि । तारिषत् ॥ ३७ ॥**

दधिक्राव्णः, आरूढं पुरुषं दधि क्रामतीति दधिक्रावा अश्वः, तादृशस्य जिष्णोः जयशीलस्य वाजिनो वेजनवतः वेगयुक्तस्य अस्य संयुक्ताश्वस्य संस्कारार्थं वाचोऽपूतत्वापादकम् अश्लीलभाषणम्, प्रत्येकापेक्षया एकवचनम्, सर्वं वयम् अकार्ष्म । तेन अश्वेन निर्वर्त्यो यज्ञः नोऽस्माकं मुखा मुखानि अश्लीलभाषणेन प्राप्ताशुचीनि सुरभीणि सौरभ्ययुक्तानि उक्तदोषरहितानि करत् करोतु । तथा नोऽस्माकम् आयूंषि जीवनानि च प्रतारिषत् प्रवर्तयतु । [ —अ० २५।६।१२ ]

**इति पञ्चविंशेऽध्याये षष्ठोऽनुवाकः ।**

**[ सप्तमोऽनुवाकः ३८-४३ ]**

कात्यायनः—"**तिस्रः पत्न्योऽसिपथान् कल्पयन्त्यश्वस्य सूचीभिः लौहराजतसौवर्णीभिः प्रणिसंख्याभिर्गायत्री त्रिष्टुबिति द्वाभ्यां द्वाभ्यां रजतसुवर्णसीसाभिर्वा मन्त्राम्नानात्**" इति (अ० २०।७।१) महिषीवावातापरिवृक्ताख्या तिस्रः राजपत्न्यः यैः पथिभिः विशसनसमये असिर्गच्छति तान् असिपथान् लौहराजतसौवर्णीभिः सूचीभिः यथासंख्यं गायत्री त्रिष्टुबित्यस्य द्वाभ्यां द्वाभ्यां ऋग्भ्यां कल्पयेयुः । तत्र प्रथमा—

**गायत्री त्रिष्टुब् जगत्यनुष्टुप् पङ्क्त्या सह ।**
**बृहत्युष्णिहा ककुप् सूचीभिः शम्यन्तु त्वा ॥ ३८ ॥**

**गायत्री । त्रिष्टुप् । जगती । अनुष्टुप् । पङ्क्त्या । सह ॥**
**बृहती । उष्णिहा । ककुप् । सूचीभिः । शम्यन्तु । त्वा ॥ ३८ ॥**

चतुर्विंशत्यक्षरात्मकं छन्दो गायत्री, चत्वारिंशदक्षरात्मकं छन्दः त्रिष्टुप्, अष्टाचत्वारिंशदक्षरात्मकं छन्दो जगती, द्वात्रिंशदक्षरात्मकं छन्दः अनुष्टुप्, चत्वारिंशदक्षरात्मकं छन्दः पङ्क्तिः, तया पङ्क्त्या सह वर्तमाना बृहती षट्त्रिंशदक्षरात्मकं छन्दः । आद्यौ पादावष्टाक्षरौ तृतीयो द्वादशकश्चेति सा उष्णिक् । उष्णिहा सह वर्तमाना तथा ककुप् । आद्यन्तावष्टाक्षरौ पादौ मध्यमो द्वादशकः सा ककुप् । एता गायत्र्याद्याः सर्वच्छन्दोजातयः । सूचीभिः लौहराजतसौवर्णादिभिः, हे अश्व, त्वा त्वां शम्यन्तु । शमनं च अङ्गानां भेदनं तत् कुर्वन्तु । सूचीभिः कृतेन हविर्वर्त्मना अश्वस्य विशसनं क्रियते । अत एवमुक्तम् । [ —अ० २५।७।१ ]

अथ द्वितीया—

**द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः ।**
**विच्छन्दा याश्च सच्छन्दाः सूचीभिः शम्यन्तु त्वा ॥ ३९ ॥**

**द्विपदाः । याः । चतुष्पदाः । त्रिपदाः । याः । च । षट्पदाः ॥**
**विच्छन्दाः । याः । च । सच्छन्दाः । सूचीभिः । शम्यन्तु । त्वा ॥ ३९ ॥**

द्विपदाः पदद्वयात्मिकाश्छन्दोजातयः। चतुष्पदाः पादचतुष्टयात्मिकाश्छन्दोजातयः त्रिपदाः पादत्रयवत्यो याश्छन्दोजातयः। षट्पदाः पादषट्कात्मिका याश्छन्दोजातयः। विच्छन्दा विषमपादलक्षणा याश्छन्दोजातयः। सच्छन्दाः अन्योन्यानतिरिक्ताक्षराश्छन्दोजातयः। ताः सर्वाः, हे अश्व, त्वां सूचीभिः इत्यादि पूर्ववत्। [—अ० २५।७।२]

अथ तृतीया—

महानाम्न्यो रेवत्यो विश्वा आशाः प्रभूवरीः।
मैघीर्विद्युतो वाचः सूचीभिः शम्यन्तु त्वा ॥ ४० ॥

महानाम्न्यः। रेवत्यः। विश्वाः। आशाः। प्रभूवरीः॥
मैघीः। विद्युतः। वाचः। सूचीभिः। शम्यन्तु। त्वा ॥ ४० ॥

विदा मघवन्नित्याद्याः तिस्रः तिस्रः ऋचो महानाम्न्य इति वर्ण्यन्ते। ताश्च छन्दोयुक्ताः ऋचो रेवत्यः। एवंरूपाः शक्कर्याद्याश्छन्दोजातयः। हे अश्व त्वां सूचीभः शम्यन्तु। प्रभूवरीः प्रभवनशीलाः, विश्वाः सर्वाः, आशा दिशश्च, तथा मैघीः मैघ्यः मेघसम्बधिन्यो विद्युतो विद्योतमानाः तडितः, वाचः गर्जनशब्दाः, एताः सर्वा हे अश्व त्वां सूचीभिः शम्यन्तु। [—अ० २५।७।३]

अथ चतुर्थी—

नार्यस्ते पत्न्यो लोम विचिन्वन्तु मनीषया।
देवानां पत्न्यो दिशः सूचीभिः शम्यन्तु त्वा ॥ ४१ ॥

नार्यः। ते। पत्न्यः। लोम। वि। चिन्वन्तु। मनीषया॥
देवानाम्। पत्न्यः। दिशः। सूचीभिः। शम्यन्तु। त्वा। ॥ ४१ ॥

यजमानस्य पत्न्यो नार्यः, मनीषया मनसः ईषा मनीषा, मनसा पर्यालोचनेन, हे अश्व, ते तव, लोमानि विचिन्वन्तु पृथक् कुर्वन्तु, तथा देवानां पत्न्यः याः देवानां भार्याः इन्द्राण्याद्यास्ताः प्राच्यादिदिशश्च, त्वां सूचीभिः शम्यन्तु। [—अ० २५।७।४]

अथ पञ्चमी—

रजता हरिणीस्सीसा युजो युज्यन्ते कर्मभिः।
अश्वस्य वाजिनस्त्वचि सिमाश्शम्यन्तु शम्यन्तीः ॥ ४२ ॥

रजताः। हरिणीः। सीसाः। युजः। युज्यन्ते। कर्मभिः॥
अश्वस्य। वाजिनः। त्वचि। सिमाः। शम्यन्तु। शम्यन्तीः ॥ ४२ ॥

रजताः रजतमय्यः, हरिणीः हिरण्यं सुवर्णमय्यः, सीसाः सीसमय्यः सूच्यः, अत्र सामर्थ्यात् कार्यकारणशब्दः। एवंभूताः सत्यः, सूच्यः युजः सहयोजनाः, सत्यकर्मभिः सीमाकरणलक्षणैर्युज्यन्ते युक्ता भवन्ति, युक्ताश्च ता वाजिनो वेजनवतो वेगवतः अश्वस्य, त्वचि वक्त्रदेशे शम्यन्तीः शमनहेतुभूताः, सिमाः सिमा संज्ञपनमर्यादाः, शम्यन्तु विभिन्दन्तु[1]। [—अ० २५।७।५]

१. विचिन्वन्तु उ. म्यु.।

अथ षष्ठी—

**कुविदङ्ग यवमन्तो यवञ्चिद्यथा दान्त्यनुपूर्वं वियूय ।**
**इहेहैषाङ्कृणुहि भोजनानि ये बर्हिषो नमउक्तिन्न जग्मुः ॥ ४३ ॥**

**कुवित् । अङ्ग । यवमन्तः । यवम् । चित् । यथा । दान्ति । अनुपूर्वम् । वियूय ॥**
**इह । इह । एषाम् । कृणुहि । भोजनानि । ये । बर्हिषः । नमउक्तिम् । न । जग्मुः ॥ ४३ ॥**

अङ्ग इति आभिमुख्यकरणे, अङ्ग हे सोम, यवसम्पन्नाः केचिज्जनपदाः यवम्, चित् शब्दः पूजायाम्, पूजितं परिपक्वं यवम्, अनुपूर्वम् आनुपूर्व्येण, वियूय अपरिपक्वात् लवमानानर्हत्वात् पृथक्कृत्य, यथा कुवित्, बहुलनाम एतत्, बहुलं दान्ति लुनन्ति, 'दाप् लवने' इति धातुः, तथैव अयजमानसहस्रात् यजमानान् पृथक्कृत्य, इहेह इह च इह च सर्वस्मिन् प्रदेशे, एषां यजमानानाम्, भाजनानि कृणुहि कुरु । ये यजमाना नमउक्ति नमस्कारोक्ति स्तुतिम्, यद्वा नम इति अन्ननाम, तस्य हविर्लक्षणस्य अन्नस्योक्ति याज्यानुवाक्याभ्यां कथनं प्राप्य बर्हिषः बर्हिःशब्दो यज्ञोपलक्षकः, यज्ञात्, न जग्मुः न विरमन्ति सर्वदा यज्ञशीला एव भवन्ति, एषां कृणुहि इति सम्बन्धः ।

[—अ०२५।७।६]

इति पञ्चविंशेऽध्याये सप्तमोऽनुवाकः ।

[ अष्टमोऽनुवाकः ४४-४९ ]

कात्यायनः—"अश्वं विशास्त्यनुवाकेन कस्त्वाच्छ्यति" इति (अ० २०।७।६) । तत्र प्रथमा—

**कस्त्वाऽऽच्छ्यति कस्त्वा विशास्ति कस्ते गात्राणि शम्यति ।**
**क उ ते शमिता कविः ॥४४॥**

**कः । त्वा । आ । च्छ्यति । कः । त्वा । वि । शास्ति । कः । ते । गात्राणि । शम्यति ॥**
**कः । उ । ते । शमिता । कविः ॥ ४४ ॥**

हे अश्व, त्वा त्वाम्, को मनुष्यः आच्छ्यति आच्छिनत्ति, न कोऽपीत्यर्थः । 'छो छेदने' इति धातुः । तथा हे अश्व, त्वा त्वाम्, कः खलु विशास्ति विशसनं करोति, विशसनं नाम हृदयादवतत्य ग्रहणम् । को नाम वा ते तव गात्राणि शरीराणि शम्यति शमनेन संज्ञपनेन हविर्भावमापादयति । क उ एव वा कविः क्रान्तदर्शनः सन्, ते तव शमिता संज्ञप्ता भवेत् । न कोऽपि एवंविधं व्यापारं कर्तुं शक्नोतीति भावः । यद्वा कशब्देन प्रजापतिरुच्यते । तस्मिन् पक्षे एषा योजना—कः कमनीयः प्रजापतिरेव, हे अश्व, त्वाम् आच्छ्यति आच्छिनत्ति, अतस्त्वया न भेतव्यम् । स खलु तव पारलौकिकं सुखं कर्तुं प्रवृत्तः । नान्योऽस्ति तव बाधक इति भावः । एवम् उत्तरेष्वपि वाक्येषु योजना ।

[—अ० २५।८।१]

अथ द्वितीया—

**ऋतवस्त ऋतथा पर्व शमितारो विशासतु ।**
**सँव्वत्सरस्य तेजसा शमीभिश्शम्यन्तु त्वा ॥ ४५ ॥**

ऋतवः । ते । ऋतुथा । पर्व । शमितारः । वि । शासतु ॥
सम् । वत्सरस्य । तेजसा । शमीभिः । शम्यन्तु । त्वा ॥ ४५ ॥

हे अश्व शमितार ऋतवो मन्त्रस्थास्ते ऋतौ ऋतौ काले पर्वणि अवयवसन्धिषु, त्वां विशासतु विशसनं कुर्वन्तु । संवत्सरस्य द्वादशमासात्मकस्य कालस्य, तेजसा धनेन, शमीभिः कर्मनाम एतत्, कर्मभिः, शम्यन्तु शमनेन हविर्भावमापादयन्तु । [—अ० २५।८।२]

अथ तृतीया—

अर्द्धमासाः परूंꣳषि ते मासा आच्छ्यन्तु शम्यन्तः ।
अहोरात्राणि मरुतो विलिष्टꣳ सूदयन्तु ते ॥४६ ॥

अर्द्धमासाः । परूंषि । ते । मासाः । आ । छ्यन्तु । शम्यन्तः ॥
अहोरात्राणि । मरुतः । वि । लिष्टम् । सूदयन्तु । ते ॥ ४६ ॥

शम्यन्तः शमनेन हविर्भावमापादयन्तः, अर्द्धमासात्मकाः शुक्लकृष्णात्मकाः कालविशेषाः, तव परूंषि पर्वाणि आच्छिन्दन्तु । किं च अहोरात्राणि अहोरात्रात्मकाः कालविशेषाः मरुतश्च, ते तव सम्बन्धि, विलिष्टम् अवयवजातम्, सूदयन्तु विश्लेषाद् निर्गमयन्तु, सन्धानं कुर्वन्तु इत्यर्थः । [—अ० २५।८।३]

अथ चतुर्थी—

दैव्या अध्वर्यवस्त्वाच्छ्यन्तु वि च शासतु ।
गात्राणि पर्वशस्ते सिमाः कृण्वन्तु शम्यन्तीः ॥ ४७ ॥

दैव्याः । अध्वर्यवः । त्वा । (आ) । च्छ्यन्तु । वि । च । शासतु ॥
गात्राणि । पर्वशः । ते । सिमाः । कृण्वन्तु । शम्यन्तीः ॥ ४७ ॥

दैव्याः देवसम्बन्धिनः, अध्वर्यवः अध्वर्युप्रमुखाः ऋत्विजः, "अश्विनौ हि देवानामध्वर्यू आस्ताम्" इति श्रुतेः ( श०, का० १२ । प्र० ४ । ब्रा० १ । अ० ८ । ब्रा० २ । क० २२ ) । देवसम्बन्धिनि कर्मणि आध्वर्यवं कुर्वाणाः अश्विप्रमुखा देवाः, हे अश्व, त्वाम् आच्छ्यन्तु त्वाम् आच्छिन्दन्तु, ते तव गात्राणि अङ्गानि पर्वशः पर्वणि पर्वणि विशसनं कुर्वन्तु । तदर्थं पूर्वं शम्यन्तीः शमनेन हविर्भावापत्तौ हेतुभूताः सिमाः सीमा एतावत् एतद्देशम्, एतावदे(वे)ति इति मर्यादाः, कृण्वन्तु कुर्वन्तु । [—अ० २५।८।४]

अथ पञ्चमी—

द्यौस्ते पृथिव्यन्तरिक्षꣳ वायुश्छिद्रम्पृणातु ते ।
सूर्यस्ते नक्षत्रैस्सह लोकङ्कृणोतु साधुया ॥ ४८ ॥

द्यौः । ते । पृथिवी । अन्तरिक्षम् । वायुः । छिद्रम् । पृणातु । ते ॥
सूर्यः । ते । नक्षत्रैः । सह । लोकम् । कृणोतु । साधुया ॥४८॥

द्यौः द्युलोकः, पृथिवी भूलोकः, अन्तरिक्षम् अन्तरीक्षलोकः एते त्रयो लोकाः, ते तव, विशसनं कृतच्छिद्रं तत् पूरयन्तु । वायुश्च ते तव छिद्रम्, पृणातु पूरयतु । अपि नक्षत्रैः सौर्यतेजोविभूति-

रूपैस्तारागणैः सह सूर्यः साधुया द्वितीयायाः याकारादेशः, साधुषु उत्कृष्टं लोकं स्थानं नाकपृष्ठादिकम्, कृणोतु करोतु । [—अ० २५।८।५]

अथ षष्ठी—

शन्ते परेभ्यो गात्रेभ्यश्शमस्त्ववरेभ्यः ।
शमस्थभ्यो मज्जभ्यश्शम्वस्तु तन्वै तव ॥ ४९ ॥

शम् । ते । परेभ्यः । गात्रेभ्यः । शम् । अस्तु । अवरेभ्यः ॥
शम् । अस्थभ्यः । मज्जभ्यः । शम् । उ । अस्तु । तन्वै । तव ॥ ४९ ॥

द्विविधानि खलु अवयवजातानि—बाह्यानि आभ्यन्तराणि च । तत्र बाह्यानि पराणि त्वचः आभ्यन्तराणि, अयमर्थः—हे अश्व, ते तव, परेभ्यो गात्रेभ्यः[१] वर्तमानेभ्योऽवयवेभ्यः, शम् सुखम् अस्तु । तादर्थ्ये चतुर्थी, तथा परेभ्यः अन्तर्वर्त्तिभ्यो गात्रेभ्यश्च, शम् सुखमस्तु । अपि च अस्थभ्यः अस्थिभ्यः, मज्जभ्यः, मज्जानाम अस्थ्नामन्तर्वर्त्तिधातुः, तेभ्यश्च शम् सुखमस्तु, किं बहुना तव तन्वै कृत्स्नशरीरार्थं वा, शम् सुखमेव, अस्तु भवतु । [—अ० २५।८।६]

इति पञ्चविंशेऽध्यायेऽष्टमोऽनुवाकः ।

[ नवमोऽनुवाकः ५०—५७ ]

कात्यायनः—"होताध्वर्यू च सदसि संवदेते चतसृभिः कः स्विदेकाकी" (अ० २०।७।१०) इति । तत्र प्रथमतो द्वाभ्याम् ऋग्भ्यां होताध्वर्य्वोश्च प्रश्नप्रतिवचने क्रियेते । तत्पाठस्तु—

कस्स्विदेकाकी चरति क उ स्विज्जायते पुनः ।
किꣳस्विद्धिमस्य भेषजङ्किम्वावपनम्महत् ( प्रश्नः ) ॥ ५० ॥
सूर्य एकाकी चरति चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भेषजम्भूमिरावपनम्महत् । ( प्रतिवचनम् ) ॥ ५१ ॥

व्याख्यातौ एतौ मन्त्रौ । [—अ० २५।९।१-२ ]

होतुः प्रश्नस्य प्रतिवचनमभिधाय स्वयम् अध्वर्युर्होतारं पृच्छति—

किꣳ स्वित्सूर्यसमञ्ज्योतिः किꣳ समुद्रसमꣳ सरः ।
किꣳ स्वित् पृथिव्यै वर्षीयः कस्य मात्रा न विद्यते ॥ ५२ ॥

पदच्छेदः स्पष्टः ॥५२॥

किं स्वित् इति वितर्के । किं खलु सूर्यसमं सूर्यसदृशं ज्योतिः तेजः ? किं खलु समुद्रसमं जलधिसदृशं सरः ?[२] पृथिव्यै पृथिव्याः सकाशात् वर्षीयः वृद्धतरं वा किं स्वित् ? कस्य खलु मात्रा इयत्ता न विद्यते एतावदिति परिमाणं नास्ति ? [—अ० २५।९।३]

---

१. बहिः उ. म्यु. । २. किंस्वित् उ. म्यु. ।

एवं पृष्टे होता अध्वर्युं प्रत्याचष्टे—

**ब्रह्म सूर्यसमञ्ज्योतिर्द्यौस्समुद्रसमꣳ सरः।**
**इन्द्रः पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यते ॥ ५३ ॥**

पदच्छेदः स्पष्टः ॥ ५३ ॥

सूर्यसमं सूर्येण सदृशम् अतिदीप्तं ज्योतिः ब्रह्म, **"तेन सूर्यस्तपति तेजसेद्धः"** इति, **"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"** इति श्रुत्या ब्रह्मसम्बन्धिना तेजोलेशेन सूर्यस्य तेजस्वित्वं प्रत्यपादि, अतः सूर्यादधिकमपि स्वप्रकाशसच्चिदानन्दात्मकं परं ब्रह्म प्रश्नस्यानुगुण्येन सूर्यसममित्युच्यते। समुद्रसमं समुद्रेण सदृशं सरः, द्यौः द्युलोकम्, समुद्रश्च बहुविधरत्नानामाश्रयः, द्युलोकोऽपि दीप्तिमतां नक्षत्राणामाश्रयः इति साम्यम्। पृथिव्यै पृथिव्याः सकाशात्, वर्षीयान् वृद्धतरः इन्द्रः, पृथिव्या अपि अपेक्षितं यद् वृष्टयादिफलदानं तत्कर्तृत्वेन इन्द्रस्य ऐश्वर्ययोगात्। गोः गोजातेः, पशोर्मात्रा एतावदिति परिमाणं न विद्यते, तत्साध्याद् यज्ञात् सर्वजगदुत्पत्तेः। [—अ० २५।६।४]

कात्यायनः—**"ब्रह्मोद्गातारौ च पृच्छामि त्वा"** (अ० २०।७।११) इति चतसृभिः संवदेते इत्यनुवर्तते। तत्र ब्रह्मा उद्गातारं पृच्छति—

**पृच्छामि त्वा चितये देवसख यदि त्वमत्र मनसा जगन्थ ॥**
**येषु विष्णुस्त्रिषु पदेष्वेष्टस्तेषु विश्वम्भुवनमाविवेशा ॥ ५४ ॥**

**पृच्छामि। त्वा। चितये। देवसख। यदि। त्वम्। अत्र। मनसा। जगन्थ॥**
**येषु। विष्णुः। त्रिषु। पदेषु। आ। इष्टः। तेषु। विश्वम्। भुवनम्। आ। विवेश। आ॥५४॥**

हे देवसख देवानां सखिभूत, हे उद्गातः, त्वा त्वां पृच्छामि। किमर्थम्, चितये, **'चिती संज्ञाने'** इति धातुः, ज्ञानार्थम्। अज्ञानतः पृच्छामि न तु विजिगीषया इति भावः। अत्रास्मिन् प्रश्नविषये त्वं पृष्टः सन् मनसा सूक्ष्मार्थदर्शिन्या बुद्धया प्रश्नं[1] यदि जगन्थ यदि अवगच्छसि तर्हि पृच्छामि इति सम्बन्धः। कथमिति। येषु त्रिषु पदेषु स्थलेषु गार्हपत्याहवनीयदक्षिणाग्निलक्षणेषु विष्णुः व्याप्त्या यज्ञः, एष्टः आ समन्तात् इष्टः अनुष्ठितोऽभूत्; तेषु स्थानेषु विश्वं सर्वं भुवनं भूतजातम् आविवेश। आ अनुयोगार्थे प्लुतः। [—अ० २५।६।५]

किमाविष्टम्, [2]तवेति। एवं पृष्टः उद्गाता ब्रह्माणं प्रत्याह—

**अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वम्भुवनमाविवेश।**
**सद्यः पर्येमि पृथिवीमुत द्यामेकेनाङ्गेन दिवो अस्य पृष्ठम् ॥ ५५ ॥**

**अपि। तेषु। त्रिषु। पदेषु। अस्मि। येषु। विश्वम्। भुवनम्। आ। विवेश॥**
**सद्यः। परि। एमि। पृथिवीम्। उत। द्याम्। एकेन। अङ्गेन। दिवः। अस्य। पृष्ठम्॥५५॥**

येषु दक्षिणाग्निगार्हपत्याहवनीयेषु स्थानेषु विश्वं सर्वं [3]भूतजातम् आविवेश आविष्टमभवत्, तेषु तेषु पदेषु अहमपि आविष्टोऽस्मि। यदि त्वमत्र मनसा जगन्थेति मदीयस्य ज्ञानस्य पाक्षिकतया

१. प्रश्नार्थम् उ. म्यु. २. तत्रेति युक्तम्। ३. भुवनम् इत्यादीतियुक्तम्।

यदिशब्देन विद्योतितं तन्न तथा त्वकर्त्तव्यम्। पृथिवीं कृत्स्नां भूमिं सद्यः यज्ञमेव[1], पर्येमि परिगच्छामि परितः जानामि। उत अपि च, द्यां द्युलोकमपि, पृथिव्यागमवेलायामेव जानामि। तथा अस्या दिवः द्युलोकस्य पृष्ठं नाकपृष्ठाख्यं स्थानमपि जानामि। एतत् सर्वं केन धनेन इति चेत्, एकेन [2]एकाग्रेण, अङ्गेन अवयवेन, मनसा द्यावापृथिव्यादि सर्वं युगपदेव जानामि। किं च तदेकदेशभूतानि भूतजातानि त्रिषु स्थानेषु आविष्टानि [3]जानामि इति वक्तव्यम्। [—अ० २५।९।६ ]

एवम् उद्गाता ब्रह्माणः प्रश्नस्य उत्तरमभिधाय स्वयं ब्रह्माणं पृच्छति—

**केष्वन्तः पुरुष आविवेश कान्यन्तः पुरुषे अर्पितानि।**

**एतद्ब्रह्मन्नुपवल्हामसि त्वा किꣳ स्विन्नः प्रतिवोचास्यत्र ॥ ५६ ॥**

**केषु। अन्तः। पुरुषः। आ। विवेश। कानि। अन्तः। पुरुषे। अर्पितानि॥**

**एतत्। ब्रह्मन्। उप। बल्हामसि। त्वा। किम्। स्वित्। नः। प्रति। वोचासि। अत्र ॥५६॥**

केषु वस्तुषु अन्तः मध्ये, पुरुषः जगदादिभूतात्मा आविवेश आविष्टोऽभूत्। तस्मिंश्च पुरुषे अन्तर्मध्ये कानि तत्त्वानि अर्पितानि। हे ब्रह्मन्, एतत् प्रश्नद्वयम्, त्वा त्वाम्, बल्हामसि उपपृच्छामः। **"बर्ह बल्ह प्राधान्ये"** इति धातुः। अत्र च प्रतिवोचासि इति उत्तरवाक्ये दर्शनात् प्रश्नार्थः। अत्रास्मिन् प्रश्ने नोऽस्मान् प्रति किंस्वित् प्रतिवोचासि, किं खलु उत्तरं प्रतिब्रूयाः। [—अ० २५।९।७]

एवमुक्तवन्तम् उद्गातारं ब्रह्मा प्रत्याह—

**पञ्चस्वन्तः पुरुष आविवेश तान्यन्तः पुरुषे अर्पितानि।**

**एतत्त्वात्र प्रतिमन्वानो अस्मि न मायया भवस्युत्तरो मत् ॥ ५७ ॥**

**पञ्चसु। अन्तः। पुरुषः। आ। विवेश। तानि। अन्तः। पुरुषे। अर्पितानि॥**

**एतत्। त्वा। अत्र। प्रति। मन्वानः। अस्मि। न। मायया। भवसि। उत्तरः। मत् ॥५७॥**

पञ्चसु प्राणेषु चक्षुरादीन्द्रियेषु च अन्तः मध्ये पुरुषः पूर्ण आत्मा आविवेश जीवरूपेण अन्तर्यामिरूपेण च आविष्टो बभूव। **"अनेन जीवेन आत्मना अनुप्रविश्य नामरूपे व्याकरवाणि"** इति श्रुतेः ( छा० उ०, अ० ६। खं० ३ )। तानि च प्राणादीन्द्रियाणि पुरुषे पूर्वे चिद्रूपे आत्मनि, अन्तः मध्ये, अर्पितानि स्थापितानि। अनेन आत्मानात्मनोः परस्परतादात्म्यं सर्वव्यवहारसिद्ध्यर्थम् उक्तं भवति। अतोऽस्मिन् आत्मा आत्मसंवलितरूपे देहाद्यैरेतत् साक्षादपरोक्षं वस्तु, त्वा त्वां प्रतिमन्वानः प्रत्युत्तरेण अवगमयितव्यम् इति जानन्नहमस्मि भवामि। एवं स त्वं मायया वञ्चनया, मत् मत्तः सकाशात्, उत्तरः उत्कृष्टो न भवसि। [—अ० २५।९।८]

**इति पञ्चविंशेऽध्याये नवमोऽनुवाकः।**

**[ दशमोऽनुवाकः ५८-७० ]**

कात्यायनः—**"पुनः पूर्वापरेणोत्तरवेदिं कास्विदासीदिति"** इति ( अ० २०।७।१२ )। उत्तरवेदेः पश्चाद् भागे स्थितौ होताध्वर्यू **"कास्विदासीत्"** इति चतसृभिः पुनः संवदेते। होता अध्वर्युं पृच्छति—

---

१. कालम् उ. म्यु. २. प्रकारेण उ. म्यु. ३. अभि उ. म्यु.

का स्विदासीत्पूर्वचित्तिः किंस्विदासीद् बृहद्वयः ।
का स्विदासीत् पिलिप्पिला का स्विदासीत् पिशङ्गिला ॥ ५८ ॥

एवं पृष्टोऽध्वर्युः होतारं प्रत्याह—

द्यौरासीत् पूर्वचित्तिरश्व आसीद् बृहद्वयः ।
अविरासीत् पिलिप्पिला रात्रिरासीत् पिशङ्गिला ॥ ५९ ॥

व्याख्यातौ एतौ मन्त्रौ ( अ० २५।१२–१३ )। [—अ० २५।१०।१–२ ]

पुनः अध्वर्युर्होतारं पृच्छति—

का ईमरे पिशङ्गिला का ईं कुरुपिशङ्गिला ।
क ईमास्कन्दमर्षति क ईम्पन्थां विसर्पति ॥ ६० ॥

का । ईम् । अरे । पिशङ्गिला । का । ईम् । कुरुपिशङ्गिला ॥
कः । ईम् । आ । स्कन्दम् । अर्षति । कः । ईम् । पन्थाम् । वि । सर्पति ॥ ६० ॥

अरे इति निपात आमन्त्रणे। अरे हे होतः, ईम् इयम्, उक्तविलक्षणेयं पिशङ्गिला का कीदृशी ? इयं कुरुपिशङ्गिला नाम का कीदृशी ? ईम् इमम् आस्कन्दम् आस्कन्दनम् उत्प्लुत्य धावनम्, को वा अर्षति स्वभावतः प्राप्नोति। तथा ईम् इमम् पन्थां पन्थानं मार्गं को वा विसर्पति विविधं गच्छति। [—अ० २५।१०।३]

एवं पृष्टो होता अध्वर्युं प्रत्याह—

अजारे पिशङ्गिला श्वावित्कुरुपिशङ्गिला ।
शश आस्कन्दमर्षत्यहिः पन्थां विसर्पति ॥ ६१ ॥

अजा । अरे । पिशङ्गिला । श्वावित् । कुरुपिशङ्गिला ॥
शशः । आ । स्कन्दम् । अर्षति । अहिः । पन्थाम् । वि । सर्पति ॥ ६१ ॥

अरे हे अध्वर्यो, अजा खलु त्वया पृष्टा पिशङ्गिला। कुरुपिशङ्गिला नाम श्वावित्, शल्ली। आस्कन्दम् आस्कन्दनम्, स्वभावत एव शशः अर्षति। अहिः सर्पः, पन्थां पन्थानम्, विसर्पति गच्छति। [—अ० २५।१०।४]

कात्यायनः—"उत्तरौ च कत्यस्येति" इति ( अ० २०।७।१३ )। उत्तरौ पश्चादुक्तौ ब्रह्मोद्गातारौ अपरेण उत्तरवेदिं "कत्यस्य" इति चतसृभिः संवदेते। तत्र ब्रह्मा उद्गातारं पृच्छति—

कत्यस्य विष्ठाः कत्यक्षराणि कति होमासः कतिधा समिद्धः ।
यज्ञस्य त्वा विदथा पृच्छमत्र कति होतार ऋतुशो यजन्ति ॥ ६२ ॥

कति । अस्य । वि । स्थाः । कति । अक्षराणि । कति । होमासः । कतिधा । सम् । इद्धः ॥
यज्ञस्य । त्वा । विदथा । पृच्छम् । अत्र । कति । होतारः । ऋतुशः । यजन्ति ॥ ६२ ॥

अस्य यज्ञस्य, विष्ठाः विविधावस्थाः, कति कतिपये कतिसंख्या वा। अस्य यज्ञस्य सम्बन्धीनि अक्षराणि च, कति कतिसंख्यानि। होमासः होमाश्च कतिसंख्याः। अग्निश्च कतिधा कियद्भिः प्रकारैः समिद्धः सन्दीपितः।[1] समिधः कतीति समित्संख्या पृष्टा भवति। हे उद्गातः, यज्ञस्य विदथा विदथेन यज्ञसंबन्धिवेदनेन यज्ञविषयज्ञानेन हेतुना, त्वा त्वां पृच्छामि। अत्र अस्मिन् यज्ञे ऋतुशः ऋतौ ऋतौ काले, कतिसंख्याका होतारः होतृप्रमुखाः ऋत्विजः यजन्ति, याज्याभिर्वषट् कुर्वन्ति। [—अ० २५।१०।५]

एवं पृष्टो ब्रह्माणम् उद्गाता प्रत्याह—

**षळ॑स्य वि॒ष्ठाश्श॒तम॒क्षरा॑ण्यशी॒तिर्होमा॑स्स॒मिधो॑ ह ति॒स्रः।**
**य॒ज्ञस्य॑ ते वि॒दथा॒ प्रब्र॑वीमि स॒प्त होता॑र ऋतु॒शो य॑जन्ति ॥ ६३ ॥**

**षट्। अस्य। वि। स्थाः। शतम्। अक्षराणि। अशीतिः। होमाः। समिधः। ह। तिस्रः॥**
**यज्ञस्य। ते। विदथा। प्र। ब्रवीमि। सप्त। होतारः। ऋतुशः। यजन्ति॥ ६३॥**

अस्य यज्ञस्य विष्ठाः विविधावस्थाः प्रदेशाः षट्संख्याकाः अग्निहोत्रहोमदर्शपूर्णमासपशु-बन्धसोमयागाग्निचयनात्मिकाः। अक्षराणि च शतं शतसंख्यकानि, छन्दोद्वारा सम्पादनीयानि। तानि च गायत्र्यादीनि अतिधृतिपर्यन्तानि चतुरक्षराधिकानि। अतिधृतिस्तु षट्सप्तत्यक्षरा। गायत्री चतुर्विंशत्यक्षरा। उभयं मिलित्वा शतमक्षराणि भवन्ति। धृतिस्तु द्वासप्तत्यक्षरा। अष्टाविंशत्यक्षरा उष्णिक्। एतदपि एवं शतसंख्या भवति। अष्टषष्टचक्षरा अत्यष्टिः, द्वात्रिंशदक्षरा अनुष्टुप्। तदेकं शतम्। चतुःषष्टचक्षराष्टिः। षट्त्रिंशदक्षरा बृहती। तदेकं शतम्। षष्टचक्षरा अतिशक्करी। चत्वारिंशदक्षरा पङ्क्तिः। तदेकं शतम्। षट्पञ्चाशदक्षरा शक्करी। चतुश्चत्वारिंशदक्षरा त्रिष्टुप्। तदेकं शतम्। द्वापञ्चाशदक्षरा अतिजगती। अष्टाचत्वारिंशदक्षरा जगती। तदेकं शतम्। एवं छन्दांसि द्वन्द्वीभूय यज्ञस्य शताक्षरसम्बन्धं निष्पादयन्ति। होमाश्च अशीतिसंख्याकाः, अश्वमेधविषये ते प्रसिद्धा होमाः, तदभिप्रायेणेयं संख्या। समिधः समित्साधनभूतास्तिस्रः। होमः खलु अश्वतूपर-गोमृगाख्यः, प्राजापत्याः पशवः, ते तव, यज्ञस्य विदथा यज्ञविषयज्ञानेन हेतुना प्रब्रवीमि। ऋतुशः ऋतौ ऋतौ काले काले। सप्त होतारः—होता, मैत्रावरुणौ, ब्राह्मणाच्छंसी, पोता, नेष्टा, अग्नीध्रः, अच्छावाकश्चेति। सप्त ऋत्विजो यजन्ति याज्याभिर्वषट् कुर्वन्ति। [—अ० २५।१०।६]

अथ उद्गाता ब्रह्माणं पृच्छति—

**को अ॒स्य वे॑द॒ भुव॑नस्य॒ नाभि॒ङ्को द्यावा॑पृथि॒वी अ॒न्तरि॑क्षम्।**
**कस्सूर्य॑स्य वेद बृह॒तो ज॒नित्र॒ङ्को वे॑द च॒न्द्रम॑सँय्यत॒ोजाः ॥ ६४ ॥**

**कः। अस्य। वेद। भुवनस्य। नाभिम्। कः। द्यावापृथिवी। अन्तरिक्षम्॥**
**कः। सूर्यस्य। वेद। बृहतः। जनित्रम्। कः। वेद। चन्द्रमसम्। यतोजाः॥ ६४॥**

अस्य भुवनस्य भूतजातस्य, नाभिम् आधारभूतम् उत्पत्तिकारणम्, को वेद को जानाति? तथा द्यावापृथिवी, दिवं स्वर्गलोकम्, पृथिवीं भूतलोकम्, को वेद को जानाति? बृहतो महतः सूर्यस्य,

१. अपि चेत्यादीतियुक्तम्।

जनित्रं जन्म, को वेद को जानाति ? यतोजाः यतो जायते, यस्माद् उपादानभूतात् चन्द्रमा जायते, तद्विशिष्टं चन्द्रमसं को वेद ?

[ —अ० २५।१०।७ ]

एवं पृष्टो ब्रह्मा उद्गातारं प्रत्याह—

**वे॒दा॒हम॒स्य भुव॑नस्य॒ नाभि॑ँ॒व्वेद॒ द्यावा॑पृथि॒वी अ॒न्तरि॑क्षम् ।**
**वेद॒ सूर्य॑स्य बृ॒ह॒तो ज॒नित्र॒मथो॑ वेद च॒न्द्रम॑सँ॒य्यतो॒जाः ॥ ६५ ॥**

वेद । अहम् । अस्य । भुवनस्य । नाभिम् । वेद । द्यावापृथिवी । अन्तरिक्षम् ॥
वेद । सूर्यस्य । बृहतः । जनित्रम् । अथो । वेद । चन्द्रमसम् । यतोजाः ॥ ६५ ॥

अस्य भुवनस्य भूतजातस्य, नाभिम्, नह्यते बध्यते तस्मिन् सर्वं विकारजातमिति नाभिः परं ब्रह्म, तदहं वेद । तथा द्यावापृथिवी अन्तरीक्षम् अहं वेद जानामि । कारणभूतस्य परंब्रह्मणो ज्ञातत्वात् लोकत्रयस्य तत्कार्यत्वेन तदव्यतिरेकात्[१] ज्ञानमेव एतेषामपि ज्ञानमिति भावः । बृहतः परं ब्रह्मात्मकस्य सूर्यस्य, जनित्रं जन्म आविर्भावम्, अहं वेद जानामि । अथो अपि च, यतोजाः यस्मात् परं ब्रह्मणः चन्द्रमा जातः तत् परं ब्रह्मैव चन्द्रमसं वेद । चन्द्रात्मनाऽवस्थितमिति जानामि ।

[ —अ० २५।१०।८ ]

कात्यायनः—"यजमानोऽध्वर्युं पृच्छामि त्वा" इति ( अ० २०।७।१४ ) । एवम् ऋत्विग्भिः संवादे कृते यजमानः "पृच्छामि त्वा" इति मन्त्रेण अध्वर्युं पृच्छति । तत्पाठस्तु—

**पृ॒च्छामि॑ त्वा॒ प॒रमन्तं॑पृथि॒व्याः पृ॒च्छामि॒ यत्र॒ भुव॑नस्य॒ नाभिः॑ ।**
**पृ॒च्छामि त्वा॒ वृष्णो॒ अश्व॑स्य॒ रेतः॑ पृ॒च्छामि॑ वा॒चः प॑र॒मँ॒व्व्यो॑म ॥ ६६ ॥**

पदच्छेदः स्पष्टः ॥ ६६ ॥

पृथिव्याः भूम्याः, परं प्रकृष्टम्, अन्तं सीमारूपम्, हे अध्वर्यो ! त्वां पृच्छामि । यत्र यस्मिन् कारणे, भुवनस्य भूतजातस्य, नाभिः बन्धनम् अवस्थानं तदपि पृच्छामि । वृष्णः सेचनसमर्थश्विस्य, रेतो वीर्यं किमिति त्वां पृच्छामि । वाचस्त्रयीरूपायाः, परमम् उत्कृष्टम्, व्योमस्थानं किमु पृच्छामि ।

[ —अ० २५।१०।९ ]

एवं पृष्टोऽध्वर्युर्यजमानं प्रत्याह—

**इ॒यँ॒व्वेदि॒ः प॒रो अन्तः॑ पृथि॒व्या अ॒यँ॒य्य॒ज्ञो भुव॑नस्य॒ नाभिः॑ ।**
**अ॒यꣳ सोमो॒ वृष्णो॒ अश्व॑स्य॒ रेतो॑ ब्र॒ह्मायँ॒व्वा॒चः प॑र॒मँ॒व्व्यो॑म ॥ ६७ ॥**

इयम् । वेदिः । परः । अन्तः । पृथिव्याः । अयम् । यज्ञः । भुवनस्य । नाभिः ॥
अयम् । सोमः । वृष्णः । अश्वस्य । रेतः । ब्रह्मा । अयम् । वाचः । परमम् । व्योम ॥ ६७ ॥

इयम् आश्वमेधिकी वेदिः, पृथिव्याः परोऽन्तः उत्कृष्टं स्थानम् । अयमेव अश्वमेधो यज्ञः, भुवनस्य भूतजातस्य नाभिः 'णह बन्धने', उत्पादकं कारणम् । अयं सोमः, वृष्णः सेचनसमर्थस्य अश्वस्य आदित्यात्मकस्य, रेतः वीर्यम्, यस्मात् सूर्यसकाशात् चन्द्रमसः तेजःप्राप्तिस्तत इत्यर्थः ।

---

१. तदित्यादियुक्तम् ।

ब्रह्मायं वाचः, लिङ्गव्यत्ययः। अयं साक्षात् अपरोक्षरूपं वाचस्त्रयीरूपायाः, परमम् उत्कृष्टं व्योमस्थानं निलयः, तात्पर्येण तस्यैवार्थत्वेन प्रतिपादनीयत्वात्। "कः स्विदेकाकी" इत्यारभ्य एतदन्तं ब्रह्मोद्यम्। [—अ० २५।१०।१० ]

तद्गतमहिमग्रहस्य पुरोऽनुवाक्यामाह—

सुभूस्स्वयम्भूः प्रथमोऽन्तर्महत्यर्णवे।
दधे ह गर्भमृत्वियँ यतो जातः प्रजापतिः॥ ६८॥

सुभूः। स्वयम्भूः। प्रथमः। अन्तः। महति। अर्णवे॥
दधे। ह। गर्भम्। ऋत्वियम्। यतः। जातः। प्रजापतिः॥ ६८॥

सुभूः शोभनभवनः, स्वयम् आत्मनैव लीलार्थं भवतीति स्वयम्भूः, प्रथमः सर्वेषामाद्यः, महति प्रवृद्धेऽर्णवे प्रलयकालीने समुद्रे तदुपलक्षिते अन्तर्मध्ये, ऋत्वियम् ऋतुकाले भवं गर्भसृष्टिकालीनम्, उत्पत्स्यमानप्राणिजातस्य बीजभूतं स्ववीर्यम्, दधे ह धारितवान् खलु। यतो यस्मात् गर्भात्, प्रजापतिः हिरण्यगर्भाख्यः पुरुषो जातः उत्पन्नः, तं गर्भमिति सम्बन्धः। [—अ० २५।१०।११]

अथ तस्यैव महिम्नः प्रैषमाह—

होता यक्षत् प्रजापतिँ सोमस्य महिम्नः।
जुषताम्पिबतु सोमँ होतर्यज॥ ६९॥

होता। यक्षत्। प्रजापतिम्। सोमस्य। महिम्नः॥
जुषताम्। पिबतु। सोमम्। होतः। यज॥ ६९॥

अग्न्याख्यो दैवो होता, महिम्नः महिमग्रहरूपस्य, सोमस्य सोमरसस्य, स्वामिनं प्रजापतिम्, यक्षत् यजतु। स च सोमस्य जुषतां सेवताम्। प्रजापतिश्च तं सोमं पिबतु। हे मानुष होतस्त्वं यज याज्यां पठ। [—अ० २५।१०।१२]

अथैतस्य ग्रहस्य याज्यामाह—

प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयँ स्याम पतयो रयीणाम्॥७०॥

प्रजापते। न। त्वत्। एतानि। अन्यः। विश्वा। रूपाणि। परि। ता। बभूव॥
यत्कामाः। ते। जुहुमः। तत्। नः। अस्तु। वयम्। स्याम। पतयः। रयीणाम्॥७०॥

व्याख्यातो मन्त्रः। [—अ० २५।१०।१३]

इति पञ्चविंशेऽध्याये दशमोऽनुवाकः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्तक-श्रीबुक्कणभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये पञ्चविंशोऽध्यायः।

# अथ षड्विंशोऽध्यायः

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

इत उत्तरम् आश्वमेधिकानां पशूनां देवतासम्बन्धविधायिनां विधिसरूपाणां मन्त्रा आध्यायपरिसमाप्तेः आम्नायन्ते ।

[ प्रथमोऽनुवाकः १-९ ]

कात्यायनः—"अग्निष्ठेऽश्वतूपरगोमृगान्नियुनक्ति । पञ्चदश पञ्चदश रोहितादीन्त्सौर्यान्तानितरेषु कपिञ्जलादीन् पृषतान्तांस्त्रयोदश त्रयोदश यूपान्तरेषु" (अ० २०।१४०-१४४) इति । अयमर्थः—अश्वमेधस्य खलु एकविंशतिर्यूपाः । दक्षिणोत्तरभागयोः दश दश, मध्ये एकविंशोऽपरः उद्दालवृक्षजो यो यूपः सोऽग्निष्ठः । तस्मिन् अश्वतूपरगोमृगाख्यान् परितः अङ्गेषु भवाः पर्यङ्ग्याः कृष्णग्रीवा आग्नेया इत्यादिकाः, तान् पशून् अश्वावयवेषु वक्ष्यमाणेषु नियुनक्ति, रोहितादीन् सौर्यान्तान् वक्ष्यमाणान् पशून् इतरेषु विंशतियूपेषु प्रत्येकं पञ्चदश पञ्चदश नियुनक्ति । कपिञ्जलप्रभृतीन् पृषतान् तान् आरण्यान् यूपेषु इतरेषु त्रयोदश त्रयोदश स्थापयेत् । तत्र अग्निष्ठे नियोक्तव्यानां पशुदेवतासम्बन्धमाह-

**अश्वस्तू॑प॒रो गो॑मृ॒गस्ते प्रा॑जाप॒त्याः ॥ १ ॥**

अश्वः । तूपरः । गोमृगः । ते । प्राजापत्याः ॥ १ ॥

अश्नुयत् इति अश्वः । "प्रजापतेरक्ष्यश्वयत्तत्परापतत्ततोऽश्वः समभवद् यदश्वयत्तदश्वस्याश्वत्वम्" इति श्रुतेः ( श०, का० १३ । प्र० २ । ब्रा० ७ । अ० ३ । ब्रा० १ । क० १ ) । तूपरः शृङ्गहीनश्छागः, गोमृगः गोसदृशो मृगो गवयः, योऽसौ प्रोक्षणादिसंस्कारेण सुसंस्कृतः प्रधानभूताश्वः स च तूपरमृगौ चैते त्रयः प्राजापत्याः प्रजापतिदेवताकाः । "प्रजापतये त्वा" ( श०, का० १३ । प्र० १ । ब्रा० २ । अ० १ । ब्रा० २ । क० ५ ) इत्यादि उपकरणीया इत्यर्थः । [ —अ० २६।१।१ ]

अथ पर्यङ्ग्यान् पशून् आह—

**कृ॒ष्णग्री॑व आ॒ग्ने॒यो र॒राटे॑ ।**
**पु॒रस्ता॑त् सारस्व॒ती मे॒ष्य॑धस्ता॒द्धन्वोः॑ ।**
**आ॒श्वि॒ना अ॒धोरा॑मौ बा॒ह्वोस्सौ॑मापौ॒ष्णश्श्या॒मो नाभ्यां॑ सौर्य॒या॒मौ ।**
**श्वे॒तश्च॑ कृ॒ष्णश्च॑ पा॒र्श्वयोः॑ ।**
**त्वा॒ष्ट्रौ लो॑मशसक्थौ स॒क्थ्योर्वा॑य॒व्यः॑ श्वे॒तः पुच्छ॒ इन्द्रा॑य स्वप॒स्या॑य वे॒हद्॑ वैष्ण॒वो वा॑म॒नः ॥ २ ॥**

कृष्णग्रीवः । आग्नेयः । रराटे ॥
पुरस्तात् । सारस्वती । मेषी । अधस्तात् । हन्वोः ॥
आश्विनौ । अधोरामौ । बाह्वोः । सोमापौष्णः । श्यामः । नाभ्याम् । सौर्ययामौ ॥
श्वेतः । च । कृष्णः । च । पार्श्वयोः ॥
त्वाष्ट्रौ । लोमशसक्थौ । सक्थ्योः । वायव्यः । श्वेतः । पुच्छे । इन्द्राय । स्वपस्याय । वेहत् ।
वैष्णवः । वामनः ॥ २ ॥

अत्र सर्वत्र पशुविधिषु यत्र यो जातिविशेषद्योतकशब्दः श्रूयते तत्र तज्जातीय एव पशुषु कर्त्तव्यः । विशेषश्रवणाभावे तु अज एव पशुर्ज्ञातव्यः । कृष्णा ग्रीवा यस्यासौ कृष्णग्रीवः । आग्नेयोऽग्निदेवत्यः । रराटे, छान्दसो रेफः, ललाटे । अश्वस्य ललाटे स्थाने । पुरस्तात् पूर्वस्यां दिशि कृष्णग्रीवं छागम् अग्न्यर्थं नियुञ्ज्यात् । सारस्वती, सरस्वतीदेवत्या मेषी अश्वहन्वोः हनुप्रदेशयोः अधस्तात् नियोज्या । आश्विनौ अश्विदेवत्यौ, अधोरामौ कायस्याधोभागः रामौ रमणीयशुक्लवर्णौ ययोस्तौ अधोरामौ, एवंभूतावजौ बाह्वोरश्वस्य पूर्वपादयोर्नियोजनीयौ । सोमश्च पूषा च सोमपूषणौ, तौ देवते यस्य स तथोक्तः । श्यामः श्यामवर्णः एवंभूतश्छागः अश्वस्य नाभ्यां नाभिप्रदेशस्य अधस्तात् नियोक्तव्यः । सूर्यो देवता यस्यासौ सौर्यः । यमो देवता यस्यासौ यामः, सौर्यश्च यामश्च सौर्ययामौ । तौ च यथाक्रमं श्वेतः श्वेतवर्णश्च कृष्णः कृष्णवर्णश्च भवतः । तौ अश्वस्य पार्श्वयोः नियोक्तव्यौ । लोमशौ लोमबहुले सक्थिनी ऊरुमूले ययोस्तौ पशू त्वाष्ट्रौ त्वष्टृदेवत्यौ, अश्वस्य सक्थ्योः सक्थिप्रदेशयोर्नियोजनीयो । श्वेतः शुक्लवर्णो वायव्यो वायुदेवत्यः पशुः पुच्छे अश्वस्य पुच्छदेशे नियोक्तव्यः । स्वपस्याय, अपसि कर्मणि साधु अपस्यं धनम्, शोभनम् अपस्यं यस्य स तथोक्तः, तादृशाय इन्द्राय । वेहद् गर्भोपघातकः पशुर्नियोक्तव्यः । वामनः खर्वावयवः पशुः वैष्णवो विष्णुदेवत्यो नियोक्तव्यः । इत्थम् अग्निष्ठे यूपे अश्वे च नियोक्तव्याः पञ्चदश पशवः देवतासम्बन्धेन विगणिताः ।

[ —अ० २६।१।२ ]

तथा इतरेषु यूपेषु नियोक्तव्यानां पशूनां देवतासम्बन्धेन विधानम् इतः परम् आध्यायसमाप्तेः [१]प्रवर्तते, तच्च किंचित् किंचिद् उपादाय व्याख्यायते—

**रोहि॑तो धू॒म्ररो॑हितः क॒र्कन्धु॑रोहित॒स्ते सौ॒म्या ब॒भ्रुर॑रु॒णब॑भ्रुः शु॒क॑बभ्रु॒स्ते वा॑रु॒णाः ।
शि॒ति॒रन्ध्रो॒ऽन्यत॑शिशतिरन्ध्रस्सम॒न्तशि॑तिरन्ध्रस्ते सा॑वि॒त्राः शि॑ति॒बा॒हुर॒न्यत॑शिशति॑बाहुस्सम॒न्तशि॑तिबाहुस्ते बा॑र्हस्प॒त्याः ।
पृष॑ती क्षु॒द्रपृ॑षती स्थू॒लपृ॑ष॒ती ता मै॑त्रावरु॒ण्यः॑ ॥ ३ ॥**

रोहितः । धूम्ररोहितः । कर्कन्धुरोहितः । ते । सौम्याः । बभ्रुः । अरुणबभ्रुः । शुकबभ्रुः । ते । वारुणाः ॥
शितिरन्ध्रः । अन्यतःशितिरन्ध्रः । समन्तशितिरन्ध्रः । ते । सावित्राः । शितिबाहुः । अन्यतःशितिबाहुः । समन्तशितिबाहुः । ते । बार्हस्पत्याः ॥
पृषती । क्षुद्रपृषती । स्थूलपृषती । ताः । मैत्रावरुण्यः ॥ ३ ॥

१. प्रवर्तिष्यते, उ० म्यु० ।

रोहितो धूम्ररोहितः कर्कन्धुरोहितः एवंरूपा ये त्रयः पशवस्ते सौम्याः, सोमदेवतायै नियोक्तव्याः, श्वेतबभ्र्वादिगुणवाचिनोऽपि शब्दाः तदभिधानद्वारेण गुणिनि पशौ पर्यवस्यन्ति। बभ्रुः पिङ्गलः, अरुणबभ्रुः, अरुणवर्णमिश्रः कपिलः पशुः अरुणबभ्रुः, शुकवर्णमिश्रः बभ्रुः शुकबभ्रुः इति। एते त्रयः पशवः वारुणा वरुणदेवत्याः। सर्वत्र नियोजनार्थं पदम् अनुसञ्जनीयम्। शितिः कृष्णवर्णो रन्ध्रं शुषिरमिव दृश्यते अस्मिन् पशौ शितिरन्ध्रः। अन्यतः एकतः एकस्मिन् पार्श्वे रन्ध्राकारः कृष्णवर्णो यस्यासौ अन्यतःशितिरन्ध्रः। स्वभावतः शुक्लवर्णे पशौ समन्तात् सर्वस्मिन् गात्रे रन्ध्रसमाः कृष्णबिन्दवो यस्यासौ समन्तशितिरन्ध्रः। एवंविधा ये पशवस्ते सावित्राः सवितृदेवतार्थत्वे विनियोक्तव्याः। शित्या कृष्णवर्णेन व्याप्तौ बाहू पूर्वपादौ यस्यासौ शितिबाहुः, यद्वा शितिः श्वैत्यं तद्युक्तौ बाहू यस्य स तथोक्तः। अन्यतः एकतः शिती बाहू यस्यासौ अन्यतःशितिबाहुः। समन्तशितिबाहुः। त एते पशवो बार्हस्पत्या बृहस्पतिदेवताकाः। पृषती, पृषन्ति श्वेतबिन्दवो यस्याः सा पृषती। क्षुद्रपृषती, क्षुद्राणि सूक्ष्माणि पृषन्ति बिन्दवो यस्याः सा क्षुद्रपृषती। स्थूलबिन्दुभिर्युक्ता स्थूलपृषती। एवंभूता यास्तिस्रः पशवस्ता मैत्रावरुण्यः, मित्रावरुणदेवत्याः। एवं पञ्चदशपशुके एको गणो मतः।

[ —अ० २६।१।३ ]

अन्यं गणमाह—

> शुद्धवालस्सर्वशुद्धवालो मणिवालस्त आश्विनाः।
> श्येतश्श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णा यामाः।
> अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः ॥ ४ ॥

शुद्धवालः। सर्वशुद्धवालः। मणिवालः। ते। आश्विनाः ॥
श्येतः। श्येताक्षः। अरुणः। ते। रुद्राय। पशुपतये। कर्णाः। यामाः ॥
अव। लिप्ताः। रौद्राः। नभोरूपाः। पार्जन्याः ॥ ४ ॥

शुद्धो वालः केशो यस्यासौ शुद्धवालः पशुः। सर्वशुद्धवालः सर्वतः शुद्धः वालो यस्यासौ सर्वशुद्धवालः। मणिभिः अलङ्कृत इव वालो यस्यासौ मणिवालः। एवंविधाः पशवस्ते आश्विना अश्विदेवत्याः। श्येतः शुक्लवर्णः पशुः, श्येताक्षः श्येते शुक्लवर्णे अक्षिणी यस्य स तथोक्तः, अरुणः अव्यक्तरागः पशुः। य एवंरूपाः पशवः ते पशुपतये रुद्राय, पशुपालनगुणविशिष्टाय रुद्रदेवतार्थं नियोक्तव्याः। कर्णा विशिष्टकर्णावयवाः त्रयः पशवः, यामाः यमदेवत्याः।

अत्र यद्यपि त्रित्वसंख्या पशुविशेषणतया नोपात्ता तथापि वसन्ताय कपिञ्जलानिति वाक्यं विषयीकृत्य बहुवचनस्य त्रित्वे पर्यवसानं मीमांसया सिद्धान्तितम्। अत एवमादिषु बहुवचनेषु तदुपपत्तये त्रित्वसंख्यैव पशुविशेषणतया योजनीया। अवलिप्ताः अवलेपं गर्वं प्राप्तास्त्रयः पशवो रौद्राः रुद्रदेवत्याः। नभोरूपा आकाशवन्नीलवर्णास्त्रयः पशवः पार्जन्याः पर्जन्यदेवत्याः। [—अ० २६।१।४]

अथान्यगणमाह।

> पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः।
> फल्गूर्लोहितोर्णी पलक्षी ताः सारस्वत्यः।
> प्लीहाकर्णः शुण्ठाकर्णोऽध्यालोहकर्णस्ते त्वाष्ट्राः।

कृष्णग्रीवश्शितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः।
कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्त उषस्याः ॥ ५ ॥
पृश्निः। तिरश्चीनपृश्निः। ऊर्ध्वपृश्निः। ते। मारुताः॥
फल्गूः। लोहितोर्णी। पलक्षी। ताः। सारस्वत्यः॥
प्लीहाकर्णः। शुण्ठाकर्णः। अधि। आ। लोहकर्णः। ते। त्वाष्ट्राः॥
कृष्णग्रीवः। शितिकक्षः। अञ्जिसक्थः। ते। ऐन्द्राग्नाः॥
कृष्णाञ्जिः। अल्पाञ्जिः। महाञ्जिः। ते। उषस्याः॥ ५॥

पृश्निरल्पतनुः[1] तीर्यक्प्रमाणेन अल्पशरीरः तिरश्चीनपृश्निः, ऊर्ध्वप्रमाणेन आयामेन अल्पाकार ऊर्ध्वपृश्निः। एवंभूता ये त्रयः पशवस्ते मारुता मरुद्देवत्याः। फल्गूः संपुष्टाङ्गः पशुः, लोहितोर्णी लोहिता रक्तवर्णा रोमावलिर्यस्याः सा लोहितोर्णी। पलक्षी शुभ्रवर्णा एता अजाः, ताः सारस्वत्यः सरस्वतीदेवताकाः। प्लीहाकर्णः प्लीहानाम मांसविशेषः, तत्प्रख्यौ कर्णौ यस्यासौ प्लीहाकर्णः। शुण्ठाकर्णः[2], अध्यालोहकर्णो रक्तकर्णः, एवंरूपा ये पशवस्ते त्वाष्ट्राः त्वष्टृदेवत्याः। कृष्णा ग्रीवा यस्यासौ कृष्णग्रीवः शितिकक्षः श्वेतकक्षः, अञ्जिसक्थः अभिव्यक्तोरुः, ये एवंगुणविशिष्टाः पशवस्ते ऐन्द्राग्ना इन्द्राग्निदेवत्याः। कृष्णाञ्जिः कृष्णवर्णाभिव्यक्तिमान् अजः, अल्पाञ्जिः ईषदभिव्यक्तिमान्, महाञ्जिर्महापुंस्त्वाभिव्यक्तिमान्। एवंगुणा ये पशवस्ते उषस्या उषोदेवत्याः। [—अ०२६।१।५]

अथापरं गणमाह—

शिल्पा वैश्वदेव्यो रोहिण्यस्त्र्यवयो वाचेऽविज्ञाता अदित्यै।
सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्यः॥ ६ ॥
शिल्पाः। वैश्वदेव्यः। रोहिण्यः। त्र्यवयः। वाचे। अविज्ञाताः। अदित्यै॥
सरूपाः। धात्रे। वत्सतर्यः। देवानाम्। पत्नीभ्यः॥ ६॥

शिल्पाश्चित्रवर्णाः तिस्रोऽजाः वैश्वदेव्यः विश्वेदेवदेवताकाः। रोहिण्यो रोहितवर्णास्तिस्रोऽवयः। वाचे वाग्देवतायै नियोक्तव्याः। अविज्ञाताः यथोक्तकृष्णादिचिह्नविज्ञानशून्यास्त्रयः पशवः, अदित्यै अदितिदेवताकाः[3]। सरूपाः समानरूपाः येऽजास्ते धात्रे नियोक्तव्याः। वत्सतर्यः उपरतस्तनपानाः। तिस्रो वत्साः देवानां पत्नीभ्यः उपकर्त्तव्याः। [—अ० २६।१।६]

इति प्रथमोऽनुवाकः।

[ द्वितीयोऽनुवाकः ७–११ ]

तथापरं गणमाह—

कृष्णग्रीवा आग्नेयाश्शितिभ्रवो वसूनाꣳ रोहिता रुद्राणाम्।
श्वेता अवरोकिण आदित्यानान्नभोरूपाः पार्जन्याः॥ ७ ॥

---

१. पशुः उ. स्यु.।
२. ह्रस्वकर्ण इत्यर्थः।
३. देवता... ।

कृष्णग्रीवाः । आग्नेयाः । शितिभ्रवः । वसूनाम् । रोहिताः । रुद्राणाम् ॥
श्वेताः । अव । रोकिणः । आदित्यानाम् । नभोरूपाः । पार्जन्याः ॥ ७ ॥

कृष्णवर्णा ग्रीवा येषां ते कृष्णग्रीवास्ते त्रयः पशवः, आग्नेयाः अग्निदेवताकाः । शितिभ्रवः श्वेतवर्णा भ्रूः येषां ते यथोक्ताः, तथाविधास्त्रयः पशवो वसूनां देवानामर्थे नियोज्या भवन्ति । रोहिताः लोहितवर्णास्त्रयः पशवो रुद्राणां रुद्राख्यदेवगणस्य । श्वेताः श्वेतवर्णा अवरोकिणः अवलोकनविशिष्टास्त्रयः पशवः आदित्यानां चाङ्गीभूता नभोरूपा इति व्याख्यातम् ।
[—अ० २६।२।१]

अथान्यं गणमाह—

उन्नत ऋषभो वामनस्त ऐन्द्रावैष्णवा उन्नतश्शितिबाहुश्शितिपृष्ठस्त ऐन्द्राबार्हस्पत्याः ।
शुकरूपा वाजिनाः कल्माषा आग्निमारुताश्श्यामाः पौष्णाः ॥ ८ ॥

उत् । नतः । ऋषभः । वामनः । ते । ऐन्द्रावैष्णवाः । उत् । नतः । शितिबाहुः ।
शितिपृष्ठः । ते । ऐन्द्राबार्हस्पत्याः ॥
शुकरूपाः । वाजिनाः । कल्माषाः । आग्निमारुताः । श्यामाः । पौष्णाः ॥ ८ ॥

उन्नतः उच्छ्रिताङ्गः, ऋषभः प्रसिद्धः, वामनः कुब्जः, एवंभूता ये पशवस्ते ऐन्द्रावैष्णवाः इन्द्राविष्णुभ्यां नियोक्तव्याः । उन्नतः उच्छ्रितः शितिबाहुः श्वेतबाहुः, शुक्लवर्णपूर्वपादः शितिपृष्ठः श्वेतपृष्ठः, ते एते त्रयः पशवः ऐन्द्राबार्हस्पत्याः इन्द्रबृहस्पतिदेवताकाः । शुकरूपाः शुकसमानवर्णाः त्रयः पशवा वाजिनः वाजिदेवताकाः, कृष्णवर्णाः त्रयः अजाः आग्निमारुताः, अग्निमरुद्देवताकाः । श्यामाः श्यामवर्णाः, त्रयः पशवः पौष्णाः पूषदेवत्याः । [—अ० २६।२।२]

अथापरं गणमाह—

एता ऐन्द्राग्ना द्विरूपा अग्नीषोमीया वामना अनड्वाह आग्नावैष्णवाः ।
वशा मैत्रावरुण्योऽन्यत एन्यो मैत्र्यः ॥ ९ ॥

एताः । ऐन्द्राग्नाः । द्विरूपाः । अग्नीषोमीयाः । वामनाः । अनड्वाहः । आग्नावैष्णवाः ॥
वशाः । मैत्रावरुण्यः । अन्यतः । एन्यः । मैत्र्यः ॥ ९ ॥

एता एतवर्णाः सन्ध्यावर्णाः ये त्रयः पशवस्ते ऐन्द्राग्नाः इन्द्राग्निदेवत्याः । द्विरूपाः शुक्ल-कृष्णात्मकरूपद्वयेन युक्ताः । त्रयः पशवः अग्नीषोमीयाः अग्नीषोमदेवताकाः, वामनाः ह्रस्वाः, अनड्वाहः भारोद्वहनदक्षबलीवर्दाः, आग्नावैष्णवाः अग्निविष्णुदेवताकाः, वशाः बन्ध्याः, तिस्रो मैत्रावरुण्यः मित्रावरुणदेवताकाः, अन्यतः अन्यतराः एन्यः श्यामादिगुणयुक्ताः तिस्रो वशा मैत्र्यः मित्रदेवत्याः ।
[—अ० २६।२।३]

अथापरं गणमाह—

कृष्णग्रीवा आग्नेया बभ्रवस्सौम्याः श्वेता वायव्या अविज्ञाता अदित्यै ।
सरूपा धात्रे वत्सतर्यो देवानाम्पत्नीभ्यः ॥ १० ॥

कृष्णग्रीवाः । आग्नेयाः । बभ्रवः । सौम्याः । श्वेताः । वायव्याः । अविज्ञाताः । अदित्यै ॥
सरूपाः । धात्रे । वत्सतर्यः । देवानाम् । पत्नीभ्यः ॥ १० ॥

कृष्णग्रीवास्त्रयः पशवः आग्नेयाः, बभ्रवः कपिलवर्णास्त्रयः पशवः सौम्याः सोमदेवत्याः । श्वेताः शुक्लवर्णास्त्रयः पशवो वायव्याः वायुदेवत्याः । लक्षणतोऽविज्ञाता अज्ञायमानास्त्रयः पशवः अदित्यै अदितिदेवतायै नियोक्तव्याः । सरूपाः समानरूपाः एकरूपास्त्रयः पशवः धात्रे इत्यादि पूर्ववत् । [—अ० २६।२।४]

अथान्यं गणमाह—

कृष्णा भौमा धूम्रा आन्तरिक्षा बृहन्तो दिव्याः ।
शबला वैद्युतास्सिध्मास्तारकाः ॥११॥

पदच्छेदः स्पष्टः ॥११॥

कृष्णाः कृष्णवर्णास्त्रयः पशवः भौमाः भूमिदेवत्याः, धूम्राः धूमवर्णास्त्रयः पशवः आन्तरिक्षाः अन्तरिक्षदेवताकाः । बृहन्तः स्थूलकायास्त्रयः पशवो दिव्याः द्युदेवत्याः । शबलाः मिश्रवर्णाः वैद्युताः विद्युद्देवत्याः सिध्माः पशुविशेषाः तारकाः नक्षत्रदेवत्याः । [—अ० २६।२।५]

इति द्वितीयोऽनुवाकः ।

[ तृतीयोऽनुवाकः १२—१६ ]

धूम्रान्वसन्तायालभते श्वेतान्ग्रीष्माय कृष्णान् वर्षाभ्योऽरुणाञ्छरदे ।
पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय ॥ १२ ॥

धूम्रान् । वसन्ताय । आ । लभते । श्वेतान् । ग्रीष्माय । कृष्णान् । वर्षाभ्यः । अरुणान् । शरदे ॥
पृषतः । हेमन्ताय । पिशङ्गान् । शिशिराय ॥ १२ ॥

धूम्रान् धूम्रवर्णान् अजान्, वसन्ताय वसन्तर्त्वभिमानिदेवाय, आलभते आलम्भनं कुर्यात् । श्वेतान् शुक्लवर्णान् ग्रीष्माय ग्रीष्माभिमानिदेवतायै आलभत इत्यनुषङ्गः । कृष्णान् कृष्णवर्णान् वर्षाभ्यो वर्षर्तुदेवताभ्यः । अरुणान् अरुणवर्णान्, शरदे शरदृतवे । पृषतः पृषद्वर्णान्, हेमन्ताय हेमन्तर्त्वभिमानिदेवतायै । पिशङ्गान् लोहितमिश्रकपिलवर्णान् च पशून्; शिशिराय शिशिरर्त्वभिमानिदेवतायै । [—अ० २६।३।१]

अथान्यं गणमाह—

त्र्यवयो गायत्र्यै पञ्चावयस्त्रिष्टुभे दित्यवाहो जगत्यै ।
त्रिवत्सा अनुष्टुभे तुर्यवाह उष्णिहे ॥ १३ ॥

त्र्यवयः । गायत्र्यै । पञ्चावयः । त्रिष्टुभे । दित्यवाहः । जगत्यै ॥
त्रिवत्साः । अनुष्टुभे । तुर्यवाहः । उष्णिहे ॥ १३ ॥

त्रयः अवयः मेषाः, गायत्र्यै गायत्र्यभिमानिदेवतायै नियोक्तव्याः । यद्वा अविशब्देन षण्मासात्मकः काल उच्यते । तथा च त्र्यविः अष्टादशमासः पशुः, तथाविधास्त्रयः पशव इति ।

पञ्चाविस्त्रिशन्मासः पशुः, तथाविधास्त्रयः पशवः त्रिष्टुभे [1]त्रिष्टुबभिमानिदेवतायै नियोक्तव्याः दित्यै खण्डनार्थं वहन्तीति दित्यवाहः, ईदृगवस्थास्त्रयः पशवो जगत्यै जगत्यभिमानिदेवतायै। त्रिवत्सास्त्रयः पशवः अनुष्टुभे अनुष्टुब्देवतायै नियोक्तव्याः। तुर्यवाहः चतुर्वत्सराः पशवः उष्णिहे उष्णिक्छन्दोऽभिमानिदेवतायै नियोक्तव्याः। [—अ० २६।३।२]

अथान्यं गणमाह—

**पृष्ठवाहो विराज उक्षाणो बृहत्या ऋषभाः ककुभे।**
**अनड्वाहः पङ्क्त्यै धेनवोऽतिच्छन्दसे ॥ १४ ॥**

**पष्ठवाहः। विराजे। उक्षाणः। बृहत्यै। ऋषभाः। ककुभे॥**
**अनड्वाहः। पङ्क्त्यै। धेनवः। अतिच्छन्दसे॥ १४॥**

पष्ठवाहः पृष्ठभागेन वोढुं शक्ताः[2] पञ्चवर्षास्त्रयः पशवो विराजे विराट्छन्दोदेवतायै, उक्षाणः सेचनसमर्था अनड्वाहः, बृहत्यै बृहतीछन्दोदेवतायै, ऋषभाः अन्नकर्षणव्यापारास्त्रयः पशवः ककुभे ककुप्छन्दोदेवतायै, अनड्वाहः अनोवहनदक्षास्त्रयो बलीवर्दाः, पङ्क्त्यै पङ्क्तिच्छन्दोदेवतायै, धेनवो नवप्रसूता गावस्तिस्रः अतिच्छन्दसे। शक्कर्य इति शक्कर्यादिकम् अतिच्छन्दः, तदभिमानिदेवतायै। "यत् पञ्चदशिन आलभते अर्द्धमासानेव तैर्यजमानो अवरुन्ध" ( श०, का० १३। प्र० १। ब्रा० १४। अ० २। ब्रा० ५। क० १ ) इति ब्राह्मणप्रतिपादिताः पञ्चदशिनः पशवो गताः। [—अ० २६।३।३]

अथ "चातुर्मास्यान् पशून् आलभत" (श०, का० १३। प्र० १। ब्रा० १४। अ० २। ब्रा० ५। क० २ ) इति विहिताश्चातुर्मास्यदेवताकाः पशवो दृश्यन्ते[3]। तत्र वैश्वदेवकर्मणि अग्न्यादयो या देवतास्तद्देवत्यान् पशून् आह—

**कृष्णग्रीवा आग्नेया बभ्रवः सौम्या उपध्वस्ताः सावित्रा वत्सतर्यः सारस्वत्यः श्यामाः पौष्णाः।**
**पृश्नयो मारुता बहुरूपा वैश्वदेवा वशा द्यावापृथिवीयाः ॥१५॥**

**कृष्णग्रीवाः। आग्नेयाः। बभ्रवः। सौम्याः। उप। ध्वस्ताः। सावित्राः। वत्सतर्यः। सारस्वत्यः। श्यामाः। पौष्णाः॥**
**पृश्नयः। मारुताः। बहुरूपाः। वैश्वदेवाः। वशाः। द्यावापृथिवीयाः॥ १५॥**

कृष्णग्रीवास्त्रयः पशवः, आग्नेयाः अग्निदेवत्याः कार्याः। बभ्रवः पिङ्गलवर्णास्त्रयः पशवः सौम्याः सोमदेवत्याः, उपध्वस्ताः उपध्वंसनगुणविशिष्टास्त्रयः पशवः सावित्राः सवितृदेवत्याः। वत्सतर्यस्तिस्रः सारस्वत्यः सरस्वतीदेवताकाः, श्यामाः श्याम[4]वर्णाः, पौष्णाः पूषदेवत्याः, पृश्नयः अल्पकायाः, मारुताः मरुद्देवत्याः, बहुरूपा नानारूपाः, वैश्वदेवाः विश्वेदेवदेवताकाः, वशाः वन्ध्याः अजाः, द्यावापृथिवीयाः द्यावापृथिवीदेवत्याः। [—अ० २६।३।४]

---

१. त्रिष्टुप्छन्दोऽभिमानि उ. म्यु.।
२. शक्याः उ. म्यु.।
३. प्रदश्यन्ते उ. म्यु.।
४. ल उ. म्यु.।

अथ वरुणप्रघासाख्ये द्वितीयपर्वणि या देवतास्तद्देवत्यान् पशून् आह—

**उ॒क्तास्सं॑च॒रा ए॒ता॑ ऐ॑न्द्रा॒ग्नाः ।**
**कृ॒ष्णा वा॑रु॒णाः पृश्न॑यो मारु॒ताः का॒यास्तू॑प॒राः ॥ १६ ॥**

उक्ताः । सम् । चराः । एताः । ऐन्द्राग्नाः ॥
कृष्णाः । वारुणाः । पृश्नयः । मारुताः । कायाः । तूपराः ॥ १६ ॥

अग्नीषोमसवितृसरस्वतीपूषात्मकं देवतापञ्चकं चातुर्मास्येषु चतुर्ष्वपि पर्वसु सञ्चरति अनुवर्तत इति यावत् । अतस्तद्देवत्याः कृष्णग्रीवादयः पशवः सञ्चरा इत्युच्यन्ते । वैश्वदेववरुणप्रघासेष्वपि सञ्चराः सञ्चरन्तः कृष्णग्रीवाद्याः पशवः उक्तास्तेषां सञ्चर इत्याख्या, तथैव वरुणप्रघासदेवतापशुत्वेन पशुर्नियोक्तव्यः । ऐन्द्राग्नाः इन्द्राग्निदेवताकास्त्रयः, एताः एतवर्णाः सन्ध्यावर्णाः अजा नियोक्तव्याः । कृष्णाः कृष्णवर्णाः, वारुणाः वरुणदेवत्याः, पृश्नयः अल्पतनवः शुभ्रवर्णा वा त्रयः पशवः, मारुताः मरुद्देवताकाः । तूपराः शृङ्गशून्यास्त्रयः पशवः कायाः कः प्रजापतिस्तद्देवताकाः ।
[ —अ० २६।३।५ ]

इति तृतीयोऽनुवाकः ।

[ चतुर्थोऽनुवाकः १७—२१ ]

अथ साकमेधे [1]पर्वानुष्ठानात् पूर्वदिवसे प्राण्यङ्गतया अनुष्ठेयानामिष्टीनाम् अग्निरनीकवान् मरुतः सान्तपना इत्याद्या या देव्यस्तद्देवत्यान् पशूनाह—

**अ॒ग्नये॒ऽनी॑कवते प्रथम॒जाना॑लभते म॒रुद्भ्य॑स्सान्तप॒नेभ्य॑स्सवा॒त्यान्म॒रुद्भ्यो॑**
**गृहमे॒धिभ्यो॒ बष्कि॑हान् ।**
**म॒रुद्भ्यः॑ क्री॒डिभ्य॑स्सꣳसृ॒ष्टान्म॒रुद्भ्य॒स्स्वत॑वद्भ्यो॒ऽनुसृ॒ष्टान् ॥ १७ ॥**

अग्नये । अनीकवते । प्रथमजान् । आ । लभते । मरुद्भ्यः । सान्तपनेभ्यः । सवात्यान् ।
मरुद्भ्यः । गृहमेधिभ्यः । बष्किहान् ॥
मरुद्भ्यः । क्रीडिभ्यः । सम् । सृष्टान् । मरुद्भ्यः । स्वतवद्भ्यः । अनु । सृष्टान् ॥ १७ ॥

अनीकवते स्वसैन्ययुक्ताय अग्नये, प्रथमजान् प्रथमगर्भोत्पन्नान् त्रीन् अजान् आलभते । सान्तपनेभ्यः सन्तपनो मध्यगतः सूर्यः, तत्सम्बन्धिभ्यो मरुद्भ्यः, सवात्यान् समानगर्भोत्पन्नान् त्रीन् अजान् आलभते । गृहमेधिभ्यो मरुद्भ्यः, बष्किहान् चिरप्रसूतान्, क्रीडनशीलेभ्यो मरुद्भ्यः संसृष्टान् संसर्गधर्मयुक्तान्, स्वतवद्भ्यः स्वेभ्यः[2] मरुद्भ्यः, अनुसृष्टान् अनुसर्गधर्मयुक्तान् आलभत इति सर्वत्रानुषङ्गः ।
[ —अ० २६।४।१ ]

अथ साकमेधपर्वणि प्रधानभूता या महेन्द्रेष्टिस्तस्या या देवतास्तद्देवत्यान् पशून् आह—

**उ॒क्तास्सं॑च॒रा ए॒ता॑ ऐ॑न्द्रा॒ग्नाः ।**
**प्रा॒शृ॒ङ्गा मा॑हे॒न्द्रा ब॑हुरू॒पा वै॑श्वक॒र्म॒णाः ॥ १८ ॥**

---

१. यज्ञानुष्ठान उ. म्यु. ।   २. स्वावयवकृतबलेभ्यः उ. म्यु. ।

उक्ताः । सम् । चराः । एताः । ऐन्द्राग्नाः ॥
प्राशृङ्गाः । माहेन्द्राः । बहुरूपाः । वैश्वकर्मणाः ॥ १८ ॥

संचरा वैश्वदेवाख्याः प्रथमपर्वणः संचरन्तः कृष्णग्रीवा आग्नेया इत्यादिकाः पञ्चसंघाः, पशवः अत्रापि उक्ता वेदितव्याः । एता एतवर्णाः, ऐन्द्राग्नाः इन्द्राग्निदेवत्याः, प्राशृङ्गाः प्रकृष्टशृङ्गयुक्ताः, माहेन्द्रा महेन्द्रदेवत्याः, बहुरूपाः नानारूपाः, वैश्वकर्मणाः विश्वकर्मदेवत्याः । [—अ० २६।४।२]

माहेन्द्राद् ऊर्द्ध्वं[1] या साकमेधाङ्गभूतपित्र्यादिदेवतास्तद्देवत्यान् पशून् आह—

**धू॒म्रा ब॒भ्रुनी॑काशाः पितॄ॒णाᳬं सोम॑वताम्ब॒भ्रवो॑ धू॒म्रनी॑काशाः पितॄ॒णाम्ब॒र्हि॒षदा॑म् ।**
**कृ॒ष्णा ब॒भ्रुनी॑काशाः पितॄ॒णाम॒ग्निष्वा॒त्तानां॑ कृ॒ष्णाः॑ पृष॑न्तस्त्रैय॒म्ब॒काः ॥ १९ ॥**

धूम्राः । बभ्रुनीकाशाः । पितॄणाम् । सोमवताम् । बभ्रवः । धूम्रनीकाशाः । पितॄणाम् । बर्हिषदाम् ।।
कृष्णाः । बभ्रुनीकाशाः । पितॄणाम् । अग्निष्वात्तानाम् । कृष्णाः । पृषन्तः । त्रैयम्बकाः ॥१९॥

साकमेधे महापितृयज्ञे पितरः सोमवन्तः पितरो बर्हिषदः पितरोऽग्निष्वात्ता इति सोमवद्बर्हिषदग्निष्वात्तविशेषणविशिष्टास्तिस्रो देवताः । तत्र सोमवतां पितॄणां धूम्राः कृष्णमिश्रलोहितमिश्रवर्णाः, बभ्रुनीकाशाः कपिलवर्णसदृशास्त्रयः पशवो नियोक्तव्याः । बभ्रवः कपिलवर्णाः, धूम्रनीकाशाः धूम्रवर्णसदृशास्त्रयः पशवो बर्हिषदां नियोक्तव्याः । कृष्णाः कृष्णवर्णाः, बभ्रुनीकाशाः कपिलवर्णसदृशाः पितॄणाम् अग्निष्वात्तानां नियोक्तव्याः । पितृयज्ञानन्तरम् "प्रतिपुरुषम् एककपालान् निर्वपति" । इति यजमानसंख्याकाः पुरोडाशा विहिताः । अत्र तत्स्थाने कृष्णाः कृष्णवर्णाः, पृषन्तः बिन्दुयुक्तास्त्रयः पशवस्त्रैयम्बकाः त्र्यम्बकदेवत्याः कार्याः । [ —अ० २६।४।३ ]

अथ शुनासीरीये पर्वणि या देवतास्तद्देवत्यान् पशून् आह—

**उ॒क्तास्स॑ञ्च॒रा ए॒ताश्शु॑नासी॒रीयाः॑ ।**
**श्वे॒ता वा॑य॒व्याः॑ श्वे॒तास्सौ॒र्याः॑ ॥ २० ॥**

उक्ताः । सम् । चराः । एताः । शुनासीरीयाः ॥
श्वेताः । वायव्याः । श्वेताः । सौर्याः ॥ २० ॥

कृष्णग्रीवा आग्नेया इत्यादि पञ्चदेवत्याः पशुसंघाः प्रागुक्ता अपि वेदितव्याः । एताः एतवर्णाः, शुनासीरीयाः शुनासीरः इन्द्रः, शुनासीरदेवत्याः, श्वेताः श्वेतवर्णास्त्रयश्च पशवः, वायव्याः वायुदेवत्याः, श्वेताः श्वेतवर्णाश्च त्रयः पशवः सौर्याः सूर्यदेवत्याः कार्याः ।

इत्थं चातुर्मास्यपशवो गताः । "अश्वस्तूपर" इत्यारभ्य "श्वेताः सौर्याः" इत्येव मन्त्रा उक्ताः । सर्वे पशवोऽग्निष्ठादिषु एकविंशतिसंख्यादिषु यूपेषु नियोक्तव्याः । ये आरण्याः पशवस्ते आध्यायपरिसमाप्तेर्वक्ष्यन्ते । [ —अ० २६।४।४ ]

---

१. ऊर्द्ध्वगाः उ. म्यु. ।

तत्रैकं गणमाह—

**वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान् वर्षाभ्यस्तित्तिरींञ्छरदे वर्त्तिकाः ।**
**हेमन्ताय कक्कराञ्छिशिराय विकक्करान् ॥ २१ ॥**

वसन्ताय । कपिञ्जलान् । आ । लभते । ग्रीष्माय । कलविङ्कान् । वर्षाभ्यः । तित्तिरीन् । शरदे । वर्त्तिकाः ॥
हेमन्ताय । ककरान् । शिशिराय । विककरान् ॥ २१ ॥

वसन्ताय वसन्तर्त्वभिमानिदेवतायै, कपिञ्जलान् चित्रपक्षान् पक्षिविशेषान् आलभते, उपाकुर्यादित्यर्थः । ग्रीष्माय ग्रीष्मर्त्वभिमानिदेवतायै, कलविङ्कान् चटकान् त्रीन् आलभते । वर्षाभ्यः वर्षर्त्वभिमानिदेवतायै, तित्तिरीन् कुररकान् त्रीन् पक्षिविशेषान् उपाकुर्यात् । शरदे शरदृत्वभिमानिदेवतायै, वर्त्तिकाः वर्त्तिकानामपक्षिविशेषः, तान् उपाकुर्यात् । हेमन्ताय हेमन्तर्तवे, ककरान् ककराख्यान् पक्षिविशेषान्, शिशिराय शिशिरर्तवे, विककराख्यान् पक्षिविशेषान् । [—अ० २६।४।५]

इति चतुर्थोऽनुवाकः ।

[ पञ्चमोऽनुवाकः २२—२६ ]

अथ जलचरप्राणिभूतान् पशून् आह—

**समुद्राय शिशुमारानालभते पर्जन्याय मण्डूकानद्भ्यो मत्स्यान् ।**
**मित्राय कुलीपयान् वरुणाय नाक्रान् ॥ २२ ॥**

समुद्राय । शिशुमारान् । आ । लभते । पर्जन्याय । मण्डूकान् । अद्भ्यः । मत्स्यान् ॥
मित्राय । कुलीपयान् । वरुणाय । नाक्रान् ॥२२॥

समुद्राय समुद्रदेवतायै, शिशुमारान् शिशून् मारयतीति शिशुमारो नक्रविशेषस्तान् त्रीन् आलभते उपाकुर्यात् । पर्जन्याय पर्जन्यदेवतायै, मण्डूकान् भेकान् उपाकुर्यात् । अद्भ्यो देवताभ्यः, मत्स्यान्, मित्राय कुलीपयान् जलचरप्राणिविशेषान्, वरुणाय नाक्रान् नक्रापत्यभूतान् प्राणिनः आलभते । [—अ० २६।५।१]

अथान्यं जलचरगणमाह—

**सोमाय हꣳसानालभते वायवे बलाका इन्द्राग्निभ्याङ्क्रुञ्चान् ।**
**मित्राय मद्गून् वरुणाय चक्रवाकान् ॥ २३ ॥**

सोमाय । हंसान् । आ । लभते । वायवे । बलाकाः । इन्द्राग्निभ्याम् । क्रुञ्चान् ॥
मित्राय । मद्गून् । वरुणाय । चक्रवाकान् ॥ २३ ॥

सोमाय सोमदेवतायै, हंसान् त्रीन् आलभते । वायुदेवतायै, तिस्रो बलाका विसकण्ठिकाः । इन्द्राग्निभ्याम् इन्द्राग्निदेवताभ्यां क्रुञ्चान् क्रुञ्चाख्यान् पक्षिविशेषान् । मित्राय मद्गून् जलकाकान्, वरुणाय चक्रवाकान् रथाङ्गाह्वयनामकान् । सर्वत्र आलभते इत्यनुषङ्गः । [—अ० २६।५।२]

अथान्यं गणमाह—

**अ॒ग्नये॑ कुट॒रूना॒लभ॑ते॒ वन॒स्पति॑भ्य॒ उलू॑कान॒ग्नीषोमा॑भ्या॒ञ्चाषा॑न् ।**
**अ॒श्विभ्यां॒म्मयूरा॑न्मि॒त्रावरु॑णाभ्याङ्क॒पोता॑न् ॥ २४ ॥**

अग्नये । कुटरून् । आ । लभते । वनस्पतिभ्यः । उलूकान् । अग्नीषोमाभ्याम् । चाषान् ॥
अश्विभ्याम् । मयूरान् । मित्रावरुणाभ्याम् । कपोतान् ॥२४॥

अग्नये अग्निदेवतायै, कुटरून् कुक्कुटान् आलभते । वनस्पतिभ्यो देवताभ्यः, उलूकान् वायसारातीन् आलभते । अग्नीषोमाभ्यां चाषान् किकीदिवीन्, अश्विभ्यां मयूरान् बर्हिणः, मित्रावरुणाभ्यां कपोतान् कपोताख्यान् पक्षिणः, आलभते इति सर्वत्र सम्बन्धनीयः । [—अ० २६।५।३]

अथान्यं गणमाह—

**सोमा॑य ला॒वाना॒लभ॑ते॒ त्वष्ट्रे॑ कौ॒लीका॑न् गो॒षादी॑र्दे॒वाना॒म्पत्नी॑भ्यः ।**
**कु॒लीका॑ देवजा॒मिभ्यो॒ऽग्नये॑ गृ॒हप॑तये पारु॒ष्णान् ॥ २५ ॥**

सोमाय । लावान् । आ । लभते । त्वष्ट्रे । कौलीकान् । गोषादीः । देवानाम् । पत्नीभ्यः ॥
कुलीकाः । देवजामिभ्यः । अग्नये । गृहपतये । पारुष्णान् ॥ २५ ॥

सोमाय सोमदेवतायै, लावान् पक्षिविशेषान् आलभते । एवमेव त्वष्ट्रादिदेवतायै कौलीकान् ( इति ) पक्षिविशेषान्, आलभते[1] । [—अ० २६।५।४]

अथान्यं गणमाह—

**अह्ने॑ पा॒राव॑ता॒ना॒लभ॑ते॒ रात्र्यै॑ सीचा॒पूर॑हो॒रा॒त्रयो॑स्स॒न्धिभ्यो॑ ज॒तूः ।**
**मासे॑भ्यो दात्यौ॒हान्त्सँ॑वत्स॒राय॑ मह॒तस्सु॒प॒र्णान् ॥ २६ ॥**

अह्ने । पारावतान् । आ । लभते । रात्र्यै । सीचापूः । अहोरात्रयोः । सन्धिभ्यः । जतूः ॥
मासेभ्यः । दात्यौहान् । संवत्सराय । महतः । सुपर्णान् ॥ २६ ॥

अह्ने अहर्देवतायै पारावतान् कलरवान् आलभते । रात्र्यै, सीचापूः एतदाख्यान् पक्षिविशेषान् आलभते । अहोरात्रयोर्मध्ये ये सन्धयस्तदभिमानिदेवताभ्यः, जतूः पात्राख्यान् खगान् आलभते । मासेभ्यः, दात्यौहान् कालकण्ठकान् पक्षिविशेषान् आलभते । संवत्सराय, महतः सुपर्णान् बृहत्पक्षिणः आलभते । [—अ० २६।५।५]

इति पञ्चमोऽनुवाकः ।

[ षष्ठोऽनुवाकः २७—३१ ]

अथ विलजान् प्राणिनः पशुत्वेनाह—

**भूम्या॑ आ॒खूना॒लभ॑ते॒ऽन्तरि॑क्षाय पा॒ङ्क्त्रान् दिवेक॒शान् ।**
**दि॒ग्भ्यो न॑कु॒लान् ब॒भ्रु॑कानवान्तरदि॒शाभ्यः॑ ॥ २७ ॥**

---

[1] इति योजना उ. म्यु. ।

भूम्यै । आखून् । आ । लभते । अन्तरिक्षाय । पाङ्क्त्रान् । दिवेकशान् ॥
दिग्भ्यः । नकुलान् । बभ्रुकान् । अवान्तरदिशाभ्यः ॥२७॥

आखून् मूषिकान् भूम्यै भूमिदेवतायै आलभते । एवम् अन्तरिक्षादिभ्यः पाङ्क्त्रादिकान् विलचरप्राणिविशेषान्, आलभते इति योजना । [—अ० २६।६।१]

अथारण्यान् पशून् आह—

**वसुभ्य ऋश्यानालभते रुद्रेभ्यो रुरूनादित्येभ्यो न्यङ्कून् ।**
**विश्वेभ्यो देवेभ्यः पृषतान्त्साध्येभ्यः कुलुङ्गान् ॥ २८ ॥**

वसुभ्यः । ऋश्यान् । आ । लभते । रुद्रेभ्यः । रुरून् । आदित्येभ्यः । न्यङ्कून् ॥
विश्वेभ्यः । देवेभ्यः । पृषतान् । साध्येभ्यः । कुलुङ्गान् ॥ २८ ॥

वसुभ्यो देवेभ्यः, ऋश्यान् रोहितान् आलभते । रुद्रेभ्यः रुरून् महतः कृष्णसारान्, आदित्येभ्यः न्यङ्कून् मृगविशेषान् विश्वेभ्यः देवेभ्यः, पृषतान् बहुभिः बिन्दुभिर्युक्तान्, साध्येभ्यः साध्यानामदेवगणाः, तेभ्यः कुलु ान् हरिणान् आलभते । [—अ० २६।६।२]

अथान्यं गणमाह—

**ईशानाय परस्वत आलभते मित्राय गौरान् वरुणाय महिषान् ।**
**बृहस्पतये गवयाँस्त्वष्ट्र उष्ट्रान् ॥ २९ ॥**

ईशानाय । परस्वतः । आ । लभते । मित्राय । गौरान् । वरुणाय । महिषान् ॥
बृहस्पतये । गवयान् । त्वष्ट्रे । उष्ट्रान् ॥२९॥

ईशानादिदेवताभ्यः परस्वदाद्यान् मृगविशेषान् उपाकुर्यादिति तात्पर्यार्थः । [—अ० २६।६।३]

अथान्यं गणमाह—

**प्रजापतये पुरुषान् हस्तिन आलभते वाचे प्लुषीन् ।**
**चक्षुषे मशकाञ्छ्रोत्राय भृङ्गाः ॥ ३० ॥**

प्रजापतये । पुरुषान् । हस्तिनः । आ । लभते । वाचे । प्लुषीन् ॥
चक्षुषे । मशकान् । श्रोत्राय । भृङ्गाः ॥ ३० ॥

प्रजापतये देवाय, पुरुषान् पुंस्त्वविशिष्टान् हस्तिनस्तान् आलभते । वाचे वाग्देवतायै, प्लुषीन् वज्रतुण्डान्, मशकाः प्रसिद्धास्तान् चक्षुषे, श्रोत्राय श्रोत्राभिमानिदेवतायै, [१]भृङ्गान् भ्रमरान् आलभते । एवं त्रयस्त्रयः आरण्याः पशवो गताः । [—अ० २६।६।४]

अथ एकैकश आलभ्यान् आरण्यान् आह—

**प्रजापतये च वायवे च गोमृगो वरुणायारण्यो मेषो यमाय कृष्णो मनुष्यराजाय मर्कटः ।**
**शार्दूलाय रोहिदृषभाय गवयी क्षिप्रश्येनाय वर्त्तिका नीलङ्गोः क्रिमिस्समुद्राय शिशुमारो हिमवते हस्ती ॥ ३१ ॥**

१. भृङ्गा व्यत्ययः इत्यादीति युक्तम् ।

प्रजापतये । च । वायवे । च । गोमृगः । वरुणाय । आरण्यः । मेषः । यमाय । कृष्णः । मनुष्यराजाय । मर्कटः ॥

शार्दूलाय । रोहित् । ऋषभाय । गवयी । क्षिप्रश्येनाय । वर्त्तिकाः । नीलङ्गोः । क्रिमिः । समुद्राय । शिशुमारः । हिमवते । हस्ती ॥ ३१ ॥

प्रजापतये च वायवे च प्रजापत्यर्थं वायुदेवतार्थं च, गोमृगः गोसदृशो मृगो गवयः आलब्धव्यः । वरुणाय आरण्यः अरण्यजातो मेषः, यमाय कृष्णः कृष्णवर्णो मेषः । मनुष्याणां राजा मनुष्यराजः, तदभिमानिदेवतायै, मर्कटः कपिः, शार्दूलाय व्याघ्रादिदेवतायै, [1]रोहित् हरिण्यः, ऋषभाय ऋषभाभिमानिदेवतायै, गवयी गवयमृगस्य स्त्री, क्षिप्रश्येनाय क्षिप्रगुणयुक्तश्येनाय, [2]वर्त्तिकाख्यपक्षिणः, नीलङ्गोः नीलङ्ग्वाख्यः क्रिमिविशेषः, तदभिमानिदेवतायै, क्रिमिः आलब्धव्यः । समुद्राय शिशुमारो नक्रः, हिमवते हिमपर्वताय हस्ती गज आलब्धव्यः । [ —अ० २६।६।५ ]

इति षष्ठोऽनुवाकः ।

[ सप्तमोऽनुवाकः ३२—३६ ]

अथान्यं गणमाह—

**मयुः प्राजापत्य उलो हलिक्ष्णो वृषदंशस्ते धात्रे दिशाङ्कङ्को धुङ्क्षाग्नेयी ।**
**कलविङ्को लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा वाचे क्रुञ्चः ॥ ३२ ॥**

मयुः । प्राजापत्यः । उलः । हलिक्ष्णः । वृषदंशः । ते । धात्रे । दिशाम् । कङ्कः । धुङ्क्षा । आग्नेयी ॥

कलविङ्कः । लोहिताहिः । पुष्करसादः । ते । त्वाष्ट्राः । वाचे । क्रुञ्चः ॥ ३२ ॥

मयुः तुरङ्गवदनः, प्राजापत्यः प्रजापतिदेवतार्थम् आलब्धव्यः । उलो मृगविशेषः, हलिक्ष्णः सिंहः, वृषदंशः आखुभुक्, एते पशवः ते धात्रे धातृशब्दाभिधेयाय प्रजापतये आलब्धव्याः । दिशां दिग्देवतानाम्, कङ्कः लोहपृष्ठनामा पक्षिविशेषः, धुङ्क्षः ध्वाङ्क्षः काकविशेषः, आग्नेयी अग्निदेवत्या, कलविङ्कः चटकः, लोहिताहिः रक्तसर्पः, पुष्करसादः पक्षिविशेषः, त एते पशवस्त्वाष्ट्राः त्वष्टृदेवत्याः । वाचे वाग्देवतायै, क्रुञ्चः उच्चैःशब्दकारी क्रौञ्चाख्यः पक्षी । [ —अ० २६।७।१ ]

अथान्यं गणमाह—

**सोमाय कुलुङ्ग आरण्योऽजो नकुलश्शका ते पौष्णाः क्रोष्टा मायोरिन्द्रस्य गौरमृगः ।**
**पिद्वो न्यङ्कुः कक्कटस्तेऽनुमत्यै प्रतिश्रुत्कायै चक्रवाकः ॥ ३३ ॥**

सोमाय । कुलुङ्गः । आरण्यः । अजः । नकुलः । शका । ते । पौष्णाः । क्रोष्टा । मायोः । इन्द्रस्य । गौरमृगः ॥

पिद्वः । न्यङ्कुः । कक्कटः । ते । अनुमत्यै । प्रतिश्रुत्कायै । चक्रवाकः ॥ ३३ ॥

सोमाय सोमदेवतायै कुलुङ्गः हरिणः । आरण्यः अरण्योद्भवः अजः, नकुलः सर्पारिः, शका शकुन्तिः, त एते त्रयः पशवः पौष्णाः पूषदेवत्याः । क्रोष्टा जम्बुकः, मायोः मृत्युदेवतायै । इन्द्रस्य

१. व्यत्ययः रोहिताः इति ( शेष इति ? ) भवितुं युक्तम् । २. वर्त्तिका इत्यादीति युक्तम् ।

गौरमृगः आरण्यो मृगविशेषः प्रसिद्धः । पिद्वो व्याघ्रः, न्यङ्कुः हरिणः, कक्कटः कर्कटकः, एते त्रयः अनुमत्यै देवतायै । प्रतिश्रुत्कायै प्रतिध्वनिदेवतायै, चक्रवाकः रथाङ्गनामा । [ —अ० २६।७।२ ]

अथान्यं गणमाह—

**सौरी बलाका शार्गस्सृजयश्शयाण्डकस्ते मैत्रास्सरस्वत्यै शारिः पुरुषवाक् श्वाविद् भौमी ।**
**शार्दूलो वृकः पृदाकुस्ते मन्यवे सरस्वते शुकः पुरुषवाक् ॥ ३४ ॥**

सौरी । बलाका । शार्गः । सृजयः । शयाण्डकः । ते । मैत्राः । सरस्वत्यै । शारिः । पुरुषवाक् । श्वावित् । भौमी ॥
शार्दूलः । वृकः । पृदाकुः । ते । मन्यवे । सरस्वते । शुकः । पुरुषवाक् ॥ ३४ ॥

बलाका विसकण्ठिका पक्षिणी, सौरी सूर्यदेवतायै उपाकर्तव्या । शार्गः पक्षिविशेषः, सृजयः नीलमक्षिका, शुक्लसर्प इत्येके, नीलपक्षिणी इत्यपरे, शयाण्डकः कृकलाशः, त एते त्रयो मैत्राः मित्रदेवत्याः । सरस्वत्यै शारिः शारिका शुकस्त्री, तस्याः विशेषणं पुरुषवाक् इति । पुरुष इव वक्तीति पुरुषवाक् । श्वावित् शल्यकः, यस्या लोमानि 'शल' इति आख्यायन्ते सा भौमी भूमिदेवत्या । शार्दूलो व्याघ्रः । वृकः बालमारकः, पृदाकुः सर्पः, एते त्रयो मन्यवे मन्युदेवतायै । पुरुषवाक् शुकः सरस्वते सरस्वदाख्याय देवाय । [ —अ० २६।७।३ ]

अथान्यं गणमाह—

**सुपर्णः पार्जन्य आतिर्वाहसो दर्विदा ते वायवे बृहस्पतये वाचस्पतये पैङ्गराजोऽलज आन्तरिक्षः ।**
**प्लवो मद्गुर्मत्स्यस्ते नदीपतये द्यावापृथिवीयः कूर्मः ॥ ३५ ॥**

सुपर्णः । पार्जन्यः । आतिः । वाहसः । दर्विदा । ते । वायवे । बृहस्पतये । वाचस्पतये । पैङ्गराजः । अलजः । आन्तरिक्षः ॥
प्लवः । मद्गुः । मत्स्यः । ते । नदीपतये । द्यावापृथिवीयः । कूर्मः ॥ ३५ ॥

सुपर्णः गरुत्मान्, पार्जन्यः पर्जन्यदेवत्यः, आतिः कुक्कुटी, वाहस इत्यन्ये ? वाहसः ( मात्रावाकः ) शुक्तिकान्तर्गतो [1]जलप्राणिविशेषः, दर्विदा, दर्विणा श्येनेन आदीयते इति जलपक्षी, द्रुमकुक्कुट इत्येके, एते त्रयः पशवः, वायवे वायुदेवतायै । बृहस्पतये वाचस्पतिगुणविशिष्टाय, पैङ्गराजः द्रुकासः भरद्वाजाख्यः पक्षी, समुद्रतरङ्गेषु संचारी महापक्षी पैङ्गराज इति केचित् । अलजः भासाख्यः पक्षिविशेषः, आन्तरिक्षः अन्तरीक्षदेवत्यः । प्लवः मज्जन् मज्जन् वर्तमानो जलचरः पक्षी, मद्गुः जलकाकः, मत्स्यः प्रसिद्धः, एते त्रयः पशवः नदीपतये समुद्राय भवन्ति । कूर्मः कच्छपः, द्यावापृथिवीयः द्यावापृथिवीदेवताकः । [—अ० २६।७।४]

---

१. जलचर उ. म्यु. ।

अथान्यं गणमाह—

पुरुषमृगश्चन्द्रमसो गोधा कालका दार्वाघाटस्ते वनस्पतीनांकृकवाकुःसावित्रो हुंसो वातस्य ।
नाक्रो मकरः कुलीपयस्तेऽकूपारस्य ह्रियै शल्यकः ॥ ३६ ॥

पुरुषमृगः । चन्द्रमसः । गोधा । कालका । दार्वाघाटः । ते । वनस्पतीनाम् । कृकवाकुः । सावित्रः । हंसः । वातस्य ॥
नाक्रः । मकरः । कुलीपयः । ते । अकूपारस्य । ह्रियै । शल्यकः ॥ ३६ ॥

पुरुषमृगः पुरुषाकारो मृगः, चन्द्रमसः चन्द्रमसः सम्बन्धी । गोधा मुसलिका, महागोधेत्येके, कालका उपलखण्डिनी, दार्वाघाटः द्रुमकुक्कुटः, एते त्रयो वनस्पतीनां वनस्पतिभ्यः । कृकवाकुः ताम्रचूडः, सावित्रः सवितृदेवत्यः । हंसो वातस्य वायोः । नक्रः दीर्घतुण्डो ग्राहः, दीर्घपुच्छो मत्स्यविशेष इत्येके, मकरः सर्पतुण्डः, कुलीपयः वहुपान्मत्स्यविशेषः, एते त्रयः अकूपारस्य समुद्रस्य पशवः । ह्रियै लज्जायै शल्यकः शललीमृगः । [—अ० २६।७।५]

इति सप्तमोऽनुवाकः ।

[ अष्टमोऽनुवाकः ३७–४१ ]

अथान्यं गणमाह—

एण्यह्नो मण्डूको मूषिका तित्तिरिस्ते सर्पाणाँल्लोपाश आश्विनः कृष्णो रात्र्यै ।
ऋक्षो जतूः सुषिलीका त इतरजनानाञ्जहका वैष्णवी ॥ ३७ ॥

एणी । अह्नः । मण्डूकः । मूषिका । तित्तिरिः । ते । सर्पाणाम् । लोपाशः । आश्विनः । कृष्णः । रात्र्यै ॥
ऋक्षः । जतूः । सुषिलीका । ते । इतरजनानाम् । जहका । वैष्णवी ॥ ३७ ॥

एणी एणमती विन्दुमती हरिणी, अह्नः अहर्देवतायै । मण्डूकः भेकः, मूषिका आखुः, तित्तिरिः कुररः, एते त्रयः पशवः सर्पाणाम् । लोपाशः क्रोष्टा, आश्विनः अश्विदेवत्यः । कृष्णः कृष्णमृगः, रात्र्यै रात्रिदेवतायै । ऋक्षो भल्लुकः, जतूः जतुका, अजिनपत्रा, सुषिलीका प्राणिविशेषः, एते पशवः इतरजनानां देवतानाम् । जहका विलवासी क्रोष्टुजातिरिति केचित्, शललीजातीयः क्षुद्रशरीर इत्यन्ये, सा वैष्णवी विष्णुदेवत्या । [—अ० २६।८।१]

अथान्यं गणमाह—

अन्यवापोऽर्द्धमासानामृश्यो मयूरः सुपर्णस्ते गन्धर्वाणामपामुद्रो मासाङ्कश्यपः ।
रोहित्कुण्डृणाची गोलत्तिका तेऽप्सरसाम्मृत्यवेऽसितः ॥ ३८ ॥

अन्यवापः । अर्द्धमासानाम् । ऋश्यः । मयूरः । सुपर्णः । ते । गन्धर्वाणाम् । अपाम् । उद्रः । मासाम् । कश्यपः ॥
रोहित् । कुण्डृणाची । गोलत्तिका । ते । अप्सरसाम् । मृत्यवे । असितः ॥ ३८ ॥

अन्यवापाख्यो मृगविशेषः, अर्द्धमासानाम् अर्द्धमासाभिमानिदेवतानाम्। ऋश्यो रोहितः, मयूरो बर्हीं, सुपर्णः श्येनः, त एते गन्धर्वाणाम्। उद्रः उदनशीलः पक्षिविशेषः, अपाम् उदकानाम्। [1]मासाधिदेवतानाम्, कश्यपः पक्षिविशेषः। रोहित् ऋश्यस्त्री, कुण्डृणाची गृहगोधिका, गोलत्तिका खञ्जरीटका, पीतशुक्लेति केचित्, त एते पशवः अप्सरसां देवतानाम्। मृत्यवे कालप्राणिसंहर्त्रे अन्तकाय, असितः कृष्णसर्पः : [—अ० २६।८।२]

अथान्यं गणमाह—

**वर्षाभूर्ऋतूनामाखुः कशो मान्थालस्ते पितृणाम्बलायाजगरो वसूनाङ्कपिञ्जलः।**
**कपोत उलूकश्शशस्ते निर्ऋत्यै वरुणायारण्यो मेषः॥ ३९॥**

**वर्षाभूः। ऋतूनाम्। आखुः। कशः। मान्थालः। ते। पितृणाम्। बलाय। अजगरः। वसूनाम्। कपिञ्जलः।।**
**कपोतः। उलूकः। शशः। ते। निर्ऋत्यै। वरुणाय। आरण्यः। मेषः॥ ३९॥**

वर्षासु भवतीति वर्षाभूः भेकः, स ऋतूनाम् ऋतुदेवतानां पशुर्भवति। आखुः, कशः, मान्थालः इत्येते त्रयः प्राणिविशेषाः, पितृणां पितृदेवतानां पशवो भवन्ति। बलाय बलदेवतायै, अजगरः बृहत्सर्पः। वसूनां कपिञ्जलः, 'चित्रपक्षः कपिञ्जलः'। कपोतः प्रसिद्धः, उलूको वायसारातिः, शशः प्रसिद्धः, त एते कपोतादयस्त्रयः, निर्ऋत्यै निर्ऋतिदेवतायै, नियोक्तव्याः। वरुणाय वरुणदेवतायै, आरण्यः अरण्यभवः मेषः। [—अ० २६।८।३]

अथान्यं गणमाह—

**श्वित्र आदित्यानामुष्ट्रो घृणीवान्वार्ध्रीनसस्ते मत्या अरण्याय सृमरो रुरू रौद्रः।**
**क्वयिः कुटरुर्दात्यौहस्ते वाजिनाङ्कामाय पिकः॥ ४०॥**

**श्वित्रः। आदित्यानाम्। उष्ट्रः। घृणीवान्। वार्ध्रीनसः। ते। मत्यै। अरण्याय। सृमरः। रुरुः। रौद्रः॥**
**क्वयिः। कुटरुः। दात्यौहः। ते। वाजिनाम्। कामाय। पिकः॥ ४०॥**

श्वित्रः पशुविशेषः, आदित्यानां भवति। उष्ट्रः दीर्घग्रीवः, घृणीवान्, वार्ध्रीनसः, एते[2] पशवः, मत्यै बुद्ध्यभिमानिदेवतायै। अरण्याय देवाय, सृमरः मृगविशेषः। रुरुः महाकृष्णसारः, रौद्रः रुद्रदेवत्यः। क्वयिः पक्षिविशेषः, कुटरुः कुक्कुटः, दात्यौहः कालकण्ठः, त एते पशवः, वाजिनां देवतानाम्। कामाय देवाय पिकः कोकिलः। [—अ० २६।८।४]

अथान्यं गणमाह—

**खड्गो वैश्वदेवश्श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः।**
**सिꣳहो मारुतः कृकलासः पिप्पका शकुनिस्ते शरव्यायै विश्वेषान्देवानाम्पृषतः॥ ४१॥**

---

१. मासाम् इत्यादीतियुक्तम्। २. त्रयः उ. म्यु.।

खङ्गः । वैश्वदेवः । श्वा । कृष्णः । कर्णः । गर्दभः । तरक्षुः । ते । रक्षसाम् । इन्द्राय । सूकरः ॥
सिंहः । मारुतः । कृकलासः । पिप्पका । शकुनिः । ते । शरव्यायै । विश्वेषाम् । देवानाम् । पृषतः ॥ ४१ ॥

खङ्गः खङ्गमृगः, वैश्वदेवः विश्वदेवदेवत्यः । कृष्णः कृष्णवर्णः, श्वा सारमेयः, कर्णः छिन्नकर्णः गर्दभः, तरक्षुः मृगादनः[१], एते त्रयः पशवः रक्षसां राक्षसदेवानाम् । इन्द्राय सूकरः वराहः । सिंहो मारुतः मरुद्देवत्यः । कृकलासः प्रसिद्धः, पिप्पका कुलायिनाम्नी शकुन्तिका, शकुनिः काकः, एते शरव्यायै, शरव्यं लक्ष्यं तदभिमानिदेवतायै । पृषतः पृषद्भिः [२]विन्दुभिः युक्तः मृगविशेषः, विश्वेषां देवानां पशुः ।

एतदुक्तं भवति—"अश्वस्तूपरो गोमृगः" इति पशवः प्रधानभूताः । "कृष्णग्रीवा आग्नेयाः" इत्याद्याः पर्यङ्ग्याः । "रोहितो धूम्ररोहितः" इत्याद्याः पञ्चदशिनः, "कृष्णग्रीवा आग्नेया बभ्रवः सौम्याः" इत्याद्याश्चातुर्मास्यपशवः । "वसन्ताय कपिञ्जलान्" इत्याद्याः ऋतुपशवः, "आरण्याय समुद्राय शिशुमारान् आलभते" इत्याद्या आरण्याय पञ्चदशिनः, "प्रजापतये च वायवे च गोमृगः" इत्याद्या एकादशिनः । "यद्दशिन आलभते विराजमेव तैर्यजमानोऽवरुन्धे शतमालभते" ( श०, का० १३ । अ० २ । ब्रा० ५ । क० ३ ) इति ब्राह्मणवाक्यात् । अत एव कपिञ्जलाद्या आरण्याः पशवः, ते पर्यग्निकरणानन्तरमुत्स्रष्टव्याः । अतएव हि ब्राह्मणे होमाहोमपक्षयोर्दोषमभिधाय पर्यग्निकरणान्तैः संस्कृतानामुत्सर्गप्रदर्शनेन यमाधत्ते "तदाहुरपशुर्वा एष यदारण्यो नैतस्य होतव्यं यज्जुहुयात् क्षिप्रं यजमानमरण्यं मृतꣳ हरेयुररण्यभागा ह्यारण्याः पशवो यन्न जुहुयाद् यज्ञवेशसꣳ स्यादिति पर्यग्निकृतानेवोत्सृजन्ति तन्नैव हुतं नाहुतं न यजमानमरण्यं मृतꣳ हरन्ति न यज्ञवेशसं भवति ग्राम्यैः सꣳस्थापयति" ( श०, का० १३ । अ० २ । ब्रा० ४ । क० ३–४ ) इति । अत्र ये दुर्लभा दुर्ग्रहाश्च आरण्याः पशवस्तान् सर्वान् पटे चित्ररूपे लिखित्वा उपाकरणादिसंस्काराः कर्त्तव्या इति केचित् ।

[—अ० २६।८।५]

षड्विंशेऽध्यायेऽष्टमोऽनुवाकः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीबुक्कणभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये षड्विंशोऽध्यायः ।



१. मृगजीवः उ. म्यु.
२. श्वेत उ. म्यु.

# अथ सप्तविंशोऽध्यायः

**यस्य निःश्वसितं वेदाः यो वेदेभ्योऽखिलं जगत् ।**
**निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥**

एवमाश्वमेधिकाः पशवो विहिताः । अथ सप्तविंशे अश्वाङ्गहोमादिमन्त्रा आम्नायन्ते ।

**[ प्रथमोऽनुवाकः १–३ ]**

तत्र कात्यायनः—"**स्विष्टकृद्वनस्पत्यन्तरे शूल्यᳬ हुत्वा देवताश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदेवतᳬ शादप्रभृतित्वगन्तेभ्यः**" (अ० २०।८।५।६) । अयमर्थः—"शादन् दद्भिः" इत्यादिमन्त्रेषु द्वितीयया विभक्त्या निर्दिष्टाः शादादयः अश्वमेधाङ्गभूता देवताः । ताभ्यः शादप्रभृतिदेवताभ्यः प्राक् प्रतिपादिताभ्यः "**शादन् दद्भिः स्वाहा**" इत्यादिभिः स्वाहाकारान्तैर्मन्त्रैः आज्याहुतीः परिगणय्य गृहीत्वा जुहुयात् इति । तथा च ब्राह्मणम्—"**सर्वाभ्यो वै देवताभ्योऽश्व आलभ्यते यत् प्राजापत्यं कुर्यात्, या देवता अपि भागास्ता भागधेयेन व्यर्द्धयेच्छादन्दद्भिरवकां दन्तमूलैरित्याज्यमवदानं कृत्वा प्रत्याख्यायं देवताभ्य आहुतीर्जुहोति**" इति ( श० का०, १३ । अ० ३ । ब्रा० ४ क० १ ) । अत्र शादमिति द्वितीयानिर्दिष्टान् देवविशेषान् दद्भिरित्यादितृतीयया निर्दिष्टैर्हविर्भिस्तोषयामि इत्यध्याहारेण वाक्यपूरणम् । क्वचिद् देवताविशेष एव ( न केवलं ) श्रुतः । यथा शुक्लाय स्वाहा कृष्णाय स्वाहा इति, तत्र "**नमः स्वस्ति स्वाहा**" इति ( पा० अ० २।३।१६ ) स्वाहाशब्दयोगे चतुर्थी । तत्र प्रथमोऽयं मन्त्रगणः—

**शादं॑न्द॒द्भिर॒व॑कान्दन्तमूलैर्मृदं॒ बस्वैँस्ते॒गान्दᳬष्ट्रा॑भ्या॒ᳬ सर॑स्वत्या अग्रजि॒ह्वं जि॒ह्वायाः॑ उत्सा॒दम् ।**
**अ॒व॒क्र॒न्देन॒ ताल॑ु वाज॒ᳬ हनु॑भ्याम॒प आ॒स्ये॑न॒ वृष॑णमा॒ण्डाभ्या॑म् ॥१॥**

**शादम् । दद्भिः । अवकाम् । दन्तमूलैः । मृदम् । बस्वैः । तेगान् । दंष्ट्राभ्याम् । सरस्वत्यै । अग्रजिह्वम् । जिह्वायाः । उत् । सादम् ॥**
**अव । क्रन्देन । तालु । वाजम् । हनुभ्याम् । अपः । आस्येन । वृषणम् । आण्डाभ्याम् ॥ १ ॥**

शादं '**शद्लृ शातने**' शादशीलं तदभिमानिदेवताविशेषम्, दद्भिः '[1]अश्वदन्तैः प्रीणयामि, तदर्थम् अवत्तम् इदम् आज्यं स्वाहुतमस्तु इति होमार्थम् अध्याहृतस्य स्वाहाशब्दस्यार्थः । अवकाम् बहुकर्दमे तडागादौ जलस्योपरि उत्पन्नो बहुपत्रतृणविशेषे अवकाशब्दोऽभिधीयते, अवकां तदभिमानिदेवतां दन्तमूलैः अश्वदन्तानां मूलभागैस्तोषयामि । एवं मृदादिषूत्तरेषु स्वाहाशब्दरहितेषु सर्वमन्त्रेषु पूर्ववत् होमार्थं स्वाहाशब्दमाहृत्य योजनीयम् । मृदम्, शादावकयोः अधस्तात् वर्तमाना घनीभूता या तां

---

१. अश्वस्य. उ. म्यु.

मृदं तदभिमानिदेवताम्, बस्वैः दन्तस्य अधस्तात् ग्रन्थिरूपेण वर्तमानैर्मांसविशेषैः प्रीणयामि[1]। तेगा नाम जलचराः प्राणिनः, तदभिमानिदेवान् दंष्ट्राभ्यां पूतदन्ताभ्यां प्रीणयामि। सरस्वत्यै सरसोऽधिपतिदेवतायै, अग्रजिह्वम् अश्वस्य जिह्वाग्रं प्रयच्छामीति शेषः। जिह्वाया विभक्तिव्यत्ययः। जिह्वया उत्सादम्, उत्सः जलप्रस्रवणम्, तदत्ति इति उत्सादः। यद्वा[2] 'षद्लृ विशरणगत्यवसादनेषु' उत्सीदन्ति नश्यन्ति अस्मिन् दोषा इति उत्सादः[3], यद्वा जिह्वायै जिह्वादेवतायै, उत्सादम् उत्सृजन्तं जिह्वामध्यं प्रयच्छामीति शेषः। अवक्रन्देन, अवक्रन्दः अर्वाचीनं शब्दं करोतीति अवक्रन्दो जिह्वा-मूलम्, तेन तालु तदभिमानिदेवतां प्रीणयामि। हनुभ्याम्, दन्तपङ्क्तिः यत्र समाप्यते ते हनू, आभ्याम् अश्वसम्बन्धिभ्यां हनुभ्याम्, वाजं वाज इति बलनाम, तदभिमानिदेवतां प्रीणयामि। अपः अब्देवताः, आस्येन अश्वसम्बन्धिमुखेन, वृषणं वर्षणशीलं पर्जन्यम्, आण्डाभ्यां हविर्भ्यां प्रीणयामि। [—अ० २७।१।१]

अथान्यो मन्त्रगणः—

**आ॒दि॒त्यान् श्मश्रु॑भिः॒ पन्था॑नम्भ्रू॒भ्यान्द्यावा॑पृथि॒वी वर्तो॑भ्याँ॒ विद्यु॒तं॑ कनी॑न-काभ्याम् ॥ २ ॥**

**आदित्यान्। श्मश्रुभिः। पन्थानम्। भ्रूभ्याम्। द्यावापृथिवी। वर्तोभ्याम्। विद्युतम्। कनीनकाभ्याम् ॥ २ ॥**

श्मश्रुभिः अश्वमुखरोमभिः, आदित्यान् अदिति[4]सुतान् देवान् प्रीणयामि। पन्थानं मार्गं मार्गरक्षकं देवम्, भ्रूभ्याम् अश्वस्य भ्रूयुगलेन तोषयामि। द्यावापृथिवी देवते, वर्तोभ्याम् अवयवविशेषाभ्यां प्रीणयामि। विद्युतं विद्युद्देवताम्, कनीनकाभ्यां नेत्रमध्यस्थकृष्णरूपाभ्यां तारकाभ्याम्। [—अ० २७।१।२]

अथान्यं गणमाह—

**शु॒क्लाय॒ स्वाहा॑ कृ॒ष्णाय॒ स्वाहा॒ पार्या॑णि॒ पक्ष्मा॑ण्यवा॒र्या॑ इ॒क्षवो॑ऽवा॒र्या॑णि॒ पक्ष्मा॑णि॒ पार्या॑ इ॒क्षव॑ः ॥ ३ ॥**

**शुक्लाय। स्वाहा। कृष्णाय। स्वाहा। पार्याणि। पक्ष्माणि। अवार्याः। इक्षवः। अवार्याणि। पक्ष्माणि। पार्याः। इक्षवः ॥३॥**

शुक्लाय शुक्लाभिमानिदेवतायै स्वाहा इदमाज्यं स्वाहुतमस्तु। कृष्णाय कृष्णाभिमानि-देवतायै। पार्याणि नयनस्योपरिभागे भवानि पक्ष्माणि अक्षिरोमाणि, अवार्याः अवारे अधोभागे वर्तमाना इक्षवः या ईक्षणशक्तयः ताभ्यः पार्याणि पक्ष्माणि जुहोतीत्यर्थः। अवार्याणि अधोभागवर्त्तीनि पक्ष्माणि अक्षिरोमाणि पार्या उपरिभागे इक्षवो या ईक्षणशक्तयस्ताभ्यः प्रयच्छामीतिशेषः। [—अ० २७।१।३]

इति प्रथमोऽनुवाकः।

---

१. प्रीणामि उ. म्यु. २. अथवा, उ. म्यु. ३. एतत्संज्ञां देवतां प्रीणामि उ. म्यु.
४. पुत्रान्. उ. म्यु.

[ द्वितीयोऽनुवाकः ४–५ ]

अथान्यं गणमाह—

**वातम्प्राणेनापानेन नासिके उपयाममधरेणौष्ठेन सदुत्तरेण । प्रकाशेनान्तरमनूकाशेन बाह्यन्निवेश्यम्मूर्ध्ना स्तनयित्नुन्निर्बाधेनाशनिम्मस्तिष्केण विद्युतङ्कनीनकाभ्याम् ॥ ४ ॥**

वातम् । प्राणेन । अपानेन । नासिके । उपयामम् । अधरेण । ओष्ठेन । सत् । उत्तरेण ॥ प्र । काशेन । आन्तरम् । अनु । काशेन । बाह्यम् । नि । वेश्यम् । मूर्ध्ना । स्तनयित्नुम् । निर्बाधेन । अशनिम् । मस्तिष्केण । विद्युतम् । कनीनकाभ्याम् ॥ ४ ॥

वातं वायुदेवताम्, प्राणेन आश्वेन प्राणवायुना तोषयामि । अपानेन अपानवायुना, नासिके नासिकाभिमानिदेवते प्रीणयामि । उपयामम् उपयामसाधनं देवताविशेषम्, अधरेण अधोभागवर्तिना ओष्ठेन प्रीणयामि । उत्तरेण उपरिभागवर्तिना ओष्ठेन, सत् विद्यमानं सत्ताभिमानिदेवतां प्रीणयामि । आन्तरम् अश्वदेहस्य अन्तर्वर्तमानम् अन्तरात्मानं प्रकाशेन तोषयामि । तथा बाह्यं बाह्याङ्गसम्बन्धिनीं देवताम्, अनूकाशेन पश्चाद्भाविप्रकाशेन तोषयामि । निवेश्यं निवेशनस्य पालकम्, मूर्ध्ना शिरसा प्रीणयामि । स्तनयित्नुं मेघगर्जनाभिमानिदेवम्, निर्बाधेन शिरःकपालेन प्रीणयामि । अशनिं तदभिमानिदेवताम्, मस्तिष्केण शिरःकपालवर्तिना मांसेन, विद्युतं कनीनकाभ्यामिति पूर्ववत् ।

[ —अ० २७।२।१ ]

अथान्यं गणमाह—

**कर्णाभ्याᳬ श्रोत्रᳬ श्रोत्राभ्याङ्कर्णौ तेदनीमधरकण्ठेनापः शुष्ककण्ठेन चित्तम्मन्याभिः । अदितिᳬ शीर्ष्णा निर्ऋतिन्निर्जर्ज्जल्येन शीर्ष्णा सङ्क्रोशैः प्राणान् रेष्माणᳬ स्तुपेन ॥ ५ ॥**

कर्णाभ्याम् । श्रोत्रम् । श्रोत्राभ्याम् । कर्णौ । तेदनीम् । अधरकण्ठेन । अपः । शुष्कण्ठेन । चित्तम् । मन्याभिः ॥
अदितिम् । शीर्ष्णा । निर्ऋतिम् । निर्जर्ज्जल्येन । शीर्ष्णा । सम् । क्रोशैः । प्राणान् । रेष्माणम् । स्तुपेन ॥ ५ ॥

कर्णाभ्यां कर्णद्वयेन, श्रोत्रं श्रवणेन्द्रियाभिमानिदेवं प्रीणयामि । तथा श्रोत्राभ्याम् अधिष्ठानापेक्षया द्वित्वम्, तेनैव श्रवणेन्द्रियेण तावेव कर्णौ प्रीणयामि । तेदनीं तीक्ष्णां देवताम्, अधरकण्ठेन अधोभागे वर्तमानेन स्निग्धकण्ठेन प्रीणयामि । अपः अब्देवताम्, शुष्ककण्ठेन रसविधुरेण गलेन प्रीणयामि । चित्तं चित्ताभिमानिदेवताम्, मन्याभिः मनोवृत्तिभिः प्रीणयामि । अदितिम् अखण्डनीयां देवताम्, शीर्ष्णा शिरसा प्रीणयामि । निर्ऋतिं पापदेवताम्, निर्जर्ज्जल्येन जर्ज्जल्याः केसराः तद्रहितेन शीर्ष्णा शिरोभागेण प्रीणयामि । संक्रोशैः संक्रोशनरूपा ह्लेषाशब्दास्तैः प्राणान् प्राणदेवताः प्रीणयामि । रेष्माणं रेष्मणशालिनीं[१] देवताम्, स्तुपेन समुत्सृजेन शिरोभागेण प्रीणयामि ।

[ —अ० २७।२।२ ]

इति द्वितीयोऽनुवाकः ।

---

१. शीलाम्. उ. म्यु. ।

[ तृतीयोऽनुवाकः ६–७ ]

अथान्यं गणमाह—

मशकान् केशैरिन्द्रꣳ स्वपसा वहेन बृहस्पतिꣳ शकुनिसादेन कूर्मान् ।
शफैराक्रमणꣳ स्थूराभ्यामृक्षराभिः कपिञ्जलान् ॥ ६ ॥

मशकान् । केशैः । इन्द्रम् । स्वपसा । वहेन । बृहस्पतिम् । शकुनिसादेन । कूर्मान् ॥
शफैः । आक्रमणम् । स्थूराभ्याम् । ऋक्षराभिः । कपिञ्जलान् ॥ ६ ॥

मशकाः प्रसिद्धाः, तदभिमानिदेवताम्, केशैर्लोमभिः प्रीणयामि । इन्द्रम् इन्द्रदेवताम्, स्वपसा शोभनकर्मयुक्तेन, वहेन वहनस्थानोद्भवेन तोषयामि । बृहस्पतिं बृहस्पतिदेवताम्, शकुनिसादेन, शकुनयः पक्षिणः अश्वस्य यस्मिन्नङ्गविशेषे सीदन्ति तेनाङ्गेन प्रीणयामि । कूर्मान् कमठान्, शफैः खुरैः प्रीणयामि । आक्रमणम्, यस्मिन्नङ्गे प्रथममाक्रम्य आरुह्यते तदाक्रमणम्, तदभिमानिदेवताम्, स्थूराभ्यां स्थूलाभ्याम् अवयवविशेषाभ्यां प्रीणयामि । ऋक्षराभिः, "ऋक्षरः कण्टकः ऋच्छतेः" (अ० ९।२६) इति यास्कः । अश्वसम्बन्धिभिः कण्टकप्रदेशैः अवयवविशेषैः, कपिञ्जलान् चित्रपक्षान् प्रीणयामि । [ —अ० २७।३।१ ]

अथान्यं गणमाह—

जवञ्जङ्घाभ्यामध्वानम्बाहुभ्याञ्जाम्बीलेनारण्यमग्निमतिरुग्भ्याम् ।
पूषणन्दोर्भ्यामश्विना अꣳसाभ्याꣳ रुद्रꣳ रोराभ्याम् ॥ ७ ॥

जवम् । जङ्घाभ्याम् । अध्वानम् । बाहुभ्याम् । जाम्बीलेन । अरण्यम् । अग्निम् । अतिरुग्भ्याम् ॥
पूषणम् । दोर्भ्याम् । अश्विना । अंसाभ्याम् । रुद्रम् । रोराभ्याम् ॥ ७ ॥

जवं वेगं तदभिमानिदेवम्, जानुनोरधोभागौ जङ्घे, ताभ्याम् अश्वसम्बन्धिभ्यां जङ्घाभ्यां प्रीणयामि । अध्वानं मार्गं तत्तद्बाहुशब्देन अश्वस्य पूर्वपादयोः अग्रभागौ लक्ष्येते, ताभ्यां प्रीणयामि । अरण्यम् अश्वसंचारस्थानं वनम्, जाम्बीलेन एतदाख्येन अवयवविशेषेण प्रीणयामि । अग्निं देवम् अतिरुग्भ्याम् अतिशयिता रुगेव बलं ययोस्ताभ्याम् अवयवाभ्यां प्रीणयामि । पूषणं पूषदेवताम्, दोर्भ्यां बाहुदण्डाभ्यां प्रीणयामि । [1]अश्विनौ देवौ अंसाभ्यां प्रीणयामि । रुद्रम्, रोराभ्यां चलनशीलाभ्यां बाहुसम्बन्धिभ्यां प्रीणयामि । [ —अ० २७।३।२ ]

इति तृतीयोऽनुवाकः ।

[ चतुर्थोऽनुवाकः ८ ]

अथान्यं गणमाह—

अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीयापाश्वर्तुर्थी ।
अदित्यै पञ्चमीन्द्राण्यै षष्ठी मरुताꣳ सप्तमी बृहस्पतेरष्टमी ।
अर्यम्णो नवमी धातुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यमस्य त्रयोदशी ॥८॥

१. अश्विना इत्यादीतियुक्तम् ।

पदच्छेदः स्पष्टः ॥ ८ ॥

पुरा खलु अश्वा अपि पक्षयुक्ता आसन् । पक्षाः केनचित् कारणेन देवैः प्रच्छिन्ना इति प्रसिद्धिः। तत्र एकैकस्य पक्षस्य त्रयोदशावयवाः । तत्र प्रथमा पक्षतिः पक्षमूलं सा अत्र अग्नेः स्वाहाकारेण हुता इति भावः । निपक्षतिर्निवीनां या द्वितीया पक्षतिः, सा वायोः । इन्द्रस्य इन्द्रदेवस्य तृतीया पक्षतिः, अपाम् अब्देवतायाश्चतुर्थी पक्षतिः । एवम् उत्तरत्रापि योज्यम् । [—अ० २७।४।१ ]

इति चतुर्थोऽनुवाकः ।

[ पञ्चमोऽनुवाकः ९ ]

अथोत्तरपक्षसम्बन्धिनीनां पक्षतीनां देवतासम्बन्धः प्रतिपाद्यते—

**इ॒न्द्रा॒ग्न्योः प॑क्ष॒तिस्सर॑स्वत्यै॒ निप॑क्षतिर्मि॒त्रस्य॑ तृ॒तीया॒ सोम॑स्य चतु॒र्थी ।**
**निर्ऋ॑त्यै पञ्च॒म्य॒ग्नीषोम॑योः ष॒ष्ठी स॒र्पाणा॑ꣳ सप्त॒मी विष्णो॑रष्ट॒मी ।**
**पू॒ष्णो न॑व॒मी त्वष्टु॑र्दश॒मीन्द्र॑स्यैकाद॒शी वरु॑णस्य द्वाद॒शी य॒म्यै त्र॑योद॒शी**
**द्यावा॑पृथि॒व्योर्द॑क्षिणम्पा॒र्श्वं॒ विश्वे॑षान्दे॒वाना॒मुत्त॑रम् ॥ ९ ॥**

पदच्छेदः स्पष्टः ॥ ९ ॥

इन्द्राग्न्योः देवयोः प्रथमा पक्षतिः पक्षमूलम्, सरस्वत्यै देव्यै निपक्षतिः निवीनां द्वितीया पक्षतिः । विषदाः सर्वे मन्त्राः, अतः सर्वत्र मन्त्रान्ते स्वाहाकारः कर्त्तव्यः । मित्रस्य तृतीया त्रिसंख्या-पूरणी पक्षतिः, एवमुत्तरत्रापि योजना । अथाश्वस्य दक्षिणं पार्श्वं तथा द्यावापृथिव्योः द्यावापृथिवी-रूपदेवतायै, उत्तरं वामपार्श्वं विश्वेषां देवानाम् । [—अ० २७।५।१]

इति पञ्चमोऽनुवाकः ।

[ षष्ठोऽनुवाकः १० ]

अथान्यं गणमाह—

**म॒रुता॑ꣳ स्क॒न्धा विश्वे॑षान्दे॒वाना॑म्प्रथ॒मा कीक॑सा रु॒द्राणा॑न्द्वि॒तीया॑-**
**दि॒त्याना॑न्तृ॒तीया॑ वा॒योः पुच्छ॑म॒ग्नीषोम॑यो॒र्भास॑दौ ।**
**क्रु॒ञ्चौ श्रोणि॑भ्या॒मिन्द्रा॒बृह॒स्पती॑ ऊ॒रुभ्या॑म्मि॒त्रावरु॑णा अ॒ल्गाभ्या॑मा॒क्रम॑णꣳ**
**स्थू॒राभ्या॒म्बल॒ङ्कुष्ठा॑भ्याम् ॥ १० ॥**

पदच्छेदः स्पष्टः ॥ १० ॥

मरुतां मरुत्संज्ञकानां देवानां स्कन्धाः अश्वस्य स्कन्धगता अवयवाः स्वाहुताः, विश्वेषां देवानां प्रथमा कीकसा प्रथमास्थि, रुद्राणां द्वितीयास्थि, आदित्यानां तृतीयास्थि, वायोः देवस्य पुच्छम् । अग्नीषोमयोः देवयोर्भासदौ पश्चिमसक्थ्नः अवयवौ । एतदन्तं षष्ठ्यन्तेन देवतापदेन प्रथमान्तस्य द्रव्यपदस्य सम्बन्धः प्रतिपादितः । अथ पूर्ववद् द्वितीयया विभक्त्या देवता निर्दिश्य तृतीयया द्रव्यसम्बन्धः संपाद्यते । क्रुञ्चौ पक्षिविशेषौ तदभिमानिदेवौ श्रोणिभ्याम् अश्वस्य

पादमूलाभ्यां प्रीणयामि। इन्द्राबृहस्पती ऊरुभ्यां प्रीणयामि। मित्रावरुणा अल्गाभ्यां जानुभ्यां प्रीणयामि। आक्रमणं देवताविशेषं स्थूराभ्यां खुरस्योपरि यौ स्थूलावयवौ ताभ्यां प्रीणयामि बलं बलाभिमानिदेवं कुष्ठाभ्यां सूक्ष्मखुराभ्यां प्रीणयामि। [—अ० २७।६।१]

इति षष्ठोऽनुवाकः।

[ सप्तमोऽनुवाकः ११ ]

अथान्यं गणमाह—

पूषणँ वनिष्ठुनान्धाहीन्त्स्थूलगुदया सर्पान्गुदाभिर्विह्रुत आन्त्रैरपो वस्तिना वृषणमाण्डाभ्याम्।
वाजिनꣳ शेपेन प्रजाꣳ रेतसा चाषान्पित्तेन प्रदरान्पायुना कूश्माञ्छकपिण्डैः॥११॥

पूषणम्। वनिष्ठुना। अन्धाहीन्। स्थूलगुदया। सर्पान्। गुदाभिः। विह्रुतः। आन्त्रैः। अपः। वस्तिना। वृषणम्। आण्डाभ्याम्॥
वाजिनम्। शेपेन। प्रजाम्। रेतसा। चाषान्। पित्तेन। प्रदरान्। पायुना। कूश्मान्। शकपिण्डैः॥ ११॥

पूषणं पूषाख्यं देवं वनिष्ठुना स्थविरान्त्रेण, अन्धाहीन् एतत्संज्ञकान् देवविशेषान् स्थूलगुदया गुदस्य यः स्थूलो भागस्तद्रूपया गुदया प्रीणयामि। सर्पान् तदभिमानिदेवान् गुदाभिः गुदोपलक्षिताभिः सर्वाभिः नाडीभिः प्रीणयामि। विहरन्तीति विह्रुतो देवविशेषाः, तान् आन्त्रैः सूक्ष्मैः उदरमध्यवर्तमानैः पाशाकृतिभिः मांसविशेषैः प्रीणयामि। अपः अब्देवताः वस्तिना नाभेः अधःप्रदेशेन प्रीणयामि। वृषणं सेचनसमर्थं देवम्, आण्डाभ्याम् अश्वसम्बन्धिमुष्काभ्यां प्रीणयामि। वाजिनं वेगवन्तं देवम्, शेपेन मेढ्रेण प्रीणयामि। प्रजां प्रजाभिमानिदेवताम्, रेतसा शुक्रेण प्रीणयामि। चाषान् किकीदिवीन् तदभिमानिदेवान्, पित्तेन शरीरान्तर्वर्त्तिना पित्ताख्येन धातुविशेषेण प्रीणयामि। प्रदरान् देवविशेषान्, पायुना मलविश्लेषणद्वारेण प्रीणयामि। कूश्मान् कूष्माण्डाख्यान् देवजातिविशेषान्, शकपिण्डैः अश्वशकृत्पिण्डैः प्रीणयामि। [—अ० २७।७।१]

इति सप्तमोऽनुवाकः।

[ अष्टमोऽनुवाकः १२ ]

अथान्यं गणमाह—

इन्द्रस्य क्रोडोऽदित्यै पाजस्यन्दिशाञ्जत्रवोऽदित्यै भसत्।
जीमूतान्हृदयौपशेनान्तरिक्षम्पुरीतता।
नभ उदर्येण चक्रवाकौ मतस्नाभ्यान्दिवँ वृक्काभ्याङ्गिरीन्प्लाशिभिः।
उपलान्प्लीह्ना वल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मान्हिराभिस्स्रवन्तीः।
ह्रदान्कुक्षिभ्याꣳ समुद्रमुदरेण वैश्वानरम्भस्मना॥ १२॥

इन्द्रस्य । क्रोडः । अदित्यै । पाजस्यम् । दिशाम् । जत्रवः । अदित्यै । भसत् ॥
जीमूतान् । हृदयौपशेन । अन्तरिक्षम् । पुरीतता ॥
नभः । उदर्येण । चक्रवाकौ । मतस्नाभ्याम् । दिवम् । वृक्काभ्याम् । गिरीन् । प्लाशिभिः ॥
उपलान् । प्लीह्ना । वल्मीकान् । क्लोमभिः । ग्लौभिः । गुल्मान् । हिराभिः । स्रवन्तीः ॥
ह्रदान् । कुक्षिभ्याम् । समुद्रम् । उदरेण । वैश्वानरम् । भस्मना ॥ १२ ॥

इन्द्रस्य देवतायाः, क्रोडः उरोविशेषः[१]। अदित्यै देवतायै, पाजस्यम्, वर्णव्यत्ययः वाजस्यम्। यद्वा पाजो वलं तस्य हितम् अङ्गम् अदितिदेवतार्थमित्यर्थः। दिशां देवतानां जत्रवः अंसग्रीवयोर्मध्यभागाः स्वाहुताः सन्तु। पुनरपि अदित्यै देवतायै[२] कटिप्रदेशः स्वाहुतोऽस्तु जीमूतान् मेघदेवताः हृदयौपशेन हृदयमुपशेते अस्मिन्निति हृदयौपशः, पुरीततो बहिर्भूतो नाडीसमूहः, तेन प्रीणयामि। अन्तरिक्षम् अन्तरीक्षलोकं पुरीतता हृदयवेष्टनेन प्रीणयामि।[३] गिरीन् पर्वतदेवताः, प्लाशिभिः उदरगतमांसविशेषैः प्रीणयामि। उपलान् पाषाणान्, तदभिमानिदेवान्,[४] प्लीहाख्येन मांसविशेषेण प्रीणयामि। वल्मीकान् क्लोमभिः मस्तिष्कैः प्रीणयामि। हर्षजयहेतुभूता मांसविशेषा ग्लावः तैर्ग्लौभिः गुल्मान् एतत्संज्ञकान् देवताविशेषान् प्रीणयामि। हिराभिः स्वेदजल[५]निर्गमद्वारभूता शिरा हिराशब्देन उच्यते, ताभिः स्रवन्तीः नदीदेवताः प्रीणयामि। कुक्षिभ्यां दक्षिणोत्तरभेदेन द्विधाभूताभ्याम् उदरपार्श्वाभ्यां ह्रदान् प्रीणयामि। समुद्रं समुद्राभिमानिदेवम्, उदरेण अश्वसम्बन्धिना प्रीणयामि। वैश्वानरं विश्वा नरहितम् अग्निम्,[६] अश्वस्य सम्बन्धिना भसितेन प्रीणयामि।

[—अ० २७।८।१]

इत्यष्टमोऽनुवाकः।

[ नवमोऽनुवाकः १३ ]

अथान्यं गणमाह—

विधृतिं नाभ्या घृतꣳ रसेनापो यूष्णा मरीचीर्विप्रुड्भिर्नीहारमूष्मणा शीनं वसया प्रुष्वा अश्रुभिः।
ह्रादुनीर्दूषीकाभिरस्ना रक्षांꣳसि चित्राण्यङ्गैर्नक्षत्राणि रूपेण पृथिवीं त्वचा जुम्बकाय स्वाहा ॥ १३ ॥

विधृतिम् । नाभ्या । घृतम् । रसेन । अपः । यूष्णा । मरीचीः । विप्रुड्भिः । नीहारम् । ऊष्मणा । शीनम् । वसया । प्रुष्वाः । अश्रुभिः ॥
ह्रादुनीः । दूषीकाभिः । अस्ना । रक्षांसि । चित्राणि । अङ्गैः । नक्षत्राणि । रूपेण । पृथिवीम् । त्वचा । जुम्बकाय । स्वाहा ॥ १३ ॥

[७]विधरणहेतुभूतां देवतां नाभ्या अश्वसम्बन्धिनाभिदेशेन[८] प्रीणयामि। घृतम् आज्याभिमानिदेवताम्, आश्वेन रसेन प्रीणयामि। अपः अब्देवतां यूष्णा मांसपाकरसेन, मरीचीः रश्मिदेवताः, विप्रुड्भिः बिन्दुभिः, नीहारं हिमम्, ऊष्मणा पच्यमानाश्वसम्बन्धिना औष्ण्येन, शीनं द्रव्याभिमानिदेवं[९]

१. इन्द्रदेवतार्थमिति शेष इति युक्तम्।
२. भसत् इत्यादीति युक्तम्।
३. नभ इत्यारभ्य वृक्काभ्यामित्यन्तमन्त्रभागस्य भाष्यं नोपलभ्यते।
४. प्लीह्ना इत्यादीति युक्तम्।
५. कण, उ० म्यु०।
६. भस्मना इत्यादीति युक्तम्।
७. विधृतिमित्यादीति युक्तम्।
८. प्रदेशेन, उ० म्यु०।
९. देवताम् उ० म्यु०।

वसया अस्थ्यन्तर्गतेन रसेन, प्रुष्वाः परुषणशीलाः देवताः, अश्रुभिः नेत्रजलैः प्रीणयामि। ह्रादुनीः ह्रादनशीलाः देवताः, दूषीकाभिः नेत्रान्तर्गताः तारादिदोषास्तैः प्रीणयामि। अस्ना रुधिरेण, रक्षांसि राक्षसान् प्रीणयामि। चित्राणि शुक्लकृष्णवर्णैर्विरचितानि, अङ्गैः अवयवैः प्रीणयामि। नक्षत्राणि तारकाणि, रूपेण अश्वसम्बन्धिना वर्णेन प्रीणयामि। पृथिवीं देवताम्, त्वचा आश्वेन चर्मणा प्रीणयामि। [ —अ० २७।९।११ ]

एवम् अश्वावयवानां देवतासम्बन्धप्रतिपादका आज्यहोमार्थाः सर्वे द्विपदा मन्त्रा व्याख्याताः। अथ अवभृथेष्टौ 'जुम्बकाय स्वाहा' इत्यनेन खलतेः मूर्द्धनि होतव्यम्। तथा च कात्यायनः— "अवभृथेष्टचन्ते अप्सु मग्नस्य पिङ्गलखलतिविक्लिधशुक्लस्य मूर्द्धनि जुहोति जुम्बकाय स्वाहा" ( अ० २०।८।१८ ) इति। अयं च मन्त्रः ब्रह्महत्याप्रायश्चित्तत्वेन अन्तर्जले जाप्यः। तथा च स्तूयते—"एताꣳ ह वै मुण्डिभ औदन्यो ब्रह्महत्यायै प्रायश्चित्तिं विदाञ्चकार" ( श०, का० १३। अ० ३। ब्रा० ५। कं० ४ ) इति। अर्थस्तु जुम्बकाय स्वाहा, वरुणाय स्वाहा सर्वमिदं हुतमस्तु। "वरुणो वै जुम्बकः" ( श०, का० १३। अ० ३। ब्रा० ६। कं० ५ ) इति ब्राह्मणम्।

इति नवमोऽनुवाकः।

## [ दशमोऽनुवाकः १४—१७ ]

अथ प्राजापत्याश्वस्य याज्यानुवाक्यार्थाश्चतस्रः ऋचः। तत्र प्रथमा—

**हिरण्यगर्भस्समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्।**
**स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम॥ १४॥**

व्याख्याता एषा (अ० २५।१)। [ —अ० २७।१०।१ ]

अथ द्वितीया—

**यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव।**
**य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम॥ १५॥**

अयमपि व्याख्यातः ( अ० २५।३ )। [ —अ०२७।१०।२ ]

अथ तृतीया—

**यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहाहुः।**
**यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम॥ १६॥**

यस्य। इमे। हिमवन्तः। महित्वा। यस्य। समुद्रम्। रसया। सह। आहुः॥
यस्य। इमाः। प्र। दिशः। यस्य। बाहू। कस्मै। देवाय। हविषा। वि। धेम॥ १६॥

इमे परिदृश्यमाना हिमवन्तो हिमवत्प्रभृतयः पर्वताः यस्य 'क' शब्दाभिधेयस्य प्रजापतेः, महित्वा महत्त्वं माहात्म्यम् ऐश्वर्यमिति यावत्। रस्यन्ते शब्दायन्ते इति रसा आनन्दाः। जात्यभिप्रायमेकवचनम्, रसया रसाभिः सर्वाभिर्नदीभिः सह समुद्रं वारिधिं यस्य महत्त्वम् आहुः, अत एव

प्रजापतिं प्रकृत्य[1] श्रूयते, "तदस्ति महित्वमिति समुद्रो भवति"। अपि च इमाः परिदृश्यमानाः प्रदिशः प्राच्यादिदिशो यस्य प्रजापतेः ( ता वा दिशः ) बाहू विराडात्मनो बाहुस्थानीयाः। एवंभूताय तस्मै कस्मै 'क' शब्दादिभिधेयाय प्रजापतये, हविषा विधेम परिचरेम। विदधातिः परिचरणकर्मा।

[ अ० २७।१०।३ ]

अथ चतुर्थी—

**य आ॑त्म॒दा ब॑ल॒दा यस्य॒ विश्वे॑ उ॒पास॑ते प्र॒शिषँ॒ यस्य॑ दे॒वाः।**
**यस्य॑च्छा॒याऽमृ॒तँ॒ यस्य॑ मृ॒त्युः कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ १७ ॥**

यः। आत्मदाः। बलदाः। यस्य। विश्वे। उप। आसते। प्र। शिषम्। यस्य। देवाः ॥
यस्य। छाया। अमृतम्। यस्य। मृत्युः। कस्मै। देवाय। हविषा। वि। धेम ॥ १७ ॥

यः स्वतः सिद्धः प्रजापतिः, आत्मदाः उपासकानां स्वात्मरूपसायुज्यप्रदाः, अथवा मुमुक्षूणां विशुद्धेन औपनिषदज्ञानेन नित्यनिरतिशयानन्दकूटस्थचैतन्यशुद्धमुक्तस्वभावं ददाति प्रयच्छतीति आत्मदाः। बलदाः प्रतीकोपासकानां बलम् ऐश्वर्यादिकं ददातीति बलदाः। यस्य[2]प्रजापतेः प्रशासनम् आज्ञां विश्वे सर्वे प्राणिनः उपासते। तत् प्रशासनं च "श्रुतिस्मृती ममैवाज्ञे" इति श्रुतेः। किं च बलदा ये देवा अपि यस्य प्रशासनमुपासते। यस्य च प्रजापतेः अमृतम् अमृतत्वं मोक्षसाधनं छायेव स्वाधीनं भवति। यस्य च मृत्युः मरणादिधर्मयुक्तः संसारश्च स्वपतः भवति। तस्मै कस्मै 'क' शब्दाभिधेयाय प्रजापतये हविषा विधेम।

[—अ० २७।१०।४]

इति दशमोऽनुवाकः।

## [ एकादशोऽनुवाकः १८–२७ ]

अथ आश्वमेधिकानां पशूनां याज्यानुवाक्यार्था दशर्चः। तत्र प्रथमा—

**आ नो॑ भ॒द्राः क्रत॑वो यन्तु वि॒श्वतोऽद॑ब्धासो॒ अप॑रीतास उ॒द्भिद॑ः।**
**दे॒वा नो॒ यथा॒ सद॒मिद् वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वे दि॑वे ॥ १८ ॥**

आ। नः। भद्राः। क्रतवः। यन्तु। विश्वतः। अदब्धासः। अपरीतासः। उत्। भिदः ॥
देवाः। नः। यथा। सदम्। इत्। वृधे। असन्। अप्रायुवः। रक्षितारः। दिवे। दिवे ॥ १८ ॥

भद्राः भन्दनीयाः कल्याणाः, क्रतवः यज्ञाः, विश्वतः सर्वतः, नः अस्मान्, आयन्तु आगच्छन्तु। कथंभूताः क्रतवः—अदब्धासः अदब्धाः अनुपहिंसिताः, 'दभ्नोतिर्हिंसाकर्मा'। अपरीतासः अपरिगताः केनचिदपि इतः पूर्वम् अप्राप्ताः। उद्भिदः फलस्य उच्छेत्तारः[3]। एवंभूताः क्रतवः इति सम्बन्धः। किमर्थं कृत्वा आगमनप्रार्थनमिति तदुच्यते। नः अस्माकम्, अप्रायुवः अप्रमाद्यन्तः सावधानाः, दिवे दिवे प्रतिदिवसं रक्षकाः सन्तु। सदमित् सदैव सर्वकाले, वृधे वर्धनाय यथा असन् भवेयुस्तथा आयन्तु इति सम्बन्धः। देवकर्तृकवृद्धयादिफलसिद्धयर्थमिति यावत्।

[ —अ० २७।११।१ ]

---

१. प्रकृत्या उ. म्यु.। २. च. उ. म्यु.। ३. उद्भेत्तारः उ. म्यु.।

अथ द्वितीया—

देवानाम्भद्रा सुमतिर्ऋजूयतान्देवानाᳪं रातिरभि नो निवर्त्तताम् ।
देवानाᳪं सख्यमुपसेदिमा वयन्देवा न आयुः प्रतिरन्तु जीवसे ॥ १९ ॥

देवानाम् । भद्रा । सु । मतिः । ऋजूयताम् । देवानाम् । रातिः । अभि । नः । नि ॥ वर्त्तताम् ॥
देवानाम् । सख्यम् । उप । सेदिम । वयम् । देवाः । नः । आयुः । प्र । तिरन्तु । जीवसे ॥१९॥

ऋजूयताम्, ऋजु अकुटिलं कर्म । यजमाने ऋजुभावम् आत्मनः इच्छतां देवानां या भद्रा[1] कल्याणी[2] सुमतिः शोभना अनुग्रहरूपा बुद्धिः सा अस्मान्, अभिनिवर्त्ततां नितरां प्राप्नोतु । तथा देवानां रातिः धनदानं नोऽस्मान्, अभिलक्षतु नितरां प्राप्नोतु । एवं देवेभ्यो लब्धैश्वर्या वयं तेषां देवानां सख्यं सखिभावम्, उपसेदिम प्राप्नुयाम । यद्वा सख्युः कर्म सख्यम्, सखिकर्म तु यज्ञलक्षणम् उपगच्छेम । ते च देवाः, जीवसे चिरकालजीवनार्थम्, नः अस्माकम्, आयुः प्रतिरन्तु प्रवर्धयन्तु ।
[—अ० २७।११।२]

अथ तृतीया—

तान्पूर्वया निविदा हूमहे वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ।
अर्यमणँ्वरुणᳪं सोममश्विना सरस्वती नस्सुभगा मयस्करत् ॥ २० ॥

तान् । पूर्वया । निविदा । हूमहे । वयम् । भगम् । मित्रम् । अदितिम् । दक्षम् । अस्रिधम् ॥
अर्यमणम् । वरुणम् । सोमम् । अश्विना । सरस्वती । नः । सुभगा । मयः । करत् ॥ २० ॥

निवित् इति वाङ्नाम । पूर्वया अनादिसिद्धया अकृत्रिमरूपया देवलक्षणया वाचा, तान् विश्वान् देवान् । हूमहे आह्वयामहे । तान् च सामान्योक्तान् विभजति भगमित्यादिना । भगं भजनीयं तमेतत्संज्ञं देवम्, मित्रं मित्राख्यम्, अदितिं देवमातरम् । दक्षमिति, दक्षः प्रजापतिस्तं दक्षम्, स एव विशेष्यते, अस्रिधम्, स्रिधः शोषणार्थः, शोषणरहितम्, अश्विना अश्विनौ, "सुपां सुलुक्०" इति ( पा० अ० ७।१।३९ ) विभक्तेः आकारः । अनेन तान् एतान् भगादीन् देवान् आह्वयाम इति सम्बन्धः । अपि या सरस्वती देवी सुभगा शोभनसमग्रैश्वर्यादिगुणयुक्ता सा, मयः सुखनाम एतत्, सुखं नः अस्माकम्, करत् करोतु ।
[—अ० २७।११।३]

अथ चतुर्थी—

तन्नो वातो मयोभु वातु भेषजन्तन्माता पृथिवी तत्पिता द्यौः ।
तद्ग्रावाणस्सोमसुतो मयोभुवस्तदश्विना शृणुतन्धिष्ण्या युवम् ॥ २१ ॥

तत् । नः । वातः । मयोभु । वातु । भेषजम् । तत् । माता । पृथिवी । तत् । पिता । द्यौः ॥
तत् । ग्रावाणः । सोमसुतः । मयोभुवः । तत् । अश्विना । शृणुतम् । धिष्ण्या । युवम् ॥२१॥

वातो वायुः, मयोभु मयसः सुखस्य भावकम्, तद् भेषजम् औषधम्, नः अस्माकम्, वातु गमयतु । 'वा गतिगन्धनयोः' । माता सकलस्य प्राणिजातस्य निर्मात्री पृथिवी च तद् भेषजम् औषधं प्रापयतु । वृष्ट्यादिना पालिका द्यौः तद्भेषजम्, अस्मान् गमयतु । सोमसुतः सोमाभिषवकारिणः,

१. श्रीः उ. म्यु. । २. या उ. म्यु. ।

अत एव मयोभुवः मयसः सुखस्य[1] भावयितारः, एवंभूता ग्रावाणश्च तद्भेषजम्, अस्मान् गमयन्तु। हे अश्विना अश्विनौ धिष्ण्या धिषणार्हौं च यौ युवं युवां तद् भेषजं शृणुतम्, श्रुत्वा च अनुगृह्णीतम् इत्यर्थः। [—अ० २७।११।४]

अथ पञ्चमी—

तमीशा॑नं॒ जग॑तस्त॒स्थुष॒स्पतिं॑ धियञ्जि॒न्वमव॑से हूमहे व॒यम्।
पू॒षा नो॒ यथा॒ वेद॑सा॒मस॑द्वृ॒धे र॑क्षि॒ता पा॒युरद॑ब्धस्स्व॒स्तये॑ ॥ २२ ॥

तम्। ईशानम्। जगतः। तस्थुषः। पतिम्। धियम्। जिन्वम्। अवसे। हूमहे। वयम्॥
पूषा। नः। यथा। वेदसाम्। असत्। वृधे। रक्षिता। पायुः। अदब्धः। स्वस्तये॥२२॥

जगतः जङ्गमस्य, तस्थुषः स्थावरस्य च स्थावरजङ्गमात्मकस्य जगतः पतिं पालयितारम्, धियं जिन्वं बुद्धिं प्रीणयन्तं यद्वा धीरिति कर्मनाम, जिन्वतिः प्रीणनार्थः, धीभिः कर्मभिः प्रीणयितव्यम्। ईदृशं प्रसिद्धम् ईशानम् ईश्वरं वयम्, अवसे रक्षणाय, हूमहे आह्वयामः। किं च नः अस्माकम्, वेदसां धननाम एतत्, धनानां वृधे वर्द्धनाय, यथा येन प्रकारेण, पूषा पोषणकः देवः असद् भवेत्। तथा अदब्धः केनापि अनुपहिंसितः, पायुः पायनशीलः सन्, नः अस्माकम्, स्वस्तये अविनाशाय, रक्षिता भवतु। [—अ० २७।११।५]

अथ षष्ठी—

स्व॒स्ति न॒ इन्द्रो॑ वृ॒द्धश्र॑वास्स्व॒स्ति नः॑ पू॒षा वि॒श्ववे॑दाः।
स्व॒स्ति न॒स्तार्क्ष्यो॒ अरि॑ष्टनेमिस्स्व॒स्ति नो॒ बृह॒स्पति॑र्दधातु ॥ २३ ॥

स्वस्ति। नः। इन्द्रः। वृद्धश्रवाः। स्वस्ति। नः। पूषा। विश्ववेदाः॥
स्वस्ति। नः। तार्क्ष्यः। अरिष्टनेमिः। स्वस्ति। नः। बृहस्पतिः। दधातु॥ २३॥

वृद्धश्रवाः, श्रव इति अन्नस्य कीर्त्तेर्वा नामधेयम्। प्रवृद्धं श्रवो यस्य सः तथोक्तः। तथाविध इन्द्रः, नः अस्माकम्, स्वस्ति क्षेमं स्वस्त्ययनं दधातु स्थापयतु। विश्ववेदाः, विश्वं सर्वं वेत्तीति, विश्वं सर्वं वेदो धनं यस्य इति वा विश्ववेदाः, तथाविधः पूषा, नः अस्माकं स्वस्ति अविनाशं विदधातु। अपि च अरिष्टनेमिः अनुपहिंसितासुः तार्क्ष्यः, न अस्माकम्, स्वस्ति क्षेमप्रापणं दधातु। तथा बृहस्पतिर्देवः, नः अस्माकम्, स्वस्ति दधातु। [—अ० २७।११।६]

अथ सप्तमी—

पृष॑दश्वा म॒रुतः॒ पृश्नि॑मातरः शु॒भँय्यावा॑नो वि॒दथे॑षु॒ जग्म॑यः।
अ॒ग्नि॒जि॒ह्वा मन॑व॒स्सूर॑चक्षसो॒ विश्वे॑ नो दे॒वा अव॒साग॑मन्नि॒ह ॥ २४ ॥

पृषदश्वाः। मरुतः। पृश्निमातरः। शुभँय्यावानः। विदथेषु। जग्मयः॥
अग्निजिह्वाः। मनवः। सूरचक्षसः। विश्वे। नः। देवाः। अवसा। आ। अगमन्। इह॥२४॥

---

१. स्वर्गलक्षणस्य, ग. म्यु.।

पृषद्भिः बिन्दुभिर्युक्ताः अश्वाः येषां ते पृषदश्वाः, पृश्निमातरः, "पृश्निर्गमनरूपा माता एवैषा यतो मरुतो जाता" इति श्रुतेः। सा गोरूपा इति केचित्। अपरे तु माध्यमिका वाक् द्यौर्वा पृश्निरिति संगिरन्ते। पृश्निः माता जनयित्री येषां ते पृश्निमातरः। शुभं शोभनम् अलङ्कारं यान्तीति शुभंयावानः। 'या प्रापणे' "आतो मनिन्क्वनिब्वनिपश्च" (पा० अ० ३।२।७४) इति वनिप्-प्रत्ययः। यद्वा, यजमानानां शोभनस्य प्रापकाः विदथेषु यज्ञेषु जग्मयो गमनशीलाः। एवंभूताः महानुभावाः मरुतः अत्र अस्मद्रक्षणार्थम् आगच्छन्तु। अपि च अग्निजिह्वाः, अग्निरेव जिह्वा-स्थानीयो येषां ते तथोक्ताः, यद्वा अग्नेर्जिह्वायां हविःस्वीकरणार्थम् अवस्थिताः। मनवो मनन-शीलाः, सूरचक्षसः सूर्यप्रख्याः, एवंभूता विश्वेदेवाः, नः अस्माकम्, अवसा रक्षणेन सह, अस्मिन् यज्ञे, आगमन् आगच्छन्तु। [—अ० २७।११।७]

अथाष्टमी—

भ॒द्रङ्कर्णे॑भिः शृणुयाम देवा भ॒द्रम्प॑श्येमा॒क्षभि॑र्यजत्राः।
स्थि॒रैरङ्गै॑स्तुष्टु॒वाꣳस॑स्त॒नूभि॒र्व्य॑शेम दे॒वहि॑तं॒ यदायुः॥ २५॥

भद्रम्। कर्णेभिः। शृणुयाम। देवाः। भद्रम्। पश्येम। अक्षभिः। यजत्राः॥
स्थिरैः। अङ्गैः। तुष्टुवांसः। तनूभिः। वि। अशेम। देवहितम्। यत्। आयुः॥२५॥

हे देवाः, कर्णेभिः कर्णैः श्रोत्रैः, भद्रं शुभम्, शृणुयाम शुभं जानीमहे। यजत्राः यष्टव्याः देवाः, अक्षभिः अन्यैरपि इन्द्रियैः, भद्रं कल्याणम्, पश्येम साक्षात्कुर्याम। तदर्थं स्थिरैर्दृढैः, अङ्गैः शरीरा-वयवैः युक्ताः वयं तुष्टुवांसः युष्मान् स्तुवानाः सन्तः, तनूभिः आत्मीयशरीरैर्यदायुः, व्यशेम प्राप्नुयाम, तदायुः जीवनं शतवर्षपरिमितम्, देवहितं मनुष्येषु देवैः स्थापितम्। [—अ० २७।११।८]

अथ नवमी—

श॒तमिन्नु श॒रदो॒ अन्ति॑ देवा॒ यत्रा॑ नश्च॒क्रा ज॒रसं॑ त॒नूना॑म्।
पु॒त्रासो॒ यत्र॑ पि॒तरो॒ भव॑न्ति॒ मा नो॑ म॒ध्या री॑रिषता॒युर्गन्तोः॥ २६॥

शतम्। इत्। नु। शरदः। अन्ति। देवाः। यत्र। नः। चक्र। जरसम्। तनूनाम्॥
पुत्रासः। यत्र। पितरः। भवन्ति। मा। नः। मध्या। रीरिषत। आयुः। गन्तोः॥२६॥

हे देवाः, शतमिन्नु शतसंख्या एव खलु, शरदः सँव्वत्सराः,[१] अन्तिके मनुष्यसमीपे युष्माभिः आयुष्ट्वेन परिकल्पिताः। यत्र यस्मिन् शतसँव्वत्सरलक्षणे आयुषि, नः अस्माकम्, तनूनां शरीराणाम्, जरसं जरां वलीपलितादिरूपाम्, यूयं चक्र कृतवन्तः स्थ। यत्र यस्मिन् चोक्तलक्षणे आयुषि, पुत्रासः अस्मदीयाः पुत्राः पितरः पुत्रान् उत्पादयन्ते, तदपेक्षया पितृत्वं प्राप्नुवन्ति, तथाविधं नः अस्माकम्, आयुः जीवनम्, गन्तोः गमनाय सम्पन्नम्, मध्या मध्ये मा रीरिषत मा हिंसिष्ट। 'रिष हिंसायाम्'। [—अ० २७।११।९]

---

१. अन्तीत्यादीति युक्तम्।

अथ दशमी—

अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः ।
विश्वे॑ दे॒वा अदि॑तिः पञ्च॒जना॒ अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वम् ॥ २७ ॥

अदितिः । द्यौः । अदितिः । अन्तरिक्षम् । अदितिः । माता । सः । पिता । सः । पुत्रः ॥
विश्वेदेवाः । अदितिः । पञ्चजनाः । अदितिः । जातम् । अदितिः । जनित्वम् ॥ २७ ॥

अनया देवमातुः अदितेः सार्वात्म्यं प्रतिपाद्यते। अदितिः देवमाता सा एव द्यौः द्युलोकः। अदितिरेव अन्तरिक्षम् अन्तरिक्षलोकः। माता सर्वजनस्य भूतमात्रस्य निर्मात्री पृथिव्यपि अदितिरेव। स एव अदितिः पिता वृष्टिप्रदानेन पालकः पर्जन्यः, स एवादितिः पुत्रः माध्यमिकायाः वाचः पुत्रः। यद् वा लोके ये मातृपितृपुत्ररूपतया प्रसिद्धाः जनास्ते सर्वे अपि अदितिरेव। तथा विश्वे सर्वे देवाः पञ्च-जनाः निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजना आख्यायन्ते। अथवा गन्धर्वाप्सरसो देवा असुरा रक्षांसि इति एते सर्वेऽपि अदितिरेव। किं बहुना, यत् इतः पूर्वं जातं लब्धात्मकं प्राणिजातं तत् सर्वम् अदितिरेव। तथा च जनित्वं जनितव्यं जनिष्यमाणं भूतजातम् अदितिरेव। अत एवाहुर्नैरुक्ताः—"इत्यदितेर्विभूतिमाचष्टे" ( नि०, अ० ४। खं० २२ ) इति। [—अ० २७।११।१०]

इत्येकादशोऽनुवाकः।

[ द्वादशोऽनुवाकः २८–३५ ]

कात्यायनः—"मा नो मित्र इति च प्रत्यृचमनुवाकाभ्याम्" (अ० २०।८।७) इति। जुहोतीति अनुवर्तते। अयमर्थः—"मा नो मित्र" इत्यारभ्य "इमानुकम्भुवने" इत्यन्तं प्राप्तैः षोडशभि-र्मन्त्रैः अश्वस्तोमीयाख्यान् होमान् जुहोति। अत एव श्रूयते—"यदश्वस्तोमीयं जुहोति, षोडश जुहोति च" ( श०, का० १३। अ० ३। ब्रा० ६। क० १, ५ )। तत्र प्रथमा—

मा नो॑ मि॒त्रो वरु॑णो अर्य॒मायुरिन्द्र॑ ऋभु॒क्षा म॒रुतः॒ परि॑ख्यन् ।
यद् वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि ॥ २८ ॥

मा । नः । मित्रः । वरुणः । अर्यमा । आयुः । इन्द्रः । ऋभुक्षाः । मरुतः । परि । ख्यन् ॥
यत् । वाजिनः । देवजातस्य । सप्तेः । प्र । वक्ष्यामः । विदथे । वीर्याणि ॥ २८ ॥

मित्रादयः प्रसिद्धाः, एति सर्वदा गच्छतीति आयुः वायुः। ऋभवः देवाः क्षियन्ति। निवसन्ति अस्मिन् इति ऋभुक्षाः प्रजापतिः। मरुतः देवतान्तराणि। ते सर्वेऽपि, नः अस्मान्, मा परिख्यन् मा निन्दन्तु। यत् यस्मात् वाजिनः यागद्वारा अन्नसाधनस्य, देवजातस्य देवतार्थम् उत्पन्नस्य, सप्तेः अश्वस्य, वीर्याणि सामर्थ्यानि, विदथे अस्मिन् यज्ञे, प्रवक्ष्यामः वयं प्रकर्षेण कथयिष्यामः तस्मात् अस्मन्निन्दा न युक्ता इत्यर्थः। [—अ० २७।१२।१]

अथ द्वितीया।

यन्नि॒र्णिजा॒ रेक्ण॑सा॒ प्रावृ॑तस्य रा॒तिं गृ॑भी॒तां मु॑ख॒तो नय॑न्ति ।
सुप्रा॑ङ्जो॒ मेम्य॑द्वि॒श्वरू॑प इन्द्रापू॒ष्णोः प्रि॒यमप्ये॑ति॒ पाथः॑ ॥ २९ ॥

यत् । निर् । निजा । रेक्णसा । प्र । आ । वृतस्य । रातिम् । गृभीताम् । मुखतः । नयन्ति ॥
सु । प्राङ् । अजः । मेम्यत् । विश्वरूपः । इन्द्रापूष्णोः । प्रियम् । अपि । एति । पाथः ॥२९॥

निर्णिजा प्रोक्षणादिकृतशुद्धया, रेक्णसा सुवर्णरजतादिमणिरूपेण धनेन च प्रावृतस्य प्रकर्षेण सर्वतः वेष्टितस्य, अश्वमेधप्रकरणे हि चत्वारः ऋत्विजः समुक्षन्तीति प्रोक्षणम् "हिरण्ययाः काचा" ( भवित्री ) इत्यादिना सुवर्णादिमणिभिः अलङ्कारश्च अभिधीयते । अतः तथाविधस्य सम्बन्धिनीं गृभीतां हस्तेन स्वीकृतां रातिं हविषः दामं मुखतः अग्रे, यत् यदा, नयन्ति ऋत्विजः सम्पादयन्ति, तदानीं[1] गतिवान् अश्वः सुप्राङ् सुष्ठु प्रकृष्टान् प्राप्नुवन्, मेम्यत्, मेम्यत् इति ह्रेषाशब्दस्यानुकरणम् । विश्वरूपः नानावर्णः सन् इन्द्रापूष्णोः इन्द्रापूषप्रभृतीनां प्रियं पाथोऽप्येति प्रीतिकरम् अन्नभावं प्राप्नोति । [—अ० २७।१२।२]

अथ तृतीया—

**एष छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः ।**
**अभिप्रियँय्यत्पुरोळाशमर्वता त्वष्टेदेनꣳ सौश्रवसाय जिन्वति ॥ ३० ॥**

एषः । छागः । पुरः । अश्वेन । वाजिना । पूष्णः । भागः । नीयते । विश्वदेव्यः ।।
अभि । प्रियम् । यत् । पुरोडाशम् । अर्वता । त्वष्टा । इत् । एनम् । सौश्रवसाय । जिन्वति ।।३०।।

वाजिना अन्नसाधनेन[2] अश्वेन सह[3] एषः छागः अयं कश्चित् अजः पुरः नीयते तस्मात् अश्वात् पूर्वभागे प्राप्यते । कीदृशः अजः, पूष्णः भागः पूषदेवताया भागस्वरूपः, विश्वदेव्यः, विश्वेभ्यः देवेभ्यो हितः । अभिप्रियं सर्वतः प्रीतिकरं पुरोडाशवत् स्वादुभूतम् एनम् अजम्, अर्वता अश्वेन सह त्वष्टा एव सौश्रवसाय, श्रूयते सर्वैरपि देवैः प्रीतिपूर्वकमिति श्रवः अन्नम्, सुष्ठु श्रवः, तस्य भावः सौश्रवसम्, तस्मै सम्यगन्नभावाय, यत् यस्मात् कारणात्, जिन्वति प्रीणयति तस्मात् अयम् अजः पुरो नीयते । अश्वमेधप्रकरणे हि पौष्णम् अन्वश्वमित्येवं पूषदेवताकम् अजं विधास्यति । स वा अश्वेन सह नेतव्यः, तद्विषयोऽयं मन्त्रः । अनेन न्यायेन पूर्वः मन्त्रोऽपि अजविषये योजयितव्यः। अश्वमेधप्रकरणे "ऐन्द्रापौष्णम् उपरिष्टाद्"इति व्यासक्तदेवताकस्य अजस्य विहितत्वात् मन्त्रे तस्मिन् अजशब्दस्य मेम्यदिति योग्यशब्दानुकरणस्य श्रूयमाणत्वाच्च । [ —अ० २७।१२।३ ]

अथ चतुर्थी—

**यद्धविष्यमृतुशो देवयानन्त्रिर्मानुषाः पर्यश्वन्नयन्ति ।**
**अत्रा पूष्णः प्रथमो भाग एति यज्ञन्देवेभ्यः प्रति वेदयन्नजः ॥ ३१ ॥**

यत् । हविष्यम् । ऋतुशः । देवयानम् । त्रिः । मानुषाः । परि । अश्वम् । नयन्ति ।।
अत्र । पूष्णः । प्रथमः । भागः । एति । यज्ञम् । देवेभ्यः । प्रति । वेदयन् । अजः ।। ३१ ।।

यत् यत्र मानुषा ऋत्विजः अश्वं त्रिः परिणयन्ति त्रिवारं प्रदक्षिणीकुर्वन्ति । कीदृशम् अश्वम्, हविष्यं हविषो योग्यम्, ऋतुशो देवयानम्, ऋतौ ऋतौ देवानां गच्छन्तम्, अत्र अस्मिन्

१. अजः इत्यादीति भवितुं युक्तम् । २. हेतुना उ. म्यु. । ३. सहितः उ. म्यु. ।

देशे अजः प्रथमः एति कीदृशः अजः, पूष्णः भागः, किं कुर्वन्, देवेभ्यो यज्ञं प्रतिवेदयन् हे देवाः यज्ञः प्रवर्तत इत्येवं देवेभ्यः ज्ञापयन्। [—अ० २७।१२।४]

अथ पञ्चमी—

**होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शंस्ता सुविप्रः।**
**तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आपृणध्वम्॥ ३२॥**

होता। अध्वर्युः। आ। वयाः। अग्निम्। इन्धः। ग्रावग्राभः। उत। शंस्ता। सु। विप्रः॥
तेन। यज्ञेन। सु। अरम्। कृतेन। सु। इष्टेन। वक्षणाः। आ। पृणध्वम्॥ ३२॥

योऽयम् अस्मिन् यज्ञे होता विद्यते योऽध्वर्युः, आवयाः, आ समन्तात् वेति गच्छति तस्मै अनुष्ठानाय शीघ्रं प्रवर्तत इति आवयाः। यः अपि अग्निमिन्धः अग्नेः दीपकः अग्नीध्रः, यश्च ग्रावग्राभः ग्रावस्तुत् उत अपि च शंस्ता प्रशास्ता, यश्च सुविप्रः, एते सर्वेऽपि स्वरंकृतेन सुष्ठु अलंकृतेन, अपेक्षितद्रव्यैः सम्पूर्णेन इत्यर्थः। स्विष्टेन सुष्ठु अनुकृतेन यज्ञेन अश्वमेधेन वक्षणाः फलवाहिनीः घृतकुल्याद्याः आपृणध्वम्, हे होत्रादयः यूयं सर्वेऽपि आपूरयध्वम्। [—अ० २७।१२।५]

अथ षष्ठी—

**यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति।**
**ये चार्वते पचनꣳ सम्भरन्त्युतो तेषामभिगूर्तिर्न इन्वतु॥ ३३॥**

यूपव्रस्काः। उत। ये। यूपवाहाः। चषालम्। ये। अश्वयूपाय। तक्षति॥
ये। च। अर्वते। पचनम्। सम्। भरन्ति। उतो। तेषाम्। अभि। गूर्तिः। नः। इन्वतु॥ ३३॥

यूपव्रस्काः यज्ञार्थं यूपं वृश्चन्ति, उत अपि च ये यूपवाहाः यूपं यज्ञभूमौ वहन्ति, येऽपि अन्ये अश्वयूपार्थं चषालं कटकं संस्कुर्वन्ति, उतो अपि च येऽपि अन्ये पुरुषाः, अर्वते अश्वार्थम्, पचनं पाकसाधनम्, सम्भरन्ति सम्पादयन्ति तेषां सर्वेषाम् अभिगूर्तिः संकल्पः, नः अस्मान् इन्वतु। [—अ०२७।१२।६]

अथ सप्तमी—

**उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उपवीतपृष्ठः।**
**अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम्॥ ३४॥**

उप। प्र। अगात्। सुमत्। मे। अधायि। मन्म। देवानाम्। आशाः। उपवीतपृष्ठः॥
अनु। एतम्। विप्राः। ऋषयः। मदन्ति। देवानाम्। पुष्टे। चकृम। सु। बन्धुम्॥ ३४॥

सुष्ठु मदहेतुरतिहर्षादिकारणं मदफलं सुमत्। तत् अस्मान् उप प्रागात् समीपं प्राप्नोतु। मन्म मननीयं फलम्, मे मदर्थम्, अधायि देवैः सम्पादितम्। उपवीतपृष्ठः कमनीयपृष्ठभागः अयम् अश्वो देवानाम् आशाः देवैः आशासनीयानि हवींषि उप प्रागात् देवहविष्यं प्राप्नोति इत्यर्थः। ऋषयो विप्राः अभिज्ञाः ऋत्विजः, एनम् अश्वम् अनुमदन्ति अनुकूलैः स्तोत्रैः हर्षयन्ति। देवानां पुष्टे पुष्ट्यर्थं सुबन्धु[1] चकृम। [—अ० २७।१२।७]

१. एनम् अश्वं बन्धुवत् अत्यन्तप्रियम्, उ. स्यु.।

अथाष्टमी—

यद् वाजिनो दाम सन्दानमर्वतो या शीर्षण्या रशना रज्जुरस्य ।
यद् वा घास्य प्रभृतमास्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु ॥ ३५ ॥

यत् । वाजिनः । दाम । सम् । दानम् । अर्वतः । या । शीर्षण्या । रशना । रज्जुः । अस्य ॥
यत् । वा । घ । अस्य । प्र । भृतम् । आस्ये । तृणम् । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥ ३५ ॥

वाजिनः अस्य अश्वस्य यद् दाम गले बन्धनसाधनम् अस्ति यच्च सन्दानं पृष्ठपादे बन्धनसाधनं दाम तद्दाम्ना हि अश्वा गले बद्धा अपि पुनः पृष्ठपादे रज्ज्वन्तरेण बध्यन्ते, या च अर्वतः अश्वस्य शीर्षण्या रशना शिरसि बद्धा रज्जुः, या अपि अन्या पृष्ठलग्ना अस्य अश्वस्य रज्जुः, यद्वा अस्य अश्वस्य आस्ये मुखे प्रभृतं प्रक्षिप्तं तृणं सर्वा ता तत् सर्वमपि देवेष्वपि प्राप्तस्य, ते तव यजमानस्य विद्यताम् । यथा इह लोके सर्वसाधनसम्पूर्णः अश्वः तवास्ति तत् परलोकेऽपि अस्तीत्यर्थः । [ —अ० २७।१२।८ ]

इति द्वादशोऽनुवाकः ।

[ त्रयोदशोऽनुवाकः ३६-४२ ]

अथ नवमी—

यदश्वस्य क्रविषो मक्षिकाश यद् वा स्वरौ स्वधितौ रिप्तमस्ति ।
यद्धस्तयोश्शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥ ३६ ॥

यत् । अश्वस्य । क्रविषः । मक्षिका । आश । यत् । वा । स्वरौ । स्वधितौ । रिप्तम् । अस्ति ॥
यत् । हस्तयोः । शमितुः । यत् । नखेषु । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥ ३६ ॥

अस्य अश्वस्य सम्बन्धिनः, क्रविषः क्रव्यं यन्मांसं मक्षिका, आश अशितवती । यद्वा यच्च स्वरौ अञ्जनार्थे शकले, स्वधितौ छेदनहेतौ शस्त्रे रिप्तं लिप्तम्, यदपि शमितुः हस्तयोः लिप्तम्, यच्च तदीयेषु नखेषु लिप्तम्, हे अश्व, ते त्वदीयं सर्वा ता तत्सर्वं देवेषु अपि अस्तु । देवेषु एव हुतं भवतु । यथा पूर्वमन्त्रे नियोज्या बन्धनकालीना गलशिरःपदादिबन्धनरज्जवो देहेषु समर्पिताः, एवमत्र मांसरक्तलेशोऽपि देवेषु समर्प्यते । [—अ० २७।१३।१]

अथ दशमी—

यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति ।
सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ श्रृतपाकम्पचन्तु ॥ ३७ ॥

यत् । ऊवध्यम् । उदरस्य । अप । वाति । यः । आमस्य । क्रविषः । गन्धः । अस्ति ॥
सु । कृता । तत् । शमितारः । कृण्वन्तु । उत । मेधम् । श्रृतपाकम् । पचन्तु ॥ ३७ ॥

उदरस्य मध्ये यद् ऊवध्यम् अर्द्धजीर्णम् अपक्वम्, अपवाति दुर्गन्धरूपेण वायुना सह आगच्छति, यश्च आमस्य अपक्वस्य, क्रविषो मांसस्य, गन्धो दुःसहो भवति[1], तच्च सुकृता सुष्ठु कृतं

१. अस्ति उ. म्यु. ।

यथा भवति तथा शमितारः कृण्वन्तु। उतापि च मेधं यज्ञयोग्यम्, शृतपाकम् अपाकविपाकौ परित्यज्य सम्यक् पक्वं यथा भवति तथा पचन्तु। [—अ० २७।१३।२]

अथैकादशी—

**यत्ते गात्रा॑द॒ग्निना॑ प॒च्यमा॑नाद॒भि शूल॒न्निह॑तस्याव॒धाव॑ति।**
**मा तद्भूम्या॒मा श्रि॑ष॒न्मा तृणे॑षु दे॒वेभ्य॒स्तदु॒शद्भ्यो॑ रा॒तम॑स्तु ॥ ३८ ॥**

यत्। ते। गात्रात्। अग्निना। पच्यमानात्। अभि। शूलम्। नि। हतस्य। अव। धावति॥
मा। तद्। भूम्याम्। श्रिषत्। मा। तृणेषु। देवेभ्यः। तत्। उशद्भ्यः। रातम्। अस्तु ॥३८॥

हे अश्व, अग्निना पच्यमानात्, ते गात्रात् शरीरावयवात्, यत् अल्पम्, अवधावति अविज्ञातं सद् यत् भूमौ पतति निहतस्य नितरां हन्यमानस्य अभिशूलं शूले सक्तं यच्च यदङ्गमवधावति तदङ्गं भूम्यामपि मा श्रिषत् श्लिष्टं लग्नं मा भूत्। [1]किञ्च उशद्भ्यः कामयमानेभ्यो देवेभ्यः, रातं दत्तमस्तु। [—अ० २७।१३।३]

अथ द्वादशी—

**ये वा॒जिनं॑ परि॒पश्य॑न्ति प॒क्वं य ई॑मा॒हुः सु॑र॒भिर्निर्ह॒रेति॑।**
**ये चार्व॑तो मांसभि॒क्षामु॒पास॑त उ॒तो तेषा॑म॒भिगू॑र्त्तिर्न इन्वतु ॥३९॥**

ये। वाजिनम्। परि। पश्यन्ति। पक्वम्। ये। ईम्। आहुः। सुरभिः। निर्। हर। इति॥
ये। च। अर्वतः। मांसभिक्षाम्। उप। आसते। उतो। तेषाम्। अभि। गूर्तिः। नः। इन्वतु ॥३९॥

ये पुरुषाः, वाजिनम् एनम् अश्वम्, पक्वं च पाकं प्राप्तं परिपश्यन्ति तत्र आगत्य आदरेण पश्यन्ति, य ईम् येऽपि[2] अन्ये सुरभिः सुगन्धोऽयम् अश्वः नहि विकृष्य अल्पमाहर इत्याहुः, उतो अपि च ये चान्ये अश्वसम्बन्धिनीं मांसभिक्षाम् उपासते प्रार्थयन्ते, तेषां सर्वेषाम् अभिगूर्त्तिः संकल्पः, नः अस्मान्, इन्वतु प्राप्नोतु, अस्माकं श्रेयसे भवतु इत्यर्थः। [—अ० २७।१३।४]

अथ त्रयोदशी—

**यन्नीक्ष॑णं मां॒स्पच॑न्या उ॒खाया॒ या पात्रा॑णि यू॒ष्ण आ॒सेच॑नानि।**
**ऊ॒ष्म॒ण्या॑पि॒धाना॑ च॒रूणा॑म॒ङ्काः सू॒नाः परि॑ भूष॒न्त्यश्व॑म् ॥ ४० ॥**

यत्। नि। ईक्षणम्। मांस्पचन्याः। उखायाः। या। पात्राणि। यूष्णः। आ। सेचनानि॥
ऊष्मण्या। अपि। धाना। चरूणाम्। अङ्काः। सूनाः। परि। भूषन्ति। अश्वम् ॥ ४० ॥

मांसं पच्यते यस्याम् उखायां सा मांस्पचनी तस्याः उखायाः, नीक्षणं नितराम् ईक्षणम् आदरेण दर्शनं यदस्ति, यानि च पात्राणि यूष्णः रसस्य आसेचनानि सर्वतः सेचनपात्रभूतानि, चरूणां मांसस्थालीनाम्, अपिधाना आच्छादनपात्राणि, ऊष्मण्या ऊष्मारक्षार्थानि यानि सन्ति, अङ्काः मांसलेशेन अङ्किताः, सूनाः स्ववितिवेतसशाखादीनि यानि सन्ति तानि सर्वाणि अश्वं परिभूषन्ति परितः अलं कुर्वन्ति। अश्वस्य यत् कार्यं तत् कुर्वन्तीत्यर्थः। [—अ० २७।१३।५]

१. किन्तु तत् ऊ. म्यु.। २. चा ऊ. म्यु.।

अथ चतुर्दशी—

मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभिविक्त जघ्रिः ।
इष्टँव्वीतमभिगूर्त्तँव्वषट्कृतन्तन्देवासः प्रतिगृभ्णन्त्यश्वम् ॥ ४१ ॥

मा । त्वा । अग्निः । ध्वनयीत् । धूमगन्धिः । मा । उखा । भ्राजन्ती । अभि । विक्त । जघ्रिः ॥
इष्टम् । वीतम् । अभि । गूर्त्तम् । वषट्कृतम् । तम् । देवासः । प्रति । गृभ्णन्ति । अश्वम् ॥४१॥

हे अश्व, त्वा त्वाम्, धूमगन्धिः धूमगन्धापादकः अग्निः मा ध्वनयीत् पाकजन्यशब्दोपेतं मा करोतु । काष्ठविशेषयुक्तेन केनचित् अग्निना पच्यमानादिकं धूमगन्धोपेतं भवति, तदा दुष्पाकेन कुशब्दं यथा भवति तथा पच्यते । तदुभयं मा भूत् इत्यर्थः । [१]भ्राजन्ती उखा अत्यन्ततप्ता स्थाली माभिविक्त अभिहृता विक्तं विदग्धं मा करोत् । त्वं तु जघ्रिः आघ्राणयोग्यः सुगन्धो भव इति शेषः । इष्टम् अत्यन्तेच्छाविषयम्, वीतं कान्तं रमणीयपाकम् अभिगूर्त्तं देवयोग्यम् अस्तु इति यजमानैः संकल्पितम् । वषट्कृतं वषट्कारेण प्रदत्तम्, तम् अश्वम् देवासः प्रतिगृभ्णन्ति देवाः स्वीकुर्वन्तु । [—अ० २७।१३।६]

अथ पञ्चदशी—

निक्रमणन्निषदनँव्विवर्त्तनँय्यच्च पड्वीशमर्वतः ।
यच्च पपौ यच्च घासिञ्जघास सर्वा ता ते अपि देवेष्वस्तु ॥ ४२ ॥

नि । क्रमणम् । नि । सदनम् । वि । वर्त्तनम् । यत् । च । पड्वीशम् । अर्वतः ॥
यत् । च । पपौ । यत् । च । घासिम् । जघास । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥४२॥

निक्रमणम् अश्वस्य पादप्रक्षेपस्थानम्, निषदनम्, विवर्त्तनम्, परिवर्तनस्थानम् यदस्ति, यदपि अर्वतः अश्वस्य, पड्वीशं पादबन्धनस्थानं पादक्षुण्णरजो वास्ति, यच्च यदपि उदकं पपौ, यच्च घासिं तृणादिकघासं[२] भक्षितवान्, ते त्वदीयं सर्वा ता तत् सर्वं देवेषु अपि अस्तु, देवेषु एव समर्पितं भवतु । [—अ० २७।१३।७।]

इति त्रयोदशोऽनुवाकः ।

[ चतुर्दशोऽनुवाकः ४३ ]

अथ षोडशी—

यदश्वाय वास उपस्तृणन्त्यधीवासँय्या हिरण्यान्यस्मै ।
सन्दानमर्वन्तम्पड्वीशम्प्रिया देवेष्वायामयन्ति ॥ ४३ ॥

यत् । अश्वाय । वासः । उप । स्तृणन्ति । अधि । वासम् । या । हिरण्यानि । अस्मै ॥
सन्दानम् । अर्वन्तम् । पड्वीशम् । प्रिया । देवेषु । आ । यामयन्ति ॥ ४३ ॥

हन्यमानस्य अश्वस्य अधस्तात् किंचिद् वस्त्रम् उपरिष्टात् किंचिद् वस्त्रं प्रसारयन्ति । तत् उभयं वासःशब्देन अधीवासशब्देन चोच्यते । यद् वासः अश्वार्थम् उपस्तृणन्ति अधः प्रसारयन्ति,

---

१. किं च उष्मया उ. म्यु. । २. जघासेत्यादीति युक्तम् ।

यच्च अधिवासम् उपरि आच्छादयन्ति, यानि च हिरण्यानि हिरण्याभरणादीनि अस्मै अश्वार्थं सम्पादितानि सर्वं तत्, अर्वतः अश्वस्य, यत् सन्दानं बन्धनसाधनं दाम, यच्च पड्वीशं पादबन्धनस्थानगता रज्जुः, तानि सर्वाणि देवेषु प्रिया प्रियाणि भूत्वा आयामयन्ति सर्वतः प्रसारयन्ति।

[ —अ० २७।१४।१ ]

इति चतुर्दशोऽनुवाकः।

[ पञ्चदशोऽनुवाकः ४४—४६ ]

एवम् अश्वस्तोमीयान् हुत्वा "इमा नु कं भुवना" इत्यथ द्विपदाभिर्जुहोति। तथा च ब्राह्मणम्—"अश्वस्तोमीय९ हुत्वा द्विपदा जुहोति" ( श० का० १३। अ० ३। ब्रा० ६। कं ३ ) इति।

तत्र प्रथमा—

**इमा नु कम्भुवना सीषधामेन्द्रश्च विश्वे च देवाः ॥ ४४ ॥**

इमा। नु। कम्। भुवना। सीषधाम। इन्द्रः। च। विश्वे। च। देवाः ॥ ४४ ॥

नु कमिति पादपूरणे। इमा इमानि भुवना खिलभुवनानि खिलभूतजातानि, सीषधाम वयं साधयाम स्वायत्तानि कुर्मः। तदर्थम् इन्द्रश्च विश्वेदेवाश्च अस्मान् गृह्णन्तु इति शेषः।

[ —अ० २७।१५।१ ]

अथ द्वितीया—

**आदित्यैरिन्द्रस्सगणो मरुद्भिरस्मभ्यम्भेषजा करत् ॥ ४५ ॥**

आदित्यैः। इन्द्रः। सगणः। मरुद्भिः। अस्मभ्यम्। भेषजा। करत् ॥ ४५ ॥

(१) आदित्यैः अदितिपुत्रैः देवगणैः, मरुद्भिः सगणः परिजनभूतैः सहितः, इन्द्रः अस्मभ्यम् अस्मदर्थं भेषजा, करत् करोतु।

[ —अ० २७।१५।२ ]

अथ तृतीया—

**यज्ञश्च नस्तन्वञ्च प्रजाञ्चादित्यैरिन्द्रस्सह सीषधाति ॥ ४६ ॥**

यज्ञम्। च। नः। तन्वम्। च। प्रजाम्। च। आदित्यैः। इन्द्रः। सह। सीषधाति ॥ ४६ ॥

इन्द्रः आदित्यैः अदितिपुत्रैः देवैः सह, नः अस्माकं यज्ञं च फलोद्देशेन अनुष्ठीयमानम् इमम् अश्वमेधाख्यं यागं सीषधाति साधयतु। यथा निष्प्रत्यूहम् अयम् यज्ञः फलसाधनं भवेत् तथा श्वर्त्तयतु। अपि च तन्वम् अस्माकं शरीरम्, प्रजां पुत्रपौत्रादिकं च, सीषधाति साधयतु सुदृढीकरोतु इत्यर्थः।

[ —अ० २७।१५।३ ]

अथ चतुर्थी—

**अग्ने त्वन्नो अन्तम उत त्राता शिवो भवा वरूथ्यः ॥ ४७ ॥**

अग्ने। त्वम्। नः। अन्तमः। उत। त्राता। शिवः। भव। वरूथ्यः ॥ ४७ ॥

---

१. अपि च उ. म्यु.।   २. निर् उ. म्यु.।

हे अग्ने त्वं नः अस्माकम् [1]अन्तिकतमः, उत अपि च, त्राता रक्षकः, वरूथं गृहम्, तत्र साधुः, शिवः सुखकरः भव। [ —अ० २७।१५।४ ]

अथ पञ्चमी—

**वसु॑र॒ग्निर्वसु॑श्रवा॒ अच्छा॑ नक्षि द्यु॒मत्त॑मꣳ र॒यिन्दाः॑ ॥ ४८ ॥**

**वसुः। अग्निः। वसुश्रवाः। अच्छ। नक्षि। द्युमत्तमम्। रयिम्। दाः ॥ ४८ ॥**

वसुः वासयिता, वसुश्रवाः वसु धनं श्रवः कीर्त्तिर्यस्य, तथाविधस्त्वम्, अच्छ अस्मदभिमुखम्, नक्षि व्याप्नुहि। अच्छगत्य च, द्युमत्तमम्[2] दीप्तिमत् रयिं धनम् दाः अस्मभ्यं देहि। [ —२७।१५।५ ]

अथ षष्ठी—

**तन्त्वा॑ शोचिष्ठ दीदिवस्सु॒म्नाय॑ नू॒नमी॑महे॒ सखि॑भ्यः ॥ ४९ ॥**

**तम्। त्वा। शोचिष्ठ। दीदिवः। सुम्नाय। नूनम्। ईमहे। सखिभ्यः ॥ ४९ ॥**

हे शोचिष्ठ शोचयितृतम, हे दीदिवः देवनशीलाग्ने, पूर्वोक्तगुणविशिष्टं त्वाम्, सखिभ्यः सखीनां यजमानानाम् अर्थे नूनं निश्चयेन, सुम्नाय सुम्नं सुखम्, ईमहे याचामः। सखिभ्य इति तादर्थ्ये चतुर्थी। सुम्नाय इति "क्रियाग्रहणं कर्त्तव्यम्" ( पा० अ० २।३।१३ ) इति कर्मणः सम्प्रदानत्वात् चतुर्थी।

**वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।**
**पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः ॥**

**इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीबुक्कणभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये सप्तविंशोऽध्यायः।**

---

१. अन्तमः इत्यादीति युक्तम्। २. अतिशयेन उ. म्यु.।

# अथाष्टाविंशोऽध्यायः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

चतुर्विंशप्रभृतिसप्तविंशान्तैश्चतुर्भिः अध्यायैः अश्वमेधाङ्गसम्भूता मन्त्रा यथावत् चोक्ताः । एतावता दर्शपौर्णमासाग्निहोत्रपशुचातुर्मास्याग्निष्टोमात्यग्निष्टोमवाजपेयराजसूयाग्निचयनसौत्रामण्यश्वमेधाङ्गसम्भूताः प्रकरणसिद्धा मन्त्राः गताः । पुरुषमेध-सर्वमेध-पितृमेध-प्रवर्ग्यमन्त्रा उत्तरत्र आम्नास्यन्ते, तद्व्यतिरिक्ता ये अनारभ्याधीतास्तेषामुक्तेषु दर्शपौर्णमासादिषु वक्ष्यमाणेषु पुरुषमेधादिषु च लिङ्गाद् विनियोगोऽवगन्तव्यः ।

[ प्रथमोऽनुवाकः १–४ ]

अत्रास्मिन् अष्टाविंशाध्याये ग्रहग्रहणादिमन्त्राङ्गविनियोज्या आम्नायन्ते । तत्र **"अग्निश्च"**— इत्यादिप्रथमो मन्त्रः, तत्पाठस्तु—

**अग्निश्च पृथिवी च सन्नते ते मे सन्नमतामदो वायुश्चान्तरिक्षञ्च सन्नते ते मे सन्नमतामद आदित्यश्च द्यौश्च सन्नते ते मे सन्नमतामद आपश्च वरुणश्च सन्नते ते मे सन्नमतामदः ।**
**सप्त सꣳसदो अष्टमी भूतसाधनी ॥ १ ॥**

**अग्निः । च । पृथिवी । च । सम् । नते । ते । मे । सम् । नमताम् । अदः । वायुः । च । अन्तरिक्षम् । च । सम् । नते । ते । मे । सम् । नमताम् । अदः । आदित्यः । च । द्यौः । च । सम् । नते । ते । मे । सम् । नमताम् । अदः । आपः । च । वरुणः । च । सम् । नते । ते । मे । सम् । नमताम् । अदः ॥**
**सप्त । सम् । सदः । अष्टमी । भूतसाधनी ॥ १ ॥**

अग्निः अग्रणीत्वादिगुणविशिष्टो देवः, पृथिवी प्रथनवती विस्तारवती भूः, परस्परसमुच्चयार्थः उभयत्र च शब्दः । अग्निः पृथिवी—आयतनं तदाश्रितः अग्निः, न केवलं तावन्मात्रं किन्तु तस्याधिपतिरपि । अतः परस्परं सन्नते अत्यन्तप्रह्वीभूते, परस्परानुकूले इत्यर्थः । ते उभे देवते मे सत्कर्मणि प्रवृत्ताय मह्यम् अदः यदभिलषितमस्ति तत् सन्नमताम्, णिलोपश्छान्दसः, सन्नमयतामित्यर्थः । एवम् उत्तरेषु वाक्येषु योज्यम् । तत्र अपामधिपतिः वरुणः । अपां बहुत्वेऽपि तदैक्याभिप्रायेण ते इत्युक्तम् । शिष्टं स्पष्टम् । सप्त संसद इति उक्तार्थाः । द्वन्द्वावयवभूतानाम् अष्टानां मध्ये सप्त संसदः देवानाम् आश्रयस्थानानि । अवरोहक्रमेण पृथिवी अष्टमी सा अभूत् । साधनभूतानां प्राणिनामुपजीवनभूतसम्पादसाधनी । अथवा संसाद्यन्ते आभिरिति संसदः, मनोबुद्धिसहितानि पञ्चेन्द्रियाणि,

अष्टमी भूतसाधनी भूतानां कृत्स्नव्यवहारसाधिका वाग्देवता या सा अष्टमी वाक्। ([1]आहित-पुऋता यजुषा साम्नेति नु दैव्या अथ मानुष्या वाहेतीदम्) कुरुतेत्यादिश्रुतेः। [—अ० २८।१।१]

अथ द्वितीयो मन्त्रः—

**सका॑मा२ँ अध्व॑नस्कुरु सं॒ज्ञान॑मस्तु मे॒ऽमुना॑।**
**यथे॒माँ वाचं॑ क॒ल्या॒णीमा॒ वदा॑नि॒ जने॑भ्यः॥ २॥**

**सकामान्। अध्वनः। कुरु। सम्। ज्ञानम्। अस्तु। मे। अमुना॥**
**यथा। इमाम्। वाचम्। कल्याणीम्। आ। वदानि। जनेभ्यः॥ २॥**

पूर्वत्र वाक् अष्टमीति पक्षे निर्दिष्टां वाग्देवीं संबोध्य प्रार्थयते—हे देवि वाक्, अध्वनः अस्माभिः प्राप्तव्यान् यज्ञादिमार्गान् सकामान्, काम्यन्त इति कामाः स्वर्गादिफलानि, फलोपेतान् कुरु। [2]मे मम अमुना कर्मणा निमित्तभूतेन संज्ञानमस्तु। मया अनुष्ठीयमाने कर्मणि सम्यक् ज्ञान-मस्तु इत्यर्थः। किं च जनेभ्योऽस्माभी रक्षणीयपुत्रभृत्यादिजनेभ्यः तेषामर्थे यथा इमां कल्याणीं कल्याणफलसाधनीं वाचम् ऋगादिलक्षणाम्, आ सर्वदा, वदानि ब्रवीमि तथा कुरु। यद् वा इदं कर्म कामधुक् सोमायितमिति यथा जनेभ्यो लौकिकेभ्यः आवदानि तथा कुरु। [—अ० २८।१।२]

अथ तृतीयो मन्त्रः—

**ब्र॒ह्म॒रा॒ज॒न्या॑भ्याꣳ शू॒द्राय॒ चार्या॑य च॒ स्वाय॒ चार॑णाय च॥ ३॥**

**ब्रह्मराजन्याभ्याम्। शूद्राय। च। अर्याय। च। स्वाय। च। अरणाय। च॥ ३॥**

ब्रह्म ब्राह्मणजातिः, अर्यः वैश्यः, स्वः आत्मा, अरणः हन्तव्यः, ब्राह्मणादिवर्णेभ्यः स्वामिने आत्मने च कल्याणीं वाचम्, आवदानीति अनुषञ्जनीयम्। प्रत्येकं यथा सम्बन्धस्तथा चकारः। ब्रह्मराजन्याभ्यामिति सह निर्देशो वर्णद्वयप्राधान्याभिप्रायेण। अत्रापि हे वाक् इति सम्बोधनीयम्। [—अ० २८।१।३]

अथ चतुर्थो मन्त्रः—

**प्रि॒यो दे॒वाना॒न्दक्षि॑णायै दा॒तुरि॒ह भू॑यासम॒यम्मे॒ काम॒ः समृ॑ध्यता॒मुप॑ मा॒दो नम॑तु॥ ४॥**

**प्रियः। देवानाम्। दक्षिणायै। दातुः। इह। भूयासम्। अयम्। मे। कामः। सम्। ऋध्यताम्। उप। मा। अदः। नमतु॥ ४॥**

देवानां सूक्तहविर्भाजां च प्रियो भूयासम्। इहास्मिन् कर्मणि दक्षिणायै, षष्ठ्यर्थे चतुर्थी वक्तव्या। दक्षिणायाः दातुः, यजमानस्य च प्रियो भूयासम्। अयं देवादिप्रियभावरूपः अन्यो वा कामः समृध्यतां प्रवृद्धो भवतु। अदः विप्रकृष्टं फलं यद् वा अदः तत्र स कामः, मा माम् उपनमतु उपगच्छतु। अनयोः एकमन्त्रपक्षे ब्राह्मणादिभ्यः कल्याणीं वाचम् आवदानि। किं च एवं भूयासम् इत्येवमादीनाम् आशास्यानां विकल्पो द्रष्टव्यः। इति तृतीयः खण्डः [—अ० २८।१।४]

इति प्रथमोऽनुवाकः।

---

१. आहितपुरोऋचा यजुषा साम्नेति नु दैव्या अथ मानुष्या वा वाचेतीदम् इति भवितुमर्हति।

२. कि. ब. उ. म्यु.।

[ द्वितीयोऽनुवाकः ५ ]

"बृहस्पत" इत्ययं यजुरन्तो मन्त्रः बार्हस्पत्यग्रहणे विनियुक्तः—

बृहस्पते अति यदर्यो अर्हाद् द्युमद् वि भाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणन्धेहि चित्रम् ।
उपयामगृहीतोऽसि बृहस्पतये त्वैष ते योनिर्बृहस्पतये त्वा ॥ ५ ॥

बृहस्पते । अति । यत् । अर्यः । अर्हात् । द्युमत् । वि । भाति । क्रतुमत् । जनेषु ॥
यत् । दीदयत् । शवसः । ऋतप्रजात । तत् । अस्मासु । द्रविणम् । धेहि । चित्रम् ॥
उपयामगृहीतः । असि । बृहस्पतये । त्वा । एषः । ते । योनिः । बृहस्पतये । त्वा ॥ ५ ॥

अयं मन्त्रः ब्राह्मणपरतया प्रसिद्धः हिरण्यादिपरतया[1] व्याख्येयः । हे बृहस्पते ! बृहतः महत ऋग्वेदादेः स्वामिन् ! अर्यः अभिमन्तव्यः, स्वामिनम् अति अत्यर्यः, जनेषु प्राणिषु तद्हृदयेषु यद् वा ब्रह्म अर्हात् पूजयेत् । स्वाश्रयभूतं देहादिकम् आत्मा चेतनत्वारोपणेन पूजयति । किं च द्युमत् स्वयं प्रकाशवान् द्युमत् दीप्तिमत् क्रतुमत् "बहु स्याम" (छा० ब्रा०, प्र० ८ । ख० २।१-४) इत्यादि-संकल्पवत्, तादृशं यद् वस्तु जनेषु विभाति । किं च हे ऋतप्रजात ! यज्ञार्थम् उत्पन्न ! शवसा बलेन तेजसा दीदयत् दीपयति । तत्र द्रविणं "द्रुदक्षिभ्यामिनन्" (उ० २।५०) इतीनन् प्रत्ययः । गमनशील-व्याप्तमित्यर्थः । तादृशं चित्रं चापनीयं[2] पूजनीयं तत् अस्मासु धेहि स्थापय, साक्षात्कारय इत्यर्थः । द्रविणपरं तु यथोचितं योज्यम् । हे वसवः ! उपयामयतीति उपयामः ग्रहः, तेन ग्रहेण उपयामेन गृहीतोऽसि । बृहस्पतये तदर्थं त्वा त्वां सादयामीति शेषः । एष बृहस्पतिस्ते तव योनिः, अतो बृहस्पते, त्वा त्वाम् अहं गृह्णामीति शेषः । यद्वा पूर्वो भागो ग्रहणे उत्तरस्तु आसादने । अतो गृह्णन् गृहीतोऽसीति शेषः । [—अ० २८।२।१]

इति द्वितीयोऽनुवाकः ।

[ तृतीयोऽनुवाकः ६ ]

"इन्द्रगोमन्" इति गायत्री यजुरन्ता गोमद्गुणविशिष्टेन्द्रग्रहणे विनियुक्ता—

इन्द्र गोमन्निहायाहि पिबा सोमꣳशतक्रतो ।
विद्यद्भिर्ग्रावभिस्सुतम् ।
उपयामगृहीतोऽसीन्द्राय त्वा गोमत एष ते योनिरिन्द्राय त्वा गोमते ॥ ६ ॥

इन्द्र । गोमन् । इह । आ । याहि । पिब । सोमम् । शतक्रतो ॥
विद्यद्भिः । ग्रावभिः । सुतम् ॥
उपयामगृहीतः । असि । इन्द्राय । त्वा । गोमते । एषः । ते । योनिः । इन्द्राय । त्वा । गोमते ॥ ६ ॥

हे गोमन् ! गुणविशिष्टेन्द्र ! इह अस्मिन् यज्ञे, आयाहि । हे शतक्रतो ! बहुयाग बहुकर्मन् वा, यागतः सन् अभीष्टं तं सोमं पिब । कीदृशं सोमम्, विद्यद्भिः अभिषवप्रयोगज्ञैः अध्वर्य्वादिभि-

१. धनपरतया उ. म्यु. । २. चायनीय उ. म्यु. ।

ग्रावभिश्च सुतम् अभिषुतम् । उपयामेत्यादि पूर्ववत् । बृहस्पतेः स्थाने गोमान् इन्द्र इति विशेषः । इति पञ्चमः । [—अ० २८।३।१]

इति तृतीयोऽनुवाकः ।

[ चतुर्थोऽनुवाकः ७ ]

वैश्वानरग्रहणे "ऋतावानम्" इत्याद्याश्चतस्रः पुरोऋचः—

ऋतावानँव्वैश्वानरमृतस्य ज्योतिषस्पतिम् ।
अजस्रङ्घर्ममीमहे ।
उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥ ७ ॥

ऋतावानम् । वैश्वानरम् । ऋतस्य । ज्योतिषः । पतिम् ॥
अजस्रम् । घर्मम् । ईमहे ॥
उपयामगृहीतः । असि । वैश्वानराय । त्वा । एषः । ते । योनिः । वैश्वानराय । त्वा ॥७॥

ऋतावानम् ऋतवन्तं यज्ञवन्तम्, वैश्वानरं विश्वनरहितम्, ऋतस्य सत्यभूतस्य, ज्योतिषः आदित्यादितेजसः, पतिं पालकम्, किं च अजस्रम् अनवरतम्, घर्मं दीप्तम्, ईमहे अभिमतं याचामहे । द्वितीयायामिमानि सर्वाणि विशेषणानि । उपयामेत्यादि गतम् । इति षष्ठः खण्डः । [—अ० २८।४।१ ]

इति चतुर्थोऽनुवाकः ।

[ पञ्चमोऽनुवाकः ८ ]

अथ द्वितीया—

वैश्वानरꣳ हवामह ऋतस्य ज्योतिषस्पतिम् ।
अजस्रङ्घर्ममीमहे ।
उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥ ८ ॥

पदच्छेदः स्पष्टः ॥ ८ ॥

पूर्ववद् योजना । पदव्यत्यासमात्रविशेषः । वैश्वानरं हवामहे आह्वयामः । इति सप्तमः खण्डः । [—अ० २८।५।१]

इति पञ्चमोऽनुवाकः ।

[ षष्ठोऽनुवाकः ६ ]

अथ तृतीया—

वैश्वानरो न ऊतय आ प्रयातु परावतः ।
अग्निरुक्थेन वाहसा ।
उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥ ९ ॥

वैश्वानरः । नः । ऊतये । आ । प्र । यातु । परावतः ॥
अग्निः । उक्थेन । वाहसा ॥
उपयामगृहीतः । असि । वैश्वानराय । त्वा । एषः । ते । योनिः । वैश्वानराय । त्वा ॥९॥

वैश्वानरः अग्निः, परावतः दूरदेशात्, आप्रयातु प्रकर्षेण आगच्छतु, किं निमित्तमित्युच्यते—उक्थेन शस्त्ररूपेण स्तुत्येन च उपेतस्य निमित्तेन वाहसा वाहनेन। अवशिष्टम् उक्तप्रायम्। [—अ० २८।६।१]

इत्यष्टमः खण्डः ।

इति षष्ठोऽनुवाकः ।

[ सप्तमोऽनुवाकः १० ]

अथ चतुर्थी—

वै॒श्वा॒न॒रस्य॑ सु म॒तौ स्या॑म॒ राजा॒ हि कं॒ भुव॑नानामभि॒ श्रीः ।
इ॒तो जा॒तो विश्व॑मि॒दं वि च॑ष्टे वैश्वान॒रो य॑तते॒ सूर्ये॑ण ।
उ॒प॒या॒मगृ॑हीतोऽसि वैश्वान॒राय॑ त्वै॒ष ते॒ योनि॑र्वैश्वान॒राय॑ त्वा ॥ १० ॥

वैश्वानरस्य । सु । मतौ । स्याम । राजा । हि । कम् । भुवनानाम् । अभि । श्रीः ॥
इतः । जातः । विश्वम् । इदम् । वि । चष्टे । वैश्वानरः । यतते । सूर्येण ॥
स्पष्टमन्यत् ॥ १० ॥

वैश्वानरस्य उक्तरूपस्य देवस्य, सुमतौ शोभनबुद्धौ सौमनस्ये, स्याम भवेम। स तु वैश्वानरः, भुवनानां भूतजातानाम्, राजा हि कं राजा स्वामी। खलु हीति प्रसिद्धः। कम् इति अनर्थकः। किं च अभिश्रीः प्राप्तश्रीः, स हि देवः, इतः अस्माद् आहवनीयस्थानात् अस्मात् लोकात् निमित्तभूतात् वा जातः प्रादुर्भूतः। इदं विश्वं कृत्स्नमपि जगत्, विचष्टे स्वतेजसः पश्यति। स एव वैश्वानरः देवः, सूर्येण सह प्रकाशयितुं तेन सह संगतो वा यतते यत्नं करोति, अथवा पर्यन्तं वर्द्धयतीत्यर्थः। [—अ० २८।७।१]

इति नवमः खण्डः ।

इति सप्तमोऽनुवाकः ।

[अष्टमोऽनुवाकः ११]

"मरुत्वाँ इन्द्र" इत्ययं मरुत्वतीयग्रहे विनियुक्तः—

म॒रुत्वाँ॑ इन्द्र वृष॒भो रणा॑य॒ पिबा॒ सोम॑मनुष्व॒धं मदा॑य ।
आ सि॑ञ्चस्व ज॒ठरे॒ मध्व॑ ऊ॒र्मिं त्वꣳ राजा॑सि॒ प्रति॑पत्सु॒ताना॑म् ।
उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा म॒रुत्व॑त ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा म॒रुत्व॑ते ॥११॥

मरुत्वान् । इन्द्र । वृषभः । रणाय । पिब । सोमम् । अनुष्वधम् । मदाय ॥
आ । सिञ्चस्व । जठरे । मध्वः । ऊर्मिम् । त्वम् । राजा । असि । प्रतिपत् । सुतानाम् ॥
स्पष्टमन्यत् ॥ ११ ॥

हे इन्द्र ! मरुत्वान् मरुद्भिः देवैः तद्वान् मरुद्गणकः, वृषभः अपां वर्षिता त्वम्, रणाय रमणीयाय यज्ञाय संग्रामाय वा, अनुष्वधं स्वधेति अन्ननाम, स्वधायां तत्र यज्ञे, सोमं पिब।

किमर्थम् ! मदाय च, पीत्वा च मध्वः मधुनः सोमरसस्य, ऊर्मिम् ऊर्मिभिः प्रवृद्धे, जठरे उदरे, आसिञ्चस्व सर्वतः धारय पूरय । त्वं च प्रतिपत् सुतानां सोमानां राजा असि स्वामी भवसि यतः, अतः आसिञ्चस्व देयं च पिब । शिष्टम् उक्तप्रायम् । [—अ० २८।८।१]

इति दशमः खण्डः ।

इत्यष्टमोऽनुवाकः ।

[ नवमोऽनुवाकः १२ ]

'महाँ' इति महेन्द्राय पुरोऋक्,

**महाँ इन्द्रो वज्रहस्तः षोळशी शर्म यच्छतु ।**

**हन्तु पाप्मानं योऽस्मान्द्वेष्टि ।**

**उपयामगृहीतोऽसीन्द्राय त्वा षोळशिन एष ते योनिरिन्द्राय त्वा षोळशिने ।।१२।।**

महान् । इन्द्रः । वज्रहस्तः । षोडशी । शर्म । यच्छतु ।।

हन्तु । पाप्मानम् । यः । अस्मान् । द्वेष्टि ।।

स्पष्टमन्यत् ।।१२।।

महान् गुणैः प्रवृद्धः, इन्द्रः, वज्रहस्तः सर्वदा शत्रुवधार्थं हस्ते वज्रधारी, षोडशी षोडशस्तोत्रोपेतः, स इन्द्रः, शर्म सुखम्, अस्मभ्यं प्रयच्छतु । किं च यः पाप्मा पापचित्तः पाप्मैव वा, अस्मान् द्वेष्टि अस्मासु द्वेषं करोति, यं च वयं द्विष्मस्तं पाप्मानं हन्तु घातयतु । अत्र उक्तेषु सर्वेषु पर्यायेषु तत्तद्गुणविशिष्टाय देवाय । हे सोमरस ! उपयामेन पात्रेण गृहीतोऽसि यतः, अतस्तदर्थं त्वां सादयामि । एषः ग्रहः, ते योनिः आश्रयस्थानम् । अतस्तद्गुणविशिष्टाय देवाय तत्र त्वां गृह्णामीति सर्वत्र योज्यम् । अत्र प्रथमभागो ग्रहणे उत्तरस्तु आसादने । [—अ० २८।९।१]

इत्येकादशः खण्डः ।

इति नवमोऽनुवाकः ।

[ दशमोऽनुवाकः १३ ]

"अग्निर्ऋषिः" इत्येषाग्नेः पुरोऋक् ।

**अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ।**

**तमीमहे महागयम् ।। १३ ।।**

पदच्छेदः स्पष्टः ।। १३ ।।

अग्निरयम् ऋषिः ( ऋतुथा ) इन्द्रियज्ञानवान्, पवमानः, सर्वम् अग्निं देवं महानुभावम् ईमहे याचामहे । [1]निमित्तं [2]फलम् । [—अ० २८।१०।१]

इति द्वादशः खण्डः ।

इति दशमोऽनुवाकः ।

[ एकादशोऽनुवाकः १४ ]

**अनु वीरैरनु पुष्यास्म गोभिरन्वश्वैरनु सर्वेण पुष्टैः ।**

**अनु द्विपदानु चतुष्पदा वयन्देवा नो यज्ञमृतुथा नयन्तु ।। १४ ।।**

१. किम् इत्यावीति युक्तम् । २. फलाय इति युक्तम् ।

अनु । वीरैः । अनु । पुष्यास्म । गोभिः । अनु । अश्वैः । अनु । सर्वेण । पुष्टैः ॥
अनु । द्विपदा । अनु । चतुष्पदा । वयम् । देवाः । नः । यज्ञम् । ऋतुथा । नयन्तु ॥ १४ ॥

पुष्टैः पोषणं प्राप्तैर्गवादिसमृद्धैः वीरैः वयं समृद्धाः स्मः पुष्टाः भवेम । तथा पुष्टाभिः गोभिः पुष्टैः अश्वैश्च पुष्टाः स्मः । तथा पुष्टेन सर्वेण द्विपदा पुष्टेन चतुष्पदा पुष्टाः स्मः । किं च ऋतुथा ऋतौ ऋतौ तत्तद्यज्ञसमये, नः अस्माकं यज्ञम्, देवाः यष्टव्या नयन्तु समाप्तिं प्रापयन्तु । समाप्तिं प्रापयन्तु इति यज्ञपुरुष आशास्ते । इति त्रयोदशः खण्डः । [—अ० २८।११।१]

इत्येकादशोऽनुवाकः ।

[ द्वादशोऽनुवाकः १५ ]

"आ नो गोत्रा" इत्ययं मैत्रकर्मणि विनियुक्तः—

**आ नो॑ गो॒त्रा द॑र्दृहि गोपते॒ गाः सम॒स्मभ्यं॑ स॒नयो॑ यन्तु॒ वाजाः॑ ।**
**दि॒वक्षा॑ असि वृषभ स॒त्यशु॑ष्मो॒ऽस्मभ्यं॒ सु म॑घवन्बोधि गो॒दाः ॥ १५ ॥**

आ । नः । गोत्रा । दर्दृहि । गोपते । गाः । सम् । अस्मभ्यम् । सनयः । यन्तु । वाजाः ॥
दिवक्षा । असि । वृषभ । सत्यशुष्मः । अस्मभ्यम् । सु । मघवन् । बोधि । गोदाः ॥ १५ ॥

हे गोपते ! वह्वीनां गवां स्वामिन्, नः अस्माकं गोत्रं गोत्राणि अस्मत्कुलभूतानि प्रति, अथवा गोत्रा गवां त्राता त्वं गाः, दर्दृहि प्रयच्छ । अस्मभ्यं सनयो दानानि देयानि वा धनानि वा, वाजा अन्नानि, यन्तु गच्छन्तु । किं च हे वृषभ ! अभिमतवर्षक, त्वं दिवक्षा असि दिवो भोक्ता असि, तथा सत्यशुष्मः सत्यबलः परैः अबाध्यमानसामर्थ्यस्त्वम् अस्मभ्यम्, हे मघवन् धनवन् इन्द्र, सुष्ठु बोधि बुध्यस्व । अस्मभ्यम् अभिमतं दातव्यमिति जानीहीत्यर्थः । यद् वा गोदा अस्मदीयोक्ता विज्ञापनाय बोधि[१] ज्ञातवान्[२] इत्यर्थः । [—अ० २८।१२।१]

इति द्वादशोऽनुवाकः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कणभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्येऽष्टाविंशोऽध्यायः ।



१. अबोधि उ. म्यु. । २. असि. उ. म्यु. ।

# अथैकोनविंशोऽध्यायः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

अष्टाविंशे आप्तोर्ग्राह्यग्रहादिमन्त्रा बृहस्पतिसवादिगता लिङ्गविनियोगादिमन्त्रा उक्ताः ।

[ प्रथमोऽनुवाकः १–१० ]

अथैकोनविंशे अग्निचयनमुखाः सम्भरणीयाङ्गभूते पशौ सामिधेनीषु **"समास्त्वाग्न"** इति नव समिध्यमानसमिद्वत्योरन्तरे अवदधातीति सूचितम् । तत्र प्रथमा—

**समास्त्वाग्न ऋतवो वर्द्धयन्तु सँव्वत्सुरा ऋषयो यानि सुत्या ।**
**सन्दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशश्चतस्रः ॥ १ ॥**

**समाः । त्वा । अग्ने । ऋतवः । वर्द्धयन्तु । सम् । वत्सराः । ऋषयः । यानि । सत्या ॥**
**सम् । दिव्येन । दीदिहि । रोचनेन । विश्वा । आ । भाहि । प्र । दिशः । चतस्रः ॥ १ ॥**

हे अग्ने संभ्रियमाणं त्वा त्वाम्, समाः अत्र सँव्वत्सरस्य पृथगुपादानात् समाशब्देन निर्दिष्टाः काला मासा वा गृह्यन्ते, ते संवर्द्धयन्तु, तथा ऋतवो वसन्ताद्याः, ते च सँव्वत्सराश्च ऋषयो भरद्वाजकश्यपाद्याश्च । त्वमपि अश्वदीप्तः सन् विश्वाः सर्वाः पूर्वादिसर्वमुख्यदिशम् आभाहि सर्वतः प्रकाशयत । तथा चतस्रः प्रदिशो विदिशश्च आभाहि । [—अ० २६।१।१]

अथ द्वितीया—

**सञ्चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय ।**
**मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये ॥ २ ॥**

**सम् । च । इध्यस्व । अग्ने । प्र । च । बोधय । एनम् । उत् । च । तिष्ठ । महते । सौभगाय ॥**
**मा । च । रिषत् । उप । सत्ता । ते । अग्ने । ब्रह्माणः । ते । यशसः । सन्तु । मा । अन्ये ॥२॥**

हे अग्ने ! त्वम् अस्माभिः क्षिप्तैः समिदाभिस्त्वं समिध्यस्व दीप्यस्व । तम् एनं यजमानं च प्रबोधय । त्वं च महते अतिप्रभूताय सौभगाय सुभगत्वाय उत्तिष्ठ च अत्युन्नतो भव । यजमानस्य सौभगाय वा । हे अग्ने तव उपसत्ता शुश्रूषकः, मा रिषच्च कदाचिदपि हिंसां मा प्राप्नोतु । ते तव सम्बन्धिनो ब्रह्माणः ऋत्विजः यशसः यशस्विनः सन्तु भवन्तु । मा अन्ये ऋत्विग्व्यतिरिक्ता द्वेष्याः, मा सन्तु यशस्विनः । [—अ० २६।१।२]

अथ तृतीया—

**त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने सँव्वरणे भवा नः ।**
**सपत्नहा नो अभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन् ॥ ३ ॥**

त्वाम् । अग्ने । वृणते । ब्राह्मणाः । इमे । शिवः । अग्ने । सम् । वरणे । भव । नः ॥
सपत्नहा । नः । अभिमातिजित् । च । स्वे । गये । जागृहि । अप्रयुच्छन् ॥ ३ ॥

हे अग्ने त्वाम् इमे पुरतो वर्तमाना ब्राह्मणा ऋत्विजः, वृणते स्वस्वव्यापारेण वरणं कुर्वते । अतो नः अस्माकम् ऋत्विग्यजमानानां संवरणे, शिवो मङ्गलफलदो भव । किं च त्वं सपत्नहा अवघातको भव । तथा अभिमातिजिच्च अभितो हिंसकोऽभिमातिः, तस्य जेता भव । सपत्नाभिमातिशब्दाभ्यां हन्तृसामान्यविशेषः अभिप्रेतः, एवं कुर्वन् अप्रयुच्छन् अप्रमाद्यन्, जागृहि निद्रारहितो भव । [—अ० २८।१।३ ]

अथ चतुर्थी—

इहैवाग्ने अधि धारया रयिम्मा त्वा निक्रन्पूर्वचितो निकारिणः ।
क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतान्ते अनिष्टृतः ॥ ४ ॥

इह । एव । अग्ने । अधि । धारय । रयिम् । मा । त्वा । निक्रन् । पूर्वचितः । नि । कारिणः ॥
क्षत्रम् । अग्ने । सु । यमम् । अस्तु । तुभ्यम् । उप । सत्ता । वर्धताम् । ते । अनिष्टृतः ॥४॥

हे अग्ने ! इहैव स्थाने स्थित्वा, रयिम् अस्माकं दानयोग्यं धनम्, अधिधारय अस्मभ्यं प्रयच्छ इत्यर्थः । त्वाम्, पूर्वचितः पूर्वम् अग्निं चिन्वन्तः ऋत्विजः इदानीमपि, मा निक्रन् नीचैः मा कार्षुः । ते च निकारिणः नीचैः करणस्वभावाः अतो मा निक्रन् । किं च हे अग्ने तुभ्यं त्वदर्थं क्षत्रम् अस्माकं चयनसामर्थ्यलक्षणबलं क्षत्त्रियजातिर्वा धर्मफलकात्, सुयममस्तु शोभननियमवदस्तु । ते तव, उपसत्ता यजमानः, अनिष्टृतः अहिंसितः, वर्द्धतां गवाश्वादिभिः समृद्धो भवतु । [—अ० २८।१।४]

अथ पञ्चमी—

क्षत्रेणाग्ने स्वायुस्सꣳरभस्व मित्रेणाग्ने मित्रधेये यतस्व ।
सजातानाम्मध्यमस्था एधि राज्ञामग्ने विहव्यो दीदिहीह ॥ ५ ॥

क्षत्रेण । अग्ने । सु । आयुः । सम् । रभस्व । मित्रेण । अग्ने । मित्रधेये । यतस्व ॥
सजातानाम् । मध्यमस्थाः । एधि । राज्ञाम् । अग्ने । वि । हव्यः । दीदिहि । इह ॥ ५ ॥

हे अग्ने ! त्वं क्षत्त्रेण क्षतत्राणनसाधनेन, स्वायुरिति अन्ननाम, शोभनहविर्लक्ष्यमाणः सन्, अथवा शोभनायुष्यः स्थिरं जीवन् प्रवृद्धो भवन्, संरभस्व 'रभ राभस्ये' राभस्यं संभ्रमः, उद्योगं कुरु इत्यर्थः । तथा मित्रेण मित्रे त्राणसाधनं बलं मित्रम्, तेन मित्रधेये तादृशबलाधाने यतस्व यत्नं कुरु । किं च सजातानां सहजातानां[१] मध्यमस्थाः त्वम्, एधि भव वर्द्धयस्व इत्यर्थः । राज्ञां राजमानानां स्वामिनाम्, अग्निं चिन्वानानाम्, तादृशाम् ऋत्विग्यजमानानां वा अग्रे तेषां पुरतः, विहव्यो विहव्यार्हः ज्ञानयोग्यः सन् इह, दीदिहि दीप्यस्व । अथवा राज्ञां क्षत्रियाणां यजमानानामिति योज्यम् । [—अ० २८।१।५]

---

१. सहोत्पन्नानाम् उ. म्यु. ।

अथ षष्ठी—

अति निहो अति स्रिधोऽत्यचित्तिमत्यरातिमग्ने ।
विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यं सहवीरं रयिन्दाः ॥ ६ ॥

अति । निहः । अति । स्रिधः । अति । अचित्तिम् । अति । अरातिम् । अग्ने ॥
विश्वा । हि । अग्ने । दुरिता । सहस्व । अथ । अस्मभ्यम् । सहवीरम् । रयिम् । दाः ॥६॥

हे अग्ने ! निहः नितरां घातकान् अतिक्रम्य स्रिधः, स्रेधतिः [1]निकर्तनकर्मा, [2]निकर्तनकारिणः, शत्रून् च अतिक्रम्य तथा अत्यचित्तिं तव माहात्म्यविषयज्ञानरहितम्, अरातिम् अदातारम् अयष्टारं च अतिक्रम्य वर्द्धस्व इति शेषः । हे अग्ने विश्वा विश्वानि सर्वाणि, दुरिता दुरितानि, सहस्व अभिभव । अथ अनन्तरम् अस्मभ्यं रयिं धनं सहवीरं पुत्रादिभिः सहितं दाः देहि ।

[—अं० २६।१।६]

अथ सप्तमी—

अनाधृष्यो जातवेदा अनिष्टृतो विराळग्ने क्षत्रभृद् दीदिहीह ।
विश्वा आशाः प्रमुञ्चन् मानुषीर्भियश्शिवाभिरद्य परिपाहि नो वृधे ॥७॥

अनाधृष्यः । जातवेदाः । अनिष्टृतः । वि । राट् । अग्ने । क्षत्र ऽभृत् । दीदिहि । इह ॥
विश्वाः । आशाः । प्र । मुञ्चन् । मानुषीः । भियः । शिवाभिः । अद्य । परि । पाहि । नः । वृधे ॥ ७ ॥

हे अग्ने, अनाधृष्यः अन्यैः अनभिभाव्यः, जातवेदाः जातप्रज्ञः जातवेदो वा, अनिष्टृतः[3], विराट् विशेषेण राजमानः, क्षत्रभृत् बलस्य[4] क्षत्रियजातेर्वा धारकः । एवं महानुभावस्त्वम्, इह अस्मिन् स्थाने, दीदिहि दीप्यस्व । तथाभूतस्त्वं विश्वाः, आशाः मनोगतान् कामान्, मानुषीः मनुष्याणाम् अस्माकं सम्बन्धिनीः, भियः भीतीः, प्रमुञ्चन् प्रकर्षेण मोक्षयन् , शिवाभिः मङ्गलैः फलैः, अद्य अस्मिन् दिने, नः अस्माकम्, वृधे वर्द्धनाय, परिपाहि सर्वतः अस्मान् पालय ।

[—अ० २६।१।७]

अथाष्टमी—

बृहस्पते सवितर्बोधयैनं संशितश्चित्सन्तरां संशिशाधि ।
वर्धयैनम्महते सौभगाय विश्वे एनमनुमदन्तु देवाः ॥ ८ ॥

बृहस्पते । सवितः । बोधय । एनम् । सम् । शिवम् । चित् । सम् । तराम् । सम् । शिशाधि ॥
वर्धय । एनम् । महते । सौभगाय । विश्वे । एनम् । अनु । मदन्तु । देवाः ॥ ८ ॥

अत्र बृहस्पतिसवितृशब्दौ सामिधेनीसमाग्नेयत्वाद् अग्निपरौ द्रष्टव्यौ । हे बृहस्पते ! बृहतः देवादेः पालक स्वामिन्, हे सवितः, सर्वस्य अनुज्ञाकर्त्तः, देव अग्ने, एनं यजमानं माम्, बोधय

---

१. वि उ. म्यु. ।
२. वि उ. म्यु. ।
३. अहिंसित इति शेष इति युक्तम् ।
४. यज्ञस्य उ. म्यु. ।

सत्त्वविषयज्ञानं सम्पादय। संशितं चित्, चिदिति पूजायाम्, पूर्वमेव कर्मसु सम्यक् व्यक्तीभूतमपि, सन्तराम् अत्यन्तं सम्यग्भूताम्, शिशाधि तीक्ष्णीकुरु। तथा कृत्वा एनं महते सौभगाय अत्यधिकसौभाग्याय प्रवृद्धशीललाभाय, त्वं प्रवर्धय। किं च विश्वे देवा एनं यजमानम्, अनुमदन्तु अनुमादयन्तु। स्वयं यज्ञादिद्वारा हृष्टा भवन्तु। [—अ० २९।१।८]

अथ नवमी—

अमुत्र भूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः।
प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥ ९ ॥

अमुत्र। भूयात्। अध। यत्। यमस्य। बृहस्पते। अभि। शस्तेः। अमुञ्चः॥
प्रति। औहताम्। अश्विना। मृत्युम्। अस्मात्। देवानाम्। अग्ने। भिषजा। शचीभिः ॥९॥

हे बृहस्पते! बृहतो महतो मन्त्रजातस्य पालक अग्ने, यन्मदीयं शरीरम् अस्य नियन्तुः सन्निधौ भूयात् भवेत्, तत् शरीरम् अमुत्र स्वर्गे, भोगसाधनं भूयात् भवतु। तदर्थं हे बृहस्पते, शचीभिः स्वशक्तिभिः, अभिशस्तेः अभिशंसकात् तत्सकाशात्, अमुञ्चः मोचय। किं च हे अग्ने त्वदनुग्रहात्, अश्विना देवानां भिषजौ देवौ, अस्मात् यजमानसकाशात् मृत्युं प्रत्यौहताम् अन्यत्र प्रापयताम्। कैः साधनैरिति तदुच्यते—शचीभिः स्वकीयैः कर्मभिः। [—अ० २९।१।९]

उद्वयन्तमसस्परि स्वः पश्यन्त उत्तरम्।
देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ १० ॥

उद्। वयम्। तमसः। परि। स्वः। पश्यन्तः। उत्तरम्॥
देवम्। देवत्रा। सूर्यम्। अगन्म। ज्योतिः। उत्तमम् ॥ १० ॥

उद्वयमित्येषा परिधानीया। सा च द्वाविंशे ( अ० २२।८ ) व्याख्याता। [—अ० २९।१।१०]

इति एकोनत्रिंशे प्रथमोऽनुवाकः।

## [ द्वितीयोऽनुवाकः ११-२२ ]

उक्ते(क्त्वा) च पशो 'ऊर्द्ध्वा अस्य' द्वादशाप्रियः। तथा च सूत्रम्—"आप्रियो द्वादश ऊर्द्ध्वा अस्य" इति। तत्र प्रथमा—

ऊर्द्ध्वा अस्य समिधो भवन्त्यूर्द्ध्वा शुक्रा शोचींष्यग्ने।
द्युमत्तमा सुप्रतीकस्य सूनोः ॥ ११ ॥

ऊर्द्ध्वाः। अस्य। समिधः। भवन्ति। ऊर्द्ध्वाः। शुक्रा। शोचींषि। अग्ने॥
द्युमत्तमा। सु। प्रतीकस्य। सूनोः ॥ ११ ॥

अस्य समिन्नामकस्य अग्नेः, समिधः समिन्धनसाधना ज्वालाः, ऊर्द्ध्वा ऊर्द्ध्वमुखा भवन्ति। तथा अस्य अग्नेः, शुक्रा शुक्राणि निर्मलानि, शोचींषि ऊर्द्ध्वा ऊर्द्ध्वंगतानि, सर्वतो व्याप्तानि भवन्ति। किं च सुप्रतीकस्य शोभनावयवस्य, सूनोः अरण्योः उत्पन्नस्य अग्नेः, हविर्लक्षणानि द्युमत्तमा

अतिशयेन दीप्ततमानि भवन्ति । अथवा सुप्रतीकस्य उक्तलक्षणस्य सूनोः दीक्षातो नूतनं जन्मप्राप्तस्य यजमानस्य अग्निना दत्तानि धनानि द्युमत्तमा अतिशयेन द्युमन्ति दीप्तिमन्ति । [—अ० २८।२।१]

अथ द्वितीया—

तनूनपादसुरो विश्ववेदा देवो देवेषु देवः ।
पथो अनक्तु मध्वा घृतेन ॥ १२ ॥

पदच्छेदः स्पष्टः ॥ १२ ॥

तनूनपात् तनूनां शरीराणां न पातयिता, तन्नामकः अग्निः । असुरः, असुः प्राणः प्रकृष्टप्राणः, विश्ववेदाः, विश्वस्य वेदिता सर्वज्ञः, यद्वा विश्वधनः, स च देवो देवेषु मध्ये देवः द्योतनगुणविशिष्टः । अग्नेः इतरेभ्यो देवेभ्यः अतिशयेन द्योतनादिगुणविशिष्टत्वम् । स च मधुरेण घृतेन दीप्तेन आज्येन पथः यज्ञमार्गान् व्यनक्तु । [—अ० २८।२।२]

अथ तृतीया—

मध्वा यज्ञन्नक्षसे प्रीणानो नराशंसो अग्ने ।
सुकृद्देवस्सविता विश्ववारः ॥ १३ ॥

मध्वा । यज्ञम् । नक्षसे । प्रीणानः । नराशंसः । अग्ने ॥
सु । कृत् । देवः । सविता । विश्ववारः ॥ १३ ॥

हे अग्ने मध्वा मधुना आज्येन, प्रीणानः प्रीतिं कुर्वन्, यज्ञम् अस्मदीयम्, नक्षसे गच्छसि प्राप्नोषि । ईदृशः त्वं नराशंसः नरैः आशंमनीयः एवं नाम सुकृत् शोभनफलसाधनयज्ञकर्ता देवः द्योतमानः सविता सर्वेषाम् अनुज्ञाता विश्ववारः विश्वैः वरणीयः । [—अ० २८।२।३]

अथ चतुर्थी—

अच्छायमेति शवसा घृतेनेळानो वह्निर्नमसा ।
अग्निश्स्रुचो अध्वरेषु प्रयत्सु ॥ १४ ॥

अच्छ । अयम् । एति । शवसा । घृतेन । ईडानः । वह्निः । नमसा ॥
अग्निम् । स्रुचः । अध्वरेषु । प्रयत्सु ॥ १४ ॥

अयमग्निः, शवसा बलसाधनेन घृतेन क्षरदाज्येन निमित्तभूतेन अच्छ आभिमुख्येन, एति गच्छति । स च वह्निः हविर्दाहकोऽग्निः, नमसा हविर्लक्षणाज्येन निमित्तेन, ईडानः स्तुवन्, यद् वा नमस्कारोपलक्षितेन मन्त्रेण, ईडानः ईड्यमानः स्तूयमानः सन् एतीति सम्बन्धः । किं च अग्निम् अध्वरेषु यागेषु प्रयत्सु हुतेषु सत्सु, स्रुचः घृतपूर्णाभिमुख्येन प्राप्नुवन्ति । [—अ० २८।२।४]

अथ पञ्चमी—

स यक्षदस्य महिमानमग्नेस्स ईम्मन्द्रा सुप्रयसः ।
वसुश्चेतिष्ठो वसुधातमश्च ॥ १५ ॥

सः । यक्षत् । अस्य । महिमानम् । अग्नेः । सः । ईम् । मन्द्रा । सु । प्रयसः ॥
वसुः । चेतिष्ठः । वसुधातमः । च ॥ १५ ॥

स यजमानः अस्य अग्नेः, महिमानं माहात्म्यम्, यक्षत् स्तोत्रशस्त्रादिरूपेण पूजयतु । स एव यजमानः इदानीं सुप्रयसः शोभनहविर्लक्षणान्नवतः अग्नेः मन्द्रा सुरूपाणि यक्षत् । स अग्निः वसुः वासकः, चेतिष्ठः अतिशयेन चेतयिता । वसुधातमः अतिशयेन वसूनां धारयिता च ।
[—अ० २६।२।५]

अथ षष्ठी—

द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः ।
उरुव्यचसो धाम्ना पत्यमानाः ॥ १६ ॥

द्वारः । देवीः । अनु । अस्य । विश्वे । व्रता । ददन्ते । अग्नेः ॥
उरुव्यचसः । धाम्ना । पच्यमानाः ॥ १६ ॥

अस्य अग्नेः सम्बन्धिन्यो द्वारः, देवीः द्योतमानाः, अनुसृत्य, विश्वे सर्वेऽपि यजमानाः द्वार्षु प्रविश्य, व्रता व्रतानि कर्माणि तदीयानि हवींषि, ददन्ते प्रयच्छन्ति । ता विशेष्यन्ते, उरुव्यचसः प्रभूतविस्तारयुक्ताः अतिविस्तीर्णाः, धाम्ना प्रभूतेन तेजसा पच्यमानाः अत्यन्ततेजस्विन इत्यर्थः । अथवा शाखान्तरपाठानुसारेण पत्यमानाः पत्यतिः ऐश्वर्यकर्मा धाम्ना सर्वोत्कृष्टा इत्यर्थः ।
[—अ० २६।२।६]

अथ सप्तमी—

ते अस्य योषणे दिव्ये न योना उषासानक्ता ।
इमँय्यज्ञमवतामध्वरन्नः ॥ १७ ॥

ते । अस्य । योषणे । दिव्ये । न । योना । उषासानक्ता ॥
इमम् । यज्ञम् । अवताम् । अध्वरम् । नः ॥ १७ ॥

योना स्वकीये स्थाने गार्हपत्यलक्षणे स्थितस्याग्नेः दिव्ये दिवि भवे, न इव, स्थिते, योषणे अग्नेः स्त्रियौ, उषासानक्ता "उषासोषस" ( पा० अ० ६।३।३१ ) इति उषासादेशः । उषासानक्ते अहोरात्रिदेवते अग्नेः मूर्त्तीतरभूते नः अस्माकम्, इमं यज्ञम् 'यज्ञ' इति साधारणं नाम, अध्वरमिति विशेषः । यज्ञविशेषभूतं सोमयागमित्यर्थः । ध्वरतिः हिंसाकर्मा, तत्प्रतिषेधाद् अध्वर इति तदुत्पत्तिः । तम् अवतां रक्षताम्, पारं प्रापय्य फलवन्तं कुरुतामित्यर्थः । [—अ० २६।२।७]

अथाष्टमी—

दैव्या होतारा ऊर्ध्वमध्वरन्नोऽग्नेर्जिह्वामभिगृणीतम् ।
कृणुतन्नः स्विष्टिम् ॥ १८ ॥

दैव्या । होतारा । ऊर्ध्वम् । अध्वरम् । नः । अग्नेः । जिह्वाम् । अभि । गृणीतम् ॥
कृणुतम् । नः । सु । इष्टिम् ॥ १८ ॥

दैव्या दैव्यौ देवसम्बन्धिनौ, होतारा होतारौ देवौ, नः अस्माकम्, अध्वरं सोमयागम्, ऊर्ध्वं समाप्ति गमयतमिति शेषः। किं च अग्नेर्जिह्वां हुतस्य हविषः आस्वादयित्रीम् आभिमुख्येन गृणीतं स्तुतम्. तथा कृत्वा नः यागं स्विष्टिं शोभनयजनम्, तं कृणुतं कुरुतम्। [—अ० २८।२।८]

अथ नवमी—

**ति॒स्रो दे॒वीर्ब॒र्हिरे॒दꣳस॑द॒न्त्विळा॒ सर॑स्वती॒ भार॑ती।**

**म॒ही गृ॒णा॒ना॥ १९॥**

**तिस्रः। देवीः। बर्हिः। आ। इदम्। सदन्तु। इडा। सरस्वती। भारती॥**

**मही। गृणाना॥ १९॥**

तिस्रः त्रिसंख्याविशिष्टाः, देवीः द्योतमानाः इदं बर्हिः इमं यज्ञम्, आसदन्तु आगच्छन्तु। कास्ता इति उच्यन्ते, इडा भूमिः तत्स्थाना, सरस्वती 'सर' इति उदकनाम, तेन तद्वत्स्थानं लभ्यते, अन्तरीक्षस्थाना भारती, भारत आदित्यः, तत्सम्बन्धिनी तत्स्थाना इत्यर्थः। महीति गृणानेति चोभयं तिसृणां प्रत्येकं विशेषणम्। इडा, मही महती विस्तीर्णा गुणैः पूज्या वा, गृणाना अग्नेः स्तुत्या अस्माभिः स्तूयमाना वा। एवं सरस्वतीभारत्योरपि योज्यम्। [—अ० २८।२।९]

अथ दशमी—

**तन्न॑स्तु॒रीप॒मद्भु॑तम्पुरु॒क्षु त्वष्टा॑ सु॒वीर॑म्।**

**रा॒यस्पोष॒ꣳ॒ विष्य॑तु॒ नाभि॑म॒स्मे॥ २०॥**

**तत्। नः। तुरीपम्। अद्भुतम्। पुरुक्षु। त्वष्टा। सु। वीरम्॥**

**रायस्पोषम्। वि। स्यतु। नाभिम्। अस्मे॥ २०॥**

त्वष्टा देवः यूपादितक्षणकर्ता देवशिल्पी, अग्नेः मूर्त्यन्तरभूतदेवः, नः अस्मभ्यम्, तुरीपं प्रापितव्यम्, तत् प्रसिद्धम्, अद्भुतम् अद्भुतमिव स्थितम्, आश्चर्यकरम्, पुरुक्षु पुरूणां निवास-साधनम्, सुवीरं शोभनवीर्योपेतम्, नाभिम् अन्यत्राविचलितं यथा भवति तथा समर्थम्,[1] रायस्पोषं धनपुष्टम्, अस्मे अस्मभ्यं दातुं विष्यतु, "स्यतिरुपसृष्टो विमोचने"। बाह्यस्थानाद् विमोचयतु। [—अ० २८।२।१०]

अथैकादशी—

**वन॑स्पते॒ऽव॑सृ॒जा रर॑ाण॒स्त्मना॑ दे॒वेषु॑।**

**अ॒ग्निर्ह॒व्यꣳश॑मि॒ता सू॑दयाति॥ २१॥**

**वनस्पते। अव। सृज। रराणः। त्मना। देवेषु॥**

**अग्निः। हव्यम्। शमिता। सूदयाति॥ २१॥**

हे वनस्पते! यूपाद्यभिमान्यग्नेर्मूर्त्यन्तरभूत देव! रराणः रममाणस्त्वम्, देवेषु विषयभूतेषु,

१. सम्बद्धम्, उ. म्यु.।

त्मना आत्मना एव अपराप्रेरित एव अवसृज। हविर्निःसाध्यभूतं पशुं यतः शमिता शामितः अग्निर्हव्यं सूदयति पाचयति पाकं करिष्यतीत्यर्थः, अतः अवसृज। [—अ० २९।२।११]

अथ द्वादशी—

अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यम्।

विश्वे देवा हविरिदञ्जुषन्ताम् ॥२२॥

पदच्छेदः स्पष्टः ॥ २२ ॥

हे जातवेद! सर्वज्ञाग्ने! इन्द्राय दत्तं हव्यं हविः, स्वाहा कृणुहि स्वाहुतं कुरु। इदम् अस्माभिर्दत्तं हविः, विश्वे सर्वेऽपि देवाः जुषन्ताम्। [—अ० २९।२।१२]

इत्येकोनत्रिंशे द्वितीयोऽनुवाकः।

[ तृतीयोऽनुवाकः २३—३२ ]

उक्ते एव पञ्चपशौ प्रजापतिर्वायुर्वा विकल्पेन देवता। तत्र वायुदेवतापक्षे वपापुरोडाशहविषां क्रमेण "पीव" इत्याद्या याज्यानुवाक्याः शुक्रवत्यः वायवस्येति सूचितम्। तत्र प्रथमा—

पीवोअन्ना रयिवृधस्सुमेधाः श्वेतस्सिषक्ति नियुतामभिश्रीः।

ते वायवे समनसो वितस्थुर्विश्वेन्नरस्स्वपत्यानि चक्रुः ॥ २३ ॥

पीवोअन्ना। रयिवृधः। सुमेधाः। श्वेतः। सिषक्ति। नियुताम्। अभिश्रीः॥

ते। वायवे। समनसः। वि। तस्थुः। विश्वा। इत्। नरः। सु। अपत्यानि। चक्रुः॥२३॥

सुमेधाः शोभनप्रज्ञः, श्वेतः शुभ्रवर्णः निर्लेप इति यावत्। नियुताम् एतत्संज्ञकानां वडवानां मध्ये अभिश्रीः अभिगतश्रीकः, नियुद्भिः शोभमान इत्यर्थः। एवं महानुभावो वायुः, पीवोअन्ना पीवानि प्रवृद्धानि हविर्लक्षणव्यक्तानि येषां ते, तथोक्तान्। रयिवृधः यजमानस्य कर्मसमापनद्वारा धनस्य वर्द्धकान् तादृशः ऋत्विजः, सिषक्ति सेचति। किं च समनसः यज्ञनिर्वाहविषये समानमनस्काः ऋत्विजः, वितस्थुः विविधस्तोत्रशस्त्रैश्च शरेषु तस्थुः तिष्ठन्ते। किं च ते नरः कर्मनिर्वाहकऋत्विजः यजमानाः, स्वपत्यानि शोभनापत्यसाधनानि, विश्वा इत् सर्वाणि अपि कर्माणि, चक्रुः कुर्वन्ति। [ —अ० २९।३।१ ]

अथ द्वितीया—

राये नु यञ्जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम्।

अध वायुन्नियुतस्सश्चतस्स्वा उत श्वेतँव्वसुधितिन्निरेके ॥ २४ ॥

राये। नु। यम्। जज्ञतुः। रोदसी। इमे। राये। देवी। धिषणा। धाति। देवम्॥

अध। वायुम्। नियुतः। सश्चतः। स्वाः। उत। श्वेतम्। वसुधितिम्। निरेके॥ २४॥

इमे रोदसी द्यावापृथिव्यौ, नु क्षिप्रम्, राये धनार्थं वृष्टया अपि धनाय, यं जज्ञतुः उत्पादयताम्, तं देवं धिषणा अस्मदायस्तुतिरूपा वाक् बुद्धिर्वा, धाति दकारलोपश्छान्दसः, दधाति धारयति

विषयीकरोति। अथ अनन्तरम्, उत अपि च, निरेके नितरां पृथग्भूते विजने अन्तरीक्षे श्वेतं निर्मललेपम्, वसुधितिं धनस्य धारकं वायुं, नियुतः अश्वाः सश्चतः यज्ञगमनार्थं संगच्छन्ति।

[ —अ० २८।३।२ ]

अथ तृतीया—

**वायुरग्रेगा यज्ञप्रीस्साकङ्गन्मनसा यज्ञम्।**
**शिवो नियुद्भिश्शिवाभिः॥ २५॥**

**वायुः। अग्रेगाः। यज्ञप्रीः। साकम्। गन्। मनसा। यज्ञम्॥**
**शिवः। नियुद्भिः। शिवाभिः॥ २५॥**

अयं वायुः अग्रेगाः देवानां पुरतो गन्ता, अथवा अतिशीघ्रत्वात् सर्वेषां वेगगामिनां पुरो गन्ता, अथ यज्ञप्रीः यज्ञेन प्रीयमाणः, शिवः मङ्गलकरो वायुः, शिवाभिः मङ्गलाभिर्नियुद्भिः स्वकीयाभिः अश्वाभिः साकं सह मनसा यज्ञो गन्तव्य इति बुद्धया गन् गच्छतु। [—अ० २८।३।३ ]

अथ चतुर्थी—

**प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे।**
**नि नो रयिं सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः॥ २६॥**

**प्र। याभिः। यासि। दाश्वांसम्। अच्छ। नियुद्भिः। वायो। इष्टये। दुरोणे॥**
**नि। नः। रयिम्। सु। भोजसम्। युवस्व। नि। वीरम्। गव्यम्। अश्व्यम्। च।**
**राधः॥२६॥**

हे वायो! याभिः नियुद्भिः, इष्टये यागाय, दुरोणे यागगृहे वर्त्तमानं दाश्वांसं हविर्दत्तवन्तं दानशीलम्, अच्छ अभिप्राप्तुं प्रयासि गच्छसि, ताभिरेव आगत्य, नः अस्मभ्यम्, वीरं वीर्योपेतं पुत्रं नियुवस्व, सुभोजसं सुष्ठु भोजयितारं रयिं नियुवस्व। तथा गव्यं गोसमूहम्, अश्व्यम् अश्वीसमूहं तदुभयात्मकम् राधः धनं च नियुवस्व। [—अ० २८।३।४]

अथ पञ्चमी—

**वायो ये ते सहस्रिणो रथासस्तेभिरागहि।**
**नियुत्वान्त्सोमपीतये॥ २७॥**

**वायो। ये। ते। सहस्रिणः। रथासः। तेभिः। आ। गहि॥**
**नियुत्वान्। सोमपीतये॥ २७॥**

हे वायो! ये सहस्रिणः सहस्रसंख्यायुक्ता रथासः रथाः ते वसन्ति, तेभिः तैः, आगहि आगच्छ अस्मद्यज्ञम्। कीदृशस्त्वम्? नियुत्वान् नियुत्संज्ञकाश्ववान्, सोमपीतये सोमपानार्थम्।

[—अ० २८।३।५ ]

अथ षष्ठी—

एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विंशती च ।
तिसृभिश्च वहसे त्रिंशता च नियुद्भिर्वाय इह ता विमुञ्च ॥ २८ ॥

एकया । च । दशभिः । च । स्वभूते । द्वाभ्याम् । इष्टये । विंशती । च ॥
तिसृभिः । च । वहसे । त्रिंशता । च । नियुद्भिः । वायो । इह । ता । वि । मुञ्च ॥ २८ ॥

हे वायो ! इष्टये अस्मद्यागाय गन्तुम्, स्वभूते तव साधनभूते मयि निधातुम् एकया च नियुता द्वाभ्यां च अस्मदभिमतधनानि, वहसे वहसि धारयसि । विमुञ्च इति उत्तरत्र सम्बन्धः[१] । एवं दशभिः नियुद्भिः वहसे इत्यादि योज्यम् । त्रिंशता च वहसे त्वया यानि धृतानि, ता तानि इहास्मिन् यज्ञप्रदेशे, विमुञ्च निधेहि । वाय इह इत्यत्र वकारलोपः । [ अ० २९ । ३ । ६ ]

अथ सप्तमी—

नियुत्वान्वाय आगह्ययꣳ शुक्रो अयामि ते ।
गन्तासि सुन्वतो गृहम् ॥ २९ ॥

नियुत्वान् । वायो । आ । गहि । अयम् । शुक्रः । अयामि । ते ॥
गन्ता । असि । सुन्वतः । गृहम् ॥ २९ ॥

हे वायो ! नियुत्वान् नियुद्भिः तद्वान् त्वम्, आगहि अस्मद्यज्ञम् आगच्छ । अयं शुक्रो ग्रहः दीप्तः[२] सोमरसो वा ग्रहः, ते तुभ्यम्, तं त्वम् अयामि प्रयाहि । यद् वा शुक्रेण तेन[३] युक्तोऽहम्, ते तव समीपम् अयामि आगच्छामि । अतः त्वं सुन्वतः अभिषवं कुर्वतः यजमानस्य गृहं गन्तासि आगन्तासि । [—अ० २९।३।७]

अथाष्टमी—

वायो शुक्रो अयामि ते मध्वो अग्रन्दिविष्टिषु ।
आयाहि सोमपीतये स्पार्हो देव नियुत्वता ॥३०॥

वायो । शुक्रः । अयामि । ते । मध्वः । अग्रम् । दिविष्टिषु ॥
आ । याहि । सोमपीतये । स्पार्हः । देव । नियुत्वता ॥३०॥

हे वायो ! दिविष्टिषु दिवः स्वर्गस्यैषणेषु स शुक्रः ग्रहः गृहीत इति शेषः । यतः मध्वः अग्रं मधुरस्य सोमरसस्य सारभूतं शुक्रं ते तुभ्यं प्रदातुम्, अयामि आगच्छामि, अतः स्पार्हः सर्वैः स्पृहणीयः त्वम्, हे देव नियुत्वता अश्वेन आयाहि । किमर्थम् ? सोमपीतये सोमपानार्थम् । [—अ० २९।३।८]

अथ नवमी—

आ नो नियुद्भिश्शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् ।
वायो अस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिस्सदा नः ॥३१॥

१. समन्वयः उ. म्यु. । २. शुभ्रः उ. म्यु. ३. नि. उ. म्यु.

आ । नः । नियुद्भिः । शतिनीभिः । अध्वरम् । सहस्रिणीभिः । उप । याहि । यज्ञम् ॥
वायो । अस्मिन् । सवने । मादयस्व । यूयम् । पात । स्वस्तिभिः । सदा । नः ॥३१॥

हे वायो ! नोऽध्वरम् अस्मदीयम् यज्ञम्, शतिनीभिः शतानि यासु विद्यन्ते ताः शतिन्यस्ताभिः, तथा सहस्रिणीभिः अपरिमिताभिरित्युक्तं भवति । तादृशीभिः नियुद्भिः उपयाहि उपागच्छ, आगत्य च अस्मिन् सवने तृतीयसवने मादयस्व । इदानीम् ऋत्विजमाह—हे ऋत्विजः ! यूयं स्वस्तिभिः अविनाशिभिः कर्मभिः सदा, नः अस्मान्, पात रक्षत । [—अ० २६।३।६]

अथ दशमी—

तव॑ वाय ऋतस्पते त्वष्टु॑र्जामातरद्भुत ।
अवा॒ᳪस्यावृ॑णीमहे ।
हि॒र॒ण्य॒ग॒र्भ इत्ये॒षः ॥३२॥

तव । वायो । ऋतस्पते । त्वष्टुः । जामातः । अद्भुत ॥
अवांसि । आ । वृणीमहे ॥
हिरण्यगर्भः । इति । एषः ॥३२॥

हे ऋतस्पते ! ऋत इति षष्ठी, "ऋ गतौ" इत्यस्मात् क्विपि, तुकि कृते 'ऋत्' इति भवति । हे वायो ! ऋतस्पते शीघ्रगामिन् इत्यर्थः । हे त्वष्टुः जामातः ! त्वष्टुः विश्वकर्मणः अपत्यस्य भर्त्तः, हे अद्भुत आश्चर्य, अवांसि रक्षणानि आवृणीमहे । [—अ० २६।३।१०]

अथ तृतीयानुवाकमन्त्राणाम् "पीवोअन्ना रयिवृधः" इत्यादि "तव वाय" इत्यन्तानाम् ऋचांमध्ये "पीवोअन्ना, राये नु यम्" इति द्वे श्वेतवत्यौ । याज्यानाम् अविशिष्टानां मन्त्राणां मध्ये गायत्र्यः उक्थः त्रिपशोर्विपादीनाम् अनुवाक्याः त्रिष्टुभो याज्याः ताः अधिविकल्पार्था इति व्यवस्था ।

इति ऊनत्रिंशेऽध्याये तृतीयोऽनुवाकः ।

## [चतुर्थोऽनुवाकः ३३—३८]

"हिरण्यगर्भ" इत्याद्या उक्ता एव ( अ. २५।१ ) । पशोः प्रजापतिपक्षे वपापुरोडाशहविषां याज्यानुवाक्यावत्यौ । याज्यानुवाक्याः प्राजापत्यस्येति । तत्र "हिरण्य" इत्येषा स्रुवाधारे । हिरण्यगर्भ इति ऋचः स्रुवाधार इति सूचितम् । सा च पूर्वमेव व्याख्याता ( अ० २५।१ ) । तत्र पशोर्वपायाः पुरोनुवाक्यामाह—

येन॒ द्यौरु॒ग्रा पृ॑थि॒वी च॑ दृ॒ढ्ळा येन॒ स्वः॑स्तभि॒तँ येन॒ नाकः॑ ।
यो अ॒न्तरि॑क्षे॒ रज॑सो वि॒मानः॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ वि धेम ॥३३॥

येन । द्यौः । उग्रा । पृथिवी । च । दृढ़ा । येन । स्वः । स्तभितम् । येन । नाकः ॥
यः । अन्तरिक्षे । रजसः । वि । मानः । कस्मै । देवाय । हविषा । वि । धेम ॥३३॥

कशब्दाभिधेयेन प्रजापतिना द्यौरुग्रा उद्गूर्णबला अतितेजस्विनी कृता। येन पृथिवी भूमिश्च दृह्ला दृढ़ा प्राणिनिवासास्पदा कृता। यद्वा उग्रा द्यौः दृह्ला पृथिवी च जगदुपकाराय निर्मिते। येन च स्वः स्वर्गलोकस्थानं स्तभितं पतनात् निवार्य अन्तरिक्षे धृतम्। येन नाकः, अस्मिन् न अकम् अस्तीति नाकः सत्यलोकः। स च स्तभितः। यश्च महानुभावोऽन्तरीक्षेऽवकाशात्मके देशे रजसो विमानः विधाननिर्माता विमानः "लोकाः राज्यं सुव्यक्ता" इति निरुक्तात् लोकस्य विमानः निर्माता। तस्मै कस्मै प्रजापतये देवाय हविषा वपारूपेण विधेम परिचरेम। [—अ० २९।४।१]

अथ याज्या—

**यं क्रन्द॑सी अव॑सा तस्तभाने अ॒भ्यैक्षे॑ता॒म्मन॑सा रेज॑माने।**

**यत्राधि॒ सूर॒ उदि॑तो वि॒भाति॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ वि धेम ॥३४॥**

**यम्। क्रन्दसी। अवसा। तस्तभाने। अभि। ऐक्षेताम्। मनसा। रेजमाने॥**

**यत्र। अधि। सूरः। उत्। इतः। वि। भाति। कस्मै। देवाय। हविषा। वि। धेम॥३४॥**

यं महानुभावं हिरण्यगर्भम्, क्रन्दसी, क्रन्दनं रोदनं तस्मादित्यर्थः। प्रजापतेः क्रन्दनात् उत्पन्ने, "यदरोदीत्तदनयोः रोदस्त्वम् (तै. ब्रा. २।२।९।४) इति श्रुतिः। किमर्थम्? अवसा रक्षणेन निमित्तेन भयप्रसक्तिमाह, तस्तभाने पूर्वं सह वर्त्तमाने अपि दूर (निविन्यस्तम्) विन्यासं प्राप्नुवाने। किंच (रक्षणापेक्षणे) रक्षणापेक्षणाय मनसा प्रजापतिं रेजमाने गच्छन्त्यौ सत्यौ अभ्यैक्षेताम् अभिमतिमकुर्वाताम्। अत्रौचित्याद् द्यावापृथिव्याविति गम्यते। किं च यत्र यस्मिन् प्रजापतौ, अधि इति सप्तम्यर्थानुवादि, सूरः उदितः सन् विभाति लोके प्रकाशते। कस्मा इति गतम्।

[—अ० २९।४।२]

अथ "आपो ह यद्" इत्येषा पुरोडाशस्य पुरोनुवाक्या—

**आपो॑ ह॒ यद् बृ॒ह॒तीर्विश्व॒माय॒न्गर्भ॒न्दधा॑ना ज॒नय॑न्तीर॒ग्निम्।**

**ततो॑ दे॒वाना॒ᳫ समवर्त॒तासु॒रेकः॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ वि धेम ॥३५॥**

**आपः। ह। यत्। बृहतीः। विश्वम्। आयन्। गर्भम्। दधानाः। जनयन्तीः। अग्निम्॥**

**ततः। देवानाम्। सम्। अवर्तत। असुः। एकः। कस्मै। देवाय। हविषा। वि। धेम॥३५॥**

यत् यस्मात् प्रजापतेः अनुग्रहात्, बृहतीः महत्यः आपः, विश्वम् आयन् विश्वाकारं प्राप्ताः, तथा च स्मर्यते,—

**"अप एव ससर्जादौ तासु वीर्यमवाकिरत्।**

**तदण्डमभवद्धैमम्"** (मनु० अ० १।८,९)

इति। कीदृश्यः आपः, गर्भं गर्भस्थानीयं यजमानं दधानाः धारयन्त्यः, तथा अग्निहोमसाधनं जनयन्तीः उत्पादयन्त्यः। गर्भम् अग्निमिति विशेषण-विशेष्यभावो द्रष्टव्यः। ततः तस्मात् प्रजापतेः सकाशात् देवानां सर्वेषाम्, असुः जीवनहेतुः प्रापकः समवर्त्तत प्रवृत्तोऽभूत्। शिष्टं गतम्।

[—अ० २९।४।३]

"यश्चिदाप" इत्येषा उक्तपशोः पुरोडाशस्य याज्या—

यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा वि धेम ॥३६॥

यः । चित् । आपः । महिना । परि । अपश्यत् । दक्षम् । दधानाः । जनयन्तीः । यज्ञम् ॥
यः । देवेषु । अधि । देवः । एकः । आसीत् । कस्मै । देवाय । हविषा । वि । धेम ॥३६॥

यश्चित् पूर्वोक्तः प्रजापतिरपि, 'चित्' इति अपिशब्दार्थः, महिना स्वमहिम्ना आपः द्वितीया-बहुवचनं पर्यपश्यत् जगद्रक्षासमर्थाः । एकः यज्ञं वीक्ष्य तत्पर्यालोचनपूर्विकां सृष्टिं कृतवान् । उदकं कर्म सुमनसं यजमानं दधानाः, यज्ञं समिदाज्यपुरोडाशादिसाध्यं यागं यज्ञसाधनम् अग्निं च दधानाः, जनयन्तीः । दक्षं यज्ञमिति समानाधिकरणं द्रष्टव्यम् । यश्च देवेषु मध्ये अधि अधिको देव एक एवासीत् अभूत्, देवानामपि उत्पादकत्वात् । शिष्टमुक्तम् । [—अ० २६।४।५]

"मा नो हिंसीत्" इतीयं पूर्वोक्त[1] पशोः हविषोऽनुवाक्या—

मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा वि धेम ॥३७॥

मा । नः । हिंसीत् । जनिता । यः । पृथिव्याः । यः । वा । दिवम् । सत्यधर्मा । जजान ॥
यः । च । आपः । चन्द्राः । बृहतीः । जजान । कस्मै । देवाय । हविषा । वि । धेम ॥३७॥

यः प्रजापतिः पृथिव्याः जनयिता उत्पादकः, यो वा यश्च सत्यधर्मा सत्यभृत् धारणकर्मा, दिवं द्युलोकं जजान, तथा यश्च आपो जजान । कीदृश्यः ताः ? चन्द्रा चन्द्रिण्यः आह्लादकरा इत्यर्थः । बृहतीः महतीः जजान । स देवो नः अस्मान् मा हिंसीत् हिंसां मा कार्षीत् । तदर्थं कस्मै देवाय हविषा विधेमेति यत् त्रयोदशेऽपि व्याख्यातम्, अत्र जजानेति आहुः । 'प्रजापते न' इत्येषा उक्ता एव पशोर्हविषो याज्या । एषाऽपि एकादशे व्याख्याता ( अ० ११।२६ ) । अत्र विश्वा जातानीति पाठः । [ —अ० २६।४।६ ]

इति चतुर्थोऽनुवाकः ।

[पञ्चमोऽनुवाकः ३८–४९]

चित्यस्याग्नेः शिरोभागस्योपस्थानम् 'अग्न आयूंषि' इत्यादि गायत्रम्, दक्षिणपक्षोपस्थानम् 'अभि त्वा' इति रथन्तरम्, 'त्वामिद्धि' इति उत्तरपक्षस्य बृहत्, 'कया न' इति वामदेव्यं मध्यस्य 'यज्ञायज्ञा' इति यज्ञायज्ञियस्य पुच्छस्योपस्थानम् । तथा च सूत्रम्—"चित्यमालभ्य तिष्ठन् हिंकृत्य साम गायति, पुरस्ताद् गायत्रम्, दक्षिणपक्षे रथन्तरम्, उत्तरे बृहदात्मनि वामदेव्यम्, पुच्छे यज्ञा यज्ञेति" । तत्र शिरसः उपस्थानमन्त्राः—

अग्न आयूंषि पवस आसुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥३८॥

---

१. स्य उ० म्यु० ।

अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् ।
दधद्रयिम्मयि पोषम् ॥३९॥

अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ।
तमीमहे महागयम् ॥४०॥

एते त्रयोऽपि व्याख्याताः ( अ. २१।२६, अ. ८।२०, अ. २८।१३ ) [—अ० २९।५।१—३]

अथ दक्षिणपक्षोपस्थानस्य प्रथममन्त्रमाह—

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतस्स्वर्दृशमीशानमिन्द्र तस्थुषः ॥४१॥

अभि । त्वा । शूर । नोनुमः । अदुग्धाः । इव । धेनवः ॥
ईशानम् । अस्य । जगतः । स्वर्दृशम् । ईशानम् । इन्द्र । तस्थुषः ॥४१॥

हे शूर शौर्योपेत इन्द्र ! त्वा त्वाम् अभिप्राप्य नोनुमः स्तुमः । तत्र दृष्टान्तः—अदुग्धा इव धेनवः, धेनवो नवप्रसूता गावः, ताः अदुग्धा अकृतदोहा इव । ताः यथा वत्सं त्वरया आगत्य हम्बारावं कुर्वन्ति तद्वत् । अतित्वरे दृष्टान्तोऽयम् । कीदृशं त्वाम् इत्युच्यते, अस्य प्रतीयमानस्य जगतः जङ्गमस्य ईशानम्, तस्थुषः स्थावरस्य ईशानं स्वामिनम् । तथा स्वर्दृशं स्वर्गस्य द्रष्टारम् ।
[—अ० २९।५।४]

अथ तस्य द्वितीयमन्त्रमाह—

न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥४२॥

न । त्वावान् । अन्यः । दिव्यः । न । पार्थिवः । न । जातः । न । जनिष्यते ॥
अश्वायन्तः । मघवन् । इन्द्र । वाजिनः । गव्यन्तः । त्वा । हवामहे ॥४२॥

हे इन्द्र ! त्वावान् त्वत्सदृशः त्वत्समानः महानुभावोऽन्यः कश्चित्, दिव्यो दिवि भवो न जातो, न जनिष्यते च । तथा पार्थिवः पृथिव्यामुत्पन्नः मनुष्यो वा पूर्वं न जातः नोत्पन्नः । इतः परमपि न जनिष्यते । अतो महानुभावं त्वा त्वाम् हे मघवन् ! इन्द्र, अश्वायन्तः अश्वान् आत्मनः इच्छन्तः, गव्यन्तः प्रवृद्धाः गाः इच्छन्तो वयं वाजिनः हविर्लक्षणान्नवन्तः सन्तः, हवामहे आह्वयामः । अश्वादिसमृद्ध्यर्थं सुमेध्यहविःप्रदानाय आह्वयामः । [—अ० २९।५।५]

अथ उत्तरपक्षस्योपस्थाने प्रथममन्त्रमाह—

त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वाँवृत्रेष्विन्द्र सत्पतिन्नरस्त्वाङ्काष्ठास्वर्वतः ॥४३॥

त्वाम् । इत् । हि । हवामहे । सातौ । वाजस्य । कारवः ॥
त्वाम् । वृत्रेषु । इन्द्र । सत्पतिम् । नरः । त्वाम् । काष्ठासु । अर्वतः ॥४३॥

त्वामिद्धि त्वामेव इन्द्रम्, हवामहे आह्वयामः। किमर्थम्? वाजस्य अन्नस्य सातौ भोजननिमित्तभूते अन्नलाभाय। के वयम्? कारवः स्तोतारः, हे इन्द्र! त्वां वृत्रेषु मेघेषु वृष्टयर्थं भेत्तव्येषु सत्सु, अथवा वृत्रेषु पापेषु निवारयितव्येषु, नरो वयं सत्पतिं सतां पालकं हवामहे। तथा अर्वतो बलवतः शत्रोः काष्ठासु मर्यादासु आजिषु जेतव्यासु हवामहे। [—अ० २६।५।६]

अथ द्वितीयामाह—

**स त्वन्नश्चित्र वज्रहस्त धृष्णुया महस्स्तवानो अद्रिवः।**

**गामश्वꣳ रथ्यमिन्द्र सङ्किर सत्रा वाजन्न जिग्युषे ॥४४॥**

सः। त्वम्। नः। चित्र। वज्रहस्त। धृष्णुया। महः। स्तवानः। अद्रिव इत्यद्रिऽवः॥
गाम्। अश्वम्। रथ्यम्। इन्द्र। सम्। किर। सत्रा। वाजम्। न। जिग्युषे ॥४४॥

हे चित्र! चायनीय वज्रहस्त शत्रुवधार्थं हस्ते शस्त्रधारिन्, अद्रिवः पर्वतसमानसारवज्रवन् हे इन्द्र, सः उक्तगुणविशिष्टस्त्वम्, महः स्तवानः स्तूयमानः त्वम्, नः अस्माकं धृष्णुया सहसा, अथवा धर्षकः त्वं रथ्यं रथादिमश्वं हे इन्द्र संकिर किरतिरत्र दानार्थः, सम्यक् प्रयच्छ। तत्र दृष्टान्तः—सत्रा सत्रेषु वाजं न यथा प्रवृद्धं पशुपुरोडाशहोमादिकम्, अर्वजितवान् असि तद्वद् अस्मभ्यं गवादिधनं जिग्युषे जिगासि। [ —अ० २६।५।७ ]

अथ मध्यभागस्योपस्थानमन्त्रमाह—

**कया नश्चित्र आभुवदूती सदावृधस्सखा।**

**कया शचिष्ठया वृता ॥४५॥**

कया। नः। चित्रः। आ। भुवत्। ऊती। सदावृध इति सदाऽवृधः। सखा॥
कया। शचिष्ठया। वृता ॥४५॥

अयम् इन्द्रः, कया कीदृश्या, ऊती ऊत्या रक्षणेन, नः अस्माकम्, चित्रः चायनीयः आभुवत् आभूत्। कीदृशः, सदावृधः सदा वर्द्धमानः सखा सखीभूतः, किं च कया कीदृश्या शचिष्ठया अतिशयेन शक्तिमत्या, वृता वर्त्तमानेन[१] यज्ञागमनेन आभुवदिति सम्बन्धः। इयम् इन्द्रस्य वज्रिणः यथा अपचितिः तथा तस्य दुराराध्यस्य लक्षणस्तुतिः। [—अ० २६।५।८]

अथ द्वितीयामाह—

**कस्त्वा सत्यो मदानाम्मꣳहिष्ठो मत्सदन्धसः।**

**दृढा चिदारुजे वसु ॥४६॥**

कः। त्वा। सत्यः। मदानाम्। मंहिष्ठः। मत्सत्। अन्धसः।
दृढा। चित्। आ। रुजे। वसु ॥४६॥

---

१. अस्मत् उ० म्यु०।

हे इन्द्र ! कः त्वा त्वाम्, मदानां मदजनकानां मध्ये अन्धसः अन्धोऽन्नम्, अन्धसा सोमलक्षणप्रदानेन मंहिष्ठः अतिशयेन पूज्यः, सत्यः सत्यकर्मा यजमानः, मत्सत् माद्यति। किमर्थम्? वसु बहु धनं लब्धुम्। दृढ़ा चित् दृढ़ान्यपि शत्रुपत्राणि आरुजे सर्वतः भङ्क्तुं कर्तुं त्वं विद्यसे। तत्र च त्वां सोमेन प्रीणयतां महानुभावो दुर्लभ इति स्तुतिः। [—अ० २६।५।६]

अथ तृतीयामाह—

**अभी षु णस्सखींनामविता जंरितृणाम् ।**
**शतम्भंवास्यूतयें ॥४७॥**

अभि । सु । नः । सखीनाम् । अविता । जरितृणाम् ॥
शतम् । भवासि । ऊतये ॥४७॥

हे इन्द्र ! सखीनां तव मित्रभूतानां जरितृणाम्, नः अस्माकम्, ऊतये रक्षणाय, अविता सर्वेषां रक्षिता त्वम्, अभि आभिमुख्येन सुष्ठु शतं शतधा अपरिमितो भवासि भवसि। [—अ० २६।५।१०]

पुच्छोपस्थाने प्रथममन्त्रमाह—

**यज्ञा यंज्ञा वो अग्नयें गिरा गिंरा च दक्षंसे ।**
**प्र प्रं वयममृतंञ्जातवेंदसम्प्रियम्मित्रन्न शंꣳसिषम् ॥४८॥**

यज्ञा । यज्ञा । वः । अग्नये । गिरा । गिरा । च । दक्षसे ॥
प्र । प्र । वयम् । अमृतम् । जातवेदसम् । प्रियम् । मित्रम् । न । शंसिषम् ॥४८॥

हे यजमानाः, वः युष्माकम्, यज्ञा यज्ञा तत्तद्यज्ञे हविःप्रदानसमये, यद्वा यज्ञा यज्ञा यज्ञेन यज्ञेन तेन तेन तत्साधनेन हविषा इत्यर्थः। गिरा गिरा च तथा स्तोत्रशस्त्ररूपया वाचा च दक्षसे छान्दसोऽसुन्प्रत्ययः, दक्ष[?] अग्नये, वयम् ऋत्विजः, अमृतम् अविनाशिनं जातवेदसं लब्धधनं जातप्रज्ञं वा[1] अग्निं प्रियं मित्रं न स्निग्धमित्रमिव[2] प्रशंसिषं प्रशंसामि। "प्रसमुपोदः पादपूरणे" इति प्रशब्दस्य वीप्सा। [—अ० २६।५।११]

द्वितीयमाह—

**ऊर्जो नपातꣳ स हिनाऽयमंस्मयुर्दाशेम हव्यदांतये ।**
**भुवद्वाजेंष्वविता भुवंद्वृध उत त्राता तनूनांम् ॥४९॥**

ऊर्जः । नपातम् । सः । हिना । अयम् । अस्मयुः । दाशेम । हव्यदातये ॥
भुवत् । वाजेषु । अविता । भुवत् । वृधे । उत । त्राता । तनूनाम् ॥४९॥

ऊर्जो बलम्, नपातं न पातयितारं हव्यदातये हविर्दानाय, दाशेम "दाशृ दाने" अत्र परिचारे, परिचरेम। हिन इति हि इत्यर्थः। स खलु अयम् अस्मयुः अस्मान् कामयमानो हविर्दानार्थम्, अतो

१. श्च उ० म्यु०। २. तं यथा, उ० म्यु०।

दाशेम। स च अग्निः वाजेषु[1] ग्रामेषु यज्ञेषु वा, अविता अस्माकं रक्षिता[2] भवति। उत अपि च, तनूनां पुत्रभृत्यादिशरीराणाम् त्राता पालको भवति। [—अ० २९।५।१२]

इत्यूनत्रिंशेऽध्याये पञ्चमोऽनुवाकः।

[ षष्ठोऽनुवाकः ५०–५१ ]

चित्याग्नेः संवत्सरोऽसीत्यभिमर्शनम्, अभिमृशेदिच्छन् सँव्वत्सरोऽसीत्येवं यथालिङ्गमिति।

सँव्वत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि।
उषसस्ते कल्पन्तामहोरात्रास्ते कल्पन्तामर्धमासास्ते कल्पन्ताम्मासास्ते कल्पन्ता-
मृतवस्ते कल्पन्ताᳬं सँव्वत्सरस्ते कल्पताम् ॥५०॥

सम्। वत्सरः। असि। परि। वत्सरः। असि। इदा। वत्सरः। असि। इत्।
वत्सरः। असि ॥
अन्यत् स्पष्टम् ॥५०॥

चान्द्राणां प्रभवादीनां पञ्चके पञ्चके च युगे संपरीदेदित्येतच्छन्दपूर्वा वत्सरा भवन्ति। हे चित्याग्ने! त्वं सँव्वत्सरोऽसि, संवसन्ति अत्र प्राणिन इति सँव्वत्सरः, इतरेष्वपि योज्यम्। चित्यस्य अग्नेः सँव्वत्सराद्यास्तूक्ताः। कथं तदात्मकत्वमिति तदुपपादनाय सँव्वत्सराद्यवयवभूतानाम् उषआदीनां क्लृप्तमाह। उषसः सँव्वत्सरादेस्तूदयावयवाः, ते सँव्वत्सराद्यात्मकस्य तव कल्पन्ताम्, क्लृप्ता भवन्तु। एवमुपर्युपरिप्रभूताः कालावयवा अहोरात्राद्या अवयवविभूतयः सँव्वत्सरान्ता द्रष्टव्याः। इत्थम् उषसाद्यवयवैः क्लृप्तैः युक्तः अवयवी सँव्वत्सरः शरीरम्, तेन सँव्वत्सरेण शरीरेण त्वं तदात्मकोऽसि। अवशिष्टः पदार्थः स्पष्टः। [—अ० २९।६।१]

अथोपस्थाने द्वितीयमन्त्रमाह—

प्रेत्या एत्यै सञ्चाञ्च प्र च सारय।
सुपर्णचिदसि तया देवतयाङ्गिरस्वद् ध्रुवस्सीद ॥५१॥

प्र। इत्या। एत्यै। सम्। च। अञ्च। प्र। च। सारय ॥
सुपर्णचित्। असि। तया। देवतया। अङ्गिरस्वत्। ध्रुवः। सीद ॥५१॥

हे चित्याग्ने! प्रेत्यै प्रगमनाय, एत्यै आगमनाय च, तव अङ्गानि प्र च सारय समं च सारय। आदौ चकारस्येत्त्वम्। अदभावश्च छान्दसः। यद्वा तव अङ्गानि समञ्च प्रसारय च। "अञ्चु गति-पूजनयोः"। समञ्चनं नाम अवयवसंकोचनं, प्रसारणं विस्तारणं च, तदुभयं कुरु इत्यर्थः। सुपर्ण-चिदसि सुपर्णाख्यपक्ष्याकारेण चित्रोऽसि। तया देवतया तदात्मिकया उक्तस्वरूपात्मिकया देवतया

१. सम् उ० म्यु०। २. भुवत् इत्यादीति युक्तम्।

उक्तः सन् अङ्गिरस्वत् आङ्गिरसे यज्ञे, यथा ध्रुवा भूरेव अस्मदर्थमपि ध्रुवः सीद अविचलितार्थ-विषयो भव। [—अ० २६।६।२]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्तक-श्रीवीरबुक्कणभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये एकोनत्रिंशोऽध्यायः।



# अथ त्रिंशोऽध्यायः



यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

[ प्रथमोऽनुवाकः १–११ ]

एकोनत्रिंशे अग्निचयनगता लिङ्गविनियोज्या मन्त्रा उक्ताः । अथ त्रिंशे सौत्रामण्याः प्राच्योदीच्याङ्गभूतौ यौ पशू तयोर्मन्त्रा वरुक्थेन वक्तव्याः । प्रयाजानुयाजसूक्तवाकप्रैषा आम्नायन्ते । तत्र सौत्रामण्याः प्राच्याङ्गत्वेन ऐन्द्रः पशुः आलभ्यः । तस्य प्रयाजप्रैषा "होता यक्षत् समिधेन्द्रम्" इत्याद्या एकादश । तत्र प्रथमः—

**होता॑ यक्षत्स॒मिधेन्द्र॑मि॒ळस्प॒दे नाभा॑ पृथि॒व्या अधि॑ ।**
**दि॒वो वर्ष्म॒न्त्समि॑ध्यत॒ ओजि॑ष्ठश्चर्षणी॒सहा॒ँव्वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥१॥**

होता । यक्षत् । समिधा । इन्द्रम् । इडः । पदे । नाभा । पृथिव्याः । अधि ॥
दिवः । वर्ष्मन् । सम् । इध्यते । ओजिष्ठः । चर्षणीसहाम् । वेतु । आज्यस्य । होतः । यज ॥१॥

योऽयं होता विद्यते सोऽयं समिधेन्द्रं समिन्नामकेनाग्निना युक्तम्, इडस्पदे इडायाः पदे स्थाने, "एतद्वा इळाया आस्पदं य उत्तरवेदि नाभिमिति" श्रुतिः (ऐ० ब्रा०, अ० ५ खं० २) । समिन्नामकः कश्चिदग्निविशेषः । समिन्नामकद्वारा अतिमन्त्रं होता यक्षत् इत्युच्यते । पदम् आहवनीयाख्यम्, पृथिव्याः नाभा नाभिस्थानीयायाम् उत्तरवेद्याम् अधि परिवर्तते । हूयमानोऽयम् अग्निर्देवः, वर्ष्मन् द्युलोकस्य शरीरस्थानमित्यर्थः । तत्र समिध्यते सम्यक् प्रकाश्यते । स च चर्षणीसहानुद्दिश्य ओजिष्ठः । चर्षणयो मनुष्याः, तान् सहन्ते अभिभवन्ति इति चर्षणीसहो देवाः, तेषां मध्ये ओजिष्ठः अत्यन्तप्रबलः, तादृशः अग्निः, आज्यस्य वेतु इदम् आज्यमश्नातु पिबतु इत्यर्थः ।

[ —अ० ३०।१।१ ]

अथ द्वितीयप्रैषमन्त्रपाठः—

**होता॑ यक्ष॒त्तनू॒नपा॑तमू॒तिभि॒र्जेता॑र॒मप॑राजितम् ।**
**इन्द्र॑न्दे॒वꣳ स्व॒र्विद॑म्प॒थिभि॒र्मधु॑मत्तमै॒र्नरा॒शꣳसे॑न॒ तेज॑सा॒ वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥२॥**

होता । यक्षत् । तनूनपातम् । ऊतिभिः । जेतारम् । अपराजितम् ॥
इन्द्रम् । देवम् । स्वर्विदम् । पथिभिः । मधुमत्तमैः । नराशंसेन । तेजसा । वेतु । आज्यस्य । होतः । यज ॥२॥

अत्र सर्वत्र प्रथमान्तो होतृशब्दो दैव्यं होतारमाचष्टे, सम्बुद्ध्यन्तः मानुषम् । यथा पूर्वमन्त्रे समिच्छब्दः प्रयाजदेवतारूपमग्निविशेषमाह, एवमत्रापि 'तनूनपात्' शब्दो द्वितीयप्रयाजदेवतारूप-

मग्निविशेषमाचष्टे। दैव्यो होता तनूनपान्नामकमग्निम्, यक्षत् यजतु पूजयतु। तदग्निद्वारा इन्द्रं पूजयतु। कीदृशमिन्द्रम्, ऊतिभिः रक्षणैर्युक्तम्, जेतारं युद्धे जयशीलम्, केनापि अन्येन अपराजितम्, देवं द्योतमानम्, स्वर्विदं स्वर्गस्य लब्धारम्, मधुमत्तमैः अन्नपानादिसम्पत्त्यायत्तमधुरैः, पथिभिर्मार्गैर्युक्तम्, नराशंसेन मनुष्यैः शंसनीयेन तेजसा युक्तम्, तथाविधेन्द्रपूजार्थम् अयं तनूनपात् अग्निः आज्यं पिबतु। हे मानुष होतः याज्यां पठ। [—अ० ३०।१।२]

अथ तृतीयमाह—

होता यक्षदिळाभिरिन्द्रमीळितमाजुह्वानममर्त्यम्।
देवो देवैस्सवीर्यो वज्रहस्तः पुरन्दरो वेत्वाज्यस्य होतर्यज ॥३॥

होता। यक्षत्। इडाभिः। इन्द्रम्। ईडितम्। आ। जुह्वानम् अमर्त्यम्॥
देवः। देवैः। सवीर्यः। वज्रहस्तः। पुरन्दरः। वेतु। आज्यस्य। होतः। यज॥३॥

इडाशब्देन प्रयाजदेवतारूपस्तृतीयः अग्निः उच्यते। बहुवचनं पूजार्थम्। तदग्निद्वारा होता इन्द्रं पूजयतु। कीदृशमिन्द्रम्,[1] नानाविधैर्मन्त्रैः स्तुतम्, आजुह्वानं सर्वेषाम् आह्वानभाजम्, अमर्त्यं मरणरहितम्, स च इन्द्रः अन्यैः देवैः, सवीर्यः बहुलसामर्थ्ययुक्तः, स च वज्रहस्तः स्पष्टः, पुरन्दरः शत्रूणां पुराणां दारयिता, तथाविधेन्द्रप्रीतये पूर्वोक्तवह्निः आज्यं पिबतु। हे होतर्याज्यां पठ। [—अ० ३०।१।३]

चतुर्थमन्त्रमाह—

होता यक्षद्बर्हिषीन्द्रन्निषद्वरँवृषभन्नर्यापसम्।
वसुभी रुद्रैरादित्यैस्सयुग्भिर्बर्हिरासदद्वेत्वाज्यस्य होतर्यज ॥४॥

होता। यक्षत्। बर्हिषि। इन्द्रम्। निषद्वरम्। वृषभम्। नर्यापसम्॥
वसुभिः। रुद्रैः। आदित्यैः। सयुग्भिः। बर्हिः। आ। असदत्। वेतु। आज्यस्य। होतः। यज॥४॥

बर्हिः प्रयाजदेवतारूपः अग्निः, तस्मिन् बर्हिषि पूजिते सति तद्द्वारा इन्द्रं दैव्यः होता पूजयतु। कीदृशमिन्द्रम्, निषद्वरं नितरां यज्ञे सीदन्तीति निषदो देवाः, तेषां श्रेष्ठम्, वृषभं कामवर्षकम्, नरेभ्यो हितं नर्यम्, तथाविधं कर्म यस्यासौ नर्यापसः, तथाविधम्। स च इन्द्रः वस्वादिभिः सयुग्भिश्चैव सह वर्तमानैः युक्तः बर्हिः आसदत् यज्ञप्राप्तये। वेत्वादि पूर्ववत्। [—अ० ३०।१।४]

अथ पञ्चममन्त्रमाह—

होता यक्षदोजो न वीर्यँ सहो द्वार इन्द्रमवर्धयन्।
सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृतावृधो द्वार इन्द्राय मीढुषे व्यन्त्वाज्यस्य होतर्यज ॥५॥

[1] इडाभिः इत्यादीति युक्तम्।

होता । यक्षत् । ओजः । न । वीर्यम् । सहः । द्वारः । इन्द्रम् । अवर्धयन् ॥
सु । प्रायणाः । अस्मिन् । यज्ञे । वि । श्रयन्ताम् । ऋतावृधः । द्वारः । इन्द्राय ।
मीढुषे । व्यन्तु । आज्यस्य । होतः । यज ॥५॥

द्वार्शब्दः पञ्चमप्रयाजदेवतारूपमग्निमाह । पूजार्थं बहुवचनम् । तमग्निं दैव्यो होता पूजयतु । ताश्च द्वार्शब्दाभिधेयदेवताः इन्द्रं वर्द्धयन्तु, ओजसा, दृष्टान्तः—यथा अष्टमधातोः ओजसः वीर्यस्य चक्षुरादीन्द्रियसामर्थ्यस्य, सहसः शरीरबलस्य च वृद्धिः तथा इन्द्रस्याभिवृद्धिरित्यर्थः। ताश्च द्वारदेवताः सुप्रायणाः शोभनगतयः, ऋतावृधः यज्ञस्य वर्द्धयित्र्यः, तथाविधा विश्रयन्तां विशेषेण यजमानमाश्रयन्तु । मीढुषे वृष्ट्यादिना सेचकाय, इन्द्राय इन्द्रार्थम्, द्वारः देवताः व्यन्तु पिबन्तु । [—अ० ३०।१।५]

अथ षष्ठमन्त्रमाह—

होता॑ यक्षदु॒षे इन्द्र॑स्य धे॒नू सु॒दुघे॑ मा॒तरा॑ म॒ही ।
स॒बा॒तरौ॒ न तेज॑सा व॒त्समिन्द्र॑मवर्द्धतां॒व्वी॒तामाज्य॑स्य॒ होत॒र्यज॑ ॥६॥

होता । यक्षत् । उषे । इन्द्रस्य । धेनू । सु । दुघे । मातरा । मही ॥
सवातरौ । न । तेजसा । वत्सम् । इन्द्रम् । अवर्धताम् । वीताम् । आज्यस्य ।
होतः । यज ॥६॥

उषाशब्दः षष्ठप्रयाजदेवताग्निमूर्त्तिमाह । तादृशे दव्यः होता प्रपूजयतु । कीदृश्यौ ? इन्द्रस्य वृषस्य धेनू धेनुवत् प्रीणयित्र्यौ, सुदुघे सुखेन दोग्धुं शक्ये, मातरा पयःप्रदानेन मातृसदृश्यौ, मही महत्यौ पूज्ये वा, सवातरौ वाता वायुः गमनशील आदित्यो वा, समानतादृशगतिमत्यौ, नशब्दश्चार्थे निपातानामनेकार्थत्वात् । अथवा वाता गन्ता इन्द्रः वत्सस्थानीयः, तद्वत्सं दिवि तेजसा उषे तादृशमूर्त्तिमत्स्थानीयम् इन्द्रम्, अवर्द्धतां प्रापयताम् । ते देव्यौ आज्यम् वीतां पिबताम् ।
[ —अ० ३०।१।६ ]

सप्तममन्त्रमाह—

होता॑ यक्ष॒द्दैव्या॒ होता॑रा भि॒षजा॒ सखा॑या ह॒विषेन्द्रं॑भिषज्यतः ।
क॒वी दे॒वौ प्रचे॑तसा॒ इन्द्रा॑य धत्त इ॒न्द्रि॒यँ॒व्वी॒तामाज्य॑स्य॒ होत॒र्यज॑ ॥७॥

होता । यक्षत् । दैव्या । होतारा । भिषजा । सखाया । हविषा । इन्द्रम् । भिषज्यतः ॥
कवी । देवौ । प्र । चेतसा । इन्द्राय । धत्तः । इन्द्रियम् । वीताम् । आज्यस्य । होतः । यज ॥७॥

दैव्यहोतृशब्देन सप्तमप्रयाजदेवतारूपस्याग्नेः द्वौ देहौ उच्येते । तौ उभौ होता यक्षत् पूजयतु । कीदृशौ ? भिषजा अनिष्टव्याधिचिकित्सकौ, सखाया परस्परं स्निग्धौ, तादृशौ हविषा तम् इन्द्रं भिषज्यतः शत्रुपीडाद्यनिष्टनिरसनेन चिकित्सां कुरुतः । तौ उभौ कवी विद्वांसौ देवौ द्योतमानौ, प्रचेतसौ प्रकृष्टज्ञानौ, तौ इन्द्रार्थम्, इन्द्रियं धत्तः शक्ति पोषयतः ।
[ —अ० ३०।१।७ ]

अथ अष्टममन्त्रमाह—

**होता॑ यक्षत्ति॒स्रो दे॒वीर्न भे॑षजन्त्र॒यस्त्रि॒धात॑वो॒ऽपस॒ इळा॒ सर॑स्वती॒ भार॑ती म॒हीः ।**

**इन्द्र॑पत्नीर्ह॒विष्म॑ती॒र्व्यन्त्वाज्य॑स्य॒ होत॒र्यज॑ ॥८॥**

होता । यक्षत् । तिस्रः । देवीः । न । भेषजम् । त्रयः । त्रिधातवः । अपसः । इडा । सरस्वती । भारती । महीः ॥

इन्द्रपत्नीः । हविष्मतीः । व्यन्तु । आज्यस्य । होतः । यज ॥८॥

अष्टमप्रयाजदेवतारूपस्याग्नेस्तिस्रो मूर्त्तयः । ता होता यक्षत् प्रयजतु । कीदृश्यस्ताः ? देवीः द्योतमानात्मिकाः, अपसः कर्मणः सिद्धये, त्रिधातवस्त्रीणि शरीराणि धारयन्त्यः, अत एव त्रयः त्रिलोकात्मिकाः, इडा भूः, सरस्वती तदुदकवती, भारती अन्तरीक्षम्, भरत आदित्यः तत्सम्बन्धिनी द्यौः, इत्थं त्रिलोकात्मिकाः, तिस्रो देवीः ताश्च महीः महत्यः, इन्द्रपत्नीः इन्द्रपालयित्र्यः, हविष्मतीः अस्मद्दत्तेन हविषा युक्ताः ताः एताः आज्यं पिबन्तु । [ —अ० ३०।१।८ ]

अथ नवममन्त्रमाह—

**होता॑ यक्ष॒त्त्वष्टा॑र॒मिन्द्र॑न्दे॒वम्भि॒षज॑ꣳ सु॒यज॑ङ्घृ॒त॒श्रिय॑म् ।**

**पु॒रु॒रूप॑ꣳ सु॒रेत॑सम्म॒घोन॒मिन्द्रा॑य॒ त्वष्टा॒ दध॑दिन्द्रि॒याणि॒ वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥९॥**

होता । यक्षत् । त्वष्टारम् । इन्द्रम् । देवम् । भिषजम् । सुयजम् । घृतश्रियम् ॥

पुरुरूपम् । सुरेतसम् । मघोनम् । इन्द्राय । त्वष्टा । दधत् । इन्द्रियाणि । वेतु ।

आज्यस्य । होतः । यज ॥९॥

त्वष्टृशब्देन नवमप्रयाजदेवतारूपः अग्निः उच्यते । तं होता यजतु । तद्द्वारेण इन्द्रं पूजयतु । कीदृशम् इन्द्रम् ? देवं द्योतमानात्मकं भिषजम् अनिष्टव्याधिचिकित्सकम्, सुयजं सुखेन यष्टुं शक्यम्, घृतश्रियं घृतसेवितम्, पुरुरूपं तत्तद्यजमानयज्ञगमनाय बहुरूपधारिणम्, सुरेतसं शोभनसारम्, मघोनम् अन्नवन्तम्, ईदृशाय इन्द्राय स त्वष्टा इन्द्रियाणि सामर्थ्यानि, दधत् पोषयतु आज्यं पिबतु । [ —अ० ३०।१।९ ]

अथ दशममन्त्रमाह—

**होता॑ यक्ष॒द्वन॒स्पति॑ꣳ शमि॒तार॑ꣳ श॒तक्र॑तु॒न्धियो॑ जो॒ष्टार॑मिन्द्रि॒यम् ।**

**मध्वा॑ सम॒ञ्जन्प॒थिभि॑स्सु॒गेभि॒स्स्वदा॑ति य॒ज्ञम्मधु॑ना घृ॒तेन॒ वेत्वाज्य॑स्य॒**

**होत॒र्यज॑ ॥१०॥**

होता । यक्षत् । वनस्पतिम् । शमितारम् । शतक्रतुम् । धियः । जोष्टारम् । इन्द्रियम् ॥

मध्वा । सम् । अञ्जन् । पथिभिः । सुगेभिः । स्वदाति । यज्ञम् । मधुना । घृतेन । वेतु ।

आज्यस्य । होतः । यज ॥१०॥

दशमप्रयाजदेवतारूपः अग्निः वनस्पतिः, होता यक्षत् तं यजतु इन्द्रं पूजयतु । कीदृशम् इन्द्रम् ? शमितारं सर्वानिष्टशमनहेतुम्, शतक्रतुं बहुकर्माणम्, धियो जोष्टारं बुद्धेः सेवितारम्,

इन्द्रियम् इन्द्रियसामर्थ्योपेतम्, तादृशम् इन्द्रं सुगेभिः शुभगैर्मार्गैः आगत्य, मध्वा मधुरद्रव्येण समञ्जन् हवींषि स्निग्धं कुर्वन् वर्त्तते। स च मधुना मधुरेण घृतेन, स्वदाति हव्यं स्वादु करोति। तथाविधेन्द्रप्रीत्यर्थं वनस्पतिदेवता आज्यं पिबतु। [ —अ० ३०।१।१० ]

अथ एकादशमन्त्रमाह—

होता यक्षदिन्द्रꣳ स्वाहाज्यस्य स्वाहा मेदसस्स्वाहा स्तोकानाꣳ स्वाहा स्वाहाकृतीनाꣳ स्वाहा हव्यसूक्तीनाम्।
स्वाहा देवा आज्यपा जुषाणा इन्द्र आज्यस्य व्यन्तु होतर्यज ॥११॥

होता। यक्षत्। इन्द्रम्। स्वाहा। आज्यस्य। स्वाहा। मेदसः। स्वाहा। स्तोकनाम्।
स्वाहा। स्वाहाकृतीनाम्। स्वाहा। हव्यसूक्तीनाम् ॥
स्वाहा। देवाः। आज्यपाः। जुषाणाः। इन्द्रः। आज्यस्य। व्यन्तु। होतः। यज ॥११॥

उक्तेषु सर्वेषु प्रयाजेषु अनुगतम् इन्द्रं होता यक्षत् पूजयतु। तदिन्द्रप्रीत्यर्थम् आज्यस्य, स्वाहा स्वाहुतिरस्तु। अथवा कर्मणि षष्ठी। तस्मै इन्द्राय आज्यं स्वाहुतमस्तु। तथा मेदसः मेदोद्रव्यस्य स्वाहा दत्तमस्तु। स्तोकानां न्यूनानां[१] स्वाहुतिरस्तु। स्वाहाकृतीनां स्वाहाकारेण दीयमानानां सर्वाहुतिद्रव्याणां स्वाहुतिरस्तु। होता इन्द्रं यजतु। स्वाहाज्यस्य इत्यत्र ये आज्यभोक्तारः ये आज्यभोगा देवाः सन्ति तेभ्यः इदं स्वाहुतमस्तु। एवं मेदसः प्रधानपशुहविषो भोक्तारः ये देवास्तेभ्यः इदम् आज्यं स्वाहा। एवं स्तोकपायिभ्यो देवेभ्यः स्वाहा। तथा सर्वस्वाहाकाराभिमानिदेवेभ्यः स्वाहा इति। दीयमानेभ्यः सर्वेभ्यो देवेभ्यः तथा हव्यसूक्तीनां हविषः प्रदानार्थाः याः सूक्तयः सूक्ताः सन्ति तद्भाग्भ्यो देवेभ्यः स्वाहा। उभयत्र चतुर्थ्यर्थे षष्ठी वेदितव्या। देवाः आज्यपाः प्रयाजानुयाजदेवाः ते जुषाणाः हविःसेवमानाः ये सन्ति तेभ्यः स्वाहा। ये ते सर्वे ते देवा इन्द्रश्च आज्यस्य आज्यं व्यन्तु भक्षयन्तु। तदर्थं हे होतः याज्यां पठ। [ —अ० ३०।१।११ ]

इति त्रिंशेऽध्याये प्रथमोऽनुवाकः।

## [ द्वितीयोऽनुवाकः १२—२३ ]

अथ द्वितीयेऽनुवाके सौत्रामण्याः प्राच्याङ्गभूतस्य पशोः अनुयाजप्रैषाः उच्यन्ते। तत्र प्रथमप्रैषमन्त्रपाठमाह—

देवम्बर्हिरिन्द्रꣳ सुदेवन्देवैर्वीरवत्स्तीर्णं व्वेद्यामवर्द्धयत्।
वस्तोर्वृतम्प्राक्तोर्भृतꣳ राया बर्हिष्मतोऽत्यगाद्वसुवने वसुधेयस्य वेतु यज ॥१२॥

देवम्। बर्हिः। इन्द्रम्। सु। देवम्। देवैः। वीरवत्। स्तीर्णम्। वेद्याम्। अवर्द्धयत् ॥
वस्तोः। वृतम्। प्र। अक्तोः। भृतम्। राया। बर्हिष्मतः। अति। अगात्। वसुवने।
वसुधेयस्य। वेतु। यज ॥१२॥

बर्हिः शब्देन भर्गाभिमानिप्रथमानुयाज उच्यते। बर्हिः देवः, इन्द्रं देवम् अवर्धयत्। तद् बर्हिः विशेष्यते, सुदेवं शोभनयक्ष्यमाणदेवोपेतम्, तथा देवैः स्तोत्रादिकर्तृभिः[२] ऋग्भिर्वेद्यां स्तीर्णं प्रसारितम्,

१. विन्दूनाम् उ० म्यु०। २. कर्तृभेदैः उ० म्यु०।

तथा वीरः कर्मशूरो यजमानः अस्यास्तीति वीरवत्, वस्तोरित्येतद् अव्ययम् अहर्वाचकम्, इन्द्र बर्हिः अहनि वृतम्, तथा प्राक्तोर्भृतम्, अक्तोः इति वा अव्ययं रात्रिवाचकम्, रात्रौ भृतं प्रकर्षेण तद्देशे स्थापितम्, तादृशं बर्हिः, राया धनेन युक्तम्, बर्हिष्मतो यजमानस्य अन्यस्य यज्ञम्, अत्यगात् अतिक्रम्य यजमानस्य यज्ञमगच्छत्। अथवा बर्हिष्मतः प्रवृद्धबर्हिर्युक्तात् हवनप्रदेशाद् अत्यगात् तं देशमतिक्रम्य आयात्, तादृग् बर्हिर्देवः वसुधेयस्य धनधारकस्य यजमानस्य वसुवने धनसम्भजनाय, वेतु आज्यं पिबतु। हे होतःयज। [—अ० ३०।२।१]

अथ द्वितीयं प्रैषमन्त्रमाह—

**देवीर्द्वार इन्द्रँ सङ्घाते वीड्वीर्यामन्नवर्धयन्।**
**आ वत्सेन तरुणेन कुमारेण च मीवतापार्वाणँ रेणुककाटन्नुदन्तांव्वसुवने वसुधेयस्य व्यन्तु यज॥१३॥**

**देवीः। द्वारः। इन्द्रम्। सङ्घाते। वीड्वीः। यामन्। अवर्धयन्॥**
**आ। वत्सेन। तरुणेन। कुमारेण। च। मीवता। अप। अर्वाणम्। रेणुककाटम्।**
**नुदन्ताम्। वसुवने। वसुधेयस्य। व्यन्तु। यज॥१३॥**

देवीः देव्यः, द्वारः यज्ञगृहद्वारदेवताः, संघाते कवाटयोः सम्बन्धेऽपिधाने सति तद्विमोक्षणे वीड्वीः स्थिराः। कदाचिदपि द्वारपिधानम् अकुर्वत्य इत्यर्थः। यद्वा देहल्यादिसंघाते स्थिराः। यामन् यामनि गमने इन्द्रम् अवर्द्धयन्। कीदृशमिन्द्रम्, आ अत्यन्तं वत्सेन बालेन तरुणेन यूना तयोः पूर्वोत्तरयोः मध्यावस्थेन कुमारेण च, चकारः समुच्चये, आकारः कात्स्न्यर्वाची, कृत्स्नैर्वत्सादिभिर्युक्तम्। यद्वा वत्सादयो द्वारावयवाः काष्ठानि, तैः आ सर्वतः मीवताः स्थूलीकृताः। किंच अपार्वाणम् अपगमनं यज्ञ एव निवसन्तम्, यद्वा कुत्सितम् इतस्ततो विषयाधीनावरणोपेतम्। रेणुककाटम् रमणशीलं रेणुकम्, कटचां भवं काटम् लिङ्गम्, रेणुकं काटं यस्य तादृशं यज्ञविघातं नुदन्ताम् अन्यत्र प्रेरयन्तु द्वारदेव्यः। [—अ० ३०।२।२]

अथ तृतीयं प्रैषमन्त्रमाह—

**देवी उषासानक्तेन्द्रँ यज्ञे प्रयत्यह्वेताम्।**
**दैवीर्विशः प्रायासिष्टाँ सुप्रीते सुधिते वसुवने वसुधेयस्य वीतांय्यज॥१४॥**

**देवी। उषासानक्ता। इन्द्रम्। यज्ञे। प्र। यति। अह्वेताम्॥**
**दैवीः। विशः। प्र। अयासिष्टाम्। सु। प्रीते। सु। धिते। वसुवने। वसुधेयस्य।**
**वीताम्। यज॥१४॥**

देवी देव्यौ उषासानक्ता अहोरात्रिदेवते इन्द्रं यज्ञे अस्मिन् प्रयति विस्तृते सति, अह्वेताम् आह्वानम् अकुरुताम्। तथा दैवीः विशः मरुतः प्रायासिष्टां गमयताम्। कीदृश्यौ ? सुप्रीते सुष्ठु यजमानेन तर्पिते सुधिते सुष्ठु नीते, सुधियं प्राप्ते वा। वसुवन इत्यादि गतम्।

[—अ० ३०।२।३]

अथ चतुर्थप्रैषमन्त्रमाह—

दे॒वी जोष्ट्री॒ वसु॑धिती दे॒वमिन्द्र॑मवर्धताम् ।
अया॑व्य॒न्याघा द्वेषा॑ꣳस्या॒न्याव॑क्षद्व॒सु वार्या॑णि॒ यज॑मानाय शिक्षि॒ते व॑सु॒वने॑
वसु॒धेय॑स्य वीतां॒ यज॑ ॥१५॥

देवी । जोष्ट्री । वसुधिती । देवम् । इन्द्रम् । अवर्धताम् ॥
अयावि । अन्या । अघा । द्वेषांसि । अन्या । आ । अवक्षत् । वसु । वार्याणि ।
शिष्टं स्पष्टम् ॥१५॥

जोष्ट्री प्रीणयित्र्यौ, देवी देव्यौ चतुर्थ्यनुयाजदेवते, ते तव, वसुधिती धनस्य धारयित्र्यौ, देवं द्योतमानमिन्द्रम् अवर्धताम् समृद्धम् अकुर्वाताम् । तद्द्वारा अन्या तयोः अन्यतरा यजमानस्य द्वेषांसि द्वेष्याणि, अघा प्रतिबन्धनपापानि, अयावि अमिश्रणम् अकरोत् । अन्या इतरा, वार्याणि वरणीयानि, वसु धनानि, आवक्षत् सर्वतः अवहत् । किमर्थम् ? यजमानाय यजमानार्थम्, कीदृश्यौ ? शिक्षिते नियमिते । [ —अ० ३०।२।४ ]

अथ पञ्चमप्रैषमन्त्रमाह—

दे॒वी ऊ॒र्जाहु॑ती दु॒घे सु॒दु॒घे पय॒सेन्द्र॑मवर्धताम् ।
इष॒मूर्ज॑म॒न्याव॑क्ष॒त्सग्धि॒ꣳ सपी॑तिम॒न्या नवे॑न॒ पूर्व॒न्दय॑माने पु॒रा॒णेन॒
नव॒मधा॑ता॒मूर्ज॑मू॒र्जाहु॑ती ऊ॒र्जय॑माने॒ वसु॒ वार्या॑णि॒ यज॑मानाय शिक्षि॒ते
व॑सु॒वने॑ वसु॒धेय॑स्य वीतां॒ यज॑ ॥१६॥

देवी । ऊर्जाहुती । दुघे । सु । दुघे । पयसा । इन्द्रम् । अवर्धताम् ॥
इषम् । ऊर्जम् । अन्या । अवक्षत् । सग्धिम् । सपीतिम् । अन्या । नवेन । पूर्वम् ।
दयमाने । पुराणेन । नवम् । अधाताम् । ऊर्जम् । ऊर्जाहुती । ऊर्जयमाने । वसु ।
वार्याणि । शिष्टं स्पष्टम् ॥१६॥

ऊर्जाहुती ऊर्जं बलसाधनं सोमाद्यन्नं तदात्मिके आहुती, तदभिमानिदेव्यौ, ते च दुघे अनियत-दोग्ध्र्यौ तथा सुदुघे सुष्ठु अनायासेन दोग्ध्र्यौ, तेन पयसा सोमेन इन्द्रम्, अवर्धतां वर्द्धितवत्यौ । तयोरन्या ऊर्जं बलकरम्, इषम् अन्नं यजमानाय अवक्षत् । अन्या अपरा सग्धिं पुत्रादिभिः ऋत्विगादिभिर्वा भक्षणम्, सपीतिं सह पानम् अवक्षत् । नवेन इदानीं क्रियमाणेन कर्मणा सह पूर्वं कर्म दयमाने, तदेवाह: पुराणेन पूर्वमनुष्ठितेन सह नवं कर्म वर्धमाने फलं यजमानाय यज्ञम् अवश्यीकुर्वाणे इत्यर्थः । तादृश्यौ ऊर्जाहुती, ऊर्जम् अधातां सम्पादितवत्यौ । पुनः कीदृश्यौ ? ऊर्जयमाने ऊर्जवत् आचारन्त्यौ । वसु वार्याणीत्यादि गतम् । [ —अ० ३०।२।५ ]

अथ षष्ठमनुयाजप्रैषमन्त्रमाह—

दे॒वा दैव्या॒ होता॑रा दे॒वमिन्द्र॑मवर्धताम् ।
ह॒ताघ॑शꣳसा॒ आभा॑र्ष्टं॒ वसु॒ वार्या॑णि॒ यज॑मानाय शिक्षि॒तौ व॑सु॒वने॑
वसु॒धेय॑स्य वीतां॒ यज॑ ॥१७॥

**देवा । दैव्या । होतारा । देवम् । इन्द्रम् । अवर्धताम् ।**
**हताघशंसा । आ । अभार्ष्टाम् । वसु । शिष्टं स्पष्टम् ॥१७॥**

दैव्या देवसम्बन्धिनौ होतारा तेषां होतारौ षष्ठानुयाजदेवौ, इन्द्रं देवम् अवर्धतां हविषा शरीरवृद्धि कुरुताम् । कीदृशौ तौ ? हताघशंसा, अघम् अस्मासु पापं शंसत इति अघशंसो द्वेष्यः, स हतो याभ्यां तौ तथोक्तौ । तौ यजमानाय वार्याणि वरणीयानि वसु वसूनि धनानि आभार्ष्टां सर्वतः बृंहयन्तौ । गतमन्यत् । [—अ० ३०।२।६]

अथ सप्तमानुयाजप्रैषमन्त्रमाह—

**दे॒वीस्ति॒स्रस्ति॒स्रो दे॒वीः पति॒मिन्द्र॑मवर्धयन् ।**
**अस्पृ॑क्ष॒द्भार॑ती॒ दिव॑ꣳरु॒द्रैर्य॒ज्ञꣳ सर॑स्व॒तीळा॒ वसु॑मती गृ॒हान् व॑सु॒वने॑ वसु॒धेय॑स्य**
**व्यन्तु॒ यज॑ ॥१७॥**

**देवीः । तिस्रः । तिस्रः । देवीः । पतिम् । इन्द्रम् अवर्धयन् ॥**
**अस्पृक्षत् । भारती । दिवम् । रुद्रैः । यज्ञम् । सरस्वती । इळा । वसुमती । गृहान् ।**
**शिष्टं स्पष्टम् ॥१७॥**

देवीः देव्यः द्योतमानाः, तिस्रः त्रिसंख्याकाः एतद् व्यतिहारे आह, त्रित्वेन प्रसिद्धिद्योतनाय तिस्रो देवीरिति । ताः देव्यः पतिं स्वस्वामिनम् इन्द्रम् अवर्धयन् । स्वयम् आज्येन प्रवृद्धाः सत्यः पश्चात् तं वर्द्धितवत्यः । तासां मध्ये भारती, भरत आदित्यः तदीयाज्यलाकाभिमानिनी देवता, दिवं द्युलोकम् अस्पृक्षत् स्पृष्टवती । आहुत्या सहिता आदित्यं प्राप्ता इत्यर्थः । सरस्वती अन्तरीक्षदेवता, रुद्रैः सह अस्मदीयं यज्ञम् अस्पृक्षत् । इडा भूदेवता च वसुमती बहुविधवसुमती गृहान् यजमान-सम्बन्धिनः अस्पृक्षत् । [—अ० ३०।२।७]

अथाष्टममनुयाजप्रैषमन्त्रमाह—

**दे॒व इन्द्रो॒ नरा॒शꣳस॑स्त्रिवरू॒थस्त्रि॑बन्धु॒रो दे॒वमिन्द्र॑मवर्धयत् ।**
**श॒तेन॑ शितिपृ॒ष्ठाना॒माहि॑तस्स॒हस्रे॑ण॒ प्रव॑र्तते मि॒त्रावरु॒णेद॑स्य हो॒त्रमर्ह॑तो॒**
**बृह॒स्पति॒स्स्तो॒त्रम॒श्विनाध्व॑र्यव॑ꣳ वसु॒वने॑ वसु॒धेय॑स्य वे॒तु यज॑ ॥१९॥**

**देवः । इन्द्रः । नराशंसः । त्रिवरूथः । त्रिबन्धुरः । देवम् । इन्द्रम् । अवर्धयत् ॥**
**शतेन । शितिपृष्ठानाम् । आहितः । सहस्रेण । प्र । वर्तते । मित्रावरुणा । इत् । अस्य ।**
**होत्रम् । अर्हतः । बृहस्पतिः । स्तोत्रम् । अश्विना । आध्वर्यवम् । वसुवने । वसुधेयस्य ।**
**वेतु । यज ॥१९॥**

नराशंसशब्देन नरैः स्तूयमान उच्यते । स च परमैश्वर्ययोगाद् इन्द्रः । स च त्रिवरूथः, त्रिचक्रोपेतरथवान्, त्रिबन्धुरः, बन्धुरो वक्रो रथावयवैकदारुविशेषः । तादृक् त्रितययुक्तरथवान् । "त्रिबन्धुरेण त्रिवृता" ( ऋग्० १।४७।२ ) इत्यादौ तथा दर्शनात् । स देवः इन्द्रदेवम् अवर्धयत् ।[1] [—अ० ३०।२।८]

---

१. शिष्टस्य भाष्यं नोपलब्धम् इति महीधरभाष्यमुपादीयते—
नराशंसः शितिपृष्ठानां शतेनाहितः सन् सहस्रेण गोसहस्रेण प्रवर्तते शिति श्यामं पृष्ठं यासां ता शितिपृष्टा गावः । मित्रावरुणा इत् मित्रावरुणावेवास्य नराशंसस्य होत्रमर्हतः होत्रकर्मणि योग्यौ भवतः । बृहस्पतिः स्तोत्रमौद्गात्रमर्हति । अश्विना अश्विनौ अस्याध्वर्यवमर्हतः । स वेतु ।
( शु० मा० सं० २८।१९ )

अथ नवमप्रषमन्त्रमाह—

दे॒वो दे॒वैर्व॒न॒स्पति॒र्हिर॑ण्यपर्णो॒ मधु॑शाखस्सुपिप्प॒लो दे॒वमिन्द्र॑मवर्धयत् ।
दिव॒मग्रे॑णास्पृक्ष॒दान्तरि॑क्षम्पृथि॒वीम॑दृꣳहीद्व॒सु॒वने॑ वसु॒धेय॑स्य वे॒तु॒ यज॑ ॥२०॥

देवः । देवैः । वनस्पतिः । हिरण्यपर्णः । मधुशाखः । सुपिप्पलः । देवम् । इन्द्रम् । अवर्धयत् ॥
दिवम् । अग्रेण । अस्पृक्षत् । आ । अन्तरिक्षम् । पृथिवीम् । अदृंहीत् । शिष्टं स्पष्टम् ॥२०॥

वनस्पतिः यूपाभिमानिदेवः । स च नवमानुयाजाभिमानी वनस्पतिर्देवः, देवैः स्वकीयैः सह, इन्द्रम् अवर्धयत् । कीदृशः सः ? हिरण्यपर्णः सुवर्णमयपर्णोपेतः मधुशाखः अमृतमयशाखोपेतः, सुपिप्पलः शोभनपचेलिममधुरफलवान्, स च अग्रेण दिवम् अस्पृक्षत् स्पृष्टवान् सर्वतः स्थौल्येन । यद्वा आन्तरिक्षम् अन्तरिक्षपर्यन्तं मध्येन अस्पृक्षत् । पृथिवीं च मूले अदृंहीत् दृढामकरोत् ।
[ —अ० ३०।२।९ ]

अथ दशममनुयाजप्रैषमन्त्रमाह—

दे॒वम्ब॒र्हिर्वारि॑तीनान्दे॒वमिन्द्र॑मवर्धयत् ।
स्वा॒स॒स्थमिन्द्रे॒णास॑न्नम॒न्या ब॒र्हीꣳष्य॒भ्य॑भूद्व॒सु॒वने॑ वसु॒धेय॑स्य वे॒तु॒ यज॑ ॥२१॥

देवम् । बर्हिः । वारितीनाम् । देवम् । इन्द्रम् । अवर्धयत् ॥
सु । आसस्थम् । इन्द्रेण । आ । सन्नम् । अन्या । बर्हींषि । अभि । अभूत् ॥
शिष्टं स्पष्टम् ॥२१॥

वाराम् उदकानाम् इतिः निर्यासः दर्भौषधियुता वारितिः, तासां मध्ये देवं द्योतमानं प्रकृष्ट-मित्यर्थः । तादृग् बर्हिः आस्तृतं तदभिमानिदेवम् इत्यर्थः । तद् बर्हिः इन्द्रं देवम् अवर्धयत् । तच्च स्वासस्थं सुखासनरूपेण स्थितम्, अत इन्द्रेण बर्हिषि स्थितेन सहासनं देवम् । एवं महानुभावत्वात् । अन्या अन्यानि यज्ञानर्हाणि बर्हींषि अभ्यभूत्[1] अतिक्रम्याभवत् । [ —अ० ३०।२।१० ]

दे॒वो अ॒ग्निस्स्वि॑ष्ट॒कृद्दे॒वमिन्द्र॑मवर्धयत् ।
स्वि॑ष्ट॒कुर्व॒न्त्स्वि॑ष्टम॒द्य क॑रोतु नो वसु॒वने॑ वसु॒धेय॑स्य वे॒तु॒ यज॑ ॥२२॥

देवः । अग्निः । सु । इष्टकृत् । देवम् । इन्द्रम् । अवर्धयत् ॥
सु । इष्टम् । कुर्वन् । सु । इष्टकृत् । सु । इष्टम् । अद्य । करोतु । नः । शिष्टं स्पष्टम् ॥२२॥

इष्टस्य द्रव्यस्य स्विष्टकर्ता फलजननाय न्यूनातिरेकपरिहर्ता अग्निः देवः स च उत्तमानुयाज-देवः, स च इन्द्रं देवम् अवर्धयत् । स च वर्द्धयन् यज्ञं स्विष्टं कुर्वन् स्विष्टकृत् इत्यर्थः । स च अद्य नो यज्ञं स्विष्टं करोतु । [ —अ० ३०।२।११ ]

उक्तस्य केवलेन्द्रदेवताकस्य पशोः सूक्तवाकप्रैषाग्निमद्यायम् । तत्पाठस्तु—

अ॒ग्निम॒द्य होता॑रमवृणीता॒यँय्यज॑मान॒ः पच॒न्पक्तीः॒ पच॑न्
पु॒रो॒ळाश॑म्ब॒ध्नन्निन्द्रा॑य॒च्छाग॑म् ।

---

१. च उ० म्यु० ।

सूप स्था अद्य देवो वनस्पतिरभवदिन्द्रायच्छागेन ।
अघत्तम्मेदस्तः प्रति पचताग्रभीदवीवृधत पुरोळाशेन ।
त्वामद्य ऋषे ॥२३॥

अग्निम् । अद्य । होतारम् । अवृणीत । अयम् । यजमानः । पचन् । पक्तीः । पचन् ।
पुरोडाशम् । बध्नन् । इन्द्राय । छागम् ।।
सु । उप । स्थाः । अद्य । देवः । वनस्पतिः । अभवत् । इन्द्राय । छागेन ।।
अघत्तम् । मेदस्तः । प्रति । पचत । अग्रभीत् । अवीवृधत । पुरोडाशेन ।
त्वाम् । अद्य । ऋषे ।।२३॥

अद्य अस्मिन् यागदिने अग्निं देवं होतारम् अवृणीत, होतृनामकम् ऋत्विजं कृत्वा वृतवान्, अयं यजमानः । किं कुर्वन्, पक्तीः कर्मणि क्तिन्, पक्तव्यविशेषान् पचन् पाकं कुर्वन्, तथा पुरोडाशं च पचन् इन्द्राय इन्द्रार्थं छागं पशुं यूपे बध्नन् । अथ वनस्पतिः देवः इन्द्राय बद्धेन छागेन सूपस्थानः, अभूः अभवत् । तं छागं हविः, अघत्तं भक्षयेत् । तदर्थं मेदस्तः मेदसा प्रतिपादनं कुर्वन् अग्रभीत् स्वीकरोतु इन्द्रः । हे ऋत्विजः ! पुरोडाशेन अवीवृधत अभिवृद्धिं प्रापयत पशुमिन्द्रम् । हे ऋषे ! अतीन्द्रियज्ञान, त्वम् अद्य अस्मिन् दिने वृत इति शेषः । त्वामद्येति प्रतीकः ।

[ —अ० ३०।२।१२ ]

इति त्रिंशेऽध्याये द्वितीयोऽनुवाकः ।

## [ अथ तृतीयोऽनुवाकः २४–३४ ]

सौत्रामण्याः प्रतीच्याङ्गभूतस्य वयोधोगुणकेन्द्रदेवताकस्य पशोः प्रयाजप्रैषा "होता यक्षत्समिधानम्" इत्याद्या एकादश । तत्र प्रथमप्रैषः—

होता यक्षत्समिधानम्महद्यशस्सुसमिद्धँ्वरेण्यमग्निमिन्द्रँ्वयोधसम् ।
गायत्रीञ्छन्द इन्द्रियन्त्र्यविङ्गाँव्वयो दधद्वेत्वाज्यस्य होतर्यज ॥२४॥

होता । यक्षत् । सम् । इधानम् । महत् । यशः । सु । सम् । इद्धम् । वरेण्यम् ।
अग्निम् । इन्द्रम् । वयोधसम् ।।
गायत्रीम् । छन्दः । इन्द्रियम् । त्र्यविम् । गाम् । वयः । दधत् । वेतु । आज्यस्य ।
होतः । यज ।।२४॥

अयं मानुषो होता यक्षत् यजतु । किम्, समिधानम्, सम्यग् दीप्यमानम्, एतन्नामकम् अग्निं महत् अतिप्रभूतं यशोऽन्नं सर्वं हविर्यज्ञत्वात् महद्यशोरूपम्, सुसमिद्धम् अत्यन्तदीप्तम्, वरेण्यं वरणीयम्, अग्निम् अग्रणीत्वादिगुणकं देवम् इन्द्रं परमैश्वर्यविशिष्टम्, वयोधसं प्रवृद्धस्य वयस आयुष्यस्य धारयितारम्, वयोधोगुणकमिन्द्रम्, यक्षत् इति सम्बन्धः । किं कुर्वन् ? गायत्रीं पादत्रयोपेतां चतुर्विंशत्यक्षरात्मिकां छन्दः गायत्र्याख्यम् इन्द्रियं शरीरसामर्थ्यम्, त्र्यविं त्रिवर्णमेषम्, गां पशुम्, वयः आयुष्यं च दधत् इन्द्रे धारयन् यक्षत् ।

[ —अ० ३०।३।१ ]

अथ द्वितीयप्रयाजप्रैषः—

**होता॑ यक्ष॒त्तनू॒नपा॑त॒मुद्भि॑दं॒ य्यङ्गर्भ॒मदि॑ति॒र्द्धे शु॒चि॒मिन्द्र॑ व्वयो॒धस॑म् ।**

**उ॒ष्णिह॒ञ्छन्द॑ इन्द्रि॒यन्दि॑त्य॒वाह॒ङ्गाँ व्वयो॒ दध॒द्वे॑त्वाज्य॑स्य॒ होत॒र्यज॑ ॥२५॥**

होता । यक्षत् । तनूनपातम् । उत् । भिदम् । यम् । गर्भम् । अदितिः । दधे । शुचिम् । इन्द्रम् । वयोधसम् ॥

उष्णिहम् । छन्दः । इन्द्रियम् । दित्यवाहम् । गाम् । वयः । शिष्टं स्पष्टम् ॥२५॥

मानुषो होता यक्षत् यजतु । कीदृशमग्निम् ? तनूनपातं तनूं न पातयितारम्, एतन्नामकमग्निं स च उद्भित् फलस्योद्भेदकः तम् इन्द्रम्, किं च यं तनूनपातम् अग्निम् अदितिः देवमाता गर्भं दधे धारितवती, तं शुचिं शुद्धं दीप्तं वा, इन्द्रं परमेश्वरं वयोधसम् उक्तम् । किं कुर्वन् ? उष्णिहं छन्दः अष्टाविंशत्यक्षरात्मकं छन्दः, इन्द्रियं वीर्यम्, दित्यवाहं खण्डनार्हस्य मांसस्य वाहकम् गां पशुम्, वयश्च दधत् धारयन् । गतमन्यत् ।　　[ —अ० ३०।३।२ ]

अथ तृतीयः—

**होता॑ यक्ष॒दीळेन्य॑मीळि॒तं व्वृ॑त्र॒हन्त॑म॒मिळा॑भि॒रीड्य॒ꣳ सह॒स्सोम॒मिन्द्र॑ व्वयो॒धस॑म् ।**

**अ॒नु॒ष्टुभ॒ञ्छन्द॑ इन्द्रि॒यम्पञ्चा॑विं॒गाँ व्वयो॒ दध॒द्वे॑त्वाज्य॑स्य॒ होत॒र्यज॑ ॥२६॥**

होता । यक्षत् । ईडेन्यम् । ईडितम् । वृत्रहन्तमम् । इडाभिः । ईड्यम् । सहः । सोमम् । इन्द्रम् । वयोधसम् ॥

अनुष्टुभम् । छन्दः । इन्द्रियम् । पञ्चाविम् । गाम् । वयः । दधत् ॥

शिष्टं स्पष्टम् ॥२६॥

होता यक्षत् । कम् ? ईडेन्यं स्तुतियोग्यम्, ईडानामकमित्यर्थः । स च इन्द्रं वृत्रहन्तमम्, अतिशयेन वृत्रस्य हन्तारम्, इडाभिः ईड्यम् स्तुतिवाग्भिः स्तुत्यम्, सहः पराभिभावकं तेजस्तद्रूपम्, सोमं सौम्यम्, वयोधसम् उक्तगुणकम्, इन्द्रं यजतु । किं कुर्वन् ? होता अनुष्टुभं छन्दः पञ्चाविं पञ्चवर्षोपेतम् । शिष्टं पूर्ववत् ।　　[ —अ० ३०।३।३ ]

अथ चतुर्थः—

**होता॑ यक्षत्सु॒ब॒र्हिषं॑ पूष॒ण्वन्त॒मम॑र्त्य॒ꣳ सीद॑न्तं ब॒र्हिषि॑ प्रि॒येऽमृ॒तेन्द्रं॑ व्वयो॒धस॑म् ।**

**बृ॒ह॒तीञ्छन्द॑ इन्द्रि॒यन्त्रि॒वत्सङ्गाँ व्वयो॒ दध॒द्वे॑त्वाज्य॑स्य॒ होत॒र्यज॑ ॥२७॥**

होता । यक्षत् । सु । बर्हिषम् । पूषण्वन्तम् । अमर्त्यम् । सीदन्तम् । बर्हिषि । प्रिये । अमृता । इन्द्रम् । वयोधसम् ॥

बृहतीम् । छन्दः । इन्द्रियम् । त्रिवत्सम् । गाम् । वयः ॥

शिष्टं स्पष्टम् ॥२७॥

होता यक्षत् । कम्, सुबर्हिषं शोभनबर्हिर्युक्तम् पूषण्वन्तं पूषाख्यदेववन्तम्, अमर्त्यम् अमरणधर्मकम्, प्रिये अभिप्रिये अभिमते बर्हिरास्तृते सीदन्तं निषण्णम्, बर्हिर्नामकम् अग्निं यक्षत् ।

स च इन्द्रं यजतु। कीदृशम् इन्द्रम्? अमृता अमृतम् अमरणधर्मकम्, अथवा अमृता अमृतानाम् इतरेषां देवानाम्, वयोधसम् एतद्गुणविशिष्टम्। (कीदृशः) होता, बृहतीं छन्दः इन्द्रियम्, त्रिवत्सं त्रिवार्षिकम् इत्यर्थः, तादृशं गां पशुं दधत्। [—अ० ३०।३।४]

अथ पञ्चमः—

होता यक्षद्व्यचस्वतीस्सुप्रायणा ऋतावृधो द्वारो देवीर्हिरण्ययीर्ब्रह्माण-मिन्द्रँ व्वयोधसम्।

पङ्क्तिञ्छन्द इहेन्द्रियन्तुर्यवाहङ्गाँव्वयो दधद्व्यन्त्वाज्यस्य होतर्यज ॥२८॥

होता। यक्षत्। व्यचस्वतीः। सु। प्रायणाः। ऋतावृधः। द्वारः। देवीः। हिरण्ययीः। ब्रह्माणम्। इन्द्रम्। वयोधसम्॥

पङ्क्तिम्। छन्दः। इह। इन्द्रियम्। तुर्यवाहम्। गाम्। वयः॥

शिष्टं स्पष्टम् ॥२८॥

होता यक्षत् यजतु। काः? व्यचस्वतीः व्यजनवत्यः कवाटा इत्यर्थः। अपि च सुप्रायणाः अतिप्रकृष्टगमनवतीः, ऋतावृधः यज्ञस्य वर्द्धयित्रीः, हिरण्ययीः हिरण्मयस्थाः, ताश्च अग्निमूर्त्तयः, ब्रह्माणम् अत्यन्तपरिवृढम् इन्द्रं देवं वयोधसं वयोधोगुणकं पूजयतु। कीदृशो होता? इन्द्रिय-पङ्क्त्यादिधारयिता, तुर्यवाहं गामिति चतुर्थवाहमित्यर्थः। शिष्टमुक्तम्। [—अ० ३०।३।५]

अथ षष्ठः—

होता यक्षत्सुपेशसा सुशिल्पे बृहती उभे नक्तोषासा न दर्शते विश्वमिन्द्रँ व्वयोधसम्।

त्रिष्टुभञ्छन्द इहेन्द्रियम्पष्ठवाहङ्गाँव्वयो दधद्वीतामाज्यस्य होतर्यज ॥२९॥

होता। यक्षत्। सु। शिल्पे। बृहती। उभे। नक्तोषासा। न। दर्शते। विश्वम्। इन्द्रम्। वयोधसम्॥

त्रिष्टुभम्। छन्दः। इह। इन्द्रियम्। पष्ठवाहम्। गाम्। वयः॥

शिष्टं स्पष्टम् ॥२९॥

नक्तोषासा षष्ठप्रयाजदेवते अहोरात्राभिमानिन्यौ, ते च सुपेशसे शोभनरूपे, सुशिल्पे शोभन-शिल्पोपेते, अहोरात्रयोर्हि सर्वाणि विचित्राणि उत्पद्यन्ते। बृहती महत्यौ, 'न' शब्दश्चा(इवा)र्थे, न दर्शते(न) दर्शनीये च ते उभे, होता यक्षत् यजतु। विश्वं विश्वात्मकं वयोधसम् इन्द्रियम्, सोऽग्नि-र्यजतु। पष्ठवाहं युगपार्श्वकम्। शिष्टं पूर्ववत्। [—अ० ३०।३।६]

अथ सप्तमः—

होता यक्षत्प्रचेतसा देवानामुत्तमँय्यशो होतारा दैव्या कवी सयुजेन्द्रँ व्वयोधसम्।

जगतीञ्छन्द इन्द्रियमनड्वाहङ्गाँव्वयो दधद्वीतामाज्यस्य होतर्यज ॥३०॥

होता । यक्षत् । प्र । चेतसा । देवानाम् । उत्तमम् । होतारा । दैव्या । कवी । सयुजा ।
इन्द्रम् । वयोधसम् ॥
जगतीम् । छन्दः । इन्द्रियम् । अनड्वाहम् । गाम् । वयः ॥
शिष्टं स्पष्टम् ॥३०॥

प्रचेतसा प्रचेतसौ प्रकृष्टप्रज्ञौ, कवी क्रान्तप्रज्ञौ, दैव्या होतारा देवसम्बन्धिनौ होतारौ [1]सप्तमप्रयाजदेवौ होता यक्षत् यजतु । देवानामुत्तमं यशोरूपं सयुजा सर्वेषां सह युज्यमानं वयोधसम् इन्द्रं यजतु । शिष्टं पूर्ववत् । [ —अ० ३०।३।७ ]

अथाष्टमः—

होता यक्षत्पेशस्वतीस्तिस्रो देवीर्हिरण्ययीर्भारतीर्बृहतीर्महीः पतिमिन्द्रं वयोधसम् ।
विराजं छन्द इहेन्द्रियं धेनुं गां न वयो दधद् व्यन्त्वाज्यस्य होतर्यज ॥३१॥

होता । यक्षत् । पेशस्वतीः । तिस्रः । देवीः । हिरण्ययीः । भारतीः । बृहतीः । महीः ।
पतिम् । इन्द्रम् । वयोधसम् ॥
विराजम् । छन्दः । इह । इन्द्रियम् । धेनुम् । गाम् । न । वयः ॥
शिष्टं स्पष्टम् ॥३१॥

पेशस्वतीः रूपवतीः, तिस्रः त्रिसंख्याकाः देवताः, ताश्च हिरण्ययीः हिरण्यवर्णाः, ताः होता मानुषो यक्षत् यजतु । कास्ताः ? भारतीः, एतत् इडासरस्वत्योः अपि उपलक्षणम्, बहुवचननिर्देशात् । ताश्च तिस्रो बृहतीः स्वरूपेण अतिविपुलाः, महीः गुणैः प्रवृद्धाः ताश्च, पुनः वयोधोलक्षणकमिन्द्रमिह यज्ञे यक्षत् । धेनुं नवप्रसूतां गां पशुम् । शिष्टं पूर्ववत् । [ —अ० ३०।३।८ ]

अथ नवमः—

होता यक्षत्सुरेतसं त्वष्टारं पुष्टिवर्द्धनं रूपाणि बिभ्रतं पृथक् पुष्टिमिन्द्रं वयोधसम् ।
द्विपदं छन्द इन्द्रियमुक्षाणं गां न वयो दधद् वेत्वाज्यस्य होतर्यज ॥३२॥

होता । यक्षत् । सु । रेतसम् । त्वष्टारम् । पुष्टिवर्द्धनम् । रूपाणि । बिभ्रतम् । पृथक् ।
पुष्टिम् । इन्द्रम् । वयोधसम् ॥
द्विपदम् । छन्दः । इन्द्रियम् । उक्षाणम् । गाम् । न । वयः ॥
शिष्टं स्पष्टम् ॥३२॥

होता यक्षत् सुरेतसं शोभनापत्यस्योत्पादनसामर्थ्यवन्तम्, पुष्टिवर्द्धनं सिक्तस्य रेतसः विकारकर्तृकत्वात् पुष्टिवर्द्धनः तम्, पृथक् सांकर्येण रूपाणि अवयवान् बिभ्रतं धारयन्तं, त्वष्टारं यूपाभितक्षकाभिमानिनं देवं शिल्पिनं नवमप्रयाजदेवं यजतु, सोऽपि पुष्टिं पोषकगुणकम् इन्द्रं यजतु । उक्षाणं सेचनसमर्थं युवानमित्यर्थः । [ —अ० ३०।३।९ ]

---

१. तौ उ० म्यु० ।

अथ दशमः—

होता यक्षद् वनस्पतिᳪ शमितारᳪ शतक्रतुᳪ हिरण्यपर्णमुक्थिनᳪ
रशनाम्बिभ्रतँव्वशिम्भगमिन्द्रँव्वयोधसम् ।
ककुभञ्छन्द इहेन्द्रियँव्वशाँव्वेहतङ्गाँव्वयो दधद् वेत्वाज्यस्य होतर्यज ॥३३॥

होता । यक्षत् । वनस्पतिम् । शमितारम् । शतक्रतुम् । हिरण्यपर्णम् । उक्थिनम् ।
रशनाम् । बिभ्रतम् । वशिम् । भगम् । इन्द्रम् । वयोधसम् ॥
ककुभम् । छन्दः । इह । इन्द्रियम् । वशाम् । वेहतम् । गाम् । वयः ॥
शिष्टं स्पष्टम् ॥३३॥

वनस्पतिः यूपाभिमानी देवः, तं होता यक्षत् । कीदृशं तम् शमितारं पशोः बन्धकम्, शतक्रतुं बहुकर्माणम्, हिरण्यपर्णं स्वर्णपत्रम्, उक्थिनम् उच्यते इति उक्थं स्तुतिः, तद्वन्तम्, रशनां दर्भमयीम्, बिभ्रतम्,[१] वशिनं कान्तं यक्षत् । सोऽपि भगं भजनीयं सौख्यवन्तं वा वयोधसम् इन्द्रं यजतु । वशां वन्ध्याम्, वेहतं गर्भोपघातिनीम् गाम् । [ —अ० ३०।३।१० ]

अथ एकादशः—

होता यक्षत्स्वाहाकृतीरग्निङ्गृहपतिम्पृथग्वरुणम्भेषजङ्कविङ्क्षत्रमिन्द्रँ-
व्वयोधसम् ।
अतिच्छन्दसञ्छन्द इन्द्रियम्बृहदृषभङ्गाँव्वयो दधद् व्यन्त्वाज्यस्य होतर्यज ॥३४॥

होता । यक्षत् । स्वाहाकृतीः । अग्निम् । गृहपतिम् । पृथक् । वरुणम् । भेषजम् ।
कविम् । क्षत्रम् । इन्द्रम् । वयोधसम् ॥
अतिछन्दसम् । छन्दः । इन्द्रियम् । बृहत् । ऋषभम् । गाम् । वयः ॥
शिष्टं स्पष्टम् ॥३४॥

होता मानुषो यक्षत् यजतु । स्वाहाकृतीः अन्त्यप्रयाजदेवताः, अग्नेः मूर्त्तीनां स्वामिनम् अग्निम्, स च गृहपतिः यजमानगृहपालकः गार्हपत्य इत्यर्थः, तं च, किं च भेषजं सर्वेषाम् औषधवर्द्धनकारिणम्, कविं क्रान्तप्रज्ञम्, यद्वा वरुणादिकम् अग्नेरपि अग्रे विशेषणम् । स च अन्त्यप्रयाजदेवः । क्षत्रं बलवर्द्धकम्, वयोधसम् इन्द्रं यजतु । ऋषभः सेक्ता । शिष्टमुक्तम् ।

अथ एकादशप्रयाजाग्नेयाज्या येन निर्णीता यास्काचार्यैः तन्मूर्त्तयः समिदाद्या वयोधोगुणकेन्द्रश्च पशुदेवताः । अतस्तेन सह अभेदेन अग्निमूर्त्तयः स्तूयन्ते इति प्राधान्येन योज्यम् ।

[ —अ० ३०।३।११ ]

इति त्रिंशेऽध्याये तृतीयोऽनुवाकः ।

१. वशिम् इत्यादीति युक्तम् ।

[ चतुर्थोऽनुवाकः ३५–४६ ]

तृतीये वयोधोगुणकेन्द्रस्य पशोः मैत्रावरुणप्रयाजप्रैषा उक्ताः। चतुर्थे तस्यैव अनुयाजप्रैषा उच्यन्ते। तत्र प्रथमप्रैषमन्त्रमाह—

देवम्बर्हिर्वयोधसन्देवमिन्द्रमवर्धयत्।
गायत्र्याच्छन्दसेन्द्रियञ्चक्षुरिन्द्रे वयो दधद् वसुवने वसुधेयस्य वेतु यज ॥३५॥

देवम्। बर्हिः। वयोधसम्। देवम्। इन्द्रम्। अवर्धयत्॥
गायत्र्या। छन्दसा। इन्द्रियम्। चक्षुः। इन्द्रे। वयः। दधत्॥
शिष्टं स्पष्टम् ॥३५॥

देवं द्योतमानम्, बर्हिः यज्ञाङ्गभूतम्, आस्तीर्णं बर्हिः तदभिमानिनी प्रथमानुयाजदेवता इत्यर्थः। तत्र बर्हिः इन्द्रं देवं वयोधसम् आयुष्यं तस्य धारकम्, आयुष्यवर्द्धकम्, एतद्गुणविशिष्टम् इन्द्रम् अवर्द्धयत् प्रवृद्धमकरोत्। किं कुर्वन्? गायत्र्या छन्दसा चतुर्विंशत्यक्षरात्मकेन छन्दसा स हि इन्द्रियं सर्वेषां चक्षुरादीन्द्रियाणां तत्तद्व्यवहारसामर्थ्यं चक्षुःप्रकाशकत्वं चक्षुरेव वयः आयुष्यं चेन्द्रे दधत्[१]। अतः[२] बर्हिः देवः, वेतु पिबतु। किं च आज्यस्य आज्यम् तदर्थं हे होतर्यज याज्यां पठ।

[ —अ० ३०।४।१ ]

अथ द्वितीयप्रैषः—

देवीर्द्वारो वयोधसꣳ शुचिमिन्द्रमवर्धयन्।
उष्णिहाच्छन्दसेन्द्रियम्प्राणमिन्द्रे वयो दधद् वसुवने वसुधेयस्य व्यन्तु यज ॥३६॥

देवीः। द्वारः। वयोधसम्। शुचिम्। इन्द्रम्। अवर्धयन्॥
उष्णिहा। छन्दसा। इन्द्रियम्। प्राणम्। इन्द्रे। वयः। दधत्॥
शिष्टं स्पष्टम् ॥३६॥

देवीः द्योतमानाः द्वारः यज्ञगृहद्वारः द्वितीयानुयाजदेवता। देवं द्योतमानम् इन्द्रं वयोधसम् उक्तगुणकं शुचिं निर्मलं तम् अवर्धयन्। उष्णिहा अष्टाविंशत्यक्षरात्मकेन छन्दसा सह, उत्तर-अनुष्टुबादिषु अक्षरचतुष्टयाधिक्येन तत्र छन्दो द्रष्टव्यम्, प्राणः प्रसिद्धः। शिष्टमुक्तम्। द्वाराणां बहुत्वात् व्यन्तु इति बहुवचनम्।

[ —अ० ३०।४।२ ]

अथ तृतीयः—

देवी उषासा नक्ता देवमिन्द्रँ वयोधसन्देवी देवमवर्धताम्।
अनुष्टुभाच्छन्दसेन्द्रियम्बलमिन्द्रे वयो दधद् वसुवने वसुधेयस्य वीताँय्यज ॥३७॥

देवी। उषासा। नक्ता। देवम्। इन्द्रम्। वयोधसम्। देवी। देवम्। अवर्धताम्॥
अनुष्टुभा। छन्दसा। इन्द्रियम्। बलम्। इन्द्रे। वयः। दधत्॥
शिष्टं स्पष्टम् ॥३७॥

---

१. धारयत, अवर्द्धयत्, उ० म्यु०। २. सः उ० म्यु०।

उषासा नक्ता अहोरात्रदेवते, यज्ञस्य अहोरात्रसाध्यत्वात्, तेऽपि यज्ञानामङ्गम्, ते च प्राजापत्याग्निमूर्त्ती, अत्र पुनः देवी देवमिति प्रयोगः आदरार्थः। ते च देवं वयोधसम् इन्द्रम् अवर्धताम्, वलं शरीरसामर्थ्यम्। शिष्टं पूर्ववत्। [ —अ० ३०।४।३ ]

अथ चतुर्थप्रैषः—

दे॒वी जोष्ट्री वसु॑धिती दे॒वमिन्द्र॑ँ॒ व्वयो॒धस॑न्दे॒वी दे॒वम॑वर्धताम् ।

बृ॒ह॒त्याच्छन्द॑सेन्द्रि॒यꣳ श्रोत्र॒मिन्द्रे॒ वयो॒ दध॑द् वसु॒वने॑ वसु॒धेय॑स्य वीता॒ँय्यज॑ ॥३८॥

पदच्छेदः स्पष्टः ॥३८॥

जोष्ट्री जोष्ट्र्यौ देवी देव्यौ चतुर्थानुयाजदेवते, वसुधिती धनस्य धारयित्र्यौ। शिष्टं पूर्ववत्। [ —अ० ३०।४।४ ]

अथ पञ्चमप्रैषः—

दे॒वी ऊ॒र्जाहु॑ती दु॒घे सु॒दु॒घे पय॒सेन्द्र॑ँ॒ व्वयो॒धस॑न्दे॒वी दे॒वम॑वर्धताम् ।

प॒ङ्क्त्याच्छन्द॑सेन्द्रि॒यꣳ शु॒क्रमिन्द्रे॒ वयो॒ दध॑द् वसु॒वने॑ वसु॒धेय॑स्य वीता॒ँय्यज॑ ॥३९॥

पदच्छेदः स्पष्टः ॥३९॥

ऊर्जाहुती ऊर्जाहुत्यो बलसाधनीभूते आज्यादिद्रवद्रव्यपशुपुरोडाशादिकठिनद्रव्यप्रदानाभिमानिन्यौ पञ्चमानुयाजदेवते, ते च दुघे दोग्ध्र्यौ वृष्ट्यादिफलानाम्, सुदुघे तस्यैव फलस्य सुतराम् अनायासेन दोग्ध्र्यौ, पयसा पयोवत् स्वादुतमेन सोमादिना अवर्धताम्। शुक्रं दीप्तं प्रजननसामर्थ्यं वा। शिष्टम् उक्तप्रायम्। [ —अ० ३०।४।५ ]

अथ षष्ठप्रैषः—

दे॒वा दैव्या॒ होता॑रा दे॒वमिन्द्र॑ँ॒ व्वयो॒धस॑न्दे॒वौ दे॒वम॑वर्धताम् ।

त्रि॒ष्टुभा॒च्छन्द॑सेन्द्रि॒यन्त्विषि॒मिन्द्रे॒ वयो॒ दध॑द् वसु॒वने॑ वसु॒धेय॑स्य वीता॒ँय्यज॑ ॥४०॥

पदच्छेदः स्पष्टः ॥४०॥

देवा देवौ द्योतमानौ, दैव्या देवसम्बन्धिनौ, होतारा होतारौ, देवौ देवमिति पुनरुक्तिरादरार्था इत्युक्तम्। त्विषिः दीप्तिः। शिष्टं पूर्ववत्। [ —अ० ३०।४।६ ]

अथ सप्तमः—

दे॒वीस्ति॒स्रस्ति॒स्रो दे॒वीर्वयो॒धस॒म्पति॒मिन्द्र॑मवर्धयन् ।

जग॑त्या॒च्छन्द॑सेन्द्रि॒यꣳ शू॒षमिन्द्रे॒ वयो॒ दध॑द् वसु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑ ॥४१॥

देवीः। तिस्रः। तिस्रः। देवीः। वयोधसम्। पतिम्। इन्द्रम्। अवर्धयन् ॥

शिष्टं स्पष्टम् ॥४१॥

देवीः देव्यः, तिस्रः त्रिसंख्याकाः, इडासरस्वतीभारत्यः। व्यतीहारेण पुनः पुनर्वचनमादरार्थम्। शूषं बलम्। शिष्टमुक्तम्। [ —अ० ३०।४।७ ]

अथाष्टमप्रैषः—

दे॒वो न॑रा॒शꣳसो॑ दे॒वमिन्द्रं॑ व्वयो॒धस॑न्दे॒वो दे॒वम॑वर्धयत् ।
वि॒राजा॒च्छन्द॑सेन्द्रि॒यꣳ रू॒पमिन्द्रे॑ वयो॒ दध॑द् वसु॒वने॑ वसु॒धेय॑स्य वे॒तु यज॑ ॥४२॥

पदच्छेदः स्पष्टः ॥४२॥

नराशंसो, नरैः ऋत्विग्भिः आशंसनीयः अग्निः । शिष्टं स्पष्टम् । [—अ० ३०।४।८]

अथ नवमः—

दे॒वो व॒नस्पति॑र्दे॒वमिन्द्रं॑ व्वयो॒धस॑न्दे॒वो दे॒वम॑वर्धयत् ।
द्वि॒पदा॒च्छन्द॑सेन्द्रि॒यम्भग॒मिन्द्रे॑ वयो॒ दध॑द् वसु॒वने॑ वसु॒धेय॑स्य वे॒तु यज॑ ॥४३॥

पदच्छेदः स्पष्टः ॥४३॥

वनस्पतिः यूपाभिमानी देवः । भगं भाग्यम् । [—अ० ३०।४।९]

अथ दशमः—

दे॒वम्ब॒र्हिर्वारि॑तीनान्दे॒वमिन्द्रं॑ व्वयो॒धस॑न्दे॒वन्दे॒वम॑वर्धयत् ।
क॒कुभा॒च्छन्द॑सेन्द्रि॒यँय्यश॒ इन्द्रे॑ वयो॒ दध॑द् वसु॒वने॑ वसु॒धेय॑स्य वे॒तु यज॑ ॥४४॥

पदच्छेदः स्पष्टः ॥४४॥

वारितीनाम्, वाराम् इतिः येषां तानि बर्हींषि, तेषां देवम् बर्हिः बर्हिर्देवः, मध्यमश्चेत् ककुबिति तल्लक्षणम् । यशः कीर्त्तिः । [—अ० ३०।४।१०]

अथैकादशप्रैषः—

दे॒वो अ॒ग्निस्स्वि॑ष्ट॒कृद्दे॒वमिन्द्रं॑ व्वयो॒धस॑न्दे॒वो दे॒वम॑वर्धयत् ।
अति॑च्छन्दसा॒च्छन्द॑सेन्द्रि॒यङ्क्ष॒त्रमिन्द्रे॑ वयो॒ दध॑द् वसु॒वने॑ वसु॒धेय॑स्य
वे॒तु यज॑ ॥४५॥

देवः । अग्निः । सु । इष्टकृत् । देवम् । इन्द्रम् । वयोधसम् । देवः । देवम् । अवर्धयत् ॥
अतिच्छन्दसा । छन्दसा । इन्द्रियम् । क्षत्रम् । इन्द्रे । वयः । दधत् ॥

शिष्टं स्पष्टम् ॥४५॥

स्विष्टकृत् हुतस्य स्विष्टकर्ता, स च अग्निर्देवः । देवो देवमिति आदरार्थं सर्वत्र पृथगुक्तमित्युक्तम् । अतिशब्दयुक्तम् अतिजगत्यादिकम् अतिच्छन्दः । क्षत्रं बलम् । शिष्टं स्पष्टम् ।
[—अ० ३०।४।११]

अथ तस्यैव वयोधोगुणकेन्द्रदेवताकस्य पशोः सूक्तवाकप्रैषः "अग्निमद्य" इत्ययम्—

अ॒ग्निम॒द्य होता॑रमवृणीता॒यँय्यज॑मानः॒ पच॒न्पक्तीः॒ पच॑न्पु॒रो॒ळाश॑म्ब॒ध्नन्निन्द्रा॑य
वयो॒धसे॒ छाग॑म् ।
सू॒प॒स्था अ॒द्य दे॒वो व॒नस्पति॑रभव॒दिन्द्रा॑य वयो॒धसे॒ छागे॑न ।

अघत्तम्मेदस्तः प्रति पचताग्रभीदवीवृधत पुरोळाशेन ।
त्वामद्य ऋषे ॥४६॥

अग्निम् । अद्य । होतारम् । अवृणीत । अयम् । यजमानः । पचन् । पक्तीः । पचन् ।
पुरोडाशम् । बध्नन् । इन्द्राय । वयोधसे । छागम् ॥
सु । उप । स्थाः । अद्य । देवः । वनस्पतिः । अभवत् । इन्द्राय । वयोधसे । छागेन ॥
अघत्तम् । मेदस्तः । प्रति । पचत । अग्रभीत् । अवीवृधत । पुरोडाशेन ॥
त्वाम् । अद्य । ऋषे ॥४६॥

अयं ( यजमानः ) अद्य अस्मिन् यागदिने अग्निम् आग्रण्यादियुक्तं देवं होतारं हौत्रकर्मकर्तारम्, एतन्नामानम् ऋत्विजम् अवृणीत वृतवान् । कः अयम् ? इदानीं वक्ष्यमाणः यजमानः । किं कुर्वन् ? पचन् पाकं कुर्वन् । पक्तीः पक्तव्यविशेषान् इत्यर्थः । तथा पशुपुरोडाशं पचन् । किं च वयोधसे वयोधोगुणयुक्तेन्द्राय ।[1] तदर्थं छागं बध्नन् बन्धनं कुर्वन्, किं च अद्य देवो द्योतमानः आज्येन प्रकाशमानः वनस्पतिः यूपः, सूपस्थाः शोभनावस्थानः अभूत् । केन कारणेन ? इन्द्राय वयोधसे, आयुष्यवर्द्धनगुणविशिष्टाय, इन्द्राय इन्द्रार्थम्, छागेन बद्धेन छागेन युक्तः सन् सूपस्थाः ततोऽभवत् । किं च अद्य भक्षितवान् इन्द्रः पुरोडाशं तत् तस्मात् मेदस्तः मांसोदकात् प्रतिपचत प्रतिपाकं कुरुत । तं च अग्रभीत् अग्रहीत् । अग्निः पाकाय स्वीकरिष्यतीत्यर्थः । तच्च मांसपुरोडाशेन अवीवृधत प्रावर्द्धत ।[2] त्वामद्येत्यादि प्रतीकद्वयं केवलेन्द्रसूक्तवाकप्रैषवत् । 'वयोधस' एतावदेव विशेषः । "त्वामद्य ऋषे" इत्यादिकः 'सूक्तवाकाय सूक्ता ब्रूहि' इत्यन्तान्तः साधारणोंऽशः त्रयोविंशेऽध्याये 'देवं बर्हिः सरस्वती' ( अ० २३।४७ ) इत्यत्र व्याख्यातः । [—अ० ३०।४।१२]

इति त्रिंशेऽध्याये चतुर्थोऽनुवाकः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमार्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कणभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये त्रिंशोऽध्यायः ।

---

१. युक्ताय, उ० म्यु० । २. यत् उ० म्यु० ।

# एकत्रिंशोऽध्यायः

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

[ प्रथमोऽनुवाकः १–११ ]

त्रिंशेऽध्याये प्राच्याङ्गप्रतीच्याङ्गभूतयोः वयोधोगुणकेन्द्रदेवताकपश्वोः प्रयाजानुयाजसूक्तवाकप्रैषा उक्ताः । एकत्रिंशे अश्वमेधसम्बन्धिनो मन्त्रलिङ्गविनियोज्या उच्यन्ते । तत्र **"समिद्धो अञ्जन्"** इति एतदाश्वमेधिकमध्यमेऽहनि अश्वस्याप्रीसूक्तम् । तत्र प्रथमः—

**समिद्धो अञ्जन् कृदरम्मतीनाङ्घृतमग्ने मधुमत्पिन्वमानः ।**
**वाजी वहन् वाजिनञ्जातवेदो देवानाँव्वक्षि प्रियमा सधस्थम् ॥१॥**

**सम् । इद्धः । अञ्जन् । कृदरम् । मतीनाम् । घृतम् । अग्ने । मधुमत् । पिन्वमानः ॥**
**वाजी । वहन् । वाजिनम् । जातवेदः । देवानाम् । वक्षि । प्रियम् । आ । सधस्थम् ॥१॥**

हे जातवेदोऽग्ने ! वाजिनम् अश्वम् वक्षि वह, देवान् प्रति प्रापय इत्यर्थः । कीदृशोऽग्निः ? समिद्धः सम्यक् प्रदीप्तः, वाजी अन्नवान्, अन्नसम्पादक इत्यर्थः । किं कुर्वन् ? मतीनां कृदरम् अञ्जन् । कृदरशब्दो धान्यानाम् आवापनं कुसूलादिकम् आचष्टे । मतीनाम् अभिज्ञानानां कृदरं कुसूलस्थानम्, तत् स्वरूपम् अञ्जन् प्रकाशयन्, तथा मधुमत् माधुर्योपेतं घृतं पिन्वमानः, तथा देवानां देवार्थं सर्वाणि हवींषि वहन्, कीदृशं वाजिनम् ? देवानां प्रियं प्रीतिहेतुम्, आसधस्थं सर्वतः पश्वन्तरैः सह स्थितम् । अत एव तैत्तिरीयकम्—"आग्नेयं कृष्णग्रीवं पुरस्ताल्ललाटे" इत्यादि ।

[—अ० ३१।१।१]

द्वितीयमाह—

**घृतेनाञ्जन्त्सम्पथो देवयानान् प्रजानन् वाज्यप्येतु देवान् ।**
**अनु त्वा सप्ते प्रदिशः सचन्ताᳬ स्वधामस्मै यजमानाय धेहि ॥२॥**

**घृतेन । अञ्जन् । सम् । पथः । देवयानान् । प्र । जानन् । वाजी । अपि । एतु । देवान् ॥**
**अनु । त्वा । सप्ते । प्र । दिशः । सचन्ताम् । स्वधाम् । अस्मै । यजमानाय । धेहि ॥२॥**

अयं वाजी देवान् अप्येतु प्राप्नोतु । किं कुर्वन् ? घृतेन स्वपरिहुताज्येन देवयानान् पथः देवप्राप्तिसाधनमार्गान् समञ्जन् सम्यक् द्रवीकुर्वन्, प्रजानन् अनुगन्तव्यमार्गं प्रकर्षेण अधिगच्छन् । हे सप्ते अश्व ! दिशः प्रकृष्टाः सर्वा दिशस्त्वाम् अनुसृत्य, सचन्तां समवेता भवन्तु । देवप्राप्त्यानुकूल्यमेव कुर्वन्तु । त्वं च अस्मै यजमानाय स्वधां स्वधाकारोपलक्षितमन्नम्, धेहि सम्पादय ।

[—अ० ३१।१।२]

तृतीयमाह—

**ईड्य॑श्चासि॒ वन्द्य॑श्च वाजिन्ना॒शुश्चा॑सि॒ मेध्य॑श्च सप्ते ।**

**अ॒ग्निष्ट्वा॑ दे॒वैर्वसु॑भिस्स॒जोषा॑: प्री॒तँव्वह्नि॑ँ व्वहतु जा॒तवे॑दाः ॥३॥**

**ईड्यः । च । असि । वन्द्यः । च । वाजिन् । आशुः । च । असि । मेध्यः । च । सप्ते ॥**
**अग्निः । त्वा । देवैः । वसुभिः । सजोषाः । प्रीतम् । वह्निम् । वहतु । जातवेदाः ॥३॥**

हे वाजिन् ! त्वम् अस्माभिः ईड्यश्च स्तोतव्यश्च वन्द्यश्च नमस्कार्यश्च असि । हे सप्ते ! अश्व, आशुश्च शीघ्रगामी च मेध्यश्च योग्यश्च असि । जातवेदा अग्निः त्वां वहतु देवान् प्रापयतु । कीदृशः अग्निः ? वसुभिः जगन्निवासहेतुभिर्देवैः सजोषाः समानप्रीतिः । कीदृशं त्वाम् ? प्रीतं प्रियं वह्निं वोढारम् । [—अ० ३१।१।३]

चतुर्थमाह—

**स्ती॒र्णम्ब॒र्हिस्सु॒ष्टरी॑मा जु॒षा॒णोरु पृ॒थु प्रथ॑मानम्पृथि॒व्याम् ।**

**दे॒वेभि॑र्यु॒क्तमदि॑तिस्स॒जोषा॑स्स्यो॒नङ्कृ॒ण्वा॒ना सु॑वि॒ते द॑धातु ॥४॥**

**स्तीर्णम् । बर्हिः । सु । स्तरीमा । जुषाणा । उरु । पृथु । प्रथमानम् । पृथिव्याम् ॥**
**देवेभिः । युक्तम् । अदितिः । सजोषाः । स्योनम् । कृण्वाना । सु । इते । दधातु ॥४॥**

अदितिः भूमिर्देवी, सुविते शोभनप्राप्तियोग्यस्थाने दधातु अश्वं स्थापयतु । कीदृशी अदितिः? बर्हिर्जुषाणा दर्भं सेवमाना । कीदृशं बर्हिः ? संज्ञपनायाश्वं शाययितुमास्तीर्णं सुष्टरीमा सुष्ठु स्तरणयोग्यम्, पृथिव्यां भूमौ सुर्बर्हिर्यथा भवति तथा उरु पृथु अति विस्तीर्णं प्रथमानं प्रसारितं तस्य इयम् अदितिः, देवेभिः सर्वैः देवैः, सजोषाः समानप्रीतिः तथा युक्तं योग्यं स्योनं सुखकरस्थानम्, कृण्वाना कुर्वती । [—अ० ३१।१।४]

पञ्चममाह—

**ए॒ता उ॑ वस्सु॒भगा॑ वि॒श्वरू॑पा विपक्षो॑भि॒श्श्रय॑माणा॒ उदातै॑: ।**

**ऋ॒ष्वास्स॒तीः क॒वष॒श्शुम्भ॑माना॒ द्वारो॑ दे॒वीस्सु॑प्राय॒णा भ॑वन्तु ॥५॥**

**एताः । उ । वः । सुभगाः । विश्वरूपाः । वि । पक्षोभिः । श्रयमाणा । उत् । आतैः ॥**
**ऋष्वाः । सतीः । कवषः । शुम्भमानाः । द्वारः । देवीः । सु । प्रायणाः । भवन्तु ॥५॥**

एता उ एता अपि, द्वारो देवीः द्वाराख्यदेव्यः सुप्रायणाः भवन्तु सुष्ठु अश्वस्य प्रापिका भवन्तु । कीदृश्यो देव्यः ? वो युष्माकम् ऋत्विग्यजमानानाम्, सुभगाः सौभाग्यप्रदाः, विश्वरूपाः बहुविधरूपयुक्ताः[1] एताः आतैः सततगमनसाधनैः, पक्षोभिः पक्षस्थानीयैः[2] एतैः[3] विश्रयमाणाः ऊर्ध्वं गच्छन्त्यः, ऋष्वाः सतीः गमनागमनयोग्याः सत्यः, कवषः कवाटैः शुम्भमानाः द्वाराभिमानिन्यो देव्यः कवाटसमीपे वर्तमानाः शोभन्ते इत्यर्थः । [—अ० ३१।१।५]

---

१. सत्यः उ० म्यु० । २. स्थानोपेतैः उ० म्यु० । ३. उत् इत्यादि भवितुं युक्तम् ।

षष्ठमाह—

अन्तरा मित्रावरुणा चरन्ती मुखं यज्ञानामभि संविदाने ।
उषासा वाꣳ सुहिरण्ये सुशिल्पे ऋतस्य योनाविह सादयामि ॥६॥

अन्तरा । मित्रावरुणा । चरन्ती । मुखम् । यज्ञानाम् । अभि । सम् । विदाने ॥
उषासा । वाम् । सुहिरण्ये । सुशिल्पे । ऋतस्य । योनौ । इह । सादयामि ॥६॥

हे उषासा 'उषस्' शब्दोपलक्षिते अहोरात्रे देवते, वां युवाम्, ऋतस्य योनौ यज्ञस्य कारणे, इह अश्वे सादयामि । कीदृश्यौ अहोरात्रे देवते, मित्रावरुणरूपे, "अहोरात्रौ वै मित्रावरुणौ" (ता० ब्रा० २५।१०।१०) इति श्रुतिः, "मैत्रं वा अहर्वारुणी रात्रिः" (तै० ब्रा० १।७।१०।१) इति वा । अन्तरा चरन्ती ब्रह्माण्डस्य मध्ये वर्तमाने, यज्ञानां मुखम् अभि संविदाने यज्ञप्रारम्भमभिलक्ष्य परस्परम् ऐकमत्ययुक्ते, सुहिरण्ये शोभनहिरण्ये तत्सदृशसूर्यचन्द्रमसोः प्रकाशयुक्ते सुशिल्पे सर्वव्यवहारहेतुभूतैः शोभनैः शिल्पैः उपेते । [—अ० ३१।१।६]

अथ सप्तमी—

प्रथमा वाꣳ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा ।
अपिप्रयं चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता ॥७॥

प्रथमा । वाम् । सरथिना । सुवर्णा । देवौ । पश्यन्तौ । भुवनानि । विश्वा ॥
अपिप्रयम् । चोदना । वाम् । मिमाना । होतारा । ज्योतिः । प्र । दिशा । दिशन्ता ॥७॥

हे दम्पती यजमानपत्न्यौ ! वां युवयोरर्थे होतारा होतारौ देव्यौ, अपिप्रयं प्रीणयामि । कीदृश्यौ ? प्रथमा प्रथमौ मुख्यौ, सरथिना समानः एकः रथः सरथः, तद्वन्तौ, सुवर्णा सुवर्णोपेतौ देवौ दीप्यमानौ[1], विश्वा भुवनानि सर्वान् लोकान् पश्यन्तौ, वां चोदना मिमाना, युवयोर्विहितानि कर्माणि शमितवन्तौ, प्रदिशा प्रकृष्टासु दिक्षु ज्योतिः दिशन्ता स्वकीयप्रकाशं प्रसारयन्तौ । [—अ० ३१।१।७]

अथाष्टमी—

आदित्यैर्नो भारती वष्टु यज्ञꣳ सरस्वती सह रुद्रैर्न आवीत् ।
इळोपहूता वसुभिस्सजोषा यज्ञं नो देवीरमृतेषु धत्त ॥८॥

आदित्यैः । नः । भारती । वष्टु । यज्ञम् । सरस्वती । सह । रुद्रैः । नः । आवीत् ॥
इडा । उप । हूता । वसुभिः । सजोषाः । यज्ञम् । नः । देवीः । अमृतेषु । धत्त ॥८॥

भारती देवी, आदित्यैः सह, नः अस्मदीयं यज्ञम्, वष्टु कामयताम् । सरस्वती माध्यमिका देवी रुद्रैः सह नः यज्ञम्, आवीत् रक्षतु । इडा देवी वसुभिः देवैः सजोषाः समानप्रीता सती सा उपहूता आहूता सती अवतु । सर्वा देवीः देव्यः इति अन्तरिक्षदेवताः, अमृतेषु यज्ञं नः धत्त धारयत । [—अ० ३१।१।८]

---

१. द्योत उ० म्यु० ।

अथ नवमी—

त्वष्टा वीरन्देवकाममञ्जजान त्वष्टुरर्वा जायत आशुरश्वः ।
त्वष्टेदँव्विश्वम्भुवनञ्जजान बहोः कर्त्तारमिह यक्षि होतः ॥९॥

त्वष्टा । वीरम् । देवकामम् । जजान । त्वष्टुः । अर्वा । जायते । आशुः । अश्वः ॥
त्वष्टा । इदम् । विश्वम् । भुवनम् । जजान । बहोः । कर्त्तारम् । इह । यक्षि । होतः ॥९॥

त्वष्टा त्वष्टृनामको देवः, देवकामं देवैः काम्यमानं देवान् कामयमानं वा, वीरं यजमानम् अग्निं वा जजान । त्वष्टुः सकाशात्, अर्वा गमनकुशलः, आशुः शीघ्रगामी अश्वः जायते । किं बहुना त्वष्टा देवः इदं विश्वं सर्वं भुवनं भूतजातं जजान । अतः हे होतः ! बहोः अतिप्रभूतस्य कर्तारं त्वष्टारम्, इह अस्मिन् यज्ञे, यक्षि यज । [—अ० ३१।१।९]

अथ दशमी—

अश्वो घृतेन त्मन्या समक्त उप देवाँ२ ऋतुशः पाथ एतु ।
वनस्पतिर्देवलोकम्प्रजानन्नग्निना हव्या स्वदितानि वक्षत् ॥१०॥

अश्वः । घृतेन । त्मन्या । सम् । अक्तः । उप । देवान् । ऋतुशः । पाथः । एतु ॥
वनस्पतिः । देवलोकम् । प्र । जानन् । अग्निना । हव्या । सु । अदितानि । वक्षत् ॥१०॥

अयम् अश्वः, त्मन्या आत्मना स्वयमेव, घृतेन समक्तः घृताक्त इव रुचिकरः सन्, पाथः देवानाम् अन्नं भूत्वा ऋतुशः तत्तदृतुकाले देवान्, उपैतु प्राप्नोतु । वनस्पतिः एतन्नामको देवः देवलोकं प्रजानन् प्रकर्षेण अवगच्छन्, अग्निना स्वदितानि हवींषि, वक्षत् वहतु, देवान् प्रापयतु । [—अ० ३१।१।१०]

अथैकादशी—

प्रजापतेस्तपसा वावृधानस्सद्यो जातो दधिषे यज्ञमग्ने ।
स्वाहाकृतेन हविषा पुरोगा याहि साध्या हविरदन्तु देवाः ॥११॥

प्रजापतेः । तपसा । वावृधानः । सद्यः । जातः । दधिषे । यज्ञम् । अग्ने ॥
स्वाहाकृतेन । हविषा । पुरोगाः । याहि । साध्याः । हविः । अदन्तु । देवाः ॥११॥

हे अग्ने ! प्रजापतेः जगदीश्वरस्य तपसा पर्यालोचनेन वावृधानः त्वम् उत्पन्नमात्रः सद्यः तदानीम् एव यज्ञं दधिषे धारयसि । स्वाहाकृतेन समर्पितेन हविषा सह, पुरोगाः अग्रे गच्छन्, याहि देवान् प्राप्नुहि । साध्याः अस्माभिः साधनीयाः पूजनीयाः देवाः, अस्माभिः समर्पितं हविः अदन्तु । [—अ० ३१।१।११]

इत्येकत्रिंशेऽध्याये प्रथमोऽनुवाकः ।

## [ द्वितीयोऽनुवाकः १२–२३ ]

इतः परम् अश्वमेधे अश्वरक्षिणां सन्नाहसाधनमन्त्राः स्तुतिपराश्चोच्यन्ते। तत्र ध्वजप्रतिमोके प्रथमः—

**के॒तुङ्कृ॒ण्वन्न॑के॒तवे॒ पेशो॑ मर्या अपे॒शसे॑।**
**समु॒षद्भि॑रजायथाः ॥१२॥**

**केतुम्। कृण्वन्। अकेतवे। पेशः। मर्याः। अपेशसे॥**
**सम्। उषद्भिः। अजायथाः॥१२॥**

हे मर्याः! मरणधर्माणो मनुष्याः, यद्यपि अत्र देवता न स्तूयते तथापि केतुशब्दात् उषःसम्बन्धात् अग्निरिति गम्यते। अयमग्निः अकेतवे, केतुरिति प्रज्ञानाम, प्रज्ञानरहिताय लोकाय केतुं प्रज्ञानं कृण्वन् कुर्वन्, अपेशसे, 'पेश' इति रूपनाम, रूपरहिताय लोकाय, रूपं च कृण्वन्, उषद्भिस्तेजोभिः समजायथाः पुरुषव्यत्ययः, समजायत। आदित्यात्मना वा अयमग्निः स्तूयते। उषद्भिरिति, अत्र उषसो वा ग्राह्याः। [—अ० ३१।२।१]

"जीमूतस्य" इत्ययम् अश्वरक्षिणां कवचग्रहणे—

**जी॒मूत॑स्येव भवति॒ प्रती॑कँ॒ यद्व॒र्मी याति॑ स॒मदा॑मु॒पस्थे॑।**
**अना॑विद्धया त॒न्वा॑ जय॒ त्वꣳ स त्वा॒ वर्म॑णो म॒हि॒मा पि॑पर्तु ॥१३॥**

**जीमूतस्य। इव। भवति। प्रतीकम्। यत्। वर्मी। याति। समदाम्। उपस्थे॥**
**अनाविद्धया। तन्वा। जय। त्वम्। सः। त्वा। वर्मणः। महिमा। पिपर्तु॥१३॥**

समदां सह माद्यन्ति अत्रेति समदः संग्रामाः। समः सह मोदमाना रक्षका वा, तेषामुपस्थे उत्सङ्गे इत्यर्थः। तत्र यत् यदा वर्मी कवचवान् सन्नद्धकवचः सन् स्वामी, तदा तस्याङ्गं जीमूतस्य प्रतीकमिव मेघस्य [1]शरीरमिव, तद् यथा निस्फुरणेन नानेव[2] शोभते तद्वत् शोभते इत्यर्थः। यतः एवम् अतः अनाविद्धया[3] वेधेन रहितया तन्वा शरीरेण त्वं जय। स च वर्मणो महिमा त्वा त्वां पिपर्तु प्रीणयतु पूरयतु वा। [—अ० ३१।२।२]

"धन्वना गा" इति धनुरादाने—

**धन्व॑ना॒ गा धन्व॑ना॒जिञ्ज॑येम॒ धन्व॑ना ती॒व्राः स॒मदो॑ जयेम।**
**ध॒नुश्श॒त्रोर॑पका॒मङ्कृ॑णोतु॒ धन्व॑ना॒ सर्वाः॑ प्र॒दिशो॑ जयेम ॥१४॥**

**धन्वना। गाः। धन्वना। आजिम्। जयेम। धन्वना। तीव्राः। समदः। जयेम॥**
**धनुः। शत्रोः। अपकामम्। कृणोतु। धन्वना। सर्वाः। प्र। दिशः। जयेम॥१४॥**

धन्वना धनुषा गाः (प्रति) वैरिगणान् जयेम। आजिं मर्यादां जयेम। धन्वना तीव्राः (समदः) अत्युग्राः समदः संग्रामान् जयेम। धनुरिदं शत्रोः शत्रुम् अपकामं गतमनोरथं कृणोतु। तथा धन्वना सर्वाः प्रदिशः जयेम,[4] विदिशः प्रदिश इति मुख्यदिशः ताः सर्वा अपि जयेम। [—अ० ३१।२।३]

---

१. गम्भीर उ० म्यु०।
२. कात्स्न्येन च उ० म्यु०।
३. बाणाद्व्यवेधन उ० म्यु०।
४. इति उ० म्यु०।

"ते आचरन्ति" इति धनोः आर्त्न्यौ समदर्शिन्यौ—

**ते आचरन्ती समनेव योषा मातेव पुत्रम्बिभृतामुपस्थे।**
**अप शत्रूँन् विध्यताꣳ सँव्विदाने आर्त्नी इमे विस्फुरन्ती अमित्रान् ॥१५॥**

ते। आ। चरन्ती। समना। इव। योषा। माता। इव। पुत्रम्। बिभृताम्। उपस्थे॥
अप। शत्रून्। विध्यताम्। सम्। विदाने। आर्त्नी। इमे। वि। स्फुरन्ती। अमित्रान् ॥१५॥

धनुषः कोटयौ समना योषा इव आचरन्ती। यथा धृष्टा योषित् स्वगृहे निर्भया सती सर्वतः चरति एवम् इमे अपि इमे धृष्टे सत्यौ इष्टधारणाय आ सर्वतः चरन्त्यौ विभृतां धारयताम्, इषुमिति शेषः। तत्र दृष्टान्तः, यथा माता पुत्रम् उपस्थे उत्सङ्गे बिभर्ति तद्वत्। इमे आर्त्नी विस्फुरन्ती विवधं स्फुरन्ती पुनः पुनः प्रवर्तमाने सत्यौ संविदाने परस्परम् ऐकमत्यं गते अमित्रान् मदीयान् शत्रून् अपविध्यताम्। [—अ० ३११२१४]

"वक्ष्यन्ती वा" इति ज्याविमर्शने—

**वक्ष्यन्ती वेदागनीगन्ति कर्णम्प्रियꣳ सखायम्परिषस्वजाना।**
**योषेव शिङ्क्ते वितताऽधि धन्वञ्ज्या इयꣳ समने पारयन्ती ॥१६॥**

वक्ष्यन्ती। वा। इत्। आ। गनीगन्ति। कर्णम्। प्रियम्। सखायम्। परि। सस्वजाना॥
योषा। इव। शिङ्क्ते। वि। तता। अधि। धन्वन्। ज्या। इयम्। समने। पारयन्ती ॥१६॥

इयं ज्या धनुषि आरोपिता मौर्वी वक्ष्यन्तीव किंचिद्रहस्यं वाक्यं वदन्तीव कर्णसमीपम् आगनीगन्ति आगमेः आजङ्गमीतीति वक्तव्ये "आगनीगन्ति च" (पा० अ० ७।४।६५) इति निपातनादेवं प्रयोगः। प्रियं सखायं परिषस्वजाना प्रीतिसम्पत्समानं विश्रम्भव्यवहारयोग्यं भर्तारम् आलिङ्गती योषेव शिङ्क्ते अव्यक्तशब्दं करोति। सा यथा स्वकीयं योगक्षेमं शनैः कथयति तद्वत् इयं ज्या शब्दयतीत्यर्थः। कीदृशी ज्या? अधिधन्वन् धनुष उपरि वितता विशेषेण प्रसारिता समने युद्धे, पारयन्ती समाप्तिं तीरयन्ती। [—अ० ३११२१५]

"अहिरिव भोगैः" इति हस्तवाणाभिमन्त्रणे—

**अहिरिव भोगैः पर्येति बाहुञ्ज्याया हेतिम्परिबाधमानः।**
**हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाꣳसम्परिपातु विश्वतः ॥१७॥**

अहिः। इव। भोगैः। परि। एति। बाहुम्। ज्यायाः। हेतिम्। परि। बाधमानः॥
हस्तघ्नः। विश्वा। वयुनानि। विद्वान्। पुमान्। पुमांसम्। परि। पातु। विश्वतः ॥१७॥

हस्तघ्नः हस्ते ज्याघातेन हन्यमानः अहिभोगसदृशः चर्मविशेषः स च अहिभोगैरिव, सर्पः यथा स्वभोगैः पुरुषस्य हस्तं पादं वेष्टयति। तद्वद् बाहुं परितः व्याप्नोति। ज्यायाः कर्णान्तमाकृष्टायाः मौर्व्याः सहसा मुक्ता या हेतिः तां परिबाधमानः परितः वारयन्, स हस्तघ्नः हस्ते स्थित्वा ज्यया हन्यमानः, विश्वा सर्वाणि वयुनानि पुरुषस्य हस्तभागविषयाणि विद्वान् प्रजानन् पुमान्, हस्तघ्न इति पुंलिङ्गेन अभिमानः। पुमांसं स्वाश्रयभूतं धानुष्कं विश्वतः सर्वतः परिपाति परितो रक्षति। [—अ० ३११२१६]

"बह्वीनां पिता" इति इषुधिप्रयोगे—

वह्वीनाम्पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य ।
इषुधिस्सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥१८॥

बह्वीनाम् । पिता । बहुः । अस्य । पुत्रः । चिश्चा । कृणोति । समना । अवगत्य ॥
इषुधिः । सङ्काः । पृतनाः । च । सर्वाः । पृष्ठे । निनद्धः । जयति । प्र । सूतः ॥१८॥

अयम् इषुधिः वाणाधारः समनावगत्य, समने युद्धे प्राप्य, चिश्चा कृणोति वाणाकर्षणवेलायाम् अव्यक्तं ध्वनिं करोति, तस्यानुकरणं 'चिश्चा' इति। कीदृशः इषुधिः, वह्वीनाम् इषूणां पिता पालकः, पितृस्थानीयो वा, अत एवमस्य पितुः पुत्रः वाणसङ्घः बहुः बहुविधः। सोऽयम् इषुधिः पृष्ठे निनद्धः पृष्ठभागे सम्यक् सम्बद्धः, प्रसूतः धानुष्केण वाणाकर्षणे प्रेरितोऽयम्, सङ्काः सम्यक् शब्दायमानाः पृतनाश्च सर्वाः जयति। [—अ० ३१।२।७]

"सुपर्णम्" इत्ययं "स्वादुषᳪ सद" इति पितॄन् समुपतिष्ठत इत्यापस्तम्बोक्तानां मध्ये तृतीयः लिङ्गः, अत्र तु इषुक्षेपणे—

सुपर्णँ वस्ते मृगो अस्या दन्तो गोभिस्सन्नद्धा पतति प्रसूता ।
यत्रा नरस्सञ्च वि च द्रवन्ति तत्रास्मभ्यमिषवश्शर्म यᳪसन् ॥१९॥

सु । पर्णम् । वस्ते । मृगः । अस्याः । दन्तः । गोभिः । सम् । नद्धा । पतति । प्र । सूता ॥
यत्र । नरः । सम् । च । वि । च । द्रवन्ति । तत्र । अस्मभ्यम् । इषवः । शर्म । यंसन् ॥१९॥

अस्या इषोः सुपर्णं पुच्छभागस्थितं शोभनं पर्णं वस्ते तं भागम् आच्छादयति। अथ अस्याः इषोः दन्तः शल्यः मृगः मृगदन्तवत् अतितीक्ष्णः, सेयम् इषुः गोभिः गोसम्बन्धिभिः सन्नद्धा सम्यक् बद्धा, प्रसूता मौर्व्योत्पादिता तयानुज्ञाता पतति शत्रुषु गच्छति, अथ बाहुवदाह, यत्र यस्मिन् संग्रामे नरः सं च वि च द्रवन्ति इतस्ततो गच्छन्ति आगच्छन्ति च तत्र तस्मिन् देशे पतित्वा अस्मभ्यं शर्म सुखं यंसन् ददतु। [—अ० ३१।२।८]

"वनस्पते" इति रथाभिमर्शने—

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणस्सुवीरः ।
गोभिस्सन्नद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥२०॥

वनस्पते । वीड्वङ्गः । हि । भूयाः । अस्मत्सखा । प्र । तरणः । सु । वीरः ॥
गोभिः । सम् । नद्धः । असि । वीडयस्व । आ । स्थाता । ते । जयतु । जेत्वानि ॥२०॥

हे वनस्पते वनस्पतिविकार्यरथ त्वं वीड्वङ्गः दृढाङ्ग एव भूयाः भव। त्वं कीदृशः, अस्मत्सखा अस्मासु सखेव स्निग्धः। प्रतरणः प्रकर्षेण तारकः सुवीरः शोभनवीर्यः। गोभिः सन्नद्धः गोचर्मरज्जुभिः सम्यक् बद्धोऽसि। अतः वीडयस्व अत्यन्तं दृढो भव। ते तव आस्थाता आरूढः स्वामी, जेत्वानि जेतव्यानि मण्डलानि जयतु। [—अ० ३१।२।९]

---

१. संनद्धः उ० म्यु०।

"रथे तिष्ठन्" इति सारथ्यभिमन्त्रणे—

रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः ।
अभीशूनाम्महिमानम्पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥२१॥

रथे । तिष्ठन् । नयति । वाजिनः । पुरः । यत्र । यत्र । कामयते । सु । सारथिः ॥
अभीशूनाम् । महिमानम् । पनायत । मनः । पश्चात् । अनु । यच्छन्ति । रश्मयः ॥२१॥

सुशिक्षितोऽयं सारथिः स्वयं रथे तिष्ठन् यत्र यत्र गन्तुं कामयते तत्र तत्र रथं[1] पुरः पुरस्तात् नयति । हे ऋत्विजः ![2] अभीशूनाम् अश्वप्रग्रहाणां महिमानं माहात्म्यं पनायत । स्तुतिप्रकार उच्यते । रश्मयो मनः सारथेः बुद्धिम् अनु तदनुकूलं यच्छन्तीति ।

[—अ० ३१।२।१०]

"आजङ्घन्ति" इति कशादाने—

आजङ्घन्ति सान्वेषाञ्जघनाँ २ उप जिघ्नते ।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥२२॥

आ । जङ्घन्ति । सानु । एषाम् । जघनान् । उप । जिघ्नते ॥
अश्वाजनि । प्रचेतसः । अश्वान् । समत्सु । चोदय ॥२२॥

कशाधारिणः सारथयः एषाम् अश्वानां सानु उच्छ्रितं प्रदेशम् आजङ्घन्ति समन्तात् उपघ्नन्ति । तथा जघनान् पृष्ठदेशान् उपजिघ्नते उपेत्य ताडयन्ति । हे अश्वाजनि ! सम्प्रेरके कशे, प्रचेतसः प्रकृष्टज्ञानान् अश्वान्, समत्सु संग्रामेषु, चोदय प्रेरय । [—अ० ३१।२।११]

"उपश्वासय" इति दुन्दुभिसम्प्रदाने—

उप श्वासय पृथिवीमुत द्याम्पुरुत्रा ते मनुताँ्विष्ठितञ्जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ॥२३॥

उप । श्वासय । पृथिवीम् । उत । द्याम् । पुरुत्रा । ते । मनुताम् । वि । स्थितम् । जगत् ॥
सः । दुन्दुभे । सजूः । इन्द्रेण । देवैः । दूरात् । दवीयः । अप । सेध । शत्रून् ॥२३॥

हे दुन्दुभे ! पृथिवीं भूमिम् उपश्वासय, उपश्वासः उपचित्या प्रतिध्वनिः, उपश्वासनं कुरु । उत अपि च द्याम् उपश्वासय । पुरुत्रा बहुषु लोकेषु विष्ठितं विविधं वर्तमानं जगत् ते मनुताम् । त्वाम् अवबुध्यताम्[3] । दुन्दुभिः प्रभूतं शब्दायते इति जानन्तु इत्यर्थः । हे दुन्दुभे ! सः तादृशस्त्वम् इन्द्रेण देवैः च सजूः सह प्रीयमाणः शत्रून् दूरात्, दवीयः दूरात् अपि दूरतरम्, अपसेध अपसारय ।

[—अ० ३१।२।१२]

इत्येकत्रिंशोऽध्याये द्वितीयोऽनुवाकः ।

---

१. वाजिन इति युक्तम् । २. यूयम् उ० म्यु० । ३. अनुवर्तताम् उ० म्यु० ।

[ तृतीयोऽनुवाकः २४—३६ ]

"यदक्रन्द" इत्याद्यास्त्रयोदश अश्वस्तुतिपरा मन्त्रा अश्वसोमीयेति विकल्पिता लिङ्गविनियोक्तव्या अभिधीयन्ते। तत्र प्रथमः—

यदक्रन्दः प्रथमञ्जायमान उद्यन्त्समुद्रादुत वा पुरीषात्।
श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यम्महि जातन्ते अर्वन् ॥२४॥

यत्। अक्रन्दः। प्रथमम्। जायमानः। उत्। यन्। समुद्रात्। उत्। वा। पुरीषात्॥
श्येनस्य। पक्षा। हरिणस्य। बाहू। उप। स्तुत्यम्। महि। जातम्। ते। अर्वन्॥२४॥

हे अर्वन्! यत् यस्मात् कारणात् जायमानः उत्पद्यमानः एव प्रथमम् अक्रन्दः क्रन्दितवान् असि, अहो अग्न्यादीनाम् अहं साधनम् इति महान्तं शब्दम् अकरोः। तस्मात् कारणात् ते तव जातं जन्म महि महत्। अत एव उपस्तुत्यम् उपेत्य स्तोतव्यम् आसीत्। जायमानत्वम् एव विशदी क्रियते, समुद्रात् उद्यन् उत्पन्नः समुद्रोपलक्षितात् उदकात् उत्पद्यमानः "अप्सुयोनिर्वा अश्वः" ( श०, का० १३। अ० २। ब्रा० २। क० १९ ) इति श्रुतेः। उत वा अथ वा पुरीषात् लौकिक दृष्टात् पुंस्त्वदृष्टिसम्पन्नात् महतः अश्वात् उत्पद्यमानः, जन्मनः उपस्तुत्यत्वे दृष्टान्तद्वयम् उच्यते। "श्येनस्य पक्षा, हरिणस्य बाहू" इति, इव शब्दोऽध्याहर्तव्यः। यथा श्येनस्य पक्षिणः पक्षा पक्षौ शीघ्रोत्पतनहेतुत्वात् सर्वैः उपस्तुत्यौ, यथा हरिणस्य मृगस्य बाहू शीघ्रगमनत्वात् उपस्तुत्यौ तद्वत् इत्यर्थः। [—अ० ३१।३।१]

अथ द्वितीयः—

यमेन दत्तन्त्रित एनमायुनगिन्द्र एणम्प्रथमो अध्यतिष्ठत्।
गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट ॥२५॥

यमेन। दत्तम्। त्रितः। एनम्। आ। अयुनक्। इन्द्रः। एनम्। प्रथमः। अधि। अतिष्ठत्॥
गन्धर्वः। अस्य। रशनाम्। अगृभ्णात्। सूरात्। अश्वम्। वसवः। निः। अतष्ट॥२५॥

अत्र यमः अग्निः, "अग्निर्वा यमः" ( श०, का० ७। अ० २। ब्रा० १। क० १० ) इति श्रुत्यन्तरात् त्रिषु स्थानेषु त्रायमाणो वायुः त्रितः। स च अश्वं यमेन अग्निना दत्तम्, आयुनक् रथे योजितवान्। तत्र इन्द्रः प्रथमः सर्वेषु देवेषु मध्ये प्रथमं प्रवृत्तः सन् एनम् अश्वम् अध्यतिष्ठत् अभिमानितवान्। गन्धर्वः कश्चित् गवां पालको वा आदित्यः स रशनाम् अगृभ्णात् स्वीकृतवान्। हे वसवः! यूयं सूरात् आदित्यात् एनम् अश्वं निरतष्ट निःशेषेण प्रकाशितवन्तः। यस्य अश्वस्य अग्निः अधिनेता, वायुः योजयिता, इन्द्रः अभिमन्ता, गन्धर्वः रज्जुग्रहीता, सूर्यप्रकाशेन वसवः प्रकाशयितारः, ईदृशः अयम् अश्व इति प्रशस्यते। [—अ० ३१।३।२]

अथ तृतीयः—

असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन।
असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥२६॥

पदच्छेदः स्पष्टः ॥२६॥

हे अर्वन् ! अश्व, त्वं यमोऽसि अग्निरसि, तथा त्रितः वायुरसि। पूर्वोक्तप्रकारेण अग्निवाय्वादित्यैः अनुगृहीतत्वात् तद्रूपस्त्वम्; तथा गुह्येन व्रतेन गोप्येन अश्वमेधाख्येन कर्मणा, सोमेन तत्रत्येन सोमेन, समया प्राप्तिकाले विपृक्तोऽसि। ईदृशस्य ते तव दिवि द्युलोके बन्धनानि बन्धनसाधनानि दामानि त्रीणि इत्येवम् अभिज्ञाः आहुः। दुर्दान्तस्य अश्वस्य पार्श्वद्वये च रज्जुद्वयं दूरतः एका इति यथा बन्धनानि त्रीणि भवन्ति तद्वत् ते त्रीण्याहुः। [—अ० ३१।३।३]

अथ चतुर्थः—

**त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तस्समुद्रे ।**
**उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमञ्जनित्रम् ॥२७॥**

**त्रीणि । ते । आहुः । दिवि । बन्धनानि । त्रीणि । अप्सु । त्रीणि । अन्तः । समुद्रे ॥**
**उत । इव । मे । वरुणः । छन्त्सि । अर्वन् । यत्र । ते । आहुः । परमम् । जनित्रम् ॥२७॥**

यथा द्युलोके तव उच्चैः श्रवोरूपस्य बन्धनत्रयम् अभिज्ञा आहुस्तथैव अप्सु समुद्रे बन्धनत्रयम्; यदा वाजपेये, "अप्स्वन्तरमृतम्" ( अ० १०।६। ) इति मन्त्रेण अश्वं अप्सु स्नापयन्ति तदापि पूर्वोक्तरीत्या बन्धनत्रयम् अपेक्षितम्। तथा समुद्रमध्ये स्थिताया वडवाया बन्धनत्रयम् इत्येवः अभिज्ञा आहुः। उत अपि च हे अर्वन् अश्व, ते तव, यत्र यस्मिन् प्रदेशे, पितृवीर्येण परमं जनित्रम् उत्तमं जन्म इत्येवम् अश्वलक्षणाभिज्ञा आहुः। तत् पितृवीर्यं च वरुणः त्रिभिर्बन्धनैः वरणीयो भूत्वा, मे मह्यं, छन्त्सि इव शंससीव कथयसीव। अयमर्थः—अस्य अश्वस्य पितृपक्षात्याज्यत्वात् मातरि स्वाम्बायां सत्यामपि प्रौढश्चेत् अश्वः दृश्यते तस्य पिता प्रौढ इति उत्प्रेक्षितुं शक्य इत्यर्थः।

[—अ० ३१।३।४]

अथ पञ्चमः—

**इमा ते वाजिन्नव मार्जनानीमा शफानाᳪ सनितुर्निधाना ।**
**अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः ॥२८॥**

**इमा । ते । वाजिन् । अव । मार्जनानि । इमा । शफानाम् । सनितुः । निधाना ॥**
**अत्र । ते । भद्रा । अपश्यम् । ऋतस्य । या । अभि । रक्षन्ति । गोपाः ॥२८॥**

हे वाजिन् ! अश्व, ते तव इमा एतानि दृश्यमानानि, अवमार्जनानि शरीरशोधनसाधनानि लोहमयानि यैः लोहकार्यैः प्रातःकालम् अश्वस्य कण्डूतिधूल्यपनयनाय शरीरं मृज्यते घर्षणेन शोध्यते, तानि च मार्जनानि, तथा शफानां खुराणां सनितुः दातुः पाषाणविद्धलोकमार्गे प्रक्षेप्तुः तव शफभेदनपरिहारार्थम् इमानि निधानानि, तानि लोहमयानि, आवरणरूपाणि। निध्रीयन्ते शफा एषु इति निधानानि। राजानो हि यथा महार्हाणाम् अश्वानां लोहमयैः साधनैः प्रतिदिनं कण्डूतिम् अपनयन्ति। शफेषु एव लोहपात्राणि कीलयन्ति। किं च ते तव भद्राः सुवर्णादिखचितत्वेन कल्याणरूपाः रशनाः खलीनभाजः भद्रकक्षादिरूपाः। अत्र अस्मिन्नेव देशे स्थापिता अहम् अपश्यम्। कीदृशस्य तव, ऋतस्य[1] यज्ञार्थस्य, कीदृश्यश्च ताः ? याः रशनाः गोपाः पृष्ठदेशव्यथादिपरिहारेण अश्वं गोपायन्ति अभिरक्षन्ति, उपर्यारूढं पुरुषमपि अधोनिपतनादिभ्यः पालयन्ति। [—अ० ३१।३।५]

---

१. सत्यभूतस्य उ० म्यु०।

अथ षष्ठः—

आत्मानन्ते मनसारादजानामवो दिवा पतयन्तम्पतङ्गम् ।
शिरो अपश्यम्पथिभिस्सुगेभिररेणुभिर्जेहमानम्पतत्रि ॥२९॥

आत्मानम् । ते । मनसा । आरात् । अजानाम् । अवः । दिवा । पतयन्तम् । पतङ्गम् ॥
शिरः । अपश्यम् । पथिभिः । सुगेभिः । अरेणुभिः । जेहमानम् । पतत्रि ॥२९॥

हे अश्व ! ते तव, आत्मानं स्वरूपम्, आरात् समीपे एव, मनसा चित्तेन, अजानां ज्ञातवान् अस्मि । कीदृशम् आत्मानम् ? अवः रक्षकं परसैन्यजयेन तथा दिवा आकाशेन पतयन्तम्, उत्पत्य उत्पत्य गमनात्, यथा आकाशगामी, तस्मात् पतङ्गं पक्षिसदृशं त्वदीयं शिरः, सुगेभिः गन्तुं शक्यैः, अरेणुभिः धूलिरहितैः, पथिभिः मार्गैः, जेहमानं पूर्वं पूर्वं[१] परित्यजत् । अत एव पतत्रि पक्षिसदृशम् । उन्नतदेशवर्तित्वात् प्रथमतः शिर एव दृश्यते । [—अ० ३१।३।६]

अथ सप्तमः—

अत्रा ते रूपमुत्तममपश्यञ्जिगीषमाणामिष आ पदे गोः ।
यदा ते मर्तो अनु भोगमानळादिद्ग्रसिष्ठ ओषधीरजीगः ॥३०॥

अत्र । ते । रूपम् । उत्तमम् । अपश्यम् । जिगीषमाणम् । इषः । आ । पदे । गोः ॥
यदा । ते । मर्तः । अनु । भोगम् । आनट् । आत् । इत् । ग्रसिष्ठः । ओषधीः । अजीगः ॥३०॥

हे अश्व ! ते तव, रूपम् अत्यन्तज्वलनरूपम्, उत्तमम् इतराश्वासाधारणम्, अत्र अस्मिन् अश्वमेधयज्ञे अहम् अपश्यम् । कीदृग्रूपम् ? गोः भूमेः, पदे स्थाने, इषः अन्नस्य चरणतृणादिरूपस्य प्राप्तये, जिगीषमाणं जेतुम् इच्छन्तम्, अवेत्य किं कुत्र इति तदाह, यदा यस्मिन् काले, ते तव, भोगं घृतमुद्गादिभक्षणरूपं मर्तः मनुष्यः, अन्वानट् अन्वापत्, आदित् अनन्तरमेव ग्रसिष्ठः अतिशयेन ग्रसितुकामस्त्वम् ओषधीः लताः तृणादिलक्षणाः, अजीगः अभक्षयः । अत्रेति सम्बन्धः ।
[—अ० ३१।३।७]

अथाष्टमः—

अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनुभगः कनीनाम् ।
अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यन्ते ॥३१॥

अनु । त्वा । रथः । अनु । मर्यः । अर्वन् । अनु । गावः । अनु । भगः । कनीनाम् ॥
अनु । व्रातासः । तव । सख्यम् । ईयुः । अनु । देवाः । ममिरे । वीर्यम् । ते ॥३१॥

हे अर्वन् ! अश्व, त्वा त्वाम् अनु रथः प्रवर्तते । बहिः हयाद् विना रथः गन्तुम् अशक्तः । तथा मर्यः मर्त्यः अश्ववारश्च त्वाम् अनुगतः । गावोऽपि त्वाम् अनु ईयुः । कनीनां कन्यकानाम्, भगः भाग्यम् असि इत्यर्थः । व्रातासोऽपि अन्ये अश्वसङ्घाः तेऽपि सख्यम् ईयुः । देवा अपि ते वीर्यम् अनुममिरे अनुमितवन्तः । [—अ० ३१।३।८]

---

[१] वेशम् उ० म्यु० ।

अथ नवमः—

हिर॑ण्यशृङ्गोऽयो॑ अस्य॒ पादा॒ मनो॑जवा॒ अव॑र॒ इन्द्र॑ आसीत् ।
दे॒वा इद॑स्य हवि॒रद्य॑माय॒न्यो अर्व॑न्तम्प्रथ॒मो अ॒ध्यति॑ष्ठत् ॥३२॥

हिरण्यशृङ्गः । अयः । अस्य । पादाः । मनोजवाः । अवरः । इन्द्रः । आसीत् ॥
देवाः । इत् । अस्य । हविः । अद्यम् । आ । आयन् । यः । अर्वन्तम् । प्रथमः । अधि । अतिष्ठत् ॥३२॥

अयम् अश्वः, हिरण्यशृङ्गः हिरण्मयः शृङ्गस्थानीयः मूर्धप्रदेशः यस्य सः तादृशः । अयः लोहवत् अत्यन्तदृढः, अस्य अश्वस्य पादाः, मनोजवाः मनोवृत्तिवेगाश्च । ईदृशेन उच्चैःश्रवसः अधिकेन अङ्गेन इन्द्रः अपि अवरः आसीत् । देवा इत् देवा एव ईदृशस्य अश्वस्य हवीरूपम्, अद्यम् अदनीयम्, आयन् प्राप्नुवन् । एतदेव हविः अत्तुं योग्यम् इति निश्चितवन्तः । प्रथमः जगताम् आदिभूतः प्रजापतिः, अर्वन्तम् एतम् अश्वम् अध्यतिष्ठत् स्वकीयत्वेन स्वीकृतवान् । सोऽपि एतदीयं हविः अद्यं निश्चितवान् इति शेषः । [—अ० ३१।३।९]

अथ दशमः—

ई॒र्मान्ता॑सः॒ सिलि॑कमध्यमासः॒ सꣳ शूर॑णासो दि॒व्यासो॒ अत्याः॑ ।
ह॒ꣳसा इ॑व श्रेणि॒शो य॑तन्ते॒ यदाक्षि॑षुर्दि॒व्यमज्म॒मश्वाः॑ ॥३३॥

ईर्मान्तासः । सिलिकमध्यमासः । सम् । शूरणासः । दिव्यासः । अत्याः ॥
हंसाः । इव । श्रेणिशः । यतन्ते । यदा । आक्षिषुः । दिव्यम् । अज्मम् । अश्वाः ॥३३॥

सर्वे अपि अश्वाः एवंविधाः कीदृशाः इत्युच्यते—ईर्मान्तासः, ईर्मौ प्रभूतौ उन्नतौ अन्तौ जघनभागौ येषां ते प्रभूतजघनभागाः, ते तथोक्ताः । सिलिकं संकुचितं निम्नं मध्यमं येषां ते, तादृशाः । यत्र मनुष्याः आरोहन्ति सः भागः निम्नः, तद्वन्तः इत्यर्थः । सम् सम्यक् शूरणासः शूराः दिव्यासः दिवि भवाः, अत्याः अतनाः, ईदृशाः अश्वाः श्रेणिशः, एकव्यापाराणां बहूनां समूहः श्रेणी इत्युच्यते । शीघ्रधावनाय सङ्घीभूय यतन्ते सम्यक् प्रयत्नं कुर्वन्ति । तत्र दृष्टान्तः, हंसाः इव, ते यथा श्रेणीभूता ईर्मान्ताः प्रागुक्तलक्षणाः अन्तरीक्षगमनाय यतन्ते तद्वत् । कदा ? यदा अश्वा दिव्यम् अज्मं गमनम्[1] आक्षिषुः व्याप्नुवन्ति, तदा । अयं मन्त्रः "ईर्मान्ताः समीरितान्ताः" ( निरु०, अ० ४ । खं० १३ । प० १४ ) इत्यादिना यास्केन व्याख्यातः । [—अ० ३१।३।१०]

अथैकादशः—

तव॒ शरी॑रम्पतयि॒ष्ण्व॑र्व॒न्तव॑ चि॒त्तँ वात॑ इव॒ ध्रजी॑मान् ।
तव॒ शृङ्गा॑णि॒ विष्ठि॑ता पुरु॒त्राऽर॑ण्येषु॒ जर्भु॑राणा चरन्ति ॥३४॥

तव । शरीरम् । पतयिष्णु । अर्वन् । तव । चित्तम् । वातः । इव । ध्रजीमान् ॥
तव । शृङ्गाणि । वि । स्थिता । पुरुत्रा । अरण्येषु । जर्भुराणा । चरन्ति ॥३४॥

१. गन्तव्यमार्गम् उ० म्यु० ।

हे अर्वन् ! तव शरीरम्, पतयिष्णु पतनशीलम्, व्याप्तमित्यर्थः । तथा तव चित्तं वात इव वायुरिव । स यथा ध्रजीमान् वेगवान्, तद्वत् चित्तम् । किं च तव शृङ्गाणि शृङ्गस्थानीयाः शिरसः निर्गताः केशाः, विष्ठिता विष्ठितानि विविधं स्थितानि, व्याप्तानीत्यर्थः । अत एव पुरुत्रा बहुप्रदेशेषु अरण्येषु सञ्चरविषयेषु, जर्भुराणा अत्यन्तं हरणवन्ति सन्ति, चरन्ति गच्छन्ति ।

[—अ० ३१।३।११]

अथ द्वादशः—

उप॒ प्रागा॑च्छ॒सनं॑ वा॒ज्यर्वा॑ देव॒द्रीचा॒ मन॑सा॒ दीध्या॑नः ।
अ॒जः पु॒रो नी॑यते॒ नाभि॑र॒स्यानु॑ प॒श्चात्क॒वयो॑ यन्ति रे॒भाः ॥३५॥

उप । प्र । अगात् । शसनम् । वाजी । अर्वा । देवद्रीचा । मनसा । दीध्यानः ॥
अजः । पुरः । नीयते । नाभिः । अस्य । अनु । पश्चात् । कवयः । यन्ति । रेभाः ॥३५॥

अयम् अर्वा अरणकुशलः वाजी, शसनं विशसनस्य स्थानम्, उप प्रागात् उपैति । किं कुर्वन् ? देवद्रीचा मनसा देवान् गच्छता, दीध्यानः कदा देवान् प्राप्नोमीति ध्यानं कुर्वन् । अस्य पुरः नाभिः बन्धनयुक्तः अजः, नीयते पुरतः प्राप्यते । अनु अनुसृत्य, पश्चात् अनन्तरं कवयः "अनूचानास्ते कवयः" ( ऐ० ब्रा० २।२ ) इति श्रुतेः रेभाः स्तोतारो यन्ति ।

[—अ० ३१।३।१२]

अथ त्रयोदशः—

उप॒ प्रागा॑त्पर॒मं यत्स॒धस्थ॒मर्वाँ॒२ अच्छा॑ पि॒तरं॑ मा॒तरं॑ च ।
अ॒द्या दे॒वाञ्जुष्ट॑तमो॒ हि ग॒म्या अथा शास्ते॑ दा॒शुषे॒ वार्या॑णि ॥३६॥

उप । प्र । अगात् । परमम् । यत् । सधस्थम् । अर्वान् । अच्छ । पितरम् । मातरम् । च ॥
अद्य । देवान् । जुष्टतमः । हि । गम्याः । अथ । आशास्ते । दाशुषे । वार्याणि ॥३६॥

अर्वान् अश्वः, उप प्रागात् उपागच्छत् । किं प्रति यत् परमं सधस्थम् उत्कृष्टसधस्थं सहवासस्थानं सहकृतिभिः निवासयोग्यं मित्राख्यं स्थानम् किमर्थम् ? पितरं मातरं च, अच्छ आभिमुख्येन प्राप्तुम्, हे अर्वन् ! अद्य अस्मिन् काले जुष्टतमः प्रीततमः स्वर्गं प्राप्नोमीति हर्षयुक्त इत्यर्थः । एवंभूतस्त्वं देवान् गम्याः हि गच्छ । 'हि' शब्दो यज्ञोपयुक्तस्य पशोः स्वर्गप्राप्तिप्रसिद्धयर्थः । अथ अनन्तरम्, दाशुषे हविर्दात्रे यजमानाय, वार्याणि वरणीयानि धनानि आशास्ते । 'अश्व' इति परोक्षनिर्देशः ।

[—अ० ३१।३।१३]

इत्येकत्रिंशेऽध्याये तृतीयोऽनुवाकः ।

[ चतुर्थोऽनुवाकः ३७–४४ ]

"समिद्धो अञ्जन्" इत्येकादश अश्वस्याप्रिय इत्युक्तम् । तत् पूर्वपक्षीकृत्य ब्राह्मणे—"समिद्धो अद्य" इत्याद्या एवाप्रियः कर्तव्याः इति सिद्धान्तितम् । तथा च ब्राह्मणे—"समिद्धो अञ्जन् कृदरम्मतीनामिति बार्हद्दुक्थीभिराप्रीणीयात्, बृहदुक्थो ह वै वामदेव्योऽश्वो वा सामुद्रिरश्वस्याप्रीर्ददर्श । ता एतास्ताभिरेवैनमेतदाप्रीणीम इति वदन्तो न तथा कुर्यात् जामदग्नीभिरेवाप्रीणीयात्,

प्रजापतिर्वै जमदग्निः सोऽश्वमेधः स्वयैवैनन्देवतया समर्द्धयति तस्माज्जामदग्नीभिरेवाप्रीणीयात्" (श०, का० १३ । अ० २ । ब्रा० २ । क० १४ ) इति । तत्र प्रथमा—

**समि॑द्धो अ॒द्य मनु॑षो दुरो॒णे दे॒वो दे॒वान्य॑जसि जातवेदः ।**
**आ च॒ वह॑ मित्रमहश्चिकि॒त्वान्त्वन्दू॒तः क॒विर॑सि॒ प्रचे॑ताः ॥३७॥**

**सम् । इद्धः । अद्य । मनुषः । दुरोणे । देवः । देवान् । यजसि । जातवेदः ॥**
**आ । च । वह । मित्रमहः । चिकित्वान् । त्वम् । दूतः । कविः । असि । प्रचेताः ॥३७॥**

हे जातवेदः ! जातप्रज्ञाग्ने देवः दीप्यमानः, त्वं मनुषः मानुषस्य यजमानस्य, दुरोणे गृहे अस्मिन् कर्मणि समिद्धः प्रज्वलितः सन् यजसि यज, हविषा पूजय । हे मित्रमहः सर्वहितकरप्रकाश, चिकित्वान् अभिज्ञस्त्वम्, आवह देवानाम् आह्वानं कुरु । त्वं दूतः देवानां दूतरूपः, कविः क्रान्तप्रज्ञः, अत एव प्रचेताः प्रकृष्टज्ञानश्च असि । [—अ० ३१।४।१]

द्वितीया—

**तनू॑नपात्प॒थ ऋ॒तस्य॒ याना॒न्मध्वा॑ सम॒ञ्जन्त्स्व॑दया सुजिह्व ।**
**मन्मा॑नि धी॒भिरु॒त य॒ज्ञमृ॒न्धन्दे॑व॒त्रा च॑ कृणुह्यध्व॒रं नः ॥३८॥**

**तनूनपात् । पथः । ऋतस्य । यानान् । मध्वा । सम् । अञ्जन् । स्वदय । सुजिह्व ॥**
**मन्मानि । धीभिः । उत । यज्ञम् । ऋन्धन् । देवत्रा । च । कृणुहि । अध्वरम् । नः ॥३८॥**

हे तनूनपान्नाम अग्ने ! हे सुजिह्व ! शोभनज्वाल, ऋतस्य यज्ञस्य, यानान् फलप्राप्तिहेतून्, पथः मार्गान् हविर्लक्षणान्, मध्वा मधुना रसेन, समञ्जन् सम्यक् कुर्वन्, स्वदय स्वादं कुरु । किं च मन्मानि मननीयानि अस्मदभिमतानि, धीभिः आत्मीयबुद्धिभिः, ऋन्धन् समृद्धानि कुर्वन्, उत अपि च, यज्ञम् ऋन्धन् समर्द्धयन्, नः अध्वरम् अस्मदीयं यज्ञम् अपि, देवत्रा कृणुहि च देवेषु कुरु। [—अ० ३१।४।२]

तृतीया—

**न॒रा॒शꣳस॑स्य महि॒मान॑मेषा॒मुप॑स्तोषाम यज॒तस्य॑ य॒ज्ञैः ।**
**ये सु॒क्रत॑वः॒ शुच॑यो धिय॒न्धाः स्वद॑न्ति दे॒वा उ॒भया॑नि ह॒व्या ॥३९॥**

**नराशंसस्य । महिमानम् । एषाम् । उप । स्तोषाम । यजतस्य । यज्ञैः ॥**
**ये । सुक्रतवः । शुचयः । धियन्धाः । स्वदन्ति । देवाः । उभयानि । हव्या ॥३९॥**

नराशंसस्य एतन्नामकस्य अग्नेः, महिमानं माहात्म्यम्, उपस्तोषाम उपस्तुमः । कीदृशस्य ? एषाम् ऋत्विग्यजमानानां सम्बन्धिनि यज्ञे यजतस्य पूजनीयस्य एवं नराशंसे स्तुते सति देवा उभयानि आज्यादिरसद्रव्याणि, हव्या हवींषि, स्वदन्ति आस्वादयन्ति । कीदृशाः ? ये सुक्रतवः शोभनकर्माणः शुचयः शुद्धाः धियन्धाः ज्ञानमाधारयितारः । अत्र विशिष्टशुद्धज्ञानानां नराशंसो द्वितीयः, प्रथमः तनूनपात् इतरेषामिति भावः । [—अ० ३१।४।३]

चतुर्थी—

**आ॒जुह्वा॑न॒ ईड्यो॒ वन्द्य॒श्चा या॑ह्यग्ने॒ वसु॑भिः स॒जोषाः॑ ।**
**त्वन्दे॒वाना॑मसि यह्व॒ होता॒ स ए॑नान्यक्षीषि॒तो यजी॑यान् ॥४०॥**

आ । जुह्वानः । ईड्यः । वन्द्यः । च । आ । याहि । अग्ने । वसुभिः । सजोषाः ॥
त्वम् । देवानाम् । असि । यह्व । होता । सः । एनान् । यक्षि । इषितः । यजीयान् ॥४०॥

हे अग्ने ! त्वम् आयाहि अस्मिन् कर्मणि आगच्छ । कीदृशः त्वम् ? आजुह्वानः देवानाम् आह्वाता, ईड्यः स्तुत्यः, वन्द्यश्च नमस्कार्योऽपि, वसुभिः देवैः सजोषाः समानप्रीतियुक्तः, हे यह्व ! महन्नाम एतत्, प्रभूत, त्वं देवानां होता आह्वाता असि । सः त्वम् एनान् देवान्, यक्षि यज । इषितः अस्माभिरपि[१] इषितः, यजीयान् अतिशयेन यष्टा । [—अ० ३१।४।४]

पञ्चमी—

प्राचीनम्बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्युं प्रथते वितरँवरीयो देवेभ्यो अदितये स्योनम् ॥४१॥

प्राचीनम् । बर्हिः । प्रदिशा । पृथिव्याः । वस्तोः । अस्याः । वृज्यते । अग्रे । अह्नाम् ॥
वि । उ । प्रथते । वितरम् । वरीयः । देवेभ्यः । अदितये । स्योनम् ॥४१॥

यदिदं प्राचीनं प्रागग्रेणास्तीर्णं बर्हिः अस्ति तदिदं प्रदिशा प्रकर्षेण उद्दिश्यमानेन मन्त्रेण, पृथिव्याः वेदिरूपायाः वस्तोः आच्छादनार्थम् अह्नाम् अग्रे प्रातःकाले, अस्याः प्राच्याः दिशः सकाशात्, वृज्यते आह्रियते । तच्चाहृतं बर्हिः, देवेभ्यः देवार्थम्, अदितये भूम्यर्थं वितरं अतिशयेन विविधम्, वरीयः अत्यन्तं श्रेष्ठः । स्योनं सुखं यथा भवति तथा व्युप्रथते विविधमेव प्रथते वेद्यां प्रस्तृतं भवति । [—अ० ३१।४।५]

षष्ठी—

व्यचस्वतीरुर्विया विश्रयन्ताम्पतिभ्यो न जनयश्शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥४२॥

व्यचस्वतीः । उर्विया । वि । श्रयन्ताम् । पतिभ्यः । न । जनयः । शुम्भमानाः ॥
देवीः । द्वारः । बृहतीः । विश्वम् । इन्वाः । देवेभ्यः । भवत । सु । प्रायणाः ॥४२॥

याः द्वारदेवताः सन्ति ताः अस्मिन् कर्मणि, विश्रयन्तां विशेषेण आश्रिता भवन्तु । कीदृश्यः ? व्यचस्वतीः व्याप्तिमत्यः अत एव उर्विया अत्यन्तं विततया शुम्भमानाः शोभमानाः । अत्र दृष्टान्तः, पतिभ्यो न जनयः, यथा जायाः पत्यर्थं शोभन्ते तद्वत् । 'देवीः' इत्यादीनि चत्वारि सम्बुद्ध्यन्तानि । बृहतीः गुणैः महत्यः, विश्वमिन्वाः विश्वप्रीणयित्र्यः द्वारः देवीः द्वाराभिमानिन्यः देव्यः, देवेभ्यः देवार्थं[२] सुष्ठु प्रकृष्टगमनाः भवत । [—अ० ३१।४।६]

सप्तमी—

आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतान्नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधिश्रियंं शुक्रपिशन्दधाने ॥४३॥

आ । सु । स्वयन्ती । यजते । उप । अके । उषासानक्ता । सदताम् । नि । योनौ ॥
दिव्ये । योषणे । बृहती । सुरुक्मे । अधि । श्रियम् । शुक्रपिशम् । दधाने ॥४३॥

---

१. ध्येषित इति युक्तम् । २. सुप्रायणाः इत्यादीति भवितुं युक्तम् ।

उषासानक्ता अहोरात्रदेवते योनौ अस्मिन् यज्ञस्थाने निषीदताम्। कीदृश्यौ ? सुष्वयन्ती सुष्ठु स्वयन्त्यौ[1] यजते यजनीये, उपाके जनान् रक्षितुम् उपक्रान्ते दिव्ये दिवि भवे योषणे योषितौ इव प्रीणयन्त्यौ, बृहती गुणैर्महत्यौ, सुरुक्मे सुष्ठु दीप्ते, शुक्रपिशं निर्मलरूपां श्रियं अधि दधाने अधिकं धारयन्त्यौ। [—अ० ३१।४।७]

अष्टमी—

**दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञम्मनुषो यजध्यै ।**
**प्रचोदयन्ता विदथेषु कारू प्राचीनञ्ज्योतिः प्रदिशा दिशन्ता ॥४४॥**

पदच्छेदः स्पष्टः ॥४४॥

दैव्या देवसम्बन्धिनौ होतारा होतृनामकौ देवौ, अत्रासीदताम् इति शेषः। कीदृशौ प्रथमा मनुष्यहोतुः पूर्वभाविनौ, सुवाचा शोभनस्तोत्रौ मनुषः मनुष्यस्य यजमानस्य, यजध्यै यष्टुं यज्ञं मिमाना उत्पादयन्तौ, प्रचोदयन्ता प्रकर्षेण प्रेरयन्तौ विदथेषु यज्ञेषु कारुभिः ऋत्विजः इति शेषः, कारू स्वयं च कर्तारौ प्राचीनं ज्योतिः प्राच्यां दिशि प्रवीणम् आहवनीयाख्यम् अग्निं प्रदिशा मार्गेण, दिशन्ता दिशन्तौ निर्वहन्तौ। [—अ० ३१।४।८]

नवमी—

**आ नो यज्ञम्भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती ।**
**तिस्रो देवीर्बर्हिरेदᳪ स्योनᳪ सरस्वती स्वपसस्सदन्तु ॥४५॥**

आ। नः। यज्ञम्। भारती। तूयम्। एतु। इडा। मनुष्वत्। इह। चेतयन्ती॥
तिस्रः। देवीः। बर्हिः। आ। इदम्। स्योनम्। सरस्वती। सु। अपसः। सदन्तु ॥४५॥

भारती देवी, नः अस्मदीयं यज्ञं[2] क्षिप्रम्.[3]एतु आगच्छतु। इह अस्मिन् कर्मणि मनुष्वत् चेतयन्ती, यथा मनुष्यो मया एतदपि कर्तव्यमिति जानाति तद्वत् जानाना। इडाख्या देवी आगच्छतु। तथा सरस्वती च आगच्छतु। एवमेतास्तिस्रो देव्यः, स्वपसः शोभनकर्माणः, स्योनं सुखकरम् इदं बर्हिः, इमं यज्ञम् आसदन्तु आसीदन्तु प्राप्नुवन्तु। [—अ० ३१।४।९]

दशमी—

**य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि विश्वा ।**
**तमद्य होतरिषितो यजीयान्देवन्त्वष्टारमिह यक्षि विद्वान् ॥४६॥**

यः। इमे। द्यावापृथिवी। जनित्री। रूपैः। अपिंशद्। भुवनानि। विश्वा॥
तम्। अद्य। होतः। इषितः। यजीयान्। देवम्। त्वष्टारम्। इह। यक्षि। विद्वान् ॥४६॥

यः त्वष्टा देवः, जनित्री (देव) जनयित्र्यौ इमे द्यावापृथिवी, रूपैः देवतिर्यङ्मनुष्याद्याकारैः, अपिंशत् रूपवत्यौ अकरोत्। तथा विश्वा सर्वाणि भुवनानि भूतजातानि, अपिंशत् रूपयुक्तानि

१. गच्छन्त्यौ० उ० म्यु०। २. तुयम् इत्यादि युक्तम्। ३. आ इत्यादि युक्तम्।

अकरोत्। हे होतः! यजीयान् यष्टृतमः, त्वं विद्वान् अभिज्ञः सन् इषितः अस्माभिः प्रार्थितः। अद्य अस्मिन् दिने, इह अस्मिन् कर्मणि, तं त्वष्टारं देवम् इह यक्षि यज। [ —अ० ३१।४।१० ]

एकादशी—

**उपावसृज त्मन्या समञ्जन्देवानां पाथ ऋतुथा हवींषि।**
**वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥४७॥**

उप। अव। सृज। त्मन्या। सम्। अञ्जन्। देवानाम्। पाथः। ऋतुथा। हवींषि॥
वनस्पतिः। शमिता। देवः। अग्निः। स्वदन्तु। हव्यम्। मधुना। घृतेन ॥४७॥

वनस्पतिः देवः, त्मन्या आत्मना एव परनिरपेक्षश्चैव, ऋतुथा तत्तदृतौ, देवानां पाथः पशुलक्षणम् अन्नम्, अन्यानि च हवींषि समञ्जन् प्रकाशयन्, उपावसृज देवेभ्यः प्रयच्छतु। किं च योऽयं वनस्पतिः यूपदेवः[1] यष्टृदेवः अग्नयोऽपि अग्निदेवः एते सर्वे, मधुना मधुरेण घृतेन, हव्यं स्वदन्तु स्वादूकुर्वन्तु। [ —अ० ३१।४।११ ]

द्वादशी—

**सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः।**
**अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतꣳ हविरदन्तु देवाः ॥४८॥**

सद्यः। जातः। वि। अमिमीत। यज्ञम्। अग्निः। देवानाम्। अभवत्। पुरोगाः॥
अस्य। होतुः। प्र। दिशि। ऋतस्य। वाचि। स्वाहाकृतम्। हविः। अदन्तु। देवाः॥४८॥

सद्यो जातः जातमात्र एव, अयम् अग्निः, यज्ञं व्यमिमीत विशेषेण आसादयामास। अत एव अयम् अग्निः देवानां मध्ये, पुरोगाः पुरोगामी मुख्यः अभवत्। प्रदिशि प्रकृष्टायां पूर्वस्यां दिशि ऋतस्य यज्ञस्य निष्पादकस्य आहवनीयाख्यस्य होतुः अग्नेः, वाचि वागुपलक्षिते आस्ये, स्वाहाकृतं स्वाहाकारेण प्रक्षिप्तं हविः सर्वे देवाः, अदन्तु भक्षयन्तु। [—अ० ३१।४।१२]

इत्येकत्रिंशेऽध्याये चतुर्थोऽनुवाकः।

## [ पञ्चमोऽनुवाकः ४९–५७ ]

चतुर्थे आप्रिय उक्ताः। अथ पञ्चमे अश्वमेधाङ्गभूता दशहविष्केष्टिदेवता एकादशिन्यः पशुदेवता ह्यभिधीयन्ते। तत्र हविष्केष्टौ प्रथमं हविराह—

**अग्नये गायत्राय त्रिवृते राथन्तरायाष्टाकपालः ॥४९॥**

पदच्छेदः स्पष्टः ॥४९॥

अग्नये अग्निदेवतायै, गायत्राय गायत्रीच्छन्दोऽभिमानिदेवतायै, त्रिवृत् स्तोमसम्बन्धि, तदात्मकाय राथन्तराय रथन्तरसामात्मकाय, अष्टाकपालः, अष्टसु कपालेषु संस्कृतः पुरोडाशः अष्टाकपालः, स च कर्तव्य इति विधिः। अग्नेः गायत्र्यादिसम्बन्धः 'प्रजापतिरकामयत प्रजायेय (इति सुगमः) त्रिवृतं निरमिमीत, तामग्निदेवता व्यसृजत, गायत्रं छन्दो रथन्तरं साम" इत्यादिश्रुत्या द्रष्टव्यः। [—अ० ३१।५।१]

[1]. शमिता इत्यादि युक्तम्।

अथ द्वितीयं हविराह—

**इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हतायैकादशकपालः ॥५०॥**

**पदच्छेदः स्पष्टः ॥५०॥**

पूर्ववद् योज्यम् "उरस्याभ्यां बाहुभ्यां पञ्चदश निरमिमीत इन्द्रो देवता" इत्यादिश्रुतिः। इन्द्रस्य त्रिष्टुभादिसम्बन्धः द्रष्टव्यः। [—अ० ३१।५।२]

अथ तृतीयं हविराह—

**विश्वेभ्यो देवेभ्यो जागतेभ्यस्सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालः ॥५१॥**

**पदच्छेदः स्पष्टः ॥५१॥**

विश्वेभ्यो देवेभ्यः द्वादशकपालः कर्तव्यः। ते विश्वेदेवाः विशिष्यन्ते, जागतेभ्यः जगतीच्छन्दः सम्बन्धेभ्यः, सप्तदशेभ्यः सप्तदशस्तोमात्मकेभ्यः, वैरूपेभ्यः विरूपसात्मकेभ्यः।

[—अ० ३१।५।३]

अथ चतुर्थं हविर्विधत्ते—

**मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्याँवैराजाभ्याम्पयस्या ॥५२॥**

**पदच्छेदः स्पष्टः ॥५२॥**

मित्रावरुणौ अहोरात्राभिमानिदेवौ, तौ च, अनुष्टुप्छन्दः-एकविंश-स्तोम-वैराजसाम-सम्बन्धिनौ, आभ्याम्, पयस्या आमिक्षासदृशं द्रव्यम्। "आमिक्षावत्यस्यां करोति" इत्यापस्तम्बेन विधानात्। [—अ० ३१।५।४]

अथ पञ्चमं हविर्विधत्ते—

**बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय चरुः ॥५३॥**

**पदच्छेदः स्पष्टः ॥५३॥**

बृहस्पतिः मात्राभिमानी देवः। स च पङ्क्त्याद्यात्मकः तस्मै चरुः कर्तव्यः।

[—अ० ३१।५।५]

अथ षष्ठहविराह—

**सवित्र औष्णिहाय त्रयस्त्रिꣳशाय रैवताय द्वादशकपालः ॥५४॥**

**पदच्छेदः स्पष्टः ॥५४॥**

सविता प्राणिनामनुज्ञाकर्ता च कर्मसु, तस्मै उष्णिक्छन्दस्त्रयस्त्रिंशस्तोमरैवतसामात्मकाय द्वादशकपालः कर्तव्यः। अग्न्यादिषु देवेषु ये त्रिवृदादयः गुणास्तेषु त्रिवृददनात् त्रिवृत् स्तोमः कवलात्मकः। इतरे पञ्चदशाद्याः स्तोमाः पञ्चदशम्यः। "हिं करोति" इत्यादिरूपे वैषम्यम्। पञ्चदशाद्यावृत्तसाम्याः स्तोमाः। पञ्चदशाद्याः रथन्तराद्याः। रथन्तरादयः षट्पृष्ठानि।

[—अ० ३१।५।६]

अथावशिष्टानि चत्वारि हवींषि विधत्ते—

प्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्या अष्टाकपालः ॥५५॥

प्राजापत्यः । चरुः । अदित्यै । विष्णुपत्न्यै । चरुः । अग्नये । वैश्वानराय । द्वादशकपालः । अनुमत्यै । अष्टाकपालः ॥५५॥

प्राजापत्यः प्रजापतिदेवताकश्चरुः कर्तव्यः । अदितिः अदीना देवमाता भूमिः, सा विष्णोः पत्नी, तस्यै चरुः कर्तव्यः । विश्वेषां नराणां हितः अग्निः वैश्वानरः, तस्मै द्वादशकपालः कर्तव्यः । चतुर्दशीयुक्ता पूर्णिमा अनुमतिः, तदभिमानिदेव्यै अष्टाकपालः कर्तव्यः । शिष्टं स्पष्टम् ।

[—अ० ३१।५।७]

अथाश्वमेधादिसाधारणानेकादशपशून् आह—

आग्नेयः कृष्णग्रीवस्सारस्वती मेषी बभ्रुस्सौम्यः पौष्णश्श्यामश्शितिपृष्ठो बार्हस्पत्यश्शिल्पो वैश्वदेवः ।
ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नस्संश्हितोऽधोरामस्सावित्रो वारुणः कृष्ण एकशितिपात्पेत्वः ॥५६॥

पदच्छेदः स्पष्टः ॥५६॥

कृष्णग्रीवो नीलवर्णकण्ठः अजः, आग्नेयः अग्निदेवत्यः, सारस्वती सरस्वतीदेवताका मेषी शृङ्गरहितस्त्रीपशुः, बभ्रुः कपिलवर्णः अजः, सौम्यः[1] कर्तव्यः । पौष्णः पूषदेवत्यः श्यामः सर्वश्यामः अजः, शितिपृष्ठः शुक्लवर्णपृष्ठदेशः अजः, बार्हस्पत्यः बृहस्पतिदेवत्यः, शिल्पः विचित्रवर्णः अजः, वैश्वदेवः विश्वदेवदेवत्यः, अरुणः अरुणवर्णः अजः, ऐन्द्रः इन्द्रदेवत्यः, कल्माषः नानावर्णः, संहितः श्लिष्टाङ्गः अजः, ऐन्द्राग्नः, अधोरामः, अधोभागे श्वैत्येन रमणीयः अजः, सावित्रः, कृष्णः अत्यन्तसर्वाङ्गकृष्णः, स एव एकशितिपात् एकश्वेतवर्णपादोपेतः, पेत्वः पीवा, स्थूलोऽजः, पीतवर्णो वा । इत्थमश्वमेधादिसाधारणा एकादशिनः पशवोऽभिहिताः । [—अ० ३१।५।८]

अथाश्वमेधं प्रति नियतान् एकादशिन आह—

अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ ।
मारुतः कल्माष आग्नेयः कृष्णोऽजस्सारस्वती मेषी वारुणः पेत्वः ॥५७॥

अग्नये । अनीकवते । रोहिताञ्जिः । अनड्वान् । अधोरामौ । सावित्रौ । पौष्णौ । रजतनाभी । वैश्वदेवौ । पिशङ्गौ । तूपरौ ॥
मारुतः । कल्माषः । आग्नेयः । कृष्णः । अजः । सारस्वती । मेषी । वारुणः । पेत्वः ॥५७॥

---

१. सोमदेवत्य इति शेषः ।

अनीकवते शुक्रज्योतिश्चेत्यादि-अग्निसेना, तद्वते अग्नये, रोहिताञ्जिः रोहितवर्णाञ्जनः, रक्तवर्णव्यञ्जितो वा, अनड्वान् स्पष्टः। अधोरामौ अधःशुक्लवर्णौ, सावित्रौ सवितृदेवत्यौ, पौष्णौ पूषदेवताकौ, रजतनाभी रजताकारशुभ्रवर्णनाभिप्रदेशौ पशू, वैश्वदेवौ विश्वदेवदेवत्यौ, पिशङ्गवर्णौ कर्तव्यौ। तौ च तूपरौ शृङ्गरहितौ,[१] अजे इति केचित्, अजौ इति अपरे। कल्माषः पुराणवंश-समानवर्णः पशुः मारुतः, कृष्णः अजः आग्नेयः, कृष्णवर्णः अजः अग्निदेवत्यः, सारस्वती सरस्वती-देवताका मेषी स्त्रीपशुः, पेत्वः पीतवर्णः पशुः, वारुणः वरुणदेवत्यः। स्पष्टमन्यत्।

[—अ० ३१।५।६]

इत्येकत्रिंशेऽध्याये पञ्चमोऽनुवाकः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्तक-श्रीवीरबुक्कणभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये एकत्रिंशोऽध्यायः।



१. हीनौ, उ० म्यु०।

# अथ द्वात्रिंशोऽध्यायः

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम्॥

[ प्रथमोऽनुवाकः १–१७ ]

एकत्रिंशेऽध्याये आश्वमेधिकमन्त्रा उक्ताः। अथ द्वात्रिंशे सर्वमेधाङ्गभूता पुरोऋचः चतुरनुवाकश्च ततो द्वाभ्याम् अनुवाकाभ्याम् अनारभ्याधीता पुरोऋचश्च अभिधीयन्ते। सर्वमेधो दशरात्रः। तत्र सर्वकामो राजाधिकारी, तस्य अग्निष्टुत् अग्निष्टोममहः, इन्द्रस्तुदुक्थ्यो द्वितीयः, सूर्यस्तुदुक्थ्यस्तृतीयः, वैश्वदेवश्चतुर्थः, आश्वमेधिकं मध्यमं पञ्चममहः, पौरुषमेधिकं मध्यमं षष्ठमहः, अप्तोर्यामः सप्तमः, त्रिणवम् अष्टममहः, विश्वजित्, सर्वपृष्ठः, अतिरात्रः, दशम इत्येवं दशरात्रः। अत्र सूत्रमपि—"सर्वमेधः सर्वकामस्य[1] दशरात्रोऽग्निरुत्तमोऽग्निष्टुत् त्रय उक्थ्याः इन्द्रस्तुत्, सूर्यस्तुत्, वैश्वदेवस्तुत्" ( कात्या०, अ० २१।१९।२२ ) इत्यादिकम्। अत्र ब्राह्मणे—"ब्रह्म वै स्वयम्भु तपोऽतप्यत, तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनि" इत्याद्युक्त्वा पुनः "स वा एष सर्वमेधो दशरात्रो यज्ञक्रतुर्भवति" इत्युक्त्वा एवं श्रूयते—"तस्याग्निष्टुदग्निष्टोमः प्रथममहर्भवत्यग्निर्वा अग्निष्टुत् अग्निष्टोमः अग्निमुखा उ वै सर्वे देवाः सर्वेषां देवानामाप्त्यै तस्य आग्नेया ग्रहा भवन्ति, आग्नेय्यः पुरोऋचः सर्वमाग्नेयमसदिति" (श०, का० १३। अ० ७। ब्रा० १। क० १-३) इति, तस्यैतस्यात्रग्रहग्रहणाङ्गभूताः पुरोऋचः सप्तदश अपि आग्नेय्यः ताः प्रथमानुवाके अभिधीयन्ते। तत्र ऐन्द्रवायवग्रहस्य पुरोऋचमाह—

**अ॒स्याज॑रासो द॒माम॒रित्रा॑ अ॒र्चद्धू॑मासो अ॒ग्नयः॑ पाव॒काः।**
**श्वि॒ती॒चयः॑ श्वा॒त्रासो॑ भु॒र॒ण्यवो॑ वन॒र्षदो॑ वा॒यवो॒ न सोमाः॑॥१॥**

अस्य। अजरासः। दमाम्। अरित्राः। अर्चद्धूमासः। अग्नयः। पावकाः।
श्वितीचयः। श्वात्रासः। भुरण्यवः। वनर्षदः। वायवः। न। सोमाः॥१॥

अस्य यजमानस्य दमां व्यत्ययः दमा इत्यर्थः यज्ञगृहा एवंगुणकाः सन्तु इति प्रार्थ्यते। अजरासः विनाशरहिताः, अरित्राः अर्तेः इत्रप्रत्ययः, तारणशीलाः गमनशीलाः ऋत्विग्यजमानाः गमनवन्त इत्यर्थः। अर्चद्धूमासः अर्चनीयधूमाः, अग्नयः अग्निमन्तः पावकाः शोधकाः, श्वितिः श्वैत्यं प्रकाशम् अञ्चति गच्छतीति श्वितीचयः, प्रकाशयुक्ता इत्यर्थः। "श्वात्रमिति क्षिप्रनामाशु अतनं भवति" ( नि०, अ० ५। ख० ३।१४ ) इति निरुक्तम्। क्षिप्रं प्रकाशमानाः। भुरण्यवः यज्ञभरणकुशलाः, वनर्षदः, वनैः उदकैः प्रोक्षण्यादिभिर्गम्यमानाः, सदेः कर्मणि क्विप्। वायवो नेति, वायवः अग्निप्रज्वलनार्थिनः, जागतवायुयुक्ताः, सोमाः सोमवन्तः। [—अ० ३२।१।१]

१. ग्रह उ० म्यु०।

"हरयो धूमकेतव" इति ऐन्द्रवायवस्य पुरोऋक्—

हर॑यो धू॒मके॑तवो॒ वात॑जूता॒ उप॒ द्यवि॑।
यत॑न्ते॒ पृथ॑ग॒ग्नय॑ः ॥२॥

पदच्छेदः स्पष्टः ॥२॥

अग्नयः आहवनीयाद्याः पृथग् भिन्नेषु यतन्ते। हविःस्वीकारे इतस्ततः प्रज्वलन्रूपं प्रयत्नं कुर्वन्तीति। उपद्यवि, उपेति अनुवादः, द्युलोके अन्तरिक्षे इत्यर्थः। कीदृशाः अग्नयः? हरयः तमसो हर्तारः, धूमकेतवः धूमध्वजाः, वातजूताः वातेन प्रेरिताः। [—अ० ३२।१।५]

"यजा न" इति मैत्रावरुणपयस्यापुरोऋक्—

यजा॑ नो मि॒त्रावरु॑णा॒ यजा॑ दे॒वाँ२ ऋ॒तम्बृ॒हत्।
अग्ने॒ यक्षि॒ स्वन्दम॑म् ॥३॥

यज। नः। मित्रावरुणा। यज। देवान्। ऋतम्। बृहत् ॥
अग्ने। यक्षि। स्वम्। दमम् ॥३॥

हे अग्ने! नः अस्माकम्, मित्रावरुणा मित्रावरुणौ, यज यागं कुरु। ततः परं देवान् अपि यज। त्वं च बृहत् ऋतं सत्यमिव, अथवा बृहत् ऋतं प्रौढं यज्ञमपि यज। किं च हे अग्ने! त्वं स्वं स्वकीयं दमं यागगृहम् अपि, यक्षि यजसि, तेजसा प्रकाशसे इत्यर्थः। [—अ० ३२।१।३]

"युक्ष्वा हि देव" इति आश्विनस्य पुरोऋक्—

यु॒क्ष्वा हि दे॑व॒हूत॑माँ२ अश्वाँ॑ अग्ने र॒थीरि॑व।
नि होता॑ पू॒र्व्यस्स॑दः ॥४॥

युक्ष्व। हि। देवहूतमान्। अश्वान्। अग्ने। रथीः। इव ॥
नि। होता। पूर्व्यः। सदः ॥४॥

अयं मन्त्रश्चतुर्दशेऽध्याये चतुर्थेऽनुवाके व्याख्यातः। [—अ० ३२।१।४]

"द्वे विरूपे" इति शुक्रग्रहस्य पुरोऋक्—

द्वे विरू॑पे चरत॒स्स्वर्थे॒ अ॒न्यान्या॑ व॒त्समुप॑धापयेते।
हरि॑र॒न्यस्या॒म्भव॑ति स्व॒धावा॑ञ्छु॒क्रो अ॒न्यस्या॑न्ददृशे सु॒वर्चा॑ः ॥५॥

द्वे। विरूपे। चरतः। सु। अर्थे। अन्या। अन्या। वत्सम्। उप। धापयेते ॥
हरिः। अन्यस्याम्। भवति। स्वधावान्। शुक्रः। अन्यस्याम्। ददृशे। सुवर्चाः ॥५॥

रात्रिः अहर्देवता च द्वे विरूपे परस्परं विपरीतरूपे, श्यामा रात्रिः, शुक्लमहः, ते च स्वर्थे स्वस्वपुत्ररक्षणार्थे यजमानाग्निहोत्रयागसम्पत्त्यर्थं वा चरतः ते च अन्यान्या, परस्परं व्यतिहारेण वत्सं पुत्रम् उपधापयेते स्तन्यपानं कारयतः सुतौ। रात्रेरपत्यम् आदित्यः, अह्नः अपत्यम् अग्निः, एवं रात्रिः वत्सम् अहो वत्सम् अग्निं धापयते। ततश्च अहः रात्रिवत्सम् आदित्यम्। तथा च रात्रेः

अह्नश्च क्रमेणादित्याग्न्योः वत्सत्वम् अहोरात्रे प्रस्तुत्य अन्यत्र आम्नायते । "तयोरेतौ वत्सावग्निश्चादित्यश्च रात्रेर्वत्सः श्वेत आदित्यः अह्नोऽग्निस्ताम्रो अरुण" ( तै० आ० १।१० ) इति । कथं व्यतिहारेण वत्सयोः उपधापनमिति । तत्राह हरिः तमोहर्ता, अग्निः अन्यस्यां रात्रौ स्वधावान् हविर्लक्षणवान् भवति । अन्यस्याम् अहनि शुक्रः निर्मलः सुवर्चाः सुरूपी आदित्यः ददृशे, हविः स्वीकुर्वन् दृश्यते । एतदग्निहोत्राभिप्रायेणोक्तम् । [—अ० ३२।१।५]

"अयमिह" इति मन्थनग्रहस्य पुरोऋक्—

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रँविभ्वँविशे विशे ॥६॥

अयम् । इह । प्रथमः । धायि । धातृभिः । होता । यजिष्ठः । अध्वरेषु । ईड्यः ॥
यम् । अप्नवानः । भृगवः । वि । रुरुचुः । वनेषु । चित्रम् । विभ्वम् । विशे । विशे ॥६॥

व्याख्यातः पूर्वम् ( अ० ३।२१ )। [—अ० ३२।१।६]

"त्रीणि शता" इत्येषा वैश्वदेवस्य पुरोऋक्—

त्रीणि शता त्री सहस्राण्यग्निन्त्रिꣳशच्च देवा नव चाऽसपर्यन् ।
औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारन्न्यसादयन्त ॥७॥

त्रीणि । शता । त्री । सहस्राणि । अग्निम् । त्रिंशत् । च । देवाः । नव । च । असपर्यन् ॥
औक्षन् । घृतैः । अस्तृणन् । बर्हिः । अस्मै । आत् । इत् । होतारम् । नि । असादयन्त ॥७॥

त्रीणि शता त्रिशतसंख्याकाः, त्रीणि सहस्राणि त्रिसहस्रसंख्याकाश्च, त्रिंशच्च पुनः त्रिंशत्संख्याकाश्च, नव च नवसंख्याकाश्च एवं मिलित्वा एकोनचत्वारिंशदुत्तरत्रिशताधिकत्रिसहस्रदेवता अग्निम् अग्रणीकृत्य त्रिगुणविशिष्टं महानुभावम् असपर्यन् अपूजयन्, यागेन पूजितवन्तः । कथम् ? औक्षन् घृताहुतिभिः सेकम् अकुर्वन् । अस्मा अस्मै, अग्नये अग्न्यर्थम्, बर्हिः अस्तृणन् स्तरणमकल्पयन्, आदित् अनन्तरमेव नितरां होतारं न्यसादयन्त अवसन् अभवन् । यथैनं राजानं राज्येऽभिषिच्य सिंहासने कल्पयित्वा तत्र स्नपयित्वा त्वं राजेति कृत्वा सेवन्ते तद्वत् अग्निमभिषिच्य आस्तीर्य होतृत्वे स्थापितवन्त इत्यर्थः[१] । [—अ० ३२।१।७]

"मूर्द्धानम्" इति ध्रुवग्रहस्य पुरोऋक्—

मूर्धानन्दिवो अरतिम्पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविꣳ सम्राजमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवाः ॥८॥

मूर्धानम् । दिवः । अरतिम् । पृथिव्याः । वैश्वानरम् । ऋत । आ । जातम् । अग्निम् ॥
कविम् । सम् । राजम् । अतिथिम् । जनानाम् । आसन् । आ । पात्रम् । जनयन्त । देवाः ॥८॥

व्याख्यातपूर्वः ( अ० ७।२६ )। [—अ० ३२।१।८]

---

१. भावः उ० म्यु० ।

"अग्निर्वृत्राणि" इति ऐन्द्राग्नस्य पुरोऋक्—

अ॒ग्निर्वृ॒त्राणि॑ जङ्घनद्द्रविण॒स्युर्वि॑प॒न्यया॑ ।
समि॑द्धश्शु॒क्र आहु॑तः ॥९॥

अग्निः । वृत्राणि । जङ्घनत् । द्रविणस्युः । वि । पन्यया ॥
सम् । इद्धः । शुक्रः । आ । हुतः ॥९॥

अयमग्निः, वृत्राणि यजमानस्य अन्तरजानि पापानि, जङ्घनत् अत्यन्तं हन्ति । किं कुर्वन् ? विपन्यया पूजया स्तुत्या व्यायुनक्त । द्रविणस्युः हविर्लक्षणं धनमिच्छन् समिद्धः सम्यक् दीप्तः शुक्रः निर्मलः आहुतः, आ समन्तात् हुतः । एवंभूतः सन् वृत्राणि जङ्घनत् । [—अ० ३२।१।९]

"विश्वेभिः सोम्यम्" इति वैश्वदेवस्य पुरोऋक्—

विश्वे॑भिस्सौ॒म्यम्मध्वग्न॒ इन्द्रे॑ण वा॒युना॑ ।
पिबा॑ मि॒त्रस्य॒ धाम॑भिः ॥१०॥

विश्वेभिः । सोम्यम् । मधु । अग्ने । इन्द्रेण । वायुना ॥
पिब । मित्रस्य । धामभिः ॥१०॥

हे अग्ने ! विश्वेभिः सर्वैः देवैः सह, सोम्यं मधु पिब । इन्द्रेण वायुना मित्रस्य आदित्यस्य धामभिश्च । मित्रार्यमवरुणा मित्रस्य धामानि । तैः सह पिब । [—अ० ३२।१।१०]

"आ यदिषे" इति "अग्ने शर्धं" इति द्वे ऋचौ । तत्र प्रथमा—

आ यदि॒षे नृ॒पति॒न्तेज॒ आन॒ट् शुचि॒ रेतो॒ निषि॑क्त॒न्द्यौर॒भीके॑ ।
अ॒ग्निश्शर्ध॑मनव॒द्यँय्युवा॑नꣳ स्वा॒ध्यं॑ञ्जनयत्सू॒दयं॑च्च ॥११॥

आ । यत् । इषे । नृपतिम् । तेजः । आ । आनट् । शुचि । रेतः । नि । सिक्तम् । द्यौः । अभीके ॥
अग्निम् । शर्धम् । अनवद्यम् । युवानम् । सु । आ । ध्यम् । जनयत् । सूदयत् । च ॥११॥

यत् तेजः आज्यम्—"तेजो वा आज्यम्" ( श०, का० १३ । अ० २ । ब्रा० १ । क० २ ) इति श्रुतेः । शुचि मन्त्रसंयोगाद् अत्यन्तम् शुद्धम्, रेत इति उदकनाम, उदकद्वारेण परिणामाद् रेत इत्युच्यते । अथवा रेतो जगदुत्पत्तिकारणम्, द्यौरभीके द्युलोकस्य अन्तिके अन्तरीक्षे इत्यर्थः । तत्र निषिक्तं यजमानेन आहुतम्, किमर्थं निषिक्तम् ? इषे अन्नाय अन्नार्थम् ।

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥"
( मनु०, अ० ३।७६ )

इति स्मृतेः । एवंरूपं यत् तेजो नृपतिं नृणां पालकम् अग्निम्, आनट् सर्वतः व्याप्नोत् । उक्तलक्षणं तत् शर्धम्, आज्यम् अनवद्यम् स्तुत्यम् । युवानं वृष्टचाकारेण आदित्येन वा मिश्रयमाणम्, स्वाध्यं सुष्ठु

आधातव्यम्, जनयत् वृष्ट्याकारेण उपपादयच्च सूदयच्च। तदुदकं क्षरतीव अत्रैव वा। द्यौरभीक इति पदद्वयम्। आज्यं द्युलोकस्य अभीके अन्तरीक्षे विद्युद्रूपं सत् जनयत् सूदयच्च इति सम्बन्धः। [—अ० ३२।१।११]

अथ द्वितीयामाह—

**अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु।**
**सञ्जास्पत्यꣳ सुयममाकृणुष्व शत्रूयतामभितिष्ठा महाꣳसि ॥१२॥**

अग्ने। शर्ध। महते। सौभगाय। तव। द्युम्नानि। उत्तमानि। सन्तु॥
सम्। जास्पत्यम्। सु। यमम्। आ। कृणुष्व। शत्रूयताम्। अभि। तिष्ठ। महांसि ॥१२॥

हे अग्ने! त्वं शर्ध सहस्व, महते सौभगाय अस्माकम् अत्यन्तं सौप्रवृद्धाय सौभाग्याय, तदर्थं तव द्युम्नानि ज्वालारूपाणि बलानि हविर्लक्षणानि अन्नानि वा, उत्तमानि उत्कृष्टतमानि सन्तु भवन्तु। किं च जास्पत्यं शोभनजायापतित्वम्, पृषोदरादित्वात् अभिमतरूपसिद्धिः। केचित् 'जास' इति अपत्यनाम, तस्य पतित्वं पुत्रत्वम् इत्यर्थं इति व्याचक्षते, तन्न। सुयमं शोभननियमवत्, सम्यक् आ सर्वतः कृणुष्व कुरु। किं च शत्रूयताम् अस्मासु शत्रुवद् आचरतां द्वेषिणाम्, महांसि तेजांसि, अभितिष्ठ आक्रमस्व। [—अ० ३२।१।१२]

"त्वां हि" इति माहेन्द्रग्रहस्य पुरोऋक्—

**त्वाꣳ हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने।**
**इन्द्रन्न त्वा शवसा देवता वायुम्पृणन्ति राधसा नृतमाः ॥१३॥**

त्वाम्। हि। मन्द्रतमम्। अर्कशोकैः। ववृमहे। महि। नः। श्रोषि। अग्ने॥
इन्द्रन्। न। त्वा। शवसा। देवता। वायुम्। पृणन्ति। राधसा। नृतमाः ॥१३॥

हे अग्ने! त्वां हि त्वामेव, कीदृशं त्वाम्? मन्द्रतमम् त्वाम् अर्कशोकैः, अर्काः अर्चनसाधनमन्त्राः तन्मयैः शोकैर्दीप्तैः स्तोत्रैः ववृमहे। अतो नः अस्मदीयम्, महि महः स्तोत्रं श्रोषि शृणोषि। हे अग्ने! किं च इन्द्रं न इन्द्रमिव, स्थितं त्वा त्वाम्, शवसा बलेन, देवता इन्द्राद्याः पृणन्ति, तथा वायुं वायुसहितं वायुवद् व्याप्तं त्वां नृतमाः कर्मनेतृतमाः ऋत्विजः, राधसा हविर्लक्षणेन धनेन पृणन्ति पूरयन्ति। [—अ० ३२।१।१३]

"त्वे अग्ने" इति[१]—

**त्वे अग्ने स्वाहुत प्रियासस्सन्तु सूरयः।**
**यन्तारो ये मघवानो जनानामूर्वान्दयन्त गोनाम् ॥१४॥**

त्वे। अग्ने। स्वाहुत। प्रियासः। सन्तु। सूरयः॥
यन्तारः। ये। मघवानः। जनानाम्। ऊर्वान्। दयन्त। गोनाम् ॥१४॥

हे स्वाहुत सुष्ठु आदितः हुताग्ने! त्वे त्वयि, सूरयः मेधाविनः यजमानाः, प्रियासः प्रियाः प्रणयितारः, सन्तु भवन्तु। ये यजमानाः जनानां यन्तारः ऋत्विजां नियमकर्तारः मघवानः

१. आदित्यग्रहस्य पुरोऋक् इति शेषः।

हविर्लक्षणाः धनवन्तः बह्वीनां गोनाम्, "गोः पादान्ते" ( पा० अ० ७।१।५७ ) इति नुट्। गवां कर्मणि षष्ठी। प्रभूता गा दयन्त, "दय दानगत्यादौ" दयन्ति प्रयच्छन्ति, ते प्रियासः सन्तु इति सम्बन्धः। [—अ० ३२।१।१४]

"श्रुधि श्रुत्कर्ण" इति आदित्यग्रहस्य पुरोऽऋक्—

**श्रुधि श्रु॑त्कर्ण॒ वह्नि॑भिर्दे॒वैर॑ग्ने स॒याव॑भिः।**
**आसी॑दन्तु ब॒र्हिषि॑ मि॒त्रो अ॑र्य॒मा प्रा॑त॒र्यावा॑णो अध्व॒रम् ॥१५॥**

श्रुधि। श्रुत्कर्ण। वह्निभिः। देवैः। अग्ने। सयावभिः॥
आ। सीदन्तु। बर्हिषि। मित्रः। अर्यमा। प्रातर्यावाणः। अध्वरम् ॥१५॥

हे अग्ने श्रुत्कर्ण! साधुश्राविकर्णन, त्वं वह्निभिः देवैः सयावभिः सह मिश्रयद्भिः सर्वदा अविनाशभूतैः देवैः सह, श्रुधि शृणु। किम्? अस्मदीयं स्तोत्रम्, बर्हिषि आस्तीर्णे दर्भे अध्वरम् अस्मदीयं यज्ञम् अभिलक्ष्य मित्रः हविरभिमानी देवः स च अर्यमा च एतद्द्वयं वरुणस्योपलक्षणम्, स च प्रातर्यावाणः ते आसीदन्तु। [—अ० ३२।१।१५]

"विश्वेषाम्" इत्यादित्यग्रहस्य पुरोऽऋक्—

**विश्वे॑षा॒मदि॑तिर्य॒ज्ञिया॑ना॒ँविश्वे॑षा॒मति॑थि॒र्मानु॑षाणाम्।**
**अ॒ग्निर्दे॒वाना॒मव॑ आवृ॒णानस्सु॑मृळी॒को भ॑वतु जा॒तवे॑दाः ॥१६॥**

विश्वेषाम्। अदितिः। यज्ञियानाम्। विश्वेषाम्। अतिथिः। मानुषाणाम्॥
अग्निः। देवानाम्। अवः। आ। वृणानः। सु। मृडीकः। भवतु। जातवेदाः ॥१६॥

विश्वेषां सर्वेषां यज्ञियानां यज्ञार्हाणां देवानां यजमानानां वा, अदितिः अखण्डयिता रक्षक इत्यर्थः, तथा विश्वेषां मानुषाणां यजमानानाम् अतिथिः अतिथिवत् पूज्यः। एवं महानुभावः अग्निः देवानाम्, अवः अन्नम्, आवृणानः समर्पयन् जातवेदाः सर्वज्ञः, सुमृडीकः भवतु सुष्ठु मृडयिता सुखयिता भवतु। [—अ० ३२।१।१६]

"महो अग्ने" इति सावित्रस्य पुरोऽऋक्—

**म॒हो अ॒ग्नेस्स॑मिधा॒नस्य॒ शर्म॒ण्यना॑गा मि॒त्रे वरु॑णे स्व॒स्तये॑।**
**श्रेष्ठे॑ स्याम सवि॒तुस्सवी॑मनि॒ तद्दे॒वाना॒मवो॑ अ॒द्या वृ॑णीमहे ॥१७॥**

महः। अग्नेः। सम्। इधानस्य। शर्मणि। अनागाः। मित्रे। वरुणे। स्वस्तये॥
श्रेष्ठे। स्याम। सवितुः। सवीमनि। तत्। देवानाम्। अवः। अद्य। आ। वृणीमहे ॥१७॥

समिधानस्य सम्यक् दीप्यमानस्य अग्नेः, महः पूजां तेजः आवृणीमहे। अतस्तस्य शर्मणि सुखे वर्तमानाः वयं मित्रे वरुणे च, श्रेष्ठे प्रशस्ये, सवितुः प्रेरकस्य सवितृदेवस्य, सवीमनि प्रसवे च, स्वस्तये अविनाशाय क्षेमाय, अनागाः अनपराधिनः, स्याम भवेम। तेषां देवानाम्, अवः अन्नं तद्रक्षणं वा, अद्य अस्मिन् दिने, आ सर्वतः वृणीमहे। [—अ० ३२।१।१७]

इति द्वात्रिंशेऽध्याये प्रथमोऽनुवाकः।

[ द्वितीयोऽनुवाकः १८—२९ ]

"आपश्चित् पिप्युः" इत्याद्याः सप्तदश सर्वमेधे च दशरात्रस्य द्वितीयाहस्य इन्द्रस्तदुक्थ्यस्य ग्रहाणां पुरोऋचः। अत्र ब्राह्मणम्—"इन्द्रस्तदुक्थ्यो द्वितीयमहर्भवति इन्द्रो वै सर्वे देवाः सर्वेषां देवानामाप्त्यै तस्यैन्द्रा ग्रहा भवन्ति, ऐन्द्र्यः पुरोऋचः सर्वमैन्द्रमसत्" ( श०, का० १३ । अ० ७ । ब्रा० १ । क० ४ ) इति। अत्र ऐन्द्रवायवप्रभृतिसावित्रान्तानां सप्तदशग्रहाणां सप्तदश पुरोऋचः क्रमेणाह। तत्र प्रथमा—

**आप॑श्चित्पिप्युस्त॒र्यो॒ न गावो॒ नक्ष॑न्नृ॒तञ्ज॑रि॒तार॑स्त इन्द्र ।**
**या॒हि वा॒युर्न नि॒युतो॑ नो॒ अच्छा॒ त्व॑ꣳ हि धी॒भिर्दय॑से॒ वि वाजा॑न् ॥१८॥**

आपः । चित् । पिप्युः । स्तर्यः । न । गावः । नक्षन् । ऋतम् । जरितारः । ते । इन्द्र ॥
याहि । वायुः । न । नियुतः । नः । अच्छ । त्वम् । हि । धीभिः । दयसे । वि । वाजान् ॥१८॥

हे इन्द्र ! त्वत्प्रसादात्, आपश्चित् आपः अपि, स्तर्यः न गाव इव, पिप्युः वर्द्धन्ताम्। अप्रसूता गावः खलु मांसला भवन्ति, ते तव जरितारः स्तोतारः, ऋतम् उदकम्, नक्षन् व्याप्नुवन्। अपि च तत् नः अस्मान् नियुतः[1] वायुः न वायुः इव, अच्छ याहि अभिगच्छ। त्वं हि धीभिः प्रज्ञाभिः कर्मभिः वा, वाजान् अन्नानि, विदयसे विविधं प्रयच्छसि। [—अ० ३२।२।१]

द्वितीया—

**गाव॒ उपा॑वतावत॒म्म॒ही य॒ज्ञस्य॒ र॒प्सुदा॑ ।**
**उ॒भा कर्णा॑ हि॒रण्यया॑ ॥१९॥**

गावः । उप । अवत । अवतम् । मही । यज्ञस्य । रप्सुदा ॥
उभा । कर्णा । हिरण्यया ॥१९॥

हे गावः ! धर्मदुघे यूयम्, अवतं महावीरं प्रति, उपावत उपागच्छत। यस्माद् यज्ञस्य धर्मयागस्य साधनभूते रप्सुदा रप्सुदे आरिप्सोः फलप्रदे, लिप्सोरग्निना दातव्ये वा, यद्वा रणनं शब्दनं मन्त्रोप्तेन सुष्ठु दातव्ये। अथवा "षूद क्षरणे", रक्षामन्त्रेण रक्षणीये ईदृशे गवाश्वयोः पयसा मही महती बहुले अपेक्षिते, अतः अवत। गौः अजाया अपि उपलक्षकः। अजापयसोऽपि महावीरे आसेचनीयत्वात्। अपि चास्य उभा उभौ कर्णा कर्णौ कर्णस्थानीयौ द्वौ रुक्मौ, हिरण्यया हिरण्ययौ सुवर्णहिरण्ययौ सुवर्णराजतमयौ इत्यर्थः। [—अ० ३२।२।२]

"यदद्य" इति—

**यद॒द्य सूर॒ उदि॒तेऽनागा॒ मि॒त्रो अ॑र्य॒मा ।**
**सु॒वाति॑ सवि॒ता भगः॑ ॥२०॥**

यत् । अद्य । सूरे । उदिते । अनागाः । मित्रः । अर्यमा ॥
सुवाति । सविता । भगः ॥२०॥

---

१. अश्वान् इति शेषः ।

यद्धनम् अस्माकम् अपेक्षितम् अद्य अस्मिन् काले सूरे उदिते सति प्रातःकाले, अनागाः पापहन्ता, मित्रः, अर्यमा, सविता, भगश्च एते प्रत्येकं सुवाति प्रेरयन्। [—अ० ३२।२।३]

**आ सुते सिञ्चत श्रियꣳ रोदस्योरभिश्रियम्।**
**रसा दधीत वृषभम्।**
**तम्प्रत्नथायँ्वेनश्चोदयत्॥२१॥**

**आ। सुते। सिञ्चत। श्रियम्। रोदस्योः। अभिश्रियम्।**
**रसा। दधीत। वृषभम्॥**
**तम्। प्रत्नथा। अयम्। वेनः। चोदयत्॥२१॥**

सुते अभिषुते सोमरसे, श्रियं श्रयणद्रव्यम् आसिञ्चत हे अध्वर्यवः! कीदृशं श्रियम्? रोदस्योः, कर्मणि षष्ठी। द्यावापृथिव्यौ अभिश्रियम् अभिश्रयन्तम्, अग्निसंयोगात्तावत्पर्यन्तं प्रवृद्धमित्यर्थः। अथवा "तत्काबश्विनौ द्यावापृथिव्यावित्येके" ( नि०, अ० १२। ख० १।५ ) इति निरुक्ते उक्तत्वाद् अश्विनोरभिश्रियमित्यर्थः। सेचनानन्तरं रसा रसे, वृषभं वर्षकम् अग्निम्, दधीत स्थापयत। "तं प्रत्नथा" इति, "अयं वेन" इति एतौ व्याख्यातौ ( अ० ७।११,१५ )। [—अ० ३२।२।४]

**आतिष्ठन्तम्परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचिः।**
**महत्तद् वृष्णो असुरस्य नामा विश्वरूपो अमृतानि तस्थौ॥२२॥**

**आ। तिष्ठन्तम्। परि। विश्वे। अभूषन्। श्रियः। वसानः। चरति। स्वरोचिः॥**
**महत्। तत्। वृष्णः। असुरस्य। नाम। आ। विश्वरूपः। अमृतानि। तस्थौ॥२३॥**

आतिष्ठन्तं मध्यस्थाने हिमहननार्थम् अवस्थितम् इन्द्रम्, विश्वे सर्वे देवाः पर्यभूषन्। स च श्रियः शोभाः कीर्तीः, वसानः आच्छादयन्, स्वरोचिः स्वत एव रोचमानः, चरति सर्वत्र वृत्रवधार्थं गच्छति। किं च वृष्णः वर्षकस्य असुरस्य प्रकृष्टप्राणस्य इन्द्रस्य, नाम नमनम्, वृत्राख्यस्य मेघस्य निर्माणकारणात्, तत् लोकप्रसिद्धं नाम, महत् अतिस्तुत्यम्। अथवा, वृष्णः वर्षकस्य असुरस्य कुवृत्रस्य नाम, इन्द्रकर्तृकं वृष्टयभिमुखीकरणरूपं नमनं महत् विश्वरूपः अग्न्याकारेण नानारूपः, अथवा वृत्रः यावद्रूपवान् तावद्रूपः सः, अमृतानि उदकानि अभिलक्ष्य तस्थौ आस्थितवान्। यद् वा, नमनानन्तरं विश्वरूपः नानाप्रकारेण व्यापनरूपः मेघः, अमृतानि उदकानि, अभिलक्ष्य तस्थौ वर्षोन्मुखः अभूद् इत्यर्थः। [—अ० ३२।२।५]

**प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे।**
**इन्द्रस्य यस्य सुमखꣳ सहो महि श्रवो नृम्णञ्च रोदसी सपर्यतः॥२३॥**

**प्र। वः। महे। मन्दमानाय। अन्धसः। अर्च। विश्वानराय। विश्वाभुवे॥**
**इन्द्रस्य। यस्य। सु। मखम्। सहः। महि। श्रवः। नृम्णम्। च। रोदसी। सपर्यतः॥२३॥**

हे ऋत्विजः! वः युष्मान् ब्रवीमीति शेषः। किमिति तदुच्यते—महे महते, मन्दमानाय मोदमानाय स्तूयमानाय वा विश्वानराय सर्वनरहिताय विश्वनेत्रे वा विश्वाभुवे विश्वाकारं प्राप्नुवते सर्वात्मकाय इत्यर्थः। एवंभूताय इन्द्राय, अन्धसः अन्नस्य दानाय, अर्च अर्चत। अथवा 'अर्च' इत्यस्यानुसारेण

वः इति अस्मिन् अध्वर्युपूजार्थं बहुवचनम्। अर्चनाय च आह—यस्य प्रसिद्धस्य इन्द्रस्य सुमखं शोभनयागार्हं शोभनगमनोपेतं वा, सहः बलम्, महि महत् श्रवः श्रवणीयं (महि) माहात्म्यम् अन्नं वा तच्च नृम्णम्, रोदसी द्यावापृथिव्यौ, सपर्यतः पूजयतः। तस्मै विश्वानराय दिगधिपतये इति सम्बन्धः। [—अ० ३२।२।६]

बृहन्निदिध्म एषां भूरि शस्तं पृथुः स्वरुः।
येषामिन्द्रो युवा सखा ॥२४॥

बृहन्। इत्। इध्मः। एषाम्। भूरि। शस्तम्। पृथुः। स्वरुः॥
शिष्टं स्पष्टम् ॥२४॥

येषां यजमानानां युवा नित्यतरुणः अप्रहीणबलः इत्यर्थः, अथवा सर्वत्र मिश्रणशीलः, तादृशः इन्द्रः, सखा सखिभूतः, एषां यजमानानाम् इध्मः इध्मलक्षणः यः दर्शपूर्णमासादिः सत्रम्, बृहन्नेव महान् भवति। तथा शस्तं शंसनोपलक्षितं सौमिकं कर्म भूरि प्रसिद्धं भवति। स्वरुः स्वरूपलक्षितः पशुयागः पृथुः प्रवृद्धो भवति। [—अ० ३२।२।७]

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः।
महाँ अभिष्टिरोजसा ॥२५॥

इन्द्र। आ। इहि। मत्सि। अन्धसः। विश्वेभिः। सोमपर्वभिः॥
महान्। अभिष्टिः। ओजसा ॥२५॥

हे इन्द्र! एहि आगच्छ, आगत्य च मत्सि तृप्तो भव। "मदि तृप्तियोगे" केनेति तदुच्यते, अन्धसः अन्नस्य दानेन इति शेषः। त्वमेवेति तदुच्यते, विश्वेभिः सोमैः सर्वैः सोमपर्वभिः सोमयागस्य त्रिभिः सवनैः उक्थ्यादिसंस्थाविशेषैर्वा निमित्तभूतैर्दत्तस्य अन्धसो दानेन। अथ वा अन्धसः अन्नात् अस्माद् इति पञ्चमी द्रष्टव्या। किं च तवं ओजसा बलेन क्रियमाणा अभिष्टिः अभिगतिः अस्मदीया यथा अभिगतिः महान् महती दुर्लभतरा, अतः एहीति सम्बन्धः। [—अ० ३२।२।८]

इन्द्रो वृत्रमवृणोच्छर्द्धनीतिः प्र मायिनाममिनाद्वर्पणीतिः।
अहन्व्यंसमुशधग्वनेष्वाविर्धेना अकृणोद्राम्याणाम् ॥२६॥

इन्द्रः। वृत्रम्। अवृणोत्। शर्द्धनीतिः। प्र। मायिनाम्। अमिनात्। वर्पणीतिः॥
अहन्। व्यंसम्। उशधक्। वनेषु। आविः। धेनाः। अकृणोत्। राम्याणाम् ॥२६॥

शर्ध इति बलनाम। शर्द्धसः बलस्य नीतिः नयनं यस्य सः तथोक्तः। सः इन्द्रः, वृत्रम् असुरम्, अवृणोत् बलेन अरुधत्। तथा वर्पणीतिः, "वर्प" इति रूपनाम, रूपस्य स्वरूपस्य नीतिः नयनं तत्र प्रकाशनं यस्य सः तादृशः इन्द्रः, मायिनां मायावताम् असुराणां मायाः, प्रामिणात् प्रकर्षेण अवधीत्। किं च उशधक्, इदं दग्धव्यम् इदं दग्धव्यमिति कान्तिमतां दाहकः अयम्, वनेषु निगूढं शत्रुं व्यंसं निर्गतांसप्रदेशं कृत्वा, अहन् पातितवान्। मेघपक्षे—वनेषु उदकेषु निमित्तभूतेषु, व्यंसं वीतांससदृशोच्छ्रिततद्देशं वृतं मेघम् अहन्, तथा कृत्वा राम्याणां रमणीयानां मेघानां मध्यवर्तिनां मेघेन अपः आविरकृणोत्। राम्याणां रमणीयानां स्वस्थानमध्यादिति वा योज्यम्। [—अ० ३२।२।९]

कुतस्त्वमिन्द्र माहिनस्सन्नेको यासि सत्पते किन्त इत्था ।
सम्पृच्छसे समराणश्शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे ।
महाँ२ इन्द्रो य ओजसा कदा चन स्तरीरसि कदा चन प्रयुच्छसि ॥२७॥

कुतः । त्वम् । इन्द्र । माहिनः । सन् । एकः । यासि । सत्पते । किम् । ते । इत्था ॥
सम् । पृच्छसे । सम् । अराणः । शुभानैः । वोचेः । तत् । नः । हरिवः । यत् । ते । अस्मे ॥
महान् । इन्द्रः । यः । ओजसा । कदा । चन । स्तरीः । असि । कदा । चन । प्र ।
युच्छसि ॥२७॥

हे इन्द्र ! त्वं माहिनः महन्नाम एतत् । बलैः पूज्यः सन् अपि कुतः एकः यासि किमर्थम् एक एव गच्छसि । हे सत्पते ! सतां पालक, ते तव स्वरूपम् इत्था किम्, इत्थं खलु अनुचररहितमेव स्वरूपमित्यर्थः । शुभानैः शोभनैः मार्गैः, समराणः संगच्छन्, अथ वा शुभानैः ऋषिभिः,[१] संपृच्छसे, सन्नपि कुतः एकः यासि, किमर्थम् एक एव गच्छसि । हे सत्पते ! सतां पालक, ते तव, स्वरूपम् इत्था किम् इत्थं खलु अनुचररहितमेव इति पृच्छचसे । यकारलोपश्छान्दसः । अस्मे अस्मासु यत् ते गमनकारणम् अस्ति तत् नः अस्माकं वोचेः ब्रूहि । "महाँ इन्द्र" इत्यादयः त्रयोदश-चतुर्दश-पञ्चदशानां प्रतीकाः, ते च मन्त्राः उक्ताः ( अ० ७।४०, अ० ८।१-२ ) । [—अ० ३२।२।१०]

आ तत्त इन्द्रायवः पनन्ताभि य ऊर्वङ्गोमन्तन्तितृत्सान् ।
सकृत्स्वँय्ये पुरुपुत्राम्महीꣳ सहस्रधाराम्बृहतीन्दुदुक्षन् ॥२८॥

आ । तत् । ते । इन्द्र । आयवः । पनन्त । अभि । ये । ऊर्वम् । गोमन्तम् । तितृत्सान् ॥
सकृत् । स्वम् । ये । पुरुपुत्राम् । महीम् । सहस्रधाराम् । बृहतीम् । दुदुक्षन् ॥२८॥

हे इन्द्र ! ते तव अतिप्रसिद्धं कर्म आयवः मनुष्याः ऋत्विगादयः आपनन्त आस्तुवन्त अस्तुवन् स्तुवन्तु वा । ये आयवः ते, ऊर्वमन्ननामैतत् । सोमाख्यमन्नं गोमन्तं प्रकृतिविकारगव्यैः पयआदिभिर्युक्तम् अभितितृत्सान्, "उतृदिर् हिंसानादरयोः" अस्य लेटि रूपम् । परितः हिंसितवन्तः ते आपनन्त, प्रायच्छन् प्रायच्छन्ति इत्यर्थः । किं च अपि सकृत्-स्वम् एकः द्योतनैः वा उप्यानि बीजानि सूते इति सकृत्सूः, तां पुरुपुत्रां बहुपुत्राम्, अथवा पुरु बहवः पुत्राः पुत्रस्थानीयाः स्थावरजङ्गमरूपाः पदार्थाः यस्याः तादृशीं सहस्रधारां गोरूपेण निरूपणाद् अपरिमितफलाम्, धारोपेताम्, बृहतीं महतीं महीम् इलाम् उस्रामिव दुदुक्षन् दुहन्ति । कृष्युपजीविनस्ते व्याप्नुवते इति सम्बन्धः ।

[—अ० ३२।२।११ ]

इमान्ते धियम्प्रभरे महो महीमस्य स्तोत्रे धिषणा यत्त आनजे ।
तमुत्सवे च प्रसवे च सासहिमिन्द्रन्देवासश्शवसामदन्ननु ॥२९॥

इमाम् । ते । धियम् । प्र । भरे । महः । महीम् । अस्य । स्तोत्रे । धिषणा । यत् । ते ।
आनजे ॥
तम् । उत् । सवे । च । प्र । सवे । च । सासहिम् । इन्द्रम् । देवासः । शवसा । अमदन् ।
अनु ॥२९॥

---

१. संगच्छन् इति शेषः ।

हे इन्द्र ! ते तव, महः महतः प्रबुद्धस्य ते तव विषयभूताम् इमां धियं स्तुतिं प्रभरे प्रकर्षेण सम्पादयामि । कीदृशीं धियम् ? महीं महतीं अस्य यशसः स्तोत्रे गुणाभिधाने धिषणा ईमहे बुद्धीः आनजे । "अञ्जू" इत्यस्य लिटि रूपम् । प्रकाशिता भवति । अथ परोक्षेण आह । न केवलम् अहमेव प्रभरे, किन्तु तम् इन्द्रम् सासहिं शत्रूणाम् अभिभवितारम् इन्द्रम्, उत्सवे अनुज्ञापये । देवासः देवाः, शवसा बलेन; अमदन् अनुमोदनम् अकुर्वन् । [—अ० ३२।२।१२]

इति द्वितीयोऽनुवाकः ।

## [ तृतीयोऽनुवाकः ३०–४३ ]

तृतीये सर्वस्तोमस्य । तृतीयमहः सूर्यस्तुदाख्यम् । तस्य ऐन्द्रवायवद्वयमैत्रावरुणाश्विनशुक्रमन्थ्याश्रयणध्रुवैन्द्राग्नवैश्वदेवमरुत्वतीयद्वयमाहेन्द्रादित्यत्रयसावित्राख्यानां सप्तदशग्रहाणां क्रमेण पुरोऋचः अभिधीयन्ते । ताश्च सर्वाः सौर्याः कर्तव्याः । तथा च ब्राह्मणम्—"सूर्यस्तुदुक्थ्यस्तृतीयमहर्भवति सूर्यो वै सर्वे देवाः सर्वेषां देवानामाप्त्यै तस्य सौर्या ग्रहा भवन्ति सौर्यः पुरोऋचः सर्वꣳ सौर्यꣳसदिति" ( श०, का० १३ । अ० ७ । ब्रा० १ । क० ५ ) इति । तत्र प्रथमा विभ्राडित्यादि—

**विभ्राड् बृहत्पिबतु सोम्यम्मध्वायुर्दधद्यज्ञपता अविहुतम् ।**
**वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति ॥३०॥**

**वि । भ्राट् । बृहत् । पिबतु । सोम्यम् । मधु । आयुः । दधत् । यज्ञपतौ । अविह्रुतम् ॥**
**वातजूतः । यः । अभि । रक्षति । त्मना । प्रजाः । पुपोष । पुरुधा । वि । राजति ॥३०॥**

विभ्राड् विशेषेण भ्राजमान आदित्यः, बृहत् अतिभूतम्, सोम्यं सोमसम्बन्धि मधु उक्तलक्षणं सोमरसं पिबतु । किं कुर्वन् ? यज्ञपतौ यजमाने आयुः आरोग्यम् अविह्रुतम् अकुटिलं रोगादिरहितम्, दधत् धारयन् । यः विभ्राट् वातजूतः वायुना प्रेरितः, अन्तरिक्षे संचरन् त्मना आत्मना एव प्रजादि अभिरक्षति । अर्थाद् यः न केवलं रक्षति किन्तु प्रजाः पुपोष, वृष्टिप्रदानादिना पोषितवान् पुष्णाति इत्यर्थः । सः पुरुधा बहुप्रकारं विराजति ईश्वरो भवति । [—अ० ३२।३।१]

**उदु त्यञ्जातवेदसन्देवँव्वहन्ति केतवः ।**
**दृशे विश्वाय सूर्यम् ॥३१॥**

**उत् । उ । त्यम् । जातवेदसम् । देवम् । वहन्ति । केतवः ॥**
**दृशे । विश्वाय । सूर्यम् ॥३१॥**

उदु त्यं सूर्यं जातवेदसं जातप्रज्ञं जातधनं वा देवं केतवः प्रज्ञानसाधनाः उत् ऊर्ध्वं[1] प्रापयन्ति । किमर्थम् ? विश्वाय दृशे सर्वस्य दर्शनाय । षष्ठ्यर्थे चतुर्थी । [—अ० ३२।३।२]

**येना पावक चक्षसा भुरण्यन्तञ्जनाँ२ अनु ।**
**त्वँव्वरुण पश्यसि ॥३२॥**

---

१. वहन्ति इत्यादि ।

येन । पावक । चक्षसा । भुरण्यन्तम् । जनान् । अनु ॥
त्वम् । वरुण । पश्यसि ॥३२॥

हे पावक ! शोधक, वरुण ! अन्धकारस्य वारक सूर्य त्वं येन चक्षसा जनान् सकलप्राणिनः, अनु पश्यसि यद् वा जनान् तावत् कृपादृष्टचा पश्यसि । तेन कृपावता चक्षसा, भुरण्यन्तं भरणं कुर्वन्तम्, मां पश्य इति शेषः । [—अ० ३२।३।३]

**दैव्या॑ अध्व॒र्यू आग॑तꣳ रथे॑न॒ सूर्य॑त्वचा ।**
**मध्वा॑ य॒ज्ञꣳ सम॑ञ्जाथे ।**
**तम्प्र॒त्नथा॒यँवे॒नश्चौदयच्चि॒त्रन्दे॒वाना॑म् ॥३३॥**

दैव्या । अध्वर्यू । आ । गतम् । रथेन । सूर्यत्वचा ॥
मध्वा । यज्ञम् । सम् । अञ्जाथे ॥
तम् । प्रत्नथा । अयम् । वेनः । चोदयत् । चित्रम् । देवानाम् ॥३३॥

हे दैव्या ! दैव्यौ देवसम्बन्धिनौ, अध्वर्यू अध्वरस्य नेतारौ एतन्नामानौ देवौ, आगतम् आगच्छतम्, केन साधनेन इत्युच्यते, सूर्यत्वचा सूर्यसमानदीप्तिमता रथेन, आगत्य च मध्वा मधुरेण आज्यसोमादिना अभिमतेन फलेन वा यज्ञम् अस्मदीयम्, समञ्जाथे सम्यक् अभिव्यक्तिं कुर्वाथे ।

अथ पञ्चमी षष्ठी सप्तमी तिस्रः प्रतीकेन उपात्ताः, तासां प्रथमा "तम्प्रत्नथा पूर्वथा" इति, द्वितीया "अयँवेनश्चोदयत्" इति, तृतीया "चित्रन्देवानाम्" इति । एताः पूर्वमुक्ताः (अ० ७।११, १५ । अ० ८।२४ ) । [—अ० ३२।३।४]

अथाष्टमी—

**आ न॒ इळा॑भिर्वि॒दथे॑ सुश॒स्ति वि॒श्वान॑रस्सवि॒ता दे॒व ए॑तु ।**
**अपि॒ यथा॑ युवानो॒ मत्स॑था नो॒ विश्व॒ञ्जग॑दभिपि॒त्वे म॑नी॒षा ॥३४॥**

आ । नः । इडाभिः । विदथे । सुशस्ति । विश्वानरः । सविता । देवः । एतु ॥
अपि । यथा । युवानः । मत्सथ । नः । विश्वम् । जगत् । अभिपित्वे । मनीषा ॥३४॥

सुशस्ति शोभनस्तुतितमः, विश्वानरः विश्वनरहितकारी प्रकाशवृष्टयादिप्रदानेन सर्वहितः, सविता सर्वकर्मप्रेरकः देवः, विदथे यज्ञे, इडाभिः मन्त्रैः स्तोत्रैर्वा निमित्तभूतैः नः अस्मान्, एतु आगच्छतु । सुशस्ति सुशस्तिभिः शोभनशंसनोपेताभिः, इडाभिः मन्त्ररूपाभिः वाग्भिः निमित्तभूताभिः इति वा योज्यम् । अपि च युवानः हे नित्यतरुणाः ! सर्वदा सामर्थ्यवन्तो वा देवाः यूयं यथा नः अस्मान्, मत्सथ मादयथ, एवं विश्वं जगत् । [—अ० ३२।३।५]

**यद॒द्य कच्च॑ वृत्रहन्नु॒दगा॑ अ॒भि सू॑र्य ।**
**सर्व॒न्तदि॑न्द्र ते॒ वशे॑ ॥३५॥**

यत् । अद्य । कत् । च । वृत्रहन् । उत् । अगाः । अभि । सूर्य ॥
सर्वम् । तत् । इन्द्र । ते । वशे ॥३५॥

हे वृत्रहन् ! "यदवृणोत्तद् वृत्रस्य वृत्रत्वम्" ( तै० सं० २।४।१२।२, निरु०, अ० २।१७ ) इति श्रुतेः। आवरकस्य अन्धकारस्य हन्तः सूर्य ! यत् अद्य कच्च यत् किं च इदं जगत् अभिलक्ष्य उदगाः उदितः अभूः, हे इन्द्र ! परमेश्वर, ते तव, वशे अधीनत्वे वर्तते। सूर्योदयाधीनत्वात् सर्ववस्तुप्रतिभानस्य। "योऽसौ तन्नुदति सर्वेषां भूतानां प्राणदानायोदेति" इत्यादिश्रुतेः।

[—अ० ३२।३।६]

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य।
विश्वमाभासि रोचनम् ॥३६॥

तरणिः। विश्वदर्शतः। ज्योतिष्कृत्। असि। सूर्य ॥
विश्वम्। आ। भासि। रोचनम् ॥३६॥

हे सूर्य ! प्रसवकर्तः आदित्य, तरणिः तारकः सर्वस्य निर्वाहकः, विश्वदर्शतः विश्वदृष्टिः विश्वैः दृष्टो वा, त्वं ज्योतिष्कृदसि प्रकाशकर्ता भवसि, अतः बाढं तव रुचिभिः रोचनं रोचमानं विश्वं सर्वम् आभासि सर्वतः प्रकाशयसि।

[—अ० ३२।३।७]

तत्सूर्यस्य देवत्वन्तन्महित्वम्मध्याकर्तोर्विततꣳ सञ्जभार।
यदेदयुक्त हरितस्सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥३७॥

तत्। सूर्यस्य। देवत्वम्। तत्। महित्वम्। मध्या। कर्तोः। वि। ततम्। सम्। जभार ॥
यदा। इत्। अयुक्त। हरितः। सधस्थात्। आत्। रात्री। वासः। तनुते। सिमस्मै ॥३७॥

सूर्यस्य प्रसवकर्तृत्वे तन्नामकस्य तत् देवत्वं स्वतन्त्रेश्वरत्वं द्योतनादिगुणविशिष्टं वा, तथा तत् देवस्य महित्वं महत्त्वं महाभाग्यं तत् इत्युक्तम्। यत् इति आकाङ्क्षायामाह, मध्या मध्ये, कस्य मध्ये, कर्तोः, कर्मनाम एतत्, वैदिकानां लौकिकानां च प्राणिभिः कृतानां कर्मणां मध्ये तत् असमाप्तौ एव, विततं विस्तृतं रश्मिजालम्, सञ्जभार सर्वत्र व्याप्तं हृतवान्। एतदेव सूर्यस्य देवत्वं महित्वं च। प्रकारान्तरेण तदुभयं दर्शयति, यदा यस्मिन् काले, 'इत्' शब्दः एवकारार्थः, यदेवायं सूर्यः सधस्थात् सूर्यस्य प्रकाशः यावति अन्तरिक्षस्थाने वर्तते तत् सधस्थानम्, तस्माद् अपगन्तुः हरितः, सूर्यस्य अश्वा हरितः उच्यन्ते, ताश्च रश्मिरूपा एव इत्याहुः आगमविदः। तान् अश्वान् अयुक्त रथे योजितवान् शीघ्रं धावितवान् इति यावत्। आत् अनन्तरमेव रात्री, सिमस्मै सर्वस्मै प्राणिजाताय वा सा अन्धकारलक्षणम् आच्छादनं तनुते विस्तारयति। सूर्यस्य यावत्कालं स्थितिः अन्तरिक्षे तावत्पर्यन्तं सर्वव्यवहारविरोध्यन्धकारं प्राप्तुं न शक्नोति। सूर्यस्य अपगमानन्तरमेव सर्वावरकम् अन्धकारं प्राप्नोतीति यत् तदेव देवत्वम्, तदेव महत्त्वं च। उक्तकर्मद्वयस्य अनन्यसाधारणत्वात्।

[—अ० ३२।३।८]

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपङ्कृणुते द्योरुपस्थे।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितस्सम्भरन्ति ॥३८॥[1]

---

१. सायणभाष्यानुपलब्धेरेतस्य मन्त्रस्य महीधरभाष्यमुपस्थाप्यते— सूर्यो द्योः द्युलोकस्योपस्थे उत्सङ्गे मित्रस्य वरुणस्य च तद्रूपं कृणुते कुरुते। येन रूपेण जनानभिचक्षे अभिचष्टे पश्यति। मित्ररूपेण सुकृतिनोऽनुगृह्णाति, वरुणरूपेण दुष्कृतिनो निगृह्णातीत्यर्थः। अस्य सूर्यस्य

तत् । मित्रस्य । वरुणस्य । अभि । चक्षे । सूर्यः । रूपम् । कृणुते । द्योः । उपस्थे ॥
अनन्तम् । अन्यत् । रुशत् । अस्य । पाजः । कृष्णम् । अन्यत् । हरितः । सम् । भरन्ति ॥३८॥

[—अ० ३२।३।९]

बण्महाँ२ असि सूर्य बळादित्य महाँ२ असि ।
महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ२ असि ॥३९॥

बट् । महान् । असि । सूर्य । बट् । आदित्य । महान् । असि ॥
महः । ते । सतः । महिमा । पनस्यते । अद्धा । देव । महान् । असि ॥३९॥

हे सूर्य ! सर्वप्रेरक, परमात्मन्, बट् सत्यनाम एतत्, "बट् । श्रत् । सत्रा" ( निघ०, अ० ३ । खं० १३।१० ) इति निघण्टौ तन्नामसु पाठात् । सत्यम्, स त्वं महान् असि देशकालाद्यनवच्छिन्न-स्वरूपोऽसि । हे आदित्य ! सर्वस्य आदानाद् आदित्यः, अथवा अदितेः पुत्रः, अदितेः पुत्रत्वोपाधिक परमेश्वर, त्वं बट् सत्यस्वरूपः, त्वं महान् असि । किं च ते तव ईदृशस्य, महः महतः माहात्म्ययुक्तस्य सतः सर्वदा प्रत्यक्षत्वेन विद्यमानस्य महिमा माहात्म्यम्, पनस्यते स्तूयते । ततस्ते ………… यतः एवं महः हे देव ! द्योतमान स्वयं प्रकाशक त्वं महान् असि, अद्धा सत्यमेतत् ।

[ —अ० ३२।३।१० ]

बट् सूर्य श्रवसा महाँ२ असि सत्रा देव महाँ२ असि ।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥४०॥

बट् । सूर्य । श्रवसा । महान् । असि । सत्रा । देव । महान् । असि ॥
मह्ना । देवानाम् । असुर्यः । पुरोहितः । विभु । ज्योतिः । अदाभ्यम् ॥४०॥

हे सूर्य ! श्रवसा, श्रूयते इति श्रवः तेजः, तेन महान् गुणैः प्रवृत्तोऽसि, तद् बट् सत्यम् तदेवोच्यते, आदरार्थं हे बट् त्वं महान् असि । तत् सत्रा, एतदपि सत्यनामसु पठितम् । किं च मह्ना महत्त्वेन देवानाम् अग्न्यादीनाम् असुर्यः, असुः बलं तद् राति ददातीति असुर्यः । देवानां प्राणप्रदः । पुरोहितः देवानां सूर्योदयाधीनार्हत्वाभिधानात् । विभु परममहत् ज्योतिः स्वयं प्रकाशरूपम्, कीदृशं ज्योतिः ? अदाभ्यम् अनभिभाव्यं ज्योतिः त्वम्, अन्यत्र नक्षत्रादिसम्बन्धि सूर्यज्योतिषा परम् अभिभूयते । [—अ० ३२।३।११]

श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जाते जनमान ओजसा प्रति भागन्न दीधिम ॥४१॥

श्रायन्तः । इव । सूर्यम् । विश्वा । इत् । इन्द्रस्य । भक्षत ॥
वसूनि । जाते । जनमाने । ओजसा । प्रति । भागम् । न । दीधिम ॥४१॥

---

अन्यत् एकं पाजो रूपमनन्तम् कालतो देशतश्चापरिच्छेद्यम् । रुशत् शुक्लं दीप्यमानं विज्ञानघनानन्दं ब्रह्मैव । अन्यत् कृष्णं द्वैतलक्षणं रूपं हरितः दिशः इन्द्रियवृत्तयो वा सम्भरन्ति धारयन्ति । इन्द्रियग्राह्यं द्वैतरूपमेकम् । एकं शुद्धं चैतन्यमद्वैतमिति द्वे रूपे सूर्यस्य, सगुणं निर्गुणं ब्रह्म सूर्य एवेत्यर्थः । पाज इति बलनाम, इह रूपमुच्यते । ( शु० य० मा० सं० ३३.३८)

हे रश्मयः ! यूयं सूर्यं श्रायन्तः इव आश्रिता एव, इवशब्दः एवार्थः। अतो यूयं विश्वेत् सर्वाण्यपि वसूनि इन्द्रस्य परमेश्वरस्य सम्बन्धीनि, भक्षत अस्मासु भजत। वयं च तानि वसूनि, जाते उत्पन्ने पुत्रे, जनमाने उत्पद्यमाने उत्पत्स्यमाने वा पौत्रे, ओजसा बलेन युक्ताः भागं भजनीयं पितुर्धनमिव, तद् यथा पुत्राः पितृप्रदत्तं धनादिरूपं प्रत्येकं धारयन्ति तद्वत् प्रतिदीधिम, "दीधीङ् दीप्तिदेवनयोः" इत्यस्य रूपम्, छान्दसं परस्मैपदम्, धारयेम। अथ वा दधातेः रूपम्।

[—अ० ३२।३।१२]

अ॒द्या दे॑वा॒ उदि॑ता॒ सूर्य॑स्य॒ निरंह॑सः पिपृ॒ता निर॑व॒द्यात्।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒स्सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥४२॥

अद्य। देवाः। उदिता। सूर्यस्य। निर्। अंहसः। पिपृत। निर्। अवद्यात् ॥
तत्। नः। मित्रः। वरुणः। मामहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः ॥४२॥

हे देवाः ! द्योतमानाः रश्मयः अग्न्यादयः देवाः[1], अद्य अस्मिन् यागदिने, सूर्यस्य उदिता उदितौ उदये सति, अंहसः पापात्, अन्यस्मिन् पक्षे अन्धकारलक्षणात् निःपिपृत, अवद्यात् अधिक्षेपात् निःपिपृत ततो व्यस्यत वियोजयत इत्यर्थः। मित्रादयः षड् देवाः, नः अस्मान्, मामहन्तां पूजयन्ताम्।

[—अ० ३२।३।१३]

आ कृ॒ष्णेन॒ रज॑सा॒ वर्त॑मानो निवे॒शय॑न्न॒मृतं॒ मर्त्यं॑ च।
हि॒र॒ण्यये॑न सवि॒ता रथे॒ना दे॒वो या॑ति॒ भुव॑नानि॒ पश्य॑न् ॥४३॥

पदच्छेदः स्पष्टः ॥४३॥

आकृष्णेन निकृष्णेन रजसा वर्णेन सह वर्तमानः, अथ वा कृष्णेन जगत्कर्षकेण आविर्हेतुकेन रजसा प्रकाशेन, यद् वा कृष्णेन अपि च रजसा वर्तमानः, आयाति आगच्छति। किं कुर्वन् ? अमृतम-मरणधर्मकं मर्त्यं तद् विलक्षणं च निवेशयन् तत्तत्स्थाने स्थापयन्, कृष्णं नक्तम् अन्धकारः इति पक्षे रात्रौ स्वस्वव्यापाराभावात् स्वस्वस्थाने स्थापयन्, कृष्णं कर्षकं रजः प्रकाशः इति पक्षे निवेशयन् स्वव्यापारे नियोजयन् इत्यर्थः। कृष्णेन च रजसा इति च इति समुच्चयपक्षे निवेशयन् इत्यस्य उक्तार्थस्य द्वयमपि विवक्षितम्। किं च हिरण्ययेन हिरण्यद्योतमानरथेन सविता देवः भुवनानि भूतजातानि पश्यन्, आयाति ऊर्ध्वं प्राप्नोति इत्यर्थः।

[—अ० ३२।३।१४]

इति तृतीयोऽनुवाकः।

## [ चतुर्थोऽनुवाकः ४४—५४ ]

चतुर्थेऽनुवाके सर्वमेधस्य चतुर्थमहः वैश्वदेवस्तुत्, तत्र पुरोऋचः सर्वा अपि वैश्वदेवदेवताकाः। तथा च ब्राह्मणम्—"वैश्वदेवस्तुत् चतुर्थमहर्भवति। विश्वे वै देवाः सर्वेषां देवानामाप्त्यै, तस्य वैश्वदेवा ग्रहा भवन्ति वैश्वदेव्या पुरोऋचः सर्वं वैश्वदेवमसदिति" (श०, का० १३। अ० ७। ब्रा० १। क० ६) इति। ताः सप्तदश। तत्र प्रतीकात्मिकाः षट्। तत्र प्रथमा—

१. वा इति शेषः।

प्रवांवृजे सुप्रया बर्हिरेषामा विश्पतींव बीरिंट इयाते ।
विशामक्तोरुषसः पूर्वहूंतौ वायुः पूषा स्वस्तयें नियुत्वांन् ॥४४॥

प्र । वावृजे । सु । प्रयाः । बर्हिः । एषाम् । आ । विश्पती । इव । बीरिटे । इयाते ॥
विशाम् । अक्तोः । उषसः । पूर्वहूतौ । वायुः । पूषा । स्वस्तये । नियुत्वान् ॥४४॥

एषां यजमानानां सम्बन्धि सुप्रयाः शोभनहविर्लक्षणेन अन्नेन युक्तं बर्हिः प्रवावृजे प्रवृज्यते, आसाद्यते इत्यर्थः । विश्पती इव, इवेति उपमार्थे प्रजानां पालकौ, नियुत्वान्, नियुतः वायोः अश्वाः, तद्वान् वायुः, पूषा च । विशां प्रजानाम्, स्वस्तये क्षेमाय, अक्तोः रात्रेः उषसश्च सकाशात्, पूर्वहूतौ पूर्वस्मिन् आह्वाने सति, बीरिटे वरणे, आ इयाते आगच्छतः आगच्छतां वा । द्वौ विश्पती इव इति उपमा । अमीषां मनुष्याणां बीरिटे गणे संग्रामं विश्पतीव राजानौ यथा आगच्छतः तद्वत् ।
[—अ० ३२।४।१]

इन्द्रवायू बृहस्पतिम्मित्राग्निम्पूषणम्भगंम् ।
आदित्यान्मारुतङ्गणम् ॥४५॥

इन्द्रवायू । बृहस्पतिम् । मित्राग्निम् । पूषणम् । भगम् ॥
आदित्यान् । मारुतम् । गणम् ॥४५॥

इन्द्रादिमरुद्गणान्ताः लिङ्गोक्तदेवताः प्रसिद्धाः, मित्रम् आदित्यान्, एतान् सर्वान् आह्वयामीति शेषः । [—अ० ३२।४।२]

वरुंणः प्राविता भुंवन्मित्रो विश्वांभिरूतिभिः ।
करंतान्नस्सुराधंसः ॥४६॥

वरुणः । प्र । अविता । भुवत् । मित्रः । विश्वाभिः । ऊतिभिः ॥
करताम् । नः । सु । राधसः ॥४६॥

वरुणः रात्र्यभिमानी देवः, अस्माकं प्राविता प्रकर्षेण रक्षकः[१] भवेत् । मित्रश्च अहर्देवः, विश्वाभिः सर्वाभिः, ऊतिभिः रक्षणाभिः, नः अस्मान्, सुराधसः शोभनधनान्, करतां कुरुताम् ।
[—अ० ३२।४।३]

अधिं न इन्द्रैषाँव्विष्णो सजात्यांनाम् ।
इता मरुंतो अश्विना ।
तम्प्रत्नथायँव्वेनश्चोदयद्वे देवास आ न इळाभिर्विश्वेभिस्सोम्यम्मध्वोमांस-
श्चर्षणीधृतः ॥४७॥

अधि । नः । इन्द्र । एषाम् । विष्णो । सजात्यानाम् ॥
इत । मरुतः । अश्विना ॥

१. भुवत् इत्यादि ।

तम् । प्रत्नथा । अयम् । वेनः । चोदयत् । ये । देवासः । आ । नः । इडाभिः । विश्वेभिः ।
सोम्यम् । मधु । ओमासः । चर्षणीधृतः ॥४७॥

एषां सजात्यानां समानजातीयानाम् अस्माकं यज्ञम् हे इन्द्र ! हे विष्णो ! हे मरुतः ! हे अश्विना ! अश्विनौ यूयम् अधीत अधिगच्छत । यज्ञम् अभिलक्षीकृत्य गच्छन् "तं प्रत्नथा, अयं वेनः चोदयद्, ये देवासः, आ न इडाभिः, विश्वेभिः सोम्यं मधु, ओमासश्चर्षणीधृतः" इति षट् प्रतीकान्ताः । [—अ० ३२।४।४]

अथैकादशी—

अग्न इन्द्र वरुण मित्र देवाश्शर्द्धः प्रयन्त मारुतोत विष्णो ।
उभा नासत्या रुद्रो अध ग्नाः पूषा भगस्सरस्वती जुषन्त ॥४८॥

अग्ने । इन्द्र । वरुण । मित्र । देवाः । शर्द्धः । प्र । यन्त । मारुत । उत । विष्णो ॥
उभा । नासत्या । रुद्रः । अध । ग्नाः । पूषा । भगः । सरस्वती । जुषन्त ॥४८॥

हे अग्ने ! इन्द्र ! वरुण ! मित्र ! हे देवाः ! मारुत ! मरुत्सङ्घ, उत अपि च हे विष्णो ! शर्द्धः बलम्, यूयं प्रयन्त प्रगच्छत । किं च उभा नासत्या उभौ अश्विनौ रुद्रश्च,[१] अध, ग्ना इति स्त्रीणां नाम, देवपत्न्यः, पूषा, भगः, सरस्वती चेति देवा अपि । जुषन्त अस्मद्यज्ञं सेवन्ताम् ।
[—अ० ३२।४।५]

इन्द्राग्नी मित्रावरुणादितिꣳ स्वः पृथिवीन्द्याम्मरुतः पर्वताँ२ अपः ।
हुवे विष्णुम्पूषणम्ब्रह्मणस्पतिम्भगन्नु शꣳसꣳ सवितारमूतये ॥४९॥

इन्द्राग्नी । मित्रावरुणा । अदितिम् । स्वः । पृथिवीम् । द्याम् । मरुतः । पर्वतान् । अपः ॥
हुवे । विष्णुम् । ब्रह्मणस्पतिम् । भगम् । नु । शंसम् । सवितारम् । ऊतये ॥४९॥

इन्द्राग्न्यादिलिङ्गोक्तदेवताः प्रत्येकम् ऊतये अस्मद्रक्षणाय, हुवे आह्वयामि । शंसं स्तुत्यम्, एतत् सवितृविशेषणम् । शिष्टाः स्पष्टाः । [—अ० ३२।४।६]

अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।
यश्शꣳसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ२ अवन्तु देवाः ॥५०॥

अस्मे । रुद्राः । मेहनाः । पर्वतासः । वृत्रहत्ये । भरहूतौ । सजोषाः ॥
यः । शंसते । स्तुवते । धायि । पज्रः । इन्द्रज्येष्ठाः । अस्मान् । अवन्तु । देवाः ॥५०॥

अस्मे अस्मान्, रुद्रा देवाः, मेहनाः महनीयाः सेक्तारो वा पर्वतासः मेघाश्च, वृत्रहत्ये वृत्रहनन-साधने, भरहूतौ संग्रामाह्वाने, सजोषाः अस्माभिः सह समानप्रीतिः यः पज्रः बलवान् इन्द्रः, शंसते शंसनं कुर्वते, धायि आधायि आगच्छति इत्यर्थः । स च, इन्द्रज्येष्ठाः तत्प्रमुखाः रुद्रादयः, अस्मान् अवन्तु रक्षन्तु । यद् वा एवं योजयितव्यम्—रुद्राः रुद्रपुत्राः, मेहनाः सेचनाः, पर्वतासः पूरणवन्तः प्रीणनवन्तो

१. अध इत्यादि ।

वा वृत्रहत्ये मेहनस्य प्रीणननिमित्ते, भरहूतौ संग्रामाह्वाने, सजोषाः सजोषसः सहायभूताः इन्द्रज्येष्ठाः मरुतः उक्तलक्षण इन्द्रश्च, अस्मान् अवन्तु । [—अ० ३२।४।७]

**अर्वाञ्चो अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयम् ।**
**त्राध्वन्नो देवा निजुरो वृकस्य त्राध्वङ्कर्तादवपदो यजत्राः ॥५१॥**

अर्वाञ्चः । अद्य । भवता । यजत्राः । आ । वः । हार्दि । भयमानः । वि । अयेयम् ॥
त्राध्वम् । नः । देवाः । निजुरः । वृकस्य । त्राध्वम् । कर्तात् । अवपदः । यजत्राः ॥५१॥

हे यजत्राः ! यष्टव्या देवाः, अद्य अस्मिन् दिने, अर्वाञ्चः अस्मदभिमुखाः भवत । अहं वः युष्माकं हार्दि हृदयसम्बन्धि, हार्दम् अस्य अस्तीति हार्दि, स्नेहोपेतं चित्तम् आ सर्वतः व्ययेयं विशेषेण गच्छेयम् । अतः हे देवाः ! निजुरः ज्वरयितुः, वृकस्य हिंस्रस्य वृकसदृशस्य वा मृत्योः बाधात्, त्राध्वं त्रायध्वं पालयध्वम् । तथा अवपदः अवपतनसाधनात् कर्तात् तत्कर्मणः सकाशात् हे यजत्राः ! यूयं त्राध्वम् । [—अ० ३२।४।८]

**विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयस्समिद्धाः ।**
**विश्वे नो देवा अवसा गमन्तु विश्वमस्तु द्रविणँ्वाजो अस्मे ॥५२॥**

विश्वे । अद्य । मरुतः । विश्वे । ऊती । विश्वे । भवन्तु । अग्नयः । सम् । इद्धाः ॥
विश्वे । नः । देवाः । अवसा । गमन्तु । विश्वम् । अस्तु । द्रविणम् । वाजः । अस्मे ॥५२॥

अद्य अस्मिन् यागदिने, विश्वे मरुतः सुखकराः भवन्तु । तथा विश्वे ऊती ऊतयः रक्षकाः भवन्तु । विश्वे अग्नयश्च समिद्धाः भवन्तु । नः अस्मान्, विश्वे देवाः, अवसा रक्षणेन निमित्तेन गमन्तु । अस्मे अस्मासु विश्वं द्रविणं कृत्स्नमपि धनं विश्वं वाजः व्रीहियवादिरूपं सर्वमपि अन्नम् अस्तु । एषा पूर्वमपि व्याख्याता ( अ० २०।६ ) । [—अ० ३२।४।९]

**विश्वे देवाश्शृणुतेमꣳ हवम्मे ये अन्तरिक्षे य उपद्यविष्ठ ।**
**ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॥५३॥**

विश्वे । देवाः । शृणुत । इमम् । हवम् । मे । ये । अन्तरिक्षे । ये । उप । द्यवि । स्थ ॥
शिष्टं स्पष्टम् ॥५३॥

हे विश्वे ! सर्वे देवाः, इमं हवं शृणुत । विश्वे इत्युक्तम् । तेषां विभागमाह । ये अन्तरिक्षे स्थ ये वा उपद्यवि द्युलोके स्थ, ये च अग्निजिह्वाः अग्निमुखेन हविर्भोक्तारः, उत वा अथ वा, यजत्राः यष्टव्याः ते सर्वेऽपि अस्मिन् बर्हिषि, आसद्य मादयध्वं हविषा तृप्ता भवत[१] ।
[—अ० ३२।४।१०]

**देवेभ्यो हि प्रथमँय्यज्ञियेभ्योऽमृतत्वꣳ सुवसि भागमुत्तमम् ।**
**आदिद्दामानꣳ सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥५४॥**

१. भवन्तु उ० म्यु० ।

देवेभ्यः । हि । प्रथमम् । यज्ञियेभ्यः । अमृतत्वम् । सुवसि । भागम् । उत्तमम् ॥
आत् । इत् । दामानम् । सवितः । वि । ऊर्णुषे । अनूचीना । जीविता । मानुषेभ्यः ॥५४॥

हे सवितः ! त्वं प्रथमं यज्ञियेभ्यः यागार्हेभ्यः देवेभ्यः अमृतत्वसाधनम्, अत एव उत्तमं भागं सुवसि हि प्रेरयसि खलु। देवानाम् अग्निहोत्रादिगतहविर्भागप्राप्तेः सूर्योदयाधीनत्वात् । आदित् देवहविःप्रेरणानन्तरमेव हे सवितः ! दामानं हविर्दातारं यजमानम्, व्यूर्णुषे विशेषेण आमोदयसि अभिमतैः । पश्चात् मानुषेभ्यः प्रजाभ्यः, अनूचीना अन्वगच्छनानि, जीविता जीवितानि व्यूर्णुषे ।
[—अ० ३२।४।११]

इति चतुर्थोऽनुवाकः ।

## [ पञ्चमोऽनुवाकः ५५–६९ ]

इत्थं चतुर्भिरनुवाकैः अग्निष्टुदादीनां चतुर्णाम् अह्नां पुरोरूचः अभिहिताः। एतावता सर्वमेधः समाप्तः । अथ द्वाभ्याम् अनुवाकाभ्याम् अनारभ्याधीतौ द्वौ यौ ऋग्गणौ अभिधीयेते, तत्र प्रथमगणे सप्तदश पुरोरूचः । तत्र प्रथमा—

**प्र वायुमच्छा बृहती मनीषा बृहद्रयिँ विश्ववारꣳ रथप्राम् ।**
**द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥५५॥**

प्र । वायुम् । अच्छ । बृहती । मनीषा । बृहत् । रयिम् । विश्ववारम् । रथप्राम् ॥
द्युतद्यामा । नियुतः । पत्यमानः । कविः । कविम् । इयक्षसि । प्र । यज्यो ॥५५॥

बृहती महती, मनीषा अस्मदीया स्तुतिः, वायुम् अच्छ आभिमुख्येन प्रगच्छतु, उपसर्गश्रुतेः योग्यक्रियाध्याहारः । कीदृशं वायुम् ? बृहद्रयिं महाधनम्, विश्ववारं विश्वैः वरणीयम्, रथप्रां रथस्य आत्मीयस्य पूरयितारम् । अथ प्रत्यक्षस्तुतिः, हे प्रयज्यो ! प्रकर्षेण यष्टव्य वायो, द्युतद्यामा प्रदीप्तयानः, नियुतः स्वकीयरथयोज्याः वडवाः पत्यमानः अभिगच्छन् यद् वा पत्यतिः ऐश्वर्यकर्मा, तासां वडवानाम् ईश्वरः, कविः क्रान्तदर्शी, एवंभूतस्त्वम्, कविं मेधाविनं स्तोतारम्, इयक्षसि धनेन पूजयसि । [—अ० ३२।५।१]

**इन्द्रवायू इमे सुता उप प्रयोभिरागतम् ।**
**इन्दवो वामुशन्ति हि ॥५६॥**

इन्द्रवायू । इमे । सुताः । उप । प्रयोभिः । आ । गतम् ।।
इन्दवः । वाम् । उशन्ति । हि ॥५६॥

व्याख्याता एषा ( अ० ७।७ ) । [—अ० ३२।५।२]

**मित्रꣳ हुवे पूतदक्षँ वरुणञ्च रिशादसम् ।**
**धियङ्घृताचीꣳ साधन्ता ॥५७॥**

मित्रम् । हुवे । पूतदक्षम् । वरुणम् । च । रिशादसम् ॥
धियम् । घृताचीम् । साधन्ता ॥५७॥

पूतदक्षम्, पूतः पवनः, तत्र दक्षं मित्रम् अहरभिमानिनं देवम्, हुवे आह्वयामि, तथा रिशादसम्, रिशन्ति हिंसन्तीति रिशाः हिंसकाः, तान् अत्तीति रिशादाः, तं वरुणं च हुवे । घृताचीम्, घृतम् अञ्चतीति घृताची, तादृशीं धियं घृतादिसाधनकं कर्म, साधन्ता साधयन्तौ मित्रावरुणौ हुवे । [—अ० ३२।५।३]

**दस्रा॑ युवाक॑वस्सु॒ता नास॑त्या वृ॒क्तब॑र्हिषः ।**
**आया॑तꣳ रुद्रवर्तनी तम्प्र॒त्नथा॒यँव्वे॒नश्चोदयत् ॥५८॥**

दस्रा । युवाकवः । सुताः । नासत्या । वृक्तबर्हिषः ॥
आ । यातम् । रुद्रवर्तनी । तम् । प्रत्नथा । अयम् । वेनः । चोदयत् ॥५८॥

दस्रा शत्रूणां हिंसकौ, नासत्या असत्यरहितौ । "सत्यावेव नासत्यावित्यौर्णवाभः"(नि०, अ० ६। खं० १३।५१ ) । तादृशौ हे अश्विनौ ! युवाकवः युवां कामयमानाः वृक्तबर्हिषः हविरासादनाय आस्तीर्णदर्भाः । सुताः सोमाः अभिषुताः, अतः आयातम् आगच्छतम् । हे रुद्रवर्तनी ! दुःखद्रावणमार्गौ । "तं प्रत्नथा, अयं वेनश्चोदयत्" इति प्रतीकान्ता । [—अ० ३२।५।४]

अथ सप्तमी—

**वि॒दद्यदी॑ स॒रमा॑ रु॒ग्णमद्रे॒र्महि॒ पाथः॑ पू॒र्व्यꣳ स॒ध्र्य॑क्कः ।**
**अग्र॑न्नयत्सु॒पद्यक्ष॑राणा॒मच्छा॒ रवं॑ प्रथ॒मा जा॑न॒ती गा॑त् ॥५९॥**

विदत् । यदि । सरमा । रुग्णम् । अद्रेः । महि । पाथः । पूर्व्यम् । सध्र्यक् । कः ॥
अग्रम् । नयत् । सुपदी । अक्षराणाम् । अच्छ । रवम् । प्रथमा । जानती । गात् ॥५९॥

यदि यदा, सरमा इन्द्रेण गवाम् अयनार्थं प्रेरिता, 'सरमा' नाम देवशुनी, अद्रेः रुग्णं भग्नं द्वारं विदत् अलभत, तदानीम् इन्द्रः महि महत् पूर्व्यं पूर्वं प्रेषणकाले अन्नादिनीं ते प्रजां च करिष्यामीति सध्र्यक् इतरैः अपि भोज्यैः सध्रीचीनं पाथः गव्यादिलक्षणम् अन्नं कः अकार्षीत् तस्यै दत्तवान् । ततः सुपदी शोभनपादयुक्ता सा सरमा अक्षराणां क्षयरहितानां गवाम् अग्रं प्रान्तं नयत् प्राप्नोत् । कुत इत्यत आह—यतः रवं तेषां हम्भारवम्, प्रथमा प्रथमं जानती सती अच्छ शब्दाभिमुख्येन अगात् । [—अ० ३२।५।५]

**न॒हि स्पश॒मवि॑दन्न॒न्यम॒स्माद्वै॑श्वान॒रात्पु॒र ए॒तार॑मग्नेः ।**
**एमे॑नमवृधन्न॒मृता॒ अम॑र्त्यँव्वैश्वान॒रङ्क्षैत्र॑जित्याय दे॒वाः ॥६०॥**

नहि । स्पशम् । अविदन् । अन्यम् । अस्मात् । वैश्वानरात् । पुरः । एतारम् । अग्नेः ॥
आ । ईम् । एनम् । अवृधन् । अमृताः । अमर्त्यम् । वैश्वानरम् । क्षैत्रजित्याय । देवाः ॥६०॥

स्पशशब्दः प्राणिवचनः । अस्मात् वैश्वानराद् अग्नेः अन्यं पुरः एतारं पुरः अग्रतः सर्वकार्येभ्यः अग्रतः एतारं गन्तारं परमात्मानम्, 'स्पश' इति प्राणिनः उच्यन्ते । एकवचनम् अविवक्षितम् । नहि

प्राणिनः अविदन् नैवमेनं जानन्ति, न तु वैश्वानरात् अन्यमपि साक्षिणं परमात्मानं सर्वान्तर्यामिणं प्राणिनः जानन्ति इत्यर्थः। वस्तुत एवं विवेचितो वैश्वानरः एव सर्वेषाम् ईश्वरः इत्याह—अमर्त्यं मरणविरोधिनम् एनं सर्वेषां प्रत्यक्षम् इव, क्षैत्रजित्याय महाविधृत्यन्तं क्षेत्रं शरीरं तत्सम्बन्धी क्षैत्रः, सर्वानर्थमूलः अहङ्कारः तस्य जित्याय तस्य जित्यै, छान्दसं पदम्, देवाः सात्त्विकाः अमृताः मरणधर्मरहिताः, देवाः अवृधन् सर्वोपायपरित्यागेन आत्मत्वेन अवर्धयन् इत्यर्थः। [—अ० ३२।५।६]

उग्रा विघनिना मृध इन्द्राग्नी हवामहे ।
ता नो मृळात ईदृशे ॥६१॥

उग्रा । वि । घनिना । मृधः । इन्द्राग्नी । हवामहे ॥
ता । नः । मृडातः । ईदृशे ॥६१॥

उग्रा उद्गूर्णबलौ अत एव मृधः शत्रून् विघनिना विघनिनौ विशेषेण हतवन्तौ इन्द्राग्नी, हवामहे आह्वयामहे। तौ च इन्द्राग्नी ईदृशे अस्मिन् संग्रामे, नः अस्मान्, मृडातः सुखयताम्, यद् वा मृडतिः उपदयाकर्मा, नः अस्माकम्, मृडातः उपदयां कुरुताम्। [—अ० ३२।५।७]

उपास्मै गायता नरः पवमानायेन्दवे ।
अभि देवाँ२ इयक्षते ॥६२॥

उप । अस्मै । गायत । नरः । पवमानाय । इन्दवे ॥
अभि । देवान् । इयक्षते ॥६२॥

हे नरः नेतारः ! ऋत्विजः उद्गातृप्रमुखाः, अस्मै पवमानाय दशापवित्रेण पूयमानाय, इन्दवे रसरूपाय सोमाय, उपगायत उपेत्य गानं कुरुत। पुनः कीदृशाय इन्दवे ? देवान् इन्द्रादीन् इयक्षते अभियष्टुम् इच्छते। [—अ० ३२।५।८]

ये त्वाहिहत्ये मघवन्नवर्धन्ये शाम्बरे हरिवो ये ग इष्टौ ।
ये त्वा नूनमनु मदन्ति विप्राः पिबेन्द्र सोमं॒ सगणो मरुद्भिः ॥६३॥

ये । त्वा । अहिहत्ये । मघवन् । अवर्धन् । ये । शाम्बरे । हरिवः । ये । गो । इष्टौ ॥
ये । त्वा । नूनम् । अनु । मदन्ति । विप्राः । पिब । इन्द्र । सोमम् । सगणः । मरुद्भिः ॥६३॥

हे मघवन् ! इन्द्र, अहिहत्ये वृत्रहननरूपे कर्मणि, त्वा त्वाम्, अवर्धन् बलदानेन वर्द्धितवन्तः। हे हरिवः ! हरिवन्[1] शाम्बरे शम्बरवधसम्बन्धिनि युद्धे त्वाम् अवीवृधन्। तथा ये च मरुतः, ग इष्टौ पण्यसुरोपहृतानां गवाम् इष्टौ, त्वाम् अवीवृधन्। ये च विप्राः मेधाविनः नूनमिदानीं त्वाम्, अनुमदन्ति मोदयन्ति, तैः मरुद्भिः सगणः सन् इमं सोमं पिब। [—अ० ३२।५।९]

जनिष्ठा उग्रस्सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः ।
अवर्धन्निन्द्रम्मरुतश्चिदत्र माता यद्वीरन्दधनद्धनिष्ठा ॥६४॥

1. ये च इत्यादिः।

जनिष्ठाः । उग्रः । सहसे । तुराय । मन्द्रः । ओजिष्ठः । बहुलाभिमानः ॥
अवर्धन् । इन्द्रम् । मरुतः । चित् । अत्र । माता । यत् । वीरम् । दधनत् । धनिष्ठा ॥६४॥

यः इन्द्रः, जनिष्ठा अतिशयेन जन्मवान्, सहसे बलवते, तुराय त्वरणवते संग्रामाय तदर्थम् उग्रः उद्गूर्णबलः, मन्द्रः मदनीयः, ओजिष्ठः अतिशयेन ओजस्वी, बहुलाभिमानः प्रवृद्धाभिमानयुक्तः मनस्वी इत्यर्थः । तम् इन्द्रं मरुतश्चित् मरुतोऽपि अत्र संग्रामे[1] अवर्द्धयन् । यद् वीरं शत्रूणां विशेषेण ईरयितारम् इन्द्रं धनिष्ठा इन्द्राख्यातिशयधनयुक्ता माता इन्द्रमाता अदितिः दधनत् धारितवती । [—अ० ३२।५।१०]

**आ तू न इन्द्र वृत्रहन्नस्माकमर्धमागहि ।**
**महान्महीभिरूतिभिः ॥६५॥**

आ । तु । नः । इन्द्र । वृत्रहन् । अस्माकम् । अर्धम् । आ । गहि ॥
महान् । महीभिः । ऊतिभिः ॥६५॥

हे वृत्रहन् ! वृत्राणां शत्रूणां हिंसक, इन्द्र महान् त्वम्, नः अस्माकम्, अर्धं समीपम्, महीभिः महतीभिः, ऊतिभिः रक्षणाभिः सह आ तु तूर्णम्[2] आगच्छ । [—अ० ३२।५।११]

**त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।**
**अशस्तिहा जनिता विश्वतूरसि त्वन्तूर्य तरुष्यतः ॥६६॥**

त्वम् । इन्द्र । प्रतूर्तिषु । अभि । विश्वाः । असि । स्पृधः ॥
अशस्तिहा । जनिता । विश्वतूः । असि । त्वम् । तूर्य । तरुष्यतः ॥६६॥

हे इन्द्र ! प्रतूर्तिषु प्रकृष्टहिंसात्मकेषु संग्रामेषु विश्वाः स्पृधः सर्वान् स्पर्धकान् शत्रून् अभ्यसि अभिभवसि । शत्रून् प्रति वा समर्थो भवसि । हे इन्द्र ! तरुष्यतः तरितुम् इच्छतः यजमानस्य, अशस्तिहा अशस्तेः निन्दकस्य शत्रोः हन्ता असि । तथा जनिता फलस्य उत्पादयिता असि । हे तूर्य ! त्वरणीय इन्द्र त्वम् विश्वतूः विश्वव्यापारे त्वरयिता असि । [—अ० ३२।५।१२]

**अनु ते शुष्मन्तुरयन्तमीयतुः क्षोणी शिशुन्न मातरा ।**
**विश्वास्ते स्पृधश्श्नथयन्त मन्यवे वृत्रँय्यदिन्द्र तूर्वसि ॥६७॥**

अनु । ते । शुष्मम् । तुरयन्तम् । ईयतुः । क्षोणी । शिशुम् । न । मातरा ॥
विश्वाः । ते । स्पृधः । श्नथयन्त । मन्यवे । वृत्रम् । यत् । इन्द्र । तूर्वसि ॥६७॥

हे इन्द्र ! ते तव, शुष्मं बलम्, तुरयन्तं शत्रून् त्वरयन्तं हिंसन्तं वा, एतद् बलविशेषणम् । क्षोणी क्षोण्यौ द्यावापृथिव्यौ शिशुं मातरा पितरौ इव, अनु ईयतुः अनुगच्छतः । किं च यत् यदा वृत्रं महान्तं तूर्वसि हिंससि तदानीम् एव, मन्यवे क्रोधाय, ते तुभ्यं षष्ठयर्थे चतुर्थी, मन्युवतस्तव, विश्वाः स्पृधः सर्वेऽपि शत्रवः श्नथयन्त अग्रे स्वयमेव अहिंसका अभवन् । [—अ० ३२।५।१३]

---

१. अवर्धन् इत्यादि । २. आगहि इत्यादि ।

यज्ञो देवानाम्प्रत्येति सुम्नमादित्यासो भवता मृळयन्तः ।
आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासत् ॥६८॥

यज्ञः । देवानाम् । प्रति । एति । सुम्नम् । आदित्यासः । भवत । मृडयन्तः ॥
आ । वः । अर्वाची । सु । मतिः । ववृत्यात् । अंहोः । चित् । या । वरिवोवित्तरा । असत् ॥ ६८ ॥

व्याख्याता एषा ( अ० ८।३ ) । [—अ० ३२।५।१४]

अदब्धेभिस्सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परि पाहि नो गयम् ।
हिरण्यजिह्वस्सुविताय नव्यसे रक्षा माकिर्नो अघशꣳस ईशत ॥६९॥

अदब्धेभिः । सवितः । पायुभिः । त्वम् । शिवेभिः । अद्य । परि । पाहि । नः । गयम् ॥
हिरण्यजिह्वः । सुविताय । नव्यसे । रक्ष । माकिः । नः । अघशंसः । ईशत ॥ ६९ ॥

हे सवितः ! देव त्वम्, अदब्धेभिः अहिंसकैः अत एव शिवेभिः शिवैः मङ्गलतरैः, पायुभिः रक्षणैः, नः गयम् अस्मदीयं गृहम्, परिपाहि परितः रक्ष । किं च हिरण्यजिह्वः हिरण्यवत् रमणीय-ज्वालः अग्निः तदात्मक इत्यर्थः । अथवा सत्यवाक् । नव्यसे नुत्याय स्तुत्याय, सुविताय सुष्ठु व्याप्ताय धनाय, रक्ष पालय । नः अस्माकम्, अघशंसः अघस्य पापस्य शंसकः शत्रुः माकिः ईशत शक्तः मैव भूत् । [—अ० ३२।५।१५]

इति पञ्चमोऽनुवाकः ।

[ षष्ठोऽनुवाकः ७०—८४ ]

षष्ठेऽनुवाकेऽपि अनारभ्याधीताः कस्यचित् पुरोऋग्गणस्य मन्त्रा उच्यन्ते । तत्र प्रथमा—

प्र वीरया शुचयो दद्रिरे वामध्वर्युभिर्मधुमन्तस्सुतासः ।
वह वायो नियुतो याह्यच्छा पिबा सुतस्यान्धसो मदाय ॥७०॥

प्र । वीरया । शुचयः । दद्रिरे । वाम् । अध्वर्युभिः । मधुमन्तः । सुतासः ॥
वह । वायो । नियुतः । याहि । अच्छ । पिब । सुतस्य । अन्धसः । मदाय ॥ ७० ॥

हे वायो ! वीरया वीराय विविधमीरयित्रे "सुपां सुलुक्" ( पा० अ० ७।१।३९ ) इति चतुर्थ्या याजादेशः । वां ते इत्यर्थः । व्यत्ययेन द्विवचनम् । केवलं वायोरेव संबोध्यत्वात् तदर्थं शुचयः शुद्धाः पूताः, मधुमन्तः माधुर्योपेताः, सुतासः अभिषुताः सोमाः, अध्वर्युभिः सम्पादिताः इत्यर्थः । अतो हे वायो ! नियुतः एतत्संज्ञकान् तव अश्वान्, वह रथे प्रापय । अच्छ अस्मद् यज्ञम् अभिलक्ष्य, याहि अभिगच्छ । अभिगत्य च सुतस्य अभिषुतस्य अन्धसः सोमरूपस्य अन्नस्य, कर्मणि षष्ठी अभिषुतं सोमं पिब । किमर्थम् ? मदाय । [—अ० ३२।६।१]

गाव उपावतावतम्मही यज्ञस्य रप्सुदा ।
उभा कर्णा हिरण्यया ॥७१॥

व्याख्याता एषा ( अ० ३२।१९ ) ७१ । [—अ० ३२।६।२]

काव्यंयोरा जानेषु क्रत्वा दक्षस्य दुरोणे ।
रिशादसा सधस्थ आ ॥ ७२ ॥

काव्ययोः । आ । जानेषु । क्रत्वा । दक्षस्य । दुरोणे ॥
रिशादसा । सधस्थे । आ । ॥ ७२ ॥

आजानेषु देवेषु मध्ये, काव्ययोः स्तुत्ययोः युवयोः[1] अर्थाय क्रत्वा कर्मणा निमित्तभूतेन, दक्षस्य, कर्मसु प्रवृद्धस्य यजमानस्य, दुरोणे यागगृहे तत्रापि सधस्थे सधस्थाने वेद्याम्, रिशादसा शत्रूणा हिंसकौ आसीदतम् इति शेषः । [—अ० ३२।६।३]

दैव्यां अध्वर्यू आगंतꣳ रथेन सूर्यंत्वचा ।
मध्वां यज्ञꣳ समञ्जाथे ।
तम्प्रत्नथायंव्वेनश्चोदयत् ॥ ७३ ॥

व्याख्याता एषा ( अ० ३२।३३ ) । "तं प्रत्नथा" इति पूर्वं व्याख्याता ( अ० ७।११ ) । [—अ० ३२।६।४]

तिरश्चीनो वि ततो रश्मिरेषामधस्स्विदासीदुपरि स्विदासीत् ।
रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥ ७४ ॥

तिरश्चीनः । वि । ततः । रश्मिः । एषाम् । अधः । स्वित् । आसीत् । उपरि । स्वित् । आसीत् ॥
रेतोधाः । आसन् । महिमानः । आसन् । स्वधा । अवस्तात् । प्रयतिः । परस्तात् ॥७४॥

रश्मिः सूर्यरश्मिः प्रकाशमानः कश्चित् स्वयंप्रकाशः चैतन्यपदार्थः, एषां भूतभौतिकरूपाणां जगद्वस्तूनां मध्ये, तिरश्चीनः तिर्यग् वर्तमानः, विततः सर्वतः व्याप्तः सः चैतन्यरूपः परमात्मा, एषां परमार्थानां मध्ये भागे अवस्थितः । किं वा उपरि भागे, स्विच्छब्दः विकल्पपक्षद्वय-सूचनार्थः । अयमभिप्रायः—स्वयंप्रकाशः चैतन्यपदार्थः सर्वेषां भूतानां मध्ये पर्यालोच्यमानः दीर्घतन्तु-वत् तिर्यग्भूतः व्याप्य अवभासते, अधः पर्यालोच्यमानः तत्रापि अवभासते, उपरि पर्यालोच्यमानः तत्रापि अवभासते । तस्माद् अधः ऊर्ध्वं मध्ये अवभासमानत्वाद् एकत्रैव अवस्थितः इति वक्तुम-शक्यः । यथा घटस्य उपादानभूतः मृत्पदार्थः घटस्य अधऊर्ध्वमध्यभागेषु सर्वेषु अनुवर्तते एवं तत्तदुपादानानि तत्तत्कार्येषु व्याप्यैव वर्त्तन्ते । एवम् अयं परमात्माऽपि विश्वकार्येषु व्याप्य वर्त्तमानत्वाद् ऊर्द्ध्वम् अधः आसीत् इत्येव वक्तुमशक्य इति सर्वत्र एते पदार्था भूतभौतिकरूपाः पूर्वोक्तस्य विततरश्मिरूपस्य स्वयंप्रकाशस्य चैतन्यस्य रेतोधाः साररूपधारिणः आसन् । चिदेक-रसस्य हि वस्तुनः सद्रूपसारं तच्च सर्वोपधार्य्यान् धारयति, अस्ति इत्येवं सद्रूपेणैव सर्वेषाम् अवभासमानत्वात् । चैतन्यस्य सद्रूपधारिणः सर्वे महिमानो गिरिनद्यादिरूपधारिणो महान्तः आसन् । स्वधा स्वधाशब्दवाच्या मायाप्रकृत्यादिशब्देन अभिधीयमाना पारमेश्वरी शक्तिः, अधस्तात् अधः

१. मित्रावरुणयोरिति शेषः ।

मन्दकारणम्, प्रयतिः सा शक्तिः प्रयतते अस्मिन् परमात्मनि सोऽयं शक्तिप्रयत्नाधारः परमात्मा प्रयतिः। स च परस्तात् परम् उत्तमकारणम्। तौ एतौ सा शक्तिः परमात्मा च सर्वजगत्कारणभूतौ प्रकृतिपुरुषौ इति शास्त्रेषु व्यपदिश्यते। [—अ० ३२।६।५]

आ रोदसी अपृणदा स्वर्महज्जातँय्यदेनमपसो अधारयन्।
सो अध्वराय परिणीयते कविरत्यो न वाजसातये चनोहितः॥ ७५॥

आ। रोदसी। अपृणत्। आ। स्वः। महत्। जातम्। यत्। एनम्। अपसः। अधारयन्॥
सः। अध्वराय। परि। नीयते। कविः। अत्यः। न। वाजसातये। चनोहितः॥ ७५॥

अयम् अग्निः, रोदसी द्यावापृथिव्यौ, आ सर्वतः अनन्तरमेव वा, अपृणत् अपूरयत् व्याप्तवान्। अथ महत् स्वरक्षणसाधनम् अन्तरिक्षम् अपृणत्। कदा इत्युच्यते, जातं मद्र्दनेन उत्पन्नम् एनम् उक्तमहानुभावम् अग्निम् अपसः कर्माणि तद्वन्तः अध्वर्यवः, यद् यदा अधारयन् धारितन्वतः, सः अग्निः कविः क्रतुप्रज्ञः, अध्वराय यागार्थं परिणीयते। किमर्थम्, वाजसातये अन्नलाभाय। कीदृशः? चनोहितः अन्नस्य हितकारी तत्साधयिता इत्यर्थः। अत्र दृष्टान्तः, अत्यो न अश्व इव, अन्नादिसाधकः अश्वः वाजसातये संग्रामस्य अन्नस्य लाभाय, यथा परिणीयते तद्वत्।
[—अ० ३२।६।६]

उक्थेभिर्वृत्रहन्तमा या मन्दाना चिदा गिरा।
आङ्गूषैराविवासतः॥ ७६॥

उक्थेभिः। वृत्रहन्तमा। या। मन्दाना। चित्। आ। गिरा।
आङ्गूषैः। आ। विवासतः॥ ७६॥

या यौ इन्द्राग्नी, उक्थेभिः शस्त्रैः निमित्तभूतैः वृत्रहन्तमा यजमानानां पापस्य अतिशयेन हन्तृरूपौ यौ, आ सर्वतः, मन्दाना चित्तमोदमानौ अपि भवतः। तौ आङ्गूषैः आघोषैः यागैः, "आङ्गूषः स्तोम आघोष" इसि निरुक्तम् ( नि० अ० ५। खं० ११।४४ )। तैः साधनैः यजमानम् आविवासतः फलैः परिचरतः। [—अ० ३२।६।७]

उप नस्सूनवो गिरश्शृण्वन्त्वमृतस्य ये।
सुमृळीका भवन्तु नः॥ ७७॥

उप। नः। सूनवः। गिरः। शृण्वन्तु। अमृतस्य। ये॥
सु। मृडीकाः। भवन्तु। नः॥ ७७॥

अमृतस्य अमरणधर्मकस्य प्रजापतेः, ये सूनवः अपत्यभूताः देवाः यागार्हास्ते, नः अस्माकम्, गिरः स्तुतीः उपेत्य शृण्वन्तु। श्रुत्वा च नः अस्माकं सुमृडीकाः सुष्ठु सुखयितारो भवन्तु।
[ —अ० ३२।६।८ ]

ब्रह्माणि मे मतयश्शꣳ सुतासश्शुष्म इयर्ति प्रभृतो मे अद्रिः।
आ शासते प्रति हर्यन्त्युक्थेमा हरी वहतस्ता नो अच्छ॥ ७८॥

ब्रह्माणि । मे । मतयः । शम् । सुतासः । शुष्मः । इयर्ति । प्र । भृतः । मे । अद्रिः ॥
आ । शासते । प्रति । हर्यन्ति । उक्था । इमा । हरी । वहतः । ता । नः । अच्छ ॥ ७८ ॥

हे इन्द्र ! त्वां मे मम ब्रह्माणि परिवृत्तानि कर्माणि मतयः स्तुतयश्च सम्यक् यथा भवति तथा आशासते, तथा सुतासः अभिषुताः सोमाः अपि, किं च शुष्मः बलानि मे अद्रिः। अभिषव-साधनः ग्रावा त्वदर्थम् इयर्ति गच्छति। सोमः अभिषुतो भूत्वा त्वामेव, तथा मे उक्था उक्थानि शस्त्राणि प्रत्येकं त्वामेव, हर्यन्ति कामयन्ते। अतस्त्वाम्, नः अस्माकं तानि ब्रह्मादीनि अच्छ अभि-प्राप्तुम् इमा हरी इमौ अश्वौ वहतः। [ —अ० ३२।६।९ ]

अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ२ अस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥ ७९ ॥

अनुत्तमम् । आ । ते । मघवन् । नकिः । नु । न । त्वावान् । अस्ति । देवता । विदानः ॥
न । जायमानः । नशते । न । जातः । यानि । करिष्या । कृणुहि । प्रवृद्ध ।

हे मघवन् ! इन्द्र, ते तव, आ सर्वतः सर्वत्र, अनुत्तमम् अनोदनीयम् अबाध्यं नु निश्चये, नकिः नैवास्तीति शेषः। तव महिम्नः दुःसहत्वाद् इति भावः। किं च विदानः जानन् सर्वज्ञः त्वावान् त्वत्सदृशः देवता देवः नास्ति। अपि च हे प्रवृद्ध देशकालाद्यनवच्छेदेन स्वमहिम्ना प्रवृद्धस्त्वं यानि करिष्या करणीयानि कृणुहि करोषि, तानि जायमानः इदानीम् उत्पद्यमानः न नशते, नशतिः व्याप्ति-न व्याप्नोति। तथा जातः पूर्वम् उत्पन्नः न नशते। त्वमेव सर्वस्य अतिशयिता, त्वमेव सर्वज्ञः कर्मा, त्वया कृतं कार्यं देवासुरमनुष्येषु कश्चिदपि व्याप्तुमपि न शक्नोतीति। [—अ० ३२।६।१० ]

तदिदास भुवनेषु ज्येष्ठँ यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो निरिणाति शत्रूननु यँ विश्वे मदन्त्यूमाः ॥ ८० ॥

तत् । इत् । आस । भुवनेषु । ज्येष्ठम् । यतः । जज्ञे । उग्रः । त्वेषनृम्णः ॥
सद्यः । जज्ञानः । नि । रिणाति । शत्रून् । अनु । यम् । विश्वे । मदन्ति । ऊमाः ॥ ८० ॥

अत्र इन्द्रः स्वकारणस्तुत्यापि स्वयं स्तूयते। तदित् तदेव कारणं वस्तु भुवनेषु भूतजातेषु गुणैः प्रशस्यम् आसीत्। कथं तस्यैव प्रशस्तत्वम् इति तत्राह—यतो यस्मात् कारणाद् उग्रः उद्गूर्णबलः त्वेषनृम्णः दीप्तबलः दीप्तधनो एवं महानुभावः इन्द्रः जज्ञे उत्पन्नः। यतः इति यच्छब्दप्रतिनिर्देशो वा द्रष्टव्यः। तस्यैव उग्रत्वादिः कुत इत्याह—यो जज्ञानः उत्पन्नमात्रः तान् सद्यस्तदानीम् एव शत्रून् निरिणाति वृत्रादीन् हिनस्ति। जगद्रक्षणार्थं यं च विश्वे सर्वे अपि, ऊमाः अवितारः रक्षितारः अन्ये देवाः अनुमदन्ति, स इन्द्रः यतो जज्ञे तत् इत् ज्येष्ठम् आस इति सम्बन्धः। [—अ० ३२।६।११]

इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाश्शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥ ८१ ॥

इमाः । उ । त्वा । पुरुवसो । गिरः । वर्धन्तु । याः । मम ॥
पावकवर्णाः । शुचयः । विपश्चितः । अभि । स्तोमैः । अनूषत ॥ ८१ ॥

हे पुरुवसो प्रभूतधन इन्द्र, इमा गिरः, त्वा त्वाम्, वर्धन्तु वर्धयन्तु। या मम सम्बन्धिन्यः पावकवर्णाः नियमेन उच्चार्यमाणत्वाद् अग्निसमानवर्णाः। अत एव शुचयः शुद्धाः विपश्चितः, ज्ञानवतः ज्ञानवत्यः च गिरः स्तोमैः स्तोत्रैः अभ्यनूषत स्तूयन्ते ताः वर्धन्तु अथवा याः पावकवर्णाः गिरः शुचयः विपश्चितः स्तोतारः स्तोमैः त्रिवृदादिभिः अभ्यनूषत ता वर्धयन्तु। [—अ० ३२।६।१२]

**यस्यायँविश्व आर्यो दासश्शेवधिपा अरिः।**
**तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयिः ॥ ८२ ॥**

**यस्य। अयम्। विश्वः। आर्यः। दासः। शेवधिपाः। अरिः॥**
**तिरः। चित्। अर्ये। रुशमे। पवीरवि। तुभ्य। इत्। सः। अज्यते। रयिः॥ ८२॥**

यस्य इन्द्रस्य, अयं विश्वः प्रतीयमानः प्रपञ्चः वर्णाश्रमादिलक्षणः आर्यः अरणीयः दासः उपक्षीणः यस्य शेवधिपाः शेवधिः निधिः, यज्ञाख्यस्य निधेः पालयिता। अरिः शत्रुभ्यः अग्निरेव इति शेषः। कथं शेवधित्वम् इत्युच्यते, अर्ये उक्तलक्षणे अग्नौ, रुशमे दीप्यमाने हिंसके वा, पवीरवि पावनं पविः वज्रं तस्य रव इव रवः यस्य सः पवीरवः, सः अस्य अस्तीति पवीरवी, तस्मिन् उक्तलक्षणे अग्नौ, सः प्रसिद्धो रयिः आज्यसोमादिलक्षणः, तुभ्येत् तुभ्यं त्वदर्थम् अपि अज्यते सिच्यते हूयते इत्यर्थः। अतस्तस्य शेवधित्वम्। [—अ० ३२।६।१३]

**अयꣳ सहस्रमृषिभिस्सहस्कृतस्समुद्र इव पप्रथे।**
**सत्यस्सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥ ८३ ॥**

**अयम्। सहस्रम्। ऋषिभिः। सहस्कृतः। समुद्रः। इव। पप्रथे॥**
**सत्यः। सः। अस्य। महिमा। गृणे। शवः। यज्ञेषु। विप्रराज्ये॥ ८३॥**

अयम् इन्द्रः सहस्रं सहस्रसंख्याकैः ऋषिभिः अतीन्द्रियार्थदर्शिभिः स्तोतृभिः सहस्कृतः सहसा बलेन उत्पादितः। स्तुत्या हि देवतायाः बलं वर्धते। स च एवं भूतः सन् समुद्र इव, पप्रथे प्रथितः विस्तीर्णः बभूव। अस्य च इन्द्रस्य सत्यः अवितथा सः प्रसिद्धः महिमा महत्त्वं शवः बलं च यज्ञेषु विप्रराज्ये राज्ञः कर्म राज्ये विप्राणां स्तोतॄणां च राज्ये स्तोत्रशस्त्रसङ्घे, गृणे स्तूयते।

[—अ० ३२।६।१४]

**अदब्धेभिस्सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परि पाहि नो गयम्।**
**हिरण्यजिह्वस्सुविताय नव्यसे रक्षा माकिर्नो अघशꣳस ईशत ॥ ८४ ॥**

व्याख्यातैषा ( अ० ३२।६९ )। [—अ० ३२।६।१५]

षष्ठोऽनुवाकः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्तक-श्रीवीरबुक्कणसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये द्वात्रिंशोऽध्यायः।



# अथ त्रयस्त्रिंशोऽध्यायः

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

[ प्रथमोऽनुवाकः १–२५ ]

द्वात्रिंशेऽध्याये सर्वमेधाङ्गभूताः पुरोऋचः चतुर्भिरनुवाकैः, ततः द्वाभ्यामनुवाकाभ्यामनारभ्याधीताः पुरोऋचश्चोक्ताः । ततस्त्रयस्त्रिंशेऽपि अनारभ्याधीताः पुरोऋचः अभिधीयन्ते । तत्र प्रथमानुवाके पञ्चविंशति मन्त्राः । तत्र प्रथममन्त्रमाह—

**यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति ।**
**दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनःशिवसङ्कल्पमस्तु ॥ १ ॥**

यत् । जाग्रतः । दूरम् । उत् । आ । एति । दैवम् । तद् । उ । सुप्तस्य । तथा । एव । एति ॥
दूरङ्गमम् । ज्योतिषाम् । ज्योतिः । एकम् । तत् । मे । मनः । शिवसङ्कल्पम् । अस्तु ॥१॥

मम मनः कल्याणस्वर्गादिफलसङ्कल्पमस्तु इत्याह–जाग्रतः, 'जागृ निद्राक्षये' जागरणदशापन्नस्य पुरुषस्य मे दैवम् आनन्दाभिव्यक्तिसाधनम्, "तद्वै दैवं मनो येनानन्दो भवत्यथो न शोचति" इति श्रुतेः । तादृशं यन्मनो दूरं दूरस्थानम् उदैति उद्गच्छति । जागरणदशायां दूरस्थेषु अपि इन्द्रियसंयुक्तेषु मनः प्रवर्त्तत इति भावः । सुप्तस्य स्वप्नद्रष्टुः पुरुषस्य, तदु उशब्दश्चार्थे । तच्च मनस्तथैवैति । यथा बाह्यान् दूरस्थान् अपि अर्थान् एति, एवं स्वप्नदशायां मनो वासनामयान् पदार्थान् एति । यद्वा, सुप्तस्य मनः चिरं प्राक्तनेन विद्यमानत्वेन आत्मा दूरशब्दवाच्यः स्वकारणभूतम् आत्मानम् अपि एति, तत्र लीनं भवतीत्यर्थः । दूरङ्गमम् अतीतानागतवर्तमानाव्यहितविप्रकृष्टादिस्वविषयं प्रतिगच्छत् इव । ज्योतिः स्वस्वविषयज्ञानसाधनानां श्रोत्रादीन्द्रियाणां ज्योतिर्व्यवहारहेतुत्वेन स्वयमपि ज्योतिरित्युच्यते । एवं सजातीयकारणनिरपेक्षं तदेवं विषयं मे मम क्षेत्रज्ञस्य सर्वव्यवहारोपाधिभूतं मनः शिवसङ्कल्पं, शिवानि कल्याणानि स्वर्गादिफलानि तत्साधनयागादयो वा तत् सङ्कल्पवद् भवतु, सर्वदा सूक्तक्रियैकरतं भवतु इत्यर्थः । यद्वा, शिवः आनन्दैकरूपः परमात्मा, तत्र ज्ञाननिष्ठं मनः अस्तु इत्यर्थः । [—अ० ३३।१।१]

**पितुन्नु स्तोषम्महो धर्माणन्तविषीम् ।**
**यस्य त्रितो व्योजसा वृत्रँविपर्वमर्दयत् ॥ २ ॥**

पितुम् । नु । स्तोषम् । महः । धर्माणम् । तविषीम् ॥
यस्य । त्रितः । वि । ओजसा । वृत्रम् । विपर्वम् । अर्दयत् ॥ २ ॥

उत्तरार्धं प्रथमं व्याख्येयम् । यस्यान्नस्य ओजसा बलेन त्रितः त्रिषु लोकेषु तनोतीति त्रितः, त्रैलोक्यैश्वर्यादिगुणैरतिविस्तृत इत्यर्थः । तादृशः इन्द्रः वृत्रमपि आवरकमसुरं विपर्वं गतोत्साहं

विच्छिन्नावयवं विअर्दयत् व्यर्दितवान् । 'अर्द हिंसायाम्' इति धातुः । तं पितुम्. पितुशब्दोऽन्नवाची । महः महत्सु । तकारस्य लोपः, लिङ्गस्य व्यत्ययो वा । तविषीम्, तविषीति बलनाम । महद्बलधर्माणम् । तस्य हेतुत्वेन धारकमित्यर्थः । तादृशमन्नं क्षिप्रं स्तोषं स्तौमि । 'ष्टुञ् स्तुतौ' इति धातुः । [—अ० ३३।१।२]

अन्विदनुमते त्वम्मन्यासै शञ्च नस्कृधि ।
क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषत् ॥ ३ ॥

अनु । इत् । अनुमते । त्वम् । मन्यासै । शम् । च । नः । कृधि ॥
क्रत्वे । दक्षाय । नः । हिनु । प्र । नः । आयूंषि । तारिषत् ॥ ३ ॥

हे अनुमते, "कलाहीने सानुमतिः पूर्णे राका निशाकरे" ( अमर०, का० १, कालव० ८ ) इति । एककलाहीना पौर्णमासी अनुमतिरित्युच्यते । एतन्नामिके देवते । त्वम्, 'इत्'शब्दः एवार्थः । अनुमन्यासै एव, अनुमते पूजितैव भवेः । किं च नः अस्माकं शं सुखं कुरु । तथा दक्षाय, स्वफलप्रदाने समर्थाय क्रत्वे यज्ञकर्मणे दक्षाय, 'दक्ष वृद्धौ' अभिवृद्धये च, नः अस्मान् हिनु, 'हि गतौ वृद्धौ च' गमय। तथा नः अस्माकम्, आयूंषि देहावस्थितहेतुभूतानि कालावयवलक्षणानि प्रतारिषत्, पुरुषव्यत्ययः । [—अ० ३३।१।३]

सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतम्प्रजान्देवि दिदिड्ढि नः ॥ ४ ॥

सिनीवालि । पृथुष्टुके । या । देवानाम् । असि । स्वसा ॥
जुषस्व । हव्यम् । आ । हुतम् । प्रजाम् । देवि । दिदिड्ढि । नः ॥ ४ ॥

या पूर्वा पौर्णमासी सा अनुमतिः, या उत्तरा सा राका । या पूर्वा अमावास्या सा सिनीवाली, या उत्तरा सा कुहूः । हे पृथुष्टुके प्रभूतस्तुतियुक्ते, हे सिनीवालि दृष्टचन्द्रा अमावास्या सिनीवालीत्युच्यते । तादृशी त्वं देवानां केषांचित् स्वसा भगिनी असि । यद्वा देवानाम् अग्न्यादीनां स्वसा प्रसारयित्री प्रापिका भवसि । तत् आहुतम् इज्याग्नौ सम्यग् युतं हव्यं पुरोडाशादिलक्षणं जुषस्व सेवस्व । किं च हे देवि द्योतमाने नः अस्माकं प्रजाम् अपत्यादिरूपां दिदिड्ढि, 'दिह उपचये' इति धातुः, उपचिनु प्रवर्द्धय इत्यर्थः । न केवलं यागादिकर्मणा आमुष्मिकं सम्पाद्यते किन्तु ऐहिकमिति भावः । [—अ० ३३।१।४]

पञ्च नद्यस्सरस्वतीमपि यन्ति सस्रोतसः ।
सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥ ५ ॥

पञ्च । नद्यः । सरस्वतीम् । अपि । यन्ति । सस्रोतसः ॥
सरस्वती । तु । पञ्चधा । सा । उ । देशे । अभवत् । सरित् ॥ ५ ॥

सस्रोतसः स्रोतोभिर्नदीभिः सहिताः पञ्च एतत्संख्याका गङ्गाद्याः प्रसिद्धा नद्यः सरस्वतीम् एतन्नामिकां नदीम्, अपियन्ति, सरस्वत्या सह ऐक्यं प्राप्नुवन्ति इत्यर्थः । चतस्रः, सा उ सैव सरस्वती

तु पञ्चधा उक्तप्रकारेण पञ्चधा पञ्चप्रकारा पञ्चमुखीत्यर्थः। देशे शोभने पुण्यकरे देशे सरिदभवत् भवति ॥ [—अ० ३३।१।५]

त्वम॑ग्ने प्र॒थ॒मो अङ्गि॑रा॒ ऋषि॑र्दे॒वो दे॒वाना॑मभवश्शि॒वस्सखा॑ ।
तव॑ व्र॒ते क॒वयो॑ विद्म॒नाप॑सोऽजायन्त म॒रुतो॒ भ्राज॑दृष्टयः ॥ ६ ॥

त्वम् । अग्ने । प्रथमः । अङ्गिराः । ऋषिः । देवः । देवानाम् । अभवः । शिवः । सखा ॥
तव । व्रते । कवयः । विद्मना । अपसः । अजायन्त । मरुतः । भ्राजदृष्टयः ॥ ६ ॥

हे अग्ने प्रथमः सर्वेषां देवानां मुख्यः यष्टव्यत्वेन सर्वेषां देवानाम् आदित्वेन वा [1]आदिमः। अङ्गिराः अङ्गिरोनामक ऋषिः अतीन्द्रियार्थदर्शी। "येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्" इति चैतरेये ( ऐ० ब्रा० ३।३४ ), देवः दीप्यमानः शिवः कल्याणकरस्त्वं देवानाम् इन्द्रादीनां सखा समानख्यानयुक्तः, हविःप्रदाने मित्रवत् उपकारी वा अभवः भवसि। कवयः क्रान्तदर्शिनः शब्दायमाना वा विद्मनापसः, 'अपस' इति कर्मनाम, विदितकर्माणः। यद्वा विद्मनापसः ज्ञानयुक्तकर्मवन्तः। भ्राजदृष्टयः ऋष्टिरिति आयुधविशेषः, दीप्यमानायुधविशेषाः, मरुतः एतन्नामका देवाः, तव व्रते आज्ञारूपे कर्मणि, अजायन्त सम्पन्नाः, त्वदधीना भवन्तीत्यर्थः। [—अ० ३३।१।६]

त्वन्नो॑ अग्ने॒ तव॑ देव पा॒युभि॑र्म॒घोनो॑ रक्ष त॒न्व॑श्च वन्द्य ।
त्रा॒ता तो॒कस्य॒ तन॑ये॒ गवा॑म॒स्यनि॑मेषं॒ रक्ष॑माण॒स्तव॑ व्र॒ते ॥ ७ ॥

त्वम् । नः । अग्ने । तव । देव । पायुभिः । मघोनः । रक्ष । तन्वः । च । वन्द्य ॥
त्राता । तोकस्य । तनये । गवाम् । असि । अनिमेषम् । रक्षमाणः । तव । व्रते ॥ ७ ॥

हे अग्ने ! हे देव द्योतमान, त्वं तव त्वदीयैः पायुभिः पालनैः देवैः सहकारिभिः, नः अस्माकम्, तन्वः तनूः अवयवसन्निवेशेन विस्तृतानि शरीराणि, रक्ष पालय। किं च हे वन्द्य सर्वैः स्तुत्य, मघोनः इन्द्रस्य शरीराणि च[2] शब्देन तत्प्रमुखाः सर्वे देवाः विवक्षिताः, तेषां शरीराणि हविःप्रदानादिना रक्ष। [3]तोकस्य [4]अस्मदीयस्य तनये, तनयशब्देन पौत्रः विवक्षितः। सुप्व्यत्ययः। तनयस्य कुलविस्तारिणः पौत्रादेः गवां गवादीनां पशूनां च अनिमेषं निरन्तरं त्राता रक्षिता असि, ततस्तव त्वदीये व्रते आज्ञारूपे कर्मणि सता त्वया रक्ष्यमाणोऽहं त्वामेव स्तौमि इति शेषः। [—अ० ३३।१।७]

उ॒त्ता॒नाया॒मव॑ भरा चिकि॒त्वान्त्स॒द्यः प्रवी॑ता॒ वृष॑णञ्जजान ।
अ॒रु॒षस्तू॑पो॒ रुश॑दस्य॒ पाज॒ इळा॑यास्पु॒त्रो व॒युने॑ऽजनिष्ट ॥ ८ ॥

उत्तानायाम् । अव । भर । चिकित्वान् । सद्यः । प्रवीता । वृषणम् । जजान ॥
अरुषस्तूपः । रुशत् । अस्य । पाजः । इळायाः । पुत्रः । वयुने । अजनिष्ट ॥ ८ ॥

हे अध्वर्यो चिकित्वान् अग्निमन्थनं जानानस्त्वम् उत्तानायाम् ऊर्ध्वयाम् अरण्याम्, अवभर अर्वाचीनमुखः सन् अग्निम् अरण्याः सकाशात् हर आहर। सद्यः तदानीमेव प्रवीता, सुपः आदादेशः।

---

१. प्रथमः उ० म्यु०। २. मघोन उ. म्यु.
३. किं च. उ. म्यु० ४. अपत्यस्य उ. म्यु.

प्रवीतो प्रकर्षण वीतिः हविर्भक्षणं देवानामागमनं वा यत्र स प्रवीतिर्यज्ञः तस्मिन्, वृषणम् अभीष्टफलानां सेचकम् अग्निम्, जजान यजमानो जनयामास। अस्य उत्पाद्यमानस्य अग्नेः अरुषस्तूपः आरोचमानज्वालासंघातः एव रुशत् आरोचमानम्, "रुशत् रोचतेः" (निरु. अ. २। खं. २०।१) इति यास्कः। पाजः 'पाज' इति बलनाम, बलम् अग्नेः दीप्तिरेव बलमित्यर्थः "तपूꣳष्यग्ने जुह्वा पतङ्गान्" इत्याम्नायात् ( यजुः, अ. १४।१० )। इलायां वेदिलक्षणायाः पृथिव्याः पुत्रः तत्र मथ्यमानत्वेन व्यवह्रियते। तादृशः अग्निः वयुने वयुनमिति प्रज्ञानाम तत्सहिते कर्मणि, अजनिष्ट प्रादुर्भूतः अभवत्। मन्त्रैः अनुस्मृत्य कर्म कर्तव्यमिति वचनात्। कर्मणः प्रज्ञायुक्तत्वम् उक्तम्। [ —अ० ३३।१।८ ]

इळायास्त्वा पदे वयं नाभा पृथिव्या अधि।
जातवेदो निधीमह्यग्ने हव्याय वोळ्हवे॥ ९ ॥

इळायाः। त्वा। पदे। वयम्। नाभा। पृथिव्याः। अधि॥
जातवेदः। नि। धीमहि। अग्ने। हव्याय। वोळ्हवे॥ ९ ॥

हे जातवेदः जातप्रज्ञ, जातानि भूतानि विदन्ति एनम् इति जातवेदाः, हे अग्ने त्वा त्वां पृथिव्याः नाभा नाभौ नाभिवन्मध्यभूते इडायाः पदे उत्तरवेद्याम्, "एतद् वा इळास्पदं यदुत्तरवेदी नाभिः" ( ऐ. ब्रा. अ. ५। खं. २ ) इति ऐतरेयकं ब्राह्मणम्। अधि इति सप्तम्यर्थानुवादि, तत्र वयं हव्याय पुरोडाशादिलक्षणं हविः वोळ्हवे वोढुं देवान् प्रापयितुं निधीमहि स्थापयाम इत्यर्थः।
[—अ० ३३।१।९]

प्र मन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वत्।
सुवृक्तिभिस्स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय॥ १० ॥

प्र। मन्महे। शवसानाय। शूषम्। आङ्गूषम्। गिर्वणसे। अङ्गिरस्वत्॥
सुवृक्तिभिः। स्तुवते। ऋग्मियाय। अर्चाम। अर्कम्। नरे। विश्रुताय॥ १० ॥

शवसानाय [1]वृद्धाय बलमाविष्कुर्वते वा, गिर्वणसे गीर्भिः स्तुतिरूपाभिः वाग्भिः सम्भज्यमानाय, "गिर्वणो देवो भवति गीर्भिरेनं वनयन्ति" ( नि. अ. ६। खं. १४। ५८ ) इति यास्कः। तस्मै इन्द्राय तदर्थम् अङ्गिरस्वत्। यथा अङ्गिरा इन्द्रस्य वृत्रवधादिलक्षणं बलं जानाति तद्वत्। आङ्गूषम्, सर्वत्र प्रथितम्, यद्वा हूतिः ( स्तुतिः ) सदा च कीर्त्यमानम्, घुषेरेव निपातनमेतदाङ्गूषमिति। शूषं बलं प्रमन्महे प्रकर्षेण जानीमहे। तथा सुवृक्तिभिः शोभनाभिः स्तुतिभिः स्तुवते व्यत्ययेन कर्मणि कर्तृप्रत्ययः, स्तूयमानाय, ऋग्मियाय स्तुत्यत्वेन ऋक्सम्पादितशस्त्रसम्बन्धित्वेन, नरे नराय, "सर्वे विधयश्छन्दसि विकल्पिताः" ( सि० कौ०, सू० ३।३।८६ ) इति तत्र यादेशो न जातः। सर्वेषां देवानां नेत्रे, विश्रुताय जगत्सु प्रसिद्धाय इन्द्राय, अर्चामार्कम् अर्कं साधनं मन्त्रम् अर्चाम पूजयाम, स्वरादिसम्पत्त्या उच्चारयाम इत्यर्थः। [ —अ० ३३।१।१० ]

प्र वो महे महि नमो भरध्वमाङ्गूष्यꣳ शवसानाय साम।
येना नः पूर्वे पितरः पदज्ञा अर्चन्तो अङ्गिरसो गा अविन्दन्॥ ११ ॥

1, प्र० ऊ० म्यु०।

प्र । वः । महे । महि । नमः । भरध्वम् । आङ्गूष्यम् । शवसानाय । साम ॥
येन । नः । पूर्वे । पितरः । पदज्ञाः । अर्चन्तः । अङ्गिरसः । गाः । अविन्दन् ॥ ११ ॥

वः यूयं छान्दसो वसादेशः महते[1] शवसानाय संप्रवृद्धाय बलमाविष्कुर्वते वा इन्द्राय महि महत् नमः प्रह्वीकुर्वन् देवान् अभिमुखीकुर्वन्, आङ्गूष्यं स्तुतिसाधनम्, साम बृहद्रथन्तरादिकम्, यद्वा नमः इति अन्ननाम पुरोडाशादिलक्षणं हविः साम च, प्रभरध्वं सम्पादयत । येन अन्नेन स्तोत्रेण च नः अस्माकं पूर्वे पुरातना आद्याः पितरः पितृपितामहादयः पदज्ञाः स्थानं जानानाः, अर्चन्तः इन्द्रं स्तुवन्तः, अङ्गिरसः अङ्गिरस्प्रभृतयः, गाः गोधेनूः, अविन्दन् लब्धवन्तः ।

पूर्वं पणयः नाम असुराः अङ्गिरसां गाः अपहृत्य दृढे पर्वते शिलापिहिते स्थापयामासुः । ततः अङ्गिरसः इन्द्रं स्तुत्वा तत्प्रेषितसरमाद्वारेण गोस्थानम् अवतारितवन्तः । पुनस्ताः स्वकीयं स्थानम् अनैषुः इति ऐतिहासिकी कथा कथिता । [—अ० ३३।१।११]

इ॒च्छन्ति॑ त्वा सो॒म्यास॒स्सखा॑यस्सु॒न्वन्ति॒ सोम॒न्दध॑ति॒ प्रया॑ᳪंसि ।
तिति॑क्षन्ते अ॒भिश॑स्तिं॒ जना॑ना॒मिन्द्र॒ त्वदा कश्च॒न हि प्र॑के॒तः ॥ १२ ॥

इच्छन्ति । त्वा । सोम्यासः । सखायः । सुन्वन्ति । सोमम् । दधति । प्रयांसि ॥
तितिक्षन्ते । अभिशस्तिम् । जनानाम् । इन्द्र । त्वत् । आ । कः । चन । हि । प्रकेतः ॥१२॥

सोम्यासः सोमार्हाः सखायः समानख्यानाः यजमानाः, हे इन्द्र ! त्वामेव इच्छन्ति यष्टुं कामयन्ते । ततः सोमं सुन्वन्ति ग्रावभिः अभिषुण्वन्ति । तथा प्रयांसि 'प्रय' इति अन्ननाम, पशुपुरोडाशलक्षणानि हवींषि दधति धारयन्ति । सोमेन हविर्भिश्च त्वामेव यजन्तीति भावः ततो यजमाना जनानाम् इतरेषाम् अभिशस्तिम् अपवादलक्षणं दुर्वचनं तितिक्षन्ते, मनोवाक्कायसंयमनवन्तो भूत्वा सहन्ते इत्यर्थः । हे इन्द्र [2]त्वत्तः सकाशात् कश्चन कोऽपि प्रकेतः 'केत' इति प्रज्ञानाम, दैवतभावविषयो ज्ञानविशेषः, आत्मनिष्ठावतां यजमानानाम् आगच्छतीत्यर्थः । उपसर्गश्रुतेर्योग्य-क्रियाध्याहारः । 'हि' प्रसिद्धौ, यद्वा 'हि' शब्दोहेतौ । यस्मात् त्वत्तः अन्यः कोऽपि प्रज्ञावान् नास्ति, अतस्त्वामेव यजमाना यष्टुं कामयन्ते इत्यर्थः । [—अ०३३।१।१२]

न ते॑ दू॒रे प॑र॒मा चि॒द्रजा॒ᳪंस्या तु प्र या॑हि हरिवो॒ हरि॑भ्याम् ।
स्थि॒राय॒ वृष्णे॒ सव॑ना कृ॒तेमा यु॒क्ता ग्रावा॑णस्समिधा॒ने अ॒ग्नौ ॥ १३ ॥

न । ते । दूरे । परमा । चित् । रजांसि । आ । तु । प्र । याहि । हरिवः । हरिभ्याम् ॥
स्थिराय । वृष्णे । सवना । कृता । इमा । युक्ताः । ग्रावाणः । समिधाने । अग्नौ ॥१३॥

हे इन्द्र ! परमा परमाणि उत्कृष्टानि विप्रकृष्टदेशस्थितानि वा, रजांसि भुवनानि, ते तव, दूरे अतिव्यवहिते देशे न चित् नैव, दूरस्था अपि लोकास्त्वया गन्तुं शक्या इत्यर्थः । अतो हे हरिवः ! हरिभ्याम् आभ्यां युक्तस्त्वं हरिभ्याम् एतन्नामिकाभ्यां सखीभ्यां युक्तः [3]क्षिप्रं प्रकर्षेण आयाहि, अस्मदीयं देवयजनदेशमिति शेषः । आगमने कारणमाह—स्थिराय दृढाय, वृष्णे अभिमतफलानां सेक्त्रे तुभ्यम्[4] इमानि सवना सवनानि, कृता कृतानि सम्पादितानि, सर्वेषु सवनेषु इन्द्र एव इज्यते[5]

१. महे इत्यादि । २. त्वत् इत्यादि । ३. प्र आयाहि इत्यादि ।
४. इमा इत्यादि । ५. इति उ. म्नु. ।

तथा ग्रावाणः युक्ताः अभिषवनकर्मणि सम्बद्धाः, अग्नौ समिधाने इति उत्तरवेद्यां समिध्यमाने सति तदर्थमेव आहुतयो होष्यन्ते । अतस्त्वं मखाय आयाहीति सम्बन्धः । [—अ० ३३।१।१३]

**अषा॑ळ्हँ॒ यु॒त्सु पृत॑नासु॒ पप्रि॑ꣳ स्व॒र्षाम॒प्साँ वृ॒जन॑स्य गो॒पाम् ।**
**भ॒रे॒षु॒जाꣳ सु॑क्षि॒तिꣳ सु॒श्रव॑सं॒ जय॑न्तं॒ त्वामनु॑ मदेम सोम ॥ १४ ॥**

**अषाळ्हम् । युत्सु । पृतनासु । पप्रिम् । स्वर्षाम् । अप्साम् । वृजनस्य । गोपाम् ॥**
**भरेषुजाम् । सुक्षितिम् । सुश्रवसम् । जयन्तम् । त्वाम् । अनु । मदेम । सोम ॥१४।**

हे सोम ! युत्सु युद्धेषु पृतनासु, प्रियन्ते इति पृतनाः सेनाः तासु , अषाढ़म् असोढम् , पप्रिम् , 'प्रा पूरणे' फलानि पूरयन्तम् , लोके सम्पूर्णं प्रसिद्धं वा , स्वर्षां स्वर्गस्य सम्भक्तारं स्वर्गस्य वा 'दातारम्', अप्साम्[1] उदकानां दातारम्, वृजनस्य गोपां वृजनस्य[2] बलस्य गोपां गोप्तारं ; भरेषुजां भर्त्सयन्ति शत्रुम् अत्रेति, भ्रियन्ते प्राणाः परैः अत्रेति वा भराः संग्रामाः, तेषु वीरतया प्रादुर्भवन्तम् , यद्वा भ्रियन्ते आसाद्यन्ते पुरोडाशादिहवींषि इति भराः यज्ञाः तेषु अभिष्टूयमानं हूयमानत्वेन च आविर्भवन्तम् , सुक्षितिं सुनिवासम्, उपांश्वन्तर्याम्यादिरूपौ इव अवन्तम् , सुश्रवसं सुकीर्त्तिं शोभनान्नं वा, 'श्रव इति अन्ननाम श्रूयते' (नि० अ. १०। खं. ३ । १) इति यास्कः । जयन्तं त्वाम् अनुमदेम वयम् अनुमोदयेम अतिष्टूयाम, तत्तद्देवाय प्रवर्द्धयेम वा । ——[—अ०३३।१।१४]

**सोमो॑ धे॒नुꣳ सोमो॒ अर्व॑न्तमा॒शुꣳ सोमो॑ वी॒रं क॑र्म॒ण्यं॑ ददाति ।**
**सा॒द॒न्यं॑ वि॒द॒थ्यं॑ꣳ स॒भेयं॑ पितृ॒श्रव॑णं॒ यो ददा॑शदस्मै ॥१५॥**

**सोमः । धेनुम् । सोमः । अर्वन्तम् । आशुम् । सोमः । वीरम् । कर्मण्यम् । ददाति ॥**
**सादन्यम् । विदथ्यम् । सभेयम् । पितृश्रवणम् । यः । ददाशत् । अस्मै ।१५॥**

यजमानः अस्मै सोमाय ददाशत् हवींषि दद्यात्, तस्मै सोमः धेनुं दोहनादिना प्रीणयित्रीं गां ददाति । सर्वत्र पुनः सोमग्रहणम् आदरार्थम् । आशुं शीघ्रं गन्तारम्, अर्वन्तम् अश्वम् सः कर्मसु साधुं वीरं ददाति । सर्वत्र एकवचनमविवक्षितम् । पुत्रस्य विशेषणानि उत्तराणि सादन्यं सदनमेव सादनम् । [3]गृहेषु गृहोपलक्षितेषु सर्वकार्येषु साधुम्, सभेयं सभासु साधुम् ; पितृश्रवणं स्वपितृनाम श्रावयतीति पितृश्रवणं पितृनामसंख्यापकं पुत्रं ददातीति सम्बन्धः । [अ० ३३ । १ । १५]

**त्वमि॒मा ओष॑धीस्सोम॒ विश्वा॒स्त्वम॒पो अ॑जनय॒स्त्वं गाः ।**
**त्वमा त॑तन्थो॒र्व॑न्तरि॑क्ष॒न्त्वं ज्योति॑षा॒ वि तमो॑ ववर्थ ॥१६॥**

**त्वम् । इमाः । ओषधीः । सोम । विश्वाः । त्वम् । अपः । अजनयः । त्वम् । गाः ॥**
**त्वम् । आ । ततन्थ । उरु । अन्तरिक्षम् । त्वम् । ज्योतिषा । वि । तमः । ववर्थ ।१६॥**

---

१. प्रावृट्, उ. म्यु. । २. शत्रुमर्दकस्य उ. म्यु. ।
३. सादनेषु इत्यादि ।

हे सोम ! इमाः[1] सर्वा ओषधीः फलपाकान्ताः, अपः यज्ञसाधनोदकानि च याः यज्ञार्थं स्थिताः पशूंश्च त्वम्, अजनयः, फलविशेषमधुररसक्षीराणां सुखैकमयसोमकार्यत्वात् तज्जनकत्वमुच्यते। किं च त्वम् अन्तरिक्षम् उरु विस्तीर्णं यथा तथा आततन्थ विस्तारितवान् असि। तथा त्वं ज्योतिषा दीप्त्या तमः संहृत्येति शेषः, ववर्थं विशेषेण वर्तसे ॥ [—अ० ३३।१।१६]

**देवेन नो मनसा देव सोम रायो भागꣳ सहसावन्नभि युध्य ।**
**मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्र चिकित्सा गविष्टौ ॥१७॥**

**देवेन । नः । मनसा । देव । सोम । रायः । भागम् । सहसावन् । अभि । युध्य ॥**
**मा । त्वा । आ । तनत् । ईशिषे । वीर्यस्य । उभयेभ्यः । प्र । चिकित्स । गइष्टौ ॥१७॥**

हे देव ! द्योतमान सोम, हे सहसावन् ! बलवन्, देवेन केवलं सात्त्विकेन मनसा, रायः धनस्य भागम्, नः अस्मान् अभि युध्य। युध्यतिर्गतिकर्मा, अन्तर्भावितण्यर्थः। संयोधय। शत्रुस्त्वा मातनत् आ आभिमुख्यं स्वबलेन मा विस्तारयेत्, मा कृणुयाद् इत्यर्थः। यतस्त्वं वीर्यस्य सामर्थ्यस्य ईशिषे ईश्वरः भवसि। किं च गइष्टौ, गोशब्देन अत्र भूर्लोकः विवक्ष्यते। मनुष्यलोकस्य एषणे निमित्ते सति उभयेभ्यः द्विपाद्भ्यश्च प्रचिकित्स रक्षणोपायं कुरु, अथवा उभयेभ्यः उभयलोकप्राप्त्यर्थम् उपायं कुरु। [—अ० ३३।१।१७]

**अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून् ।**
**हिरण्याक्षस्सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि ॥१८॥**

**अष्टौ । वि । अख्यत् । ककुभः । पृथिव्याः । त्री । धन्व । योजना । सप्त । सिन्धून् ॥**
**हिरण्याक्षः । सविता । देवः । आ । अगात् । दधत् । रत्ना । दाशुषे । वार्याणि ॥१८॥**

पृथिव्याः सम्बन्धिनीः अष्टौ ककुभः दिशश्च प्रदिशश्च व्यख्यत् सवितृनामकः देवः स्वतेजसा विशेषेण प्रकाशयति। तथा धन्व, 'धन्व' इति अन्तरीक्षनाम, तेन च तत्रत्यानि स्थानानि लक्ष्यन्ते। त्री धन्वानि त्रीणि ग्रहनक्षत्रराशिस्थानानि, योजना, 'योजन' शब्देन पार्थिवलोका विवक्षिताः। योजनानि पार्थिवस्थानानि, सप्त सप्तसंख्यकान् सिन्धून् समुद्रांश्च सविता प्रकाशयति। हिरण्याक्षः हिरण्यसदृशः सविता सर्वप्राणिनाम् अन्तर्यामित्वेन तत्तत्कार्येषु प्रेरयिता, सोऽयम् एतन्नामको देवः आगात् आगच्छति। किं कुर्वन् दाशुषे हविर्दत्तवते यजमानाय वार्याणि सम्भजनीयानि [2]रत्नानि रमणीयानि धनानि दधत् प्रयच्छत्। [—अ० ३३।१।१८]

**हिरण्यपाणिस्सविता विचर्षणिरुभे द्यावापृथिवी अन्तरीयते ।**
**अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ॥१९॥**

**हिरण्यपाणिः । सविता । विचर्षणिः । उभे । द्यावापृथिवी । अन्तः । ईयते ॥**
**अप । अमीवाम् । बाधते । वेति । सूर्यम् । अभि । कृष्णेन । रजसा । द्याम् । ऋणोति ॥१९॥**

---

१. विश्वा इत्यादि। २. रत्ना इत्यपि।

हिरण्यपाणिः हिरण्मयपाणिः, अस्य हिरण्मयपाणित्वं ब्राह्मण स्पष्टमाम्नातम्। विचर्षणिः, चर्षणयो मनुष्याः वियष्टारो मनुष्याः यस्य स तथोक्तः, अथवा विचर्षणिरिति दर्शनकर्मसु पाठात्, विचर्षणिः विविधानाम् अनागतवर्तमानानाम् अर्थानां द्रष्टा सविता। उभे द्यावापृथिवी उभयोः द्यावापृथिव्योः अन्तः मध्ये अन्तरिक्षलोके, ईयते गच्छति। किं च अमीवाम् व्याधिं अपबाधते अपसारयति, "आरोग्यं भास्करादिच्छेत्" इति वचनात्। तथा सूर्यं ज्योतिर्मयम् आदित्यमण्डलम् अभिवेति गच्छति। सूर्यशब्दस्य ज्योतिर्मयमादित्यमण्डलमित्यर्थः। सवितृशब्दस्य तत्प्रेरकान्तर्यामीति, तथाविधः कृष्णेन रजसा उत्कृष्टेन तेजसा द्युलोकम् ऋणोति सविता व्याप्नोति। कृष्णेन कृष्णवर्णेन रजसा "अहश्च कृष्णमहरर्जुनं वा" ( ऋक्, ६।९।१। ) इति आम्नानात्। तथा सः दिवं व्याप्नोति। यदा अन्तरीक्षलोके उदेति तदा प्रकाशरूपेण अह्ना सह वर्तते। प्रशस्तमियात्। तदा रात्र्या सह वर्तते इति वा तस्यार्थः। [ अ० ३३।१।१९ ]

**हि॑र॑ण्यहस्तो॒ असु॑रस्सुनी॒थस्सु॑मृळी॒कस्स्ववाँ॑ यात्व॒र्वाङ्।**
**अ॒प॒सेध॑न्र॒क्षसो॑ यातु॒धा॒नानस्था॑द्दे॒वः प्र॑तिदो॒षङ्गृ॑णा॒नः ॥ २० ॥**

**हिरण्यहस्तः। असुरः। सुनीथः। सुमृळीकः। स्ववान्। यातु। अर्वाङ् ॥**
**अपसेधन्। रक्षसः। यातुधानात्। अस्थात्। देवः। प्रतिदोषम्। गृणानः ॥ २० ॥**

हिरण्यहस्तः हिरण्मयपाणिः असुरः बलवान्, अथवा व्याधिग्रस्तानां यथावद् आराधनेन असून् प्राणान् राति ददातीति असुरः, सुनीथः सुसंस्तुतिकः, सुमृडीकः सुष्ठु सुखयिता, स्ववान्, आत्मा-आत्मीय-ज्ञाति-धनवचनः स्वशब्दः, तद्वान्, अर्वाङ् अर्वाचीनः, सर्वं अभिमुखं पूजनीयः सविता यातु अस्मान् अभिलक्ष्य आयातु इत्यर्थः। रक्षसः कर्मप्रतिबन्धकान् राक्षसान् यातुधानान् राक्षसविशेषांश्च अपसेधन् अपसारयन् प्रतिदोषं प्रतिदिनं गृणानः स्तूयमानो यः देवः सविता अस्थात्, अथवा प्रतिदोषं, दोषा रात्रिः, प्रतिरात्रम्, कर्मविघ्नकारिणः राक्षसान् हिंसन् समागच्छतु इति सम्बन्धः। [—अ० ३३।१।२०]

**ये ते॒ पन्था॑स्सवितः पू॒र्व्यासो॑ऽरे॒णव॒स्सुकृ॑ता अ॒न्तरि॑क्षे।**
**तेभि॑र्नो अ॒द्य प॒थिभि॑स्सु॒गेभि॒ रक्षा॑ च नो॒ अधि॑ च ब्रूहि दे॒व ॥ २१ ॥**

**ये। ते। पन्थाः। सवितः। पूर्व्यासः। अरेणवः। सुकृताः। अन्तरिक्षे ॥**
**तेभिः। नः। अद्य। पथिभिः। सुगेभिः। रक्ष। च। नः। अधि। च। ब्रूहि। देव ॥ २१ ॥**

हे देव! पूर्व्यासः पूर्वेषु कालेषु भवाः पूर्व्याः, ते त्वदीयाः, पन्थाः सुपो लोपः, पन्थानः, ये मार्गाः अरेणवः अपांशुलाः अन्तरिक्षे सुकृताः अथेदानीम्, तेभिः तैः, सुगेभिः सुगैः सुष्ठु गन्तुं शक्यैः पथिभिः मार्गैः, नः अस्मान्, रक्ष पालय। हे देव! नः अस्मान् अधिब्रूहि, परस्परसमुच्चयार्थौ चकारौ। ये सुकृतमार्गास्त्वया सम्पादिताः तेषु मार्गेषु अधिकफलप्रदत्तेन रक्ष। सर्वेषां मध्ये अधिकं ब्रूहि इत्यर्थः। [—अ० ३३।१।२१ ]

**उ॒भा पि॑बतमश्विनो॒भा न॒श्शर्मं॑ यच्छतम्।**
**अ॒वि॒द्रि॒याभि॑रू॒तिभिः॑ ॥ २२ ॥**

उभा । पिबतम् । अश्विना । उभा । नः । शर्म । यच्छतम् ।
अविद्रियाभिः । ऊतिभिः ॥ २२ ॥

अश्विना अश्विनौ, उभा उभौ युवां पिबतम्, अस्मदीययज्ञे सोममिति शेषः। तथा उभौ युवाम् अविद्रियाभिः अभिवारणीयाभिः अनवखण्डिताभिः, ऊतिभिः पालनैः सह. नः अस्माकम्, शर्म स्वर्गादिलक्षणं सुखम्, यच्छतं प्रयच्छतम् । [—अ० ३३।१।२२ ]

अप्नस्वतीमश्विना वाचमस्मे कृतन्नो दस्रा वृषणा मनीषाम् ।
अद्यूत्येऽवसे निह्वये वाँवृधे च नो भवतँ वाजसातौ ॥ २३ ॥

अप्नस्वतीम् । अश्विना । वाचम् । अस्मे । कृतम् । नः । दस्रा । वृषणा । मनीषाम् ।
अद्यूत्ये । अवसे । नि । ह्वये । वाम् । वृधे । च । नः । भवतम् । वाजसातौ ॥ २३ ॥

हे दस्रा दर्शनीयौ, अथवा दस्रा उपलक्षितौ, शत्रूणां क्षपयितारौ, हे वृषणा ! वृषणौ अभिमतफलानां सेक्तारौ, हे अश्विना ! अश्विनौ अप्नस्वतीम् 'अप्न' इति कर्मनाम, कर्मवतीं वाचं मनीषां कर्मविषयां बुद्धिं च अस्मे अस्माकम्, कृतं कुरुतम् । अहम् अद्यूत्ये द्यूत्यविपरीते यागादिकर्मणि विषये अवसे रक्षणाय वां युवां निह्वये नितराम् आह्वयामि । युवां वाजसातौ, 'वाज' इति अन्ननाम, हविर्लक्षणानि वाजानि अन्नानि सन्यन्ते दीयन्ते अत्र इति वाजसातिः यज्ञः, तस्मिन् । अथवा अन्नसंभजने विवक्षिते, नः अस्माकम्, वृधे वर्द्धनाय भवतम् । [—अ० ३३।१।२३]

द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः ।
तन्नो मित्रो वरुणो मामहन्तामदितिस्सिन्धुः पृथिवी उत द्यौः ॥ २४ ॥

द्युभिः । अक्तुभिः । परि । पातम् । अस्मान् । अरिष्टेभिः । अश्विना । सौभगेभिः ॥
तत् । नः । मित्रः । वरुणः । मामहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥२४॥

हे अश्विना ! अश्विनौ, द्युभिः प्रकाशमानैः अहोभिः, अक्तुरिति रात्रिनाम, रात्रिभिश्च अस्मान् परिपातं सर्वतः रक्षतम्, तथा अरिष्टेभिः, 'रिष' हिंसायाम्, अहिंसितैः अविनश्वरैः सौभगेभिः सौभाग्यैः करणभूतैः पालयतम् । उत्तरार्द्धं व्याख्यातपूर्वम् । [—अ० ३३।१।२४]

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतम्मर्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ २५ ॥

आ । कृष्णेन । रजसा । वर्तमानः । निवेशयन् । अमृतम् । मर्त्यम् । च ॥
हिरण्ययेन । सविता । रथेन । देवः । याति । भुवनानि । पश्यन् ॥ २५ ॥

इयमपि व्याख्याता ( अ. ३२।४३ ) । [—अ० ३३।१।२५ ]

इति त्रयस्त्रिंशेऽध्याये प्रथमोऽनुवाकः ।

## [ द्वितीयोऽनुवाकः २६–४७ ]

द्वितीयेऽनुवाके एकविंशतिसंख्याका ऋगाद्याः मन्त्राः सन्ति । तत्र प्रथमः—

**आ रात्रि पार्थिवꣳ रजः पितुरप्रायि धामभिः ।**
**दिवस्सदाꣳसि बृहती वि तिष्ठस आ त्वेषँव्वर्तते तमः ॥ २६ ॥**

आ । रात्रि । पार्थिवम् । रजः । पितुः । अप्रायि । धामभिः ॥
दिवः । सदांसि । बृहती । वि । तिष्ठसे । आ । त्वेषम् । वर्तते । तमः ॥ २६ ॥

हे रात्रि, धामभिः त्वदीयैः कृष्णरूपैः तेजोभिः पार्थिवं, रजःशब्दः भूलोकवचनः, भूलोकम्, अप्रायि आपूरितम् अभूत् । तथा पितुः पितृशब्दः अन्तरिक्षवचनः, अन्तरिक्षं च आपूरितम् । तथा दिवः द्युलोकस्य सदांसि स्थानानि, तस्माद् बृहती लोकत्रयव्याप्यत्वेन महती वितिष्ठसे विशेषेण आविर्भूता असि । उक्तस्य अनुवादकः चतुर्थपादः । एवं दीप्यमानं तमः आवर्तते, लोकत्रयम् आवृणोति इत्यर्थः । [—अ० ३३।२।१]

द्वितीयः—

**उषस्तच्चित्रमाभरास्मभ्यँव्वाजिनीवति ।**
**येन तोकञ्च तनयञ्च धामहे ॥ २७ ॥**

उषः । तत् । चित्रम् । आ । भर । अस्मभ्यम् । वाजिनीवति ॥
येन । तोकम् । च । तनयम् । च । धामहे ॥ २७ ॥

रात्रेः सन्निहितत्वात् उषःकालं प्रस्तौति । हे वाजिनीवति अन्नवति, अथवा, 'वाज' इति अन्ननाम, तद्वती वाजिनी क्रिया, अन्नक्रियायुक्ते, हे उषः अस्मभ्यं चित्रं चायनीयं तत् अन्नम् आ भर प्रयच्छ, येन त्वद्दत्तेन अन्नेन तोकम् अपत्यं तनयं कुलं विस्तारयन्तं पौत्रं च धामहे पोषयेम । [—अ० ३३।२।२]

तृतीयः—

**प्रातर्जितम्भगमुग्रꣳहुवेम वयम्पुत्रमदितेर्यो विधर्ता ।**
**आध्रश्चिद्यम्मन्यमानस्तुरश्चिद्राजा चिद्यम्भगम्भक्षीत्याह ॥ २८ ॥**

प्रातर्जितम् । भगम् । उग्रम् । हुवेम । वयम् । पुत्रम् । अदितेः । यः । विधर्ता ॥
आध्रः । चित् । यम् । मन्यमानः । तुरः । चित् । राजा । चित् । यम् । भगम् । भक्षि । इति । आह ॥ २७ ॥

अथ उषसः अनन्तरम् उद्यन्तं सूर्यमाह—अदितेः देवमातुः पुत्रं प्रातर्जितं प्रातः असुरान् जयतीति प्रातर्जितम् । उदयकाले असुराः सूर्यम् आवृण्वन्ति इति प्रसिद्धम् । उग्रम् उद्गूर्णबलम् अति तेजस्विनं भगम्, "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति । एतेषु अर्थेषु प्रसिद्धः अत्र ऐश्वर्याधिक्याद् वा सूर्य एव उच्यते । भगम् ऐश्वर्यवन्तं ज्ञानवन्तं वा, ऐश्वर्यप्रदातृत्वेन वा भगः सूर्यः, तं सूर्यं वयं हुवेम आह्वयेम स्तूयाम इत्यर्थः । यः विधर्ता विशेषेण

जगतः धारयिता, उदिते हि सूर्ये सर्वे प्राणिनः तत्तत् कार्येषु व्याप्रियन्ते इति प्रसिद्धम्। आध्रश्चित् दारिद्र्येण पीडितः पुरुषः अपि, मन्यमानः मन्यतिः अर्चतिकर्मा, पूजयन्, यं भगं भक्षि, छान्दसः लुप्, दारिद्र्यनाशाय भज इत्याह। "उद्यन्तमस्तं यान्तमादित्यमभिध्यायन् स्तुतिं कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते" इति आम्नानात्। तुरश्चित् आतुरः व्याधिपीडितः अपि पुरुषः यं देवं तन्निवृत्तये भजते इत्याह। राजापि ऐश्वर्यस्थितये जन्मान्तरेऽपि राजत्वं प्राप्तुं भजते इत्याह। एतत् उपलक्षणम्। सर्वैः अपि तत्तत् फलप्राप्तये आदित्य एव सेव्यते इत्यर्थः। [—अ० ३३।२।३]

चतुर्थः—

**पूषन्तव॑ व्र॒ते व॒यन्न रि॑ष्येम॒ कदा॑ च॒न।**
**स्तो॒तार॑स्त इ॒ह स्म॑सि॥ २९॥**

**पूषन्। तव। व्रते। वयम्। न। रिष्येम। कदा। चन॥**
**स्तोतारः। ते। इह। स्मसि॥ २९॥**

स्तोतॄन् धनादिना पोषयतीति पूषा, हे पूषन्, तस्य सम्बोधनम्। तव व्रते आज्ञारूपे कर्मणि कदाचन कदाचिदपि वयं न रिष्येम न हिंस्याम, सर्वदा त्वदधीना भवेम इत्यर्थः। यत् इह अस्मिन् यज्ञे ते तव स्तोतारः स्मसि। [—अ० ३३।२।४]

पञ्चमः—

**प॒थस्प॑थः परि॑पतिँ्वच॒स्या कामे॑न कृ॒तो अ॒भ्या॑नळ॒र्कम्।**
**स नो॑ रासच्छु॒रुध॑श्च॒न्द्राग्रा॒धियं॑न्धियं॒ꣳसीषधाति॒ प्र पू॒षा॥ ३०॥**

**पथस्पथः। परिपतिम्। वचस्या। कामेन। कृतः। अभि। आनट्। अर्कम्॥**
**सः। नः। रासत्। शुरुधः। चन्द्राग्राः। धियन्धियम्। सीषधाति। प्र। पूषा॥ ३०॥**

कामेन त्वया कृतः, लिङ्गव्यत्ययः, कृता वचस्या स्तुतिः। पथस्पथः पूर्वेषां मार्गाणां परिपतिं परितः रक्षकम्, अर्कम् अर्चनीयं पूषणम् अभि आनट्, आनट् इति आकर्षतु, अभितः व्याप्नोतु। अथवा कृतः इति कर्तरि क्विप्, इच्छया अनुकुर्वतः मम स्तुतिः त्वां व्याप्नोतु इत्यर्थः। सः पूषा शुरुधः, 'शुच' शोके, 'रुधिर' आवरणे, एताभ्याम् उत्पन्नं पदम्। शोकस्य विदारयित्रीः, शोकनिवर्तकाः, चन्द्राग्राः, चन्द्रम् आह्लादकरं सुवर्णम् अग्रं यासां, सुवर्णप्रभृतिकारयित्रीः, नः अस्माकं, रासत्, 'रा' दाने, ददातु। ततः पूषा धियंधियं सर्वाः बुद्धीः प्रसीषधाति प्रकर्षेण देवताभक्तिविषयाः करोतु। [—अ० ३३।२।५]

षष्ठः—

**त्रीणि॑ प॒दा वि च॑क्रमे॒ विष्णु॑र्गो॒पा अदा॑भ्यः।**
**अ॒तो धर्मा॑णि धा॒रय॑न्॥ ३१॥**

**त्रीणि। पदा। वि। चक्रमे। विष्णुः। गोपाः। अदाभ्यः॥**
**अतः। धर्माणि। धारयन्॥ ३१॥**

गोपाः सात्त्विकवृत्त्या सर्वेषां पालकः अदाभ्यः, धर्माणि स्वर्गादिफलसाधनकर्माणि धारयन्, विष्णुः, त्रीणि पदा पदानि अग्निवायुसूर्याधिष्ठितान् त्रीन् लोकान् अग्न्याद्यधिष्ठितान् भूलोकादीन् विचक्रमे पादप्रक्षेपं कृतवान् इत्यर्थः । तत् पदं विप्राः समिन्धते इति उत्तरेण सम्बन्धः ।

[—अ० ३३।२।६]

सप्तमः—

तद्विप्रासो विपन्यवो जागृवाꣳसस्समिन्धते ।
विष्णोर्यत्परमम्पदम् ॥ ३२ ॥

तत् । विप्रासः । विपन्यवः । जागृवांसः । सम् । इन्धते ॥
विष्णोः । यत् । परमम् । पदम् ॥ ३२ ॥

विष्णोः सर्वव्यापकस्य परमात्मनः परमं सर्वकार्यकारणप्रपञ्चातीतत्वात् उत्कृष्टं सत्यज्ञानानन्दात्मकलक्षणं यत् पदमस्ति, 'तद् विष्णोः परमं पदम्' इति प्रयोगः । "आनन्दं ब्रह्मणो विद्वान्" ( तै. उ. वल्ली २ । अनु. ४ ) तत् पदं विप्रासः विपन्यवः मेधाविनः वेदान्तपरिशीलवर्त्तिनः विप्राः जागृवांसः जागरणशीलाः सन्तः समिन्धते सम्यक् स्वात्मतया दीपयन्ति अनुभवन्ति इत्यर्थः ।

[—अ० ३३।२।७]

अष्टमः—

घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ ३३ ॥

घृतवती । भुवनानाम् । अभिश्रिया । उर्वी । पृथ्वी । मधुदुघे । सुपेशसा ॥
द्यावापृथिवी । वरुणस्य । धर्मणा । विष्कभिते । अजरे । भूरिरेतसा ॥ ३३ ॥

घृतवती घृतवत्यौ, घृतमिति उदकनाम, उदकवत्यौ, हविष्मत्यौ वा, भुवनानां भूतानाम् अभिश्रिया अभिश्रियौ, श्रयतेः कर्मणि क्विप्, अभिश्रीयमाणौ, यद्वा सर्वेषां भूतानां शोभया सहवर्तमाने, उर्वी उर्व्यौ विस्तीर्णे [१] पृथिव्यौ पृथुले, एकत्र आयामः अन्यत्र विस्तार इति पदयोः अपौनरुक्त्यम् । मधुदुघे मधुदोहनवत्यौ । मधुमत् प्रीतिकरम् अन्नं पृथ्वी साधयति, द्यौस्तु अन्नसाधनम् उदकं साधयति । सुपेशसा, पेशसेति रूपनाम, सुरूपवत्यौ, अजरे जरारहिते, भूरिरेतसा भूरिरेतसौ, बहुविधप्रजोत्पत्तिनिमित्तबीजवत्यौ, द्यावापृथिवी एवंरूपे द्यावापृथिव्यौ, वरुणस्य सवः वरणीयस्य संपूजनीयस्य देवस्य धर्मणा धर्मसन्धारणशक्त्या विष्कभिते विशेषेण स्तब्धे स्थिरीकृते अभूताम् इति शेषः ।

[—अ० ३३।२।८]

नवमः—

ये नस्सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् ।
वसवो रुद्रा आदित्या उपरिस्पृशम्मोग्रञ्चेत्तारमधिराजमक्रन् ॥ ३४ ॥

---

१. पृथ्वी इत्यादि ।

ये । नः । सपत्नाः । अप । ते । भवन्तु । इन्द्राग्निभ्याम् । अव । बाधामहे । तान् ॥
वसवः । रुद्राः । आदित्याः । उपरिस्पृशम् । मा । उग्रम् । चेत्तारम् । अधिराजम् ।
अक्रन् ॥ ३४ ॥

नः अस्माकं ये सपत्नाः शत्रवः सन्ति ते इदानीम् अप भवन्तु अपगतवीर्याः भवन्तु । तेषाम् अपभवनं कुत इत्याह–तान् शत्रून् इन्द्राग्निभ्याम् अवबाधामहे, अवबाधनं यथा भवति तथा हिंसामः। ततः वसवः, रुद्राः, आदित्याः, अष्टौ वसवः, एकादश रुद्राः, द्वादश आदित्याः । उपरिस्पृशं यागादिना उपरिलोकं स्वर्गं स्पृशन्तम् उग्रम् उद्यन्तं चेत्तारं कर्मणः प्रज्ञातारं मा मां, पादादौ अपि छान्दसः मादेशः । अधिराजं राजसु अधि, अक्रन् कुर्वन्तं परमैश्वर्यं कुर्वन्तम् इत्यर्थः । [—अ० ३३।२।९]

दशमः—

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातम्मधुपेयमश्विना ।
प्रायुस्तारिष्टन्नी रपांशसिमृक्षतꣳसेधतन्द्वेषो भवतꣳसचाभुवा ॥ ३५ ॥

आ । नासत्या । त्रिभिः । एकादशैः । इह । देवेभिः । यातम् । मधुपेयम् । अश्विना ॥
प्र । आयुः । तारिष्टम् । निः । रपांसि । मृक्षतम् । सेधतम् । द्वेषः । भवतम् । सचा-भुवा ॥ ३५ ॥

हे नासत्या असत्यरहितौ देवौ, हे अश्विना अश्विनौ, युवाम् इह अस्मदीये यज्ञे, त्रिभिः, एकादशैः, देवेभिः, अष्टौ वसवः, एकादश रुद्राः, द्वादश आदित्याः प्रजापतिश्च, वषट्कारश्च इति त्रयस्त्रिंशत् संख्याकैः देवैः सह, मधुपेयं सोमपानं प्रति आयातम् आगच्छतम् । आगत्य सोमं पीत्वा आयुः प्रतारिष्टम् । प्रपूर्वः तरतिः वृद्धचर्थः । प्रवर्द्धयतम् । "चादिलोपे विभाषा" (पा. अ. ८।१।६३) इति प्रथमा तिङ्विभक्तिः न निहन्यते । रपांसि, रप इति पापनाम, पापानि मृक्षतं नाशयतं च । पापानि प्रक्षाल्य मनसः शुद्धिम् आपादयतम् इत्यर्थः । [—अ० ३३।२।१०]

एकादशः—

एष वस्तोमो मरुत इयङ्गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयाँव्विद्यामेषँव्वृजनञ्जीरदानुम् ॥ ३६ ॥

एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य । मान्यस्य । कारोः ॥
आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरदानुम् ॥ ३६ ॥

तथा इयं गीः स्तुतिरूपा वाक् अपि वः युष्मदर्थाय । यस्मात् एवं तस्मात् मान्दार्यस्य स्तुति-विशेषैः चिरं मन्दयितुः, मदस्य प्रेरयितुर्वा, मान्यस्य वरप्रदानादिना माननीयस्य कारोः स्तोतुः इषा इच्छया आयासीष्ट आगच्छत । किमर्थम्, तन्वे शरीराय, तत्पोषाय इत्यर्थः, हविर्भक्षणेन शरीरं वर्द्धते । वयां वयमपि इषम् अन्नं बलं जीरदानुं जयशीलं दानुं जीवनं वा, एतत् सर्वं विद्याम युष्मासु आगतेषु यज्ञसम्पूर्त्तेष्टचादिद्वारा लभेमहि । [—अ० ३३।२।११]

द्वादशः—

सहस्तोमास्सहछन्दस आवृतस्सहप्रमा ऋषयस्सप्त दैव्याः ।
पूर्वेषाम्पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो न रश्मीन् ॥ ३७ ॥

सहस्तोमाः । सहछन्दसः । आवृतः । सहप्रमाः । ऋषयः । सप्त । दैव्याः ॥
पूर्वेषाम् । पन्थाम् । अनुदृश्य । धीराः । अनु । आ । लेभिरे । रथ्यः । न । रश्मीन् ॥ ३७ ॥

सहस्तोमाः त्रिवृत् पञ्चदशादिस्तोमसहिताः, सहछन्दसः गायत्र्यादिच्छन्दःसहिताः, आवृतः वृच्छब्देन पुनः पुनरावर्तनं कर्म उच्यते, सहकर्मवन्तः, सहैव कर्मणाम् अनुष्ठातार इत्यर्थः । सहप्रमाः, प्रमा सम्यगनुभवः, आत्मविषयज्ञानवन्तः, दैव्याः देवसम्बन्धिनः, प्रजापतिसृष्टा इत्यर्थः । धीराः बुद्धिमन्तः, सप्त सप्तसंख्याका ऋषयः, अतीन्द्रियदर्शिनः, भरद्वाजः, कश्यपः, गौतमः, अत्रिः, विश्वामित्रः, जमदग्निः, वशिष्ठः इति एते ऋषयः । पूर्वेषां ब्राह्मणादिवर्णानां चिरन्तनानां ऋषीणां वा, पन्थाम् यथाकर्ममार्गम्, अनुदृश्य अनुक्रमेण दृष्ट्वा, अन्वालेभिरे अन्वालम्भनं कृतवन्तः । आलम्भनशब्देन पश्वालम्भस्य विवक्षितत्वात् यज्ञियानि कर्माणि सम्यक् अनुष्ठितवन्तः, इत्यर्थः । अन्वालम्भने दृष्टान्तः, रथ्यो न, रथाः एषां सन्तीति रथ्याः, छन्दसि निपातनात् मत्वर्थीयः यप्रत्ययः, ते यथा रश्मीन् युगादिसंस्थितान् स्वाभिलषितदेशप्राप्त्यर्थम् अन्वालभन्ते संस्पृशन्ति, तथा निहितयज्ञादिमार्गान् संस्पृशन्ति इत्यर्थः ॥ [—अ० ३३।२।१२]

त्रयोदशः—

**आ॒यु॒ष्यँ॒ वर्च॒स्यँ॑ रा॒यस्पोष॒मौद्भि॑दम् ।**
**इ॒दꣳ हिर॑ण्यँ॒ वर्च॑स्व॒ज्जैत्रा॒याविश॑ता॒दु॒ माम् ॥ ३८ ॥**

आयुष्यम् । वर्चस्यम् । रायस्पोषम् । औद्भिदम् ॥
इदम् । हिरण्यम् । वर्चस्वत् । जैत्राय । आ । विशतात् । उ । माम् ॥ ३८ ॥

इदमिति त्रिषु मन्त्रेषु हिरण्यं स्तूयते—आयुष्यम् आयुष्करम्, वर्चस्यं वर्चस्करम्, वर्च इति अन्नस्य नाम, अन्नसाधनम् । रायस्पोषं रत्नादिधनानां पोषकं, धनरूपस्य स्वर्गस्य वा पोषकम्, औद्भिदम्, उद्भवतीति उद्भिद् आकरादि, तस्य सम्बन्धि, तत्र जातम् इत्यर्थः । वर्चस्वत् दीप्तिमत्, इदं हिरण्यं मां स्तोतारं जैत्राय शत्रुजयाय आविशतात् अभिमुखम् आगच्छतु । उ शब्दः अवधारणे ।
[—अ० ३३।२।१३]

चतुर्दशः—

**न तद्रक्षा॑ꣳसि॒ न पि॑शा॒चास्त॑रन्ति दे॒वाना॒मोजः॑ प्रथम॒जꣳ ह्ये॒तत् ।**
**यो बि॒भर्ति॑ दाक्षाय॒णꣳ हिर॑ण्य॒ꣳ स दे॒वेषु॑ कृणुते दी॒र्घमायुः॒ स म॑नु॒ष्ये॑षु कृणुते दी॒र्घमायुः॑ ॥ ३९ ॥**

न । तत् । रक्षांसि । न । पिशाचाः । तरन्ति । देवानाम् । ओजः । प्रथमजम् । हि । एतत् ॥
यः । बिभर्ति । दाक्षायणम् । हिरण्यम् । सः । देवेषु । कृणुते । दीर्घम् । आयुः । शिष्टं स्पष्टम् ॥ ३९ ॥

तत् देवैः दत्तं धनं न रक्षांसि राक्षसाः तरन्ति न उल्लंघयन्ति नाहरन्ति इत्यर्थः । तथा पिशाचाश्च न तरन्ति । 'हि' शब्दः हेतौ, अत एव हिरण्यं देवानाम् इन्द्रादीनाम् ओजः बलं यागसाधनताबलं, हविः देवानां बलं भवति । प्रथमजं प्रथमतः आविर्भूतम् । सर्वाणि वस्तूनि हिरण्येन

एव साध्यन्ते इत्यर्थः। हिरण्यं दाक्षायणं, दक्षस्य अपत्यानि दाक्षायणाः, तेभ्यः हितम्, हिरण्यं यः पुरुषः बिभर्ति धारयति स पुरुषः देवेषु दीर्घमायुः कृणुते हिरण्येन यागादिकर्माणि कृत्वा देवेषु तत् फलं चिरकालं भुङ्क्ते इत्यर्थः। मनुष्यः मनुष्येषु अपि दीर्घमायुः कृणुते। [—अ० ३३।२।१४]

पञ्चदशः—

यदाबध्नन्दाक्षायणा हिरण्यꣳशतानीकाय सुमनस्यमानाः।
तन्म आ बध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥ ४० ॥

यत्। आ। अबध्नन्। दाक्षायणाः। हिरण्यम्। शतानीकाय। सुमनस्यमानाः॥
तत्। मे। आ। बध्नामि। शतशारदाय। आयुष्मान्। जरदष्टिः। यथा। आसम् ॥ ४० ॥

दाक्षायणाः दक्षस्य युवापत्यानि आदित्यादयः, सुमनस्यमानाः सौमनस्यम् इच्छन्तः, शतानीकाय शतम् अनीकानि सेनाः यस्य, बलाय, यत् हिरण्यम् आबध्नन् अलङ्काररूपेण बन्धनं कृतवन्तः, अतः तत् हिरण्यं मे शतशारदाय शरदां शतं जीवनाय देहे आबध्नामि कटकमुकुटादिरूपेण धारयामि। ततः आयुष्मान् अहं जरदष्टिः जराम् अश्नुते अश्नातीति वा जरदष्टिः जरारहितः यथा येन प्रकारेण आसं भवेयं तथा बध्नामीति सम्बन्धः। [—अ० ३३।२।१५]

षोडशः—

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः।
विश्वे देवा ऋतावृधो हुवानास्स्तुता मन्त्राः कविशस्ता अवन्तु ॥ ४१ ॥

उत। नः। अहिः। बुध्न्यः। शृणोतु। अजः। एकपात्। पृथिवी। समुद्रः॥
विश्वे। देवाः। ऋतावृधः। हुवानाः। स्तुताः। मन्त्राः। कविशस्ताः। अवन्तु ॥ ४१ ॥

उत अपि च नः अस्माकं स्तुतिरूपाणि वचांसि अहिर्बुध्न्यः पदद्वयेन एका देवता उच्यते, एतन्नामकः देवः शृणोतु। अजएकपात्, अत्रापि पदद्वयेन एका देवता रुद्रविशेषः। पृथिव्यभिमानिनी देवता, समुद्रः तद्देवता, अस्मत्स्तुतीः शृणोतु। तथा ऋतावृधः ऋतमिति अत्र सत्यं यज्ञो वा अभिधीयते। सत्यस्य यज्ञस्य वा बर्द्धयितारः। विश्वेदेवाः हुवानाः अस्माभिः, आहूयमानाः सन्तः वचांसि शृण्वन्तु। ततः स्तुताः अभिष्टुताः मन्त्राः मननीयाः पूजनीया इत्यर्थः। कविशस्ताः कविभिः मेधावद्भिः प्रशस्ताः अग्न्यादयः देवाः अवन्तु अस्मान् पालयन्तु॥ [—अ० ३३।२।१६]

सप्तदशः—

इमा गिर आदित्येभ्यो घृतस्नूस्सनाद्राजभ्यो जुह्वा जुहोमि।
शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अꣳशः ॥ ४२ ॥

इमाः। गिरः। आदित्येभ्यः। घृतस्नूः। सनात्। राजभ्यः। जुह्वा। जुहोमि॥
शृणोतु। मित्रः। अर्यमा। भगः। नः। तुविजातः। वरुणः। दक्षः। अंशः ॥ ४२ ॥

घृतस्नूः घृतमिव माधुर्यस्य स्राविणीः, "घृतात् स्वादीयो मधुनश्च" इत्याम्नानात्"। अथवा होमार्थं घृतप्रस्रवणवतीः इमाः याज्याः पुरोनुवाक्याः गिरश्च सनात् चिरकालादारभ्य राजभ्य राज-

मानेभ्यः आदित्येभ्यः आदित्यादिदेवेभ्यः तदर्थं जुह्वा हूयमानया घृतपूर्णया स्रुचा सह जुहोमि, होमकाले याज्यारूपाः ऋचः ब्रवीमि इत्यर्थः। नः अस्मदीयाः ताः ऋचः मित्रः अर्यमा भगः तुविजातः तुविशब्दः बहुवाची, बहुषु स्थलेषु आविर्भूतः वरुणः वरुणोऽपि बहुशः प्रजायते इति पुराणेषु प्रसिद्धम्। दक्षः शत्रुहनने समर्थः तेजोभिः वा प्रसिद्धः अंशः स्वतेजसा सर्वम् अश्नुते व्याप्नोतीति अयम् अंशः सूर्यः, एते सर्वे देवाः अस्माभिः उच्यमानाः शृण्वन्तु। प्रत्येकविषयम् अत्र एकवचनम्।

[—अ० ३३।२।१७]

अष्टादशः—

**स॒प्त ऋष॑यः॒ प्रति॑हिता॒श्शरी॑रे स॒प्त र॑क्षन्ति॒ सद॒मप्र॑मादम्।**

**स॒प्ताप॒स्स्वप॑तो लो॒कमी॑यु॒स्तत्र॑ जागृ॒तो अस्व॑प्नजौ सत्र॒सदौ॑ च दे॒वौ ॥ ४३ ॥**

सप्त। ऋषयः। प्रतिहिताः। शरीरे। सप्त। रक्षन्ति। सदम्। अप्रमादम् ॥
सप्त। आपः। स्वपतः। लोकम्। ईयुः। तत्र। जागृतः। अस्वप्नजौ। सत्रसदौ। च।
देवौ ॥ ४३ ॥

अध्यात्मवादिनः ये सप्तर्षयः, सप्तसंख्यकानि ऋषित्वेन प्रसिद्धानि चक्षुरादीन्द्रियाणि, शरीरे स्थूलशरीरे सूक्ष्मशरीरे च, प्रतिहिताः कर्मवशात् ईश्वरेण प्रतिष्ठापिताः, इन्द्रियाणाम्[१] ऋषिनामकत्वम् उपनिषदि आम्नातम्। "इमौ एव गोतमभरद्वाजौ अयमेव गोतमः अयं भरद्वाजः इमौ एव विश्वामित्रजमदग्नी अयमेव विश्वामित्रः अयं जमदग्निः इमौ एव वशिष्ठकश्यपौ अयमेव वशिष्ठः अयं कश्यपः वागेवात्रिर्वाचा ह्यन्नमद्यते" ( बृ. उ. अ. २। ब्रा. २ ) इति। अतएव सप्त सप्तर्षयः सदं सदा अप्रमादं यथा आसीत् तत्तद्व्यवहारेषु प्रमादो न भवेत् तथा रक्षन्ति। स्ववृत्तिभिः पालयन्ति, अनेन जागरणावस्था उक्ता; अन्तर्भाविनीं स्वप्नावस्थाम् अनादृत्य सुषुप्तिमाह। सप्तापः, अप्शब्देन सप्तप्राणानां प्रकृतिभूतानि भूतसूक्ष्माणि उच्यन्ते, मनश्च वृत्तिभेदाभेदत इति सप्त। स्वपतः सुषुप्तिमनुभवतः पुरुषस्य लोकम्, लोक्यते इति लोकः, स्वकारणात्मशरीरं, नाडी पुरीतत्, तद्द्वारेण सुषुप्तिस्थानम् ईयुः गच्छन्ति, तदा स्ववृत्तिभिः विनापि अस्य सूक्ष्मरूपेण अवतिष्ठते इत्यर्थः। तत्र तस्यां दशायाम् अस्वप्नजौ अस्वपन्तौ अनिद्राणौ, स्वपेः नजिङ् प्रत्ययः। सत्रसदौ, सीदन्तीति सत्रम्, तत्र सीदन्तौ, स्वान्तःकरणावच्छिन्नौ दीप्यमानौ स्वयंप्रकाशौ जीवात्मपरमात्मानौ जागृतः जागरणं कुरुतः। यद्यपि सुषुप्तौ एक एव आस्ते तथापि वासनाशेषस्य सद्भावात् जीवात्मेति पृथगुक्तिः। अप्शब्दः देहबीजभूतसूक्ष्मवचन इति पञ्चात्मविद्यायाम् उक्तम्, "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति" ( छा. उ. अ. ५। खं. ९ )। तत्र द्युलोकपर्जन्यपृथिवीपुरुषयोषितः पञ्चापः उपासनीयाग्नित्वेन परिकल्पिताः। तेषु अग्निषु स्वर्गादि गच्छन् पुनः आगच्छंश्च जीवः आहुतत्वेन परिकल्पितः। इष्टापूर्तकरः जीवः स्वर्गम् आरुह्य उपभोगेन कर्मणि क्षीणे पर्जन्ये पतित्वा वृष्टिरूपेण भूमिं प्राप्य अन्नद्वारेण पुरुषं प्राप्य रेतोद्वारेण योषितं प्रविश्य शरीरं गृह्णाति। तत्र अप्शब्दोपलक्षितानि देहबीजानि पञ्चभूतानि जीवेन सह द्युलोकादिपञ्चस्थानेषु गत्वा पञ्चमस्थाने शरीरभावं प्राप्य पञ्चशब्दवाच्यानि भवन्ति इत्यर्थः।

[—अ० ३३।२।१८]

१. अपि उ. म्यु.

एकोनविंशः—

**उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।**
**उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ ४४ ॥**

उत् । तिष्ठ । ब्रह्मणः । पते । देवयन्तः । त्वा । ईमहे ॥
उप । प्र । यन्तु । मरुतः । सुदानवः । इन्द्र । प्राशूः । भव । सचा ॥ ४४ ॥

मन्त्रत्रयेण ब्रह्मणस्पतिः स्तूयते—हे ब्रह्मणस्पते मन्त्रस्य पालक देव उत्तिष्ठ ऊर्द्ध्वीभूय सर्वेषां देवानामुपरिभावेन तिष्ठ इत्यर्थः । यतः एवं सतः यतः देवयन्तः, देवान् कामयमानाः वयं त्वा त्वां ब्रह्मणस्पतिम् ईमहे प्रार्थयामहे । सुदानवः शोभनदानाः कल्याणदानाः मरुतः देवा उप प्रयन्तु उप समीपे प्रकर्षेण गच्छन्तु । हे इन्द्र, त्वं सचा सह प्राशुः यज्ञाय शीघ्रगामी भव ।

[—अ० ३३।२।१९]

विंशः—

**प्र नूनम्ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।**
**यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ४५ ॥**

प्र । नूनम् । ब्रह्मणः । पतिः । मन्त्रम् । वदति । उक्थ्यम् ॥
यस्मिन् । इन्द्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि । चक्रिरे ॥ ४५ ॥

अयं ब्रह्मणस्पतिः मन्त्रस्य पालकः उक्थ्यं शस्त्राशस्त्रार्हं मन्त्रं नूनम् इदानीमपि प्रकर्षेण वदति । उतः अस्य ब्रह्मणस्पतिनामधेयं युक्तमिति भावः । किंच यस्मिन् देवे, इन्द्रः वरुणः मित्रः अर्यमा देवाः उक्तेभ्योऽन्ये देवाः कतिचित्[१] स्थानानि च चक्रिरे कृतवन्तः । ब्रह्मणस्पतिबृहस्पत्योः मन्त्रेण सह प्रयोगे बृहस्पतौ सर्वे देवाः तत्तत् कार्यालोचनद्वारेण उपतिष्ठन्ते इत्यर्थः ।

[—अ० ३३।२।२०]

एकविंशः—

**ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयञ्च जिन्व ।**
**विश्वन्तद्भद्रँय्यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥ ४६ ॥**

ब्रह्मणः । पते । त्वम् । अस्य । यन्ता । सूक्तस्य । बोधि । तनयम् । च । जिन्व ॥
विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुवीराः ॥४६॥

हे ब्रह्मणस्पते यन्ता सर्वेषां नियन्ता त्वं सूक्तस्य अस्य, शस्त्रादेः कर्मणि षष्ठी, तत् बोधि बुध्यस्व, सम्यक् कृतमिति जानीहि । अवगत्य किं च तनयं पुत्रादिकं जिन्व, प्रीणनार्थः, जिविः प्रीणय, धनादिदानेन पोषय इत्यर्थः । तद् विश्वं सर्वम् अस्मदीयं भद्रं कल्याणात्मकम् अस्तु । यद् द्रव्यजातं देवाः ब्रह्मणस्पतिमुखात् अवन्ति पालयन्ति । अतः सुवीराः सुपुत्राः वयं विदथे यज्ञे बृहत् अति प्रभूतं तावदेव ब्रह्मणस्पतिं[२] स्तूयाम ।

[—अ० ३३।२।२१]

---

१. ओकांसि इत्यादि । १. वदेम इत्यादि ।

पूर्वम् आम्नातान् मन्त्रान् प्रतीकेन उपादत्ते—

**य इमा विश्वा विश्वकर्मा यो नः पितान्नपतेऽन्नस्य नो देहि ॥ ४७ ॥**

**यः । इमा । विश्वा । विश्वकर्मा । यः । नः । पिता । अन्नपते । अन्नस्य । नः । देहि ॥४७॥**

"य इमा विश्वा भुवनानि जुह्वदृषिः" ( अ. १८।१७ ) इति एकः मन्त्रः । "विश्वकर्मा ह्यजनिष्ट देव आदिद् गन्धर्वोऽभवत्" ( अ. १८।३२ ) इति अपरः । "यो नः पिता जनिता यो विधाता" ( अ. १८।२७ ) इति अपरः । "अन्नपतेऽन्नस्य नो देहि" ( अ. १२।८३ ) इति अन्यः । एते मन्त्राः व्याख्याततराः इति अन्ते[1] उपन्यस्यन्ते । [—अ० ३३।२।२२]

**इति त्रयस्त्रिंशोऽध्याये द्वितीयोऽनुवाकः ।**

**वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।**
**पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः ॥**

**इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कणसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये त्रयस्त्रिंशोऽध्यायः ।**



१. धत्र. उ. म्यु. ।

# अथ चतुस्त्रिंशोऽध्यायः

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

[ प्रथमोऽनुवाकः १–८ ]

पूर्वस्मिन् अध्याये अनारभ्याधीताः केचिन्मन्त्राः उक्ताः। अथ इदानीं "देव सवितः प्र सुव" इति चतुस्त्रिंशेऽध्याये "सहस्रशीर्षा पुरुष" इति पञ्चत्रिंशाध्यायस्य आद्यन्तयोः द्वयोः अनुवाकयोः पौरुषमेधिकमन्त्राः देवतान्तरसम्बद्धाः नृपशवः उच्यन्ते। तत्र ब्राह्मणम्—"पुरुषो ह नारायणोऽकामयत, अतितिष्ठेयꣳसर्वाणि भूतान्यहमेवेदꣳसर्वꣳस्यामिति, स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत्, तमाहरत्, तेनायजत, तेनेष्ट्वात्यतिष्ठत्, सर्वाणि भूतानीदꣳसर्वमभवदतितिष्ठति सर्वाणि भूतानीदꣳ सर्वं भवति, य एवं विद्वान् पुरुषमेधेन यजते यो वै तदेवं वेदैतस्य त्रयोविꣳशतिर्दीक्षा द्वादशोपसदः पञ्चसुत्याः स एष चत्वारिꣳशद्रात्रः सदीक्षोपसत्कश्चत्वारिꣳशदक्षरा विराट् तद् विराजमभिसम्पद्यते" ( श. का. १३ । अ. ६ । ब्रा. १ । कं. १-२ ) इति अनेन अहःक्लृप्तिमभिधाय पञ्चसुत्या इति एतद्वाक्यं व्याचष्टे। "तस्य अग्निष्टोमः प्रथममहर्भवति, अथोक्थ्योऽथातिरात्रोक्थ्योऽथाग्निष्टोमः स वा एष उभयतो ज्योतिः उभयत उक्थ्यो यवमध्यः पञ्चरात्रो भवतीति। तत्र एकादशाग्नीषोमीयाः पशवः उपवसथे तेषाꣳसमानं कर्मैकादश यूपा एकादशाक्षरा त्रिष्टुबिति एकादशिनाः सुत्यासु पशवो भवन्ति, एकादशाक्षरा त्रिष्टुबिति" ( श. का. १३ । अ. ६ । ब्रा. १ । कं ४-९ ) यश्चैकादशिनीं वावोचत्। तत्र कात्यायनः—"पशूनुपाकरिष्यन् अतिरात्रे देव सवितः इति प्रत्यृचं तिस्रो जुहोतीति" ( अ. २१।१७ ) अतिरात्राख्ये मध्यमेऽह्नि "देव सवितः प्र सुव" "तत्सवितुर्वरेण्यम्" "विश्वानि देव सवितः" इति तिस्रः ऋचः, प्रत्यृचं पशूनुपाकरिष्यन् जुहोति इत्यर्थः।

तत्र प्रथममाह—

**देव॑ सवितः॒ प्र सु॑व य॒ज्ञम्प्र सु॑व य॒ज्ञप॑तिम्भगा॑य ।**
**दि॒व्यो ग॑न्ध॒र्वः के॑त॒पूः केत॑न्नः पुनातु वा॒चस्पति॒र्वाचं॑न्नस्स्वदतु ॥ १ ॥**

देव । सवितः । प्र । सुव । यज्ञम् । प्र । सुव । यज्ञपतिम् । भगाय ।
दिव्यः । गन्धर्वः । केतपूः । केतम् । नः । पुनातु । वाचस्पतिः । वाचम् । नः । स्वदतु ॥१॥

हे देव द्योतमान, हे सवितः सर्वप्राणिनाम् अन्तर्यामित्वेन प्रेरक, त्वं यज्ञं पुरुषमेधाख्यं प्रसुव प्रेरय। तथा भगाय प्रतिष्ठारूपभाग्यार्थं यज्ञपतिं यज्ञस्य पालकं यजमानं प्रसुव तत् कर्मणि प्रेरय, तथा दिव्यः दिवि भवः केतपूः 'केत' इति प्रज्ञानाम, प्रज्ञायाः शोधकः सत्कर्मणा, पुरुषान् प्रेरय। गन्धर्वः गवां धारकः, गोशब्देन सर्वं जगद् विवक्ष्यते, सर्वस्य जगतः धारकः, "गवि गन् धृञो वः" इति गोशब्दोपपदात् ( धृञो ) 'व' प्रत्ययः। एवं विधः सविता नः अस्माकं केतं प्रज्ञां पुनातु शोधयतु। तथा[१] वाचस्पतिः सविता नः अस्माकं वाचं मन्त्ररूपां स्वदतु। प्रतिष्ठारूपं फलं पुरुषमेधेन सम्पद्यते

१. च, उ० म्यु० ।

इति ब्राह्मणे श्रूयते । "ता वा एताः चतस्रो दशतो भवन्ति तद् यदेताश्चतस्रो दशतो भवन्ति एषां चैव लोकानामाप्त्यै दिशाञ्चेममेव लोकं प्रथमया दशताप्नुवन्नन्तरिक्षं द्वितीयया दिवं तृतीयया दिशश्चतुर्थ्या तथैवैतद् यजमान इममेव लोकं प्रथमया दशताप्नोत्यन्तरिक्षं द्वितीयया दिवं तृतीयया दिशश्चतुर्थ्यैतावद् वा इदꣳसर्वं यावदिमे च लोका दिशश्च सर्वं पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुध्या" ( श. का. १३ । अ. ६ । ब्रा. १ । कं ३ ) इति लोकत्रयं दिशश्च व्याप्नोति । तत्र पुरुषमेधेन इष्टवान् यजमानः प्रतिष्ठित इत्यर्थः । अत एव कात्यायनः—"पुरुषमेधस्त्रयोविंशतिदीक्षोऽतिष्ठाकामस्येति" ( अ. २१।१ ) । [—अ० ३४।१।१]

द्वितीयमन्त्रमाह—

**तत्स॑वि॒तुर्वरे॑ण्य॒म्भर्गो॑ दे॒वस्य॑ धीमहि ।**
**धियो॒ यो नः॑ प्रचो॒दयात् ॥ २ ॥**

पदच्छेदः स्पष्टः ॥ २ ॥

पूर्वमिदं व्याख्यातम् ( अ. २४।१३ ) । [—अ० ३४।१।२]

तृतीयः—

**विश्वा॑नि देव सवितर्दुरि॒ता॒नि॒ परा॑ सुव ।**
**यद्भ॒द्रन्तन्न आ सु॑व ॥ ३ ॥**

विश्वानि । देव । सवितः । दुरितानि । परा । सुव ॥
यत् । भद्रम् । तत् । नः । आ । सुव ॥ ३ ॥

विश्वानि सर्वाणि दुरितानि कालत्रयवर्तीनि दुःखानि परासुव पराङ्मुखानि गमय । तत्र यद् भद्रं कल्याणम् अस्ति तत्सर्वं नः अस्माकम् आसुव आगमय । अत्र ब्राह्मणम्—"स वै पशूनुपाकरिष्यन्नेतास्तिस्रः सावित्रीराहुतीर्जुहोति देव सवितस्तत् सवितुर्वरेण्यं विश्वानि देव सवितरिति सवितारं प्रीणातीति" ( श. का. १३ । अ. ६ । ब्रा. २ । कं. ९ ) । यद्यपि ब्राह्मणे सूत्रे च तिसृणामृचां विनियोगः उक्तः तथापि, "विभक्तारꣳहवामहे" इत्यस्य तद्देवत्यत्वात् गायत्रीच्छन्दस्त्वाच्च पूर्वेण सह विकल्पितो मन्त्र इति अवगम्यते । [—अ० ३४।१।३]

तत् पाठस्तु—

**वि॒भ॒क्तार॑ꣳहवामहे॒ वसो॑श्चि॒त्रस्य॒ राध॑सः ।**
**स॒वि॒तार॑न्नृ॒चक्ष॑सम् ॥ ४ ॥**

विभक्तारम् । हवामहे । वसोः । चित्रस्य । राधसः ॥
सवितारम् । नृचक्षम् ॥ ४ ॥

वसोः वासयितुः, निवासहेतुभूतस्य चित्रस्य[1] राधनीयस्य स्वर्गादिरूपस्य वा विभक्तार विभागकर्तारं दातारं कर्मानुरूपतया फलस्य सत्तायाः कर्तारं, नृचक्षसं नणाम् अन्तर्यामित्वेन सदा ज्ञातं सवितारम् एतन्नामकं देवं हवामहे पुरुषमेधाख्ये यज्ञे आह्वयामः । कात्यायनः—"ऐकादशिनानुपाकृत्य ब्राह्मणादींश्च, नियोजनकालेऽष्टाचत्वारिंशतमाद्यानग्निष्ठे, इतरेष्वेकादशैकादश, द्वितीयोच्छ्रिते

१. राधसः इत्यादि ।

शेषान् ( अ० २१।७-१० ) इति। अतिरात्राख्ये मध्यमेऽह्नि एकादशाग्नीषोमीयान् पशूनुपाकृत्य नियोजनकाले ब्राह्मणादीन् मनुष्यजातीयान् सप्तत्युत्तरशतसंख्यकान् पशूंश्च उपाकृत्य अग्निष्ठे, अग्निसमीपे तिष्ठतीति अग्निष्ठः, तस्मिन्, मध्यमे यूपे ब्राह्मणादीन् आद्यान् अष्टचत्वारिंशत् संख्यकान् पशून् नियोजयति, उपाकरोति, इतरेषु दशसु यूपेषु प्रत्येकम् एकादशसंख्यकान् पशून् उपाकरोति अवशिष्टान् पशून् द्वितीयत्वेन उच्छ्रिते अग्निष्ठसमीपवर्तिनि यूपे उपाकरोति। तथा च ब्राह्मणम्—"तान् वै मध्यमेऽहन्नालभतेऽन्तरिक्षं वै मध्यममहरन्तरिक्षं वै सर्वेषां भूतानामायतन" मित्यारभ्य "अष्टाचत्वारिंशतम्मध्यमे यूपे आलभतेऽष्टाचत्वारिंशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्ध एकादशैकादशेतरेषु एकादशाक्षरा त्रिष्टुबिति"। ( श. का. १३। अ. ६। ब्रा. २। कं. २, ५, ६ )। तत्र ब्राह्मणे, ब्राह्मणमालभ्य सप्तदशदशकान्युच्यन्ते। ब्राह्मणेऽपि तानि एकादश दश आलभते इति उक्तत्वात्। तत्र प्रथमं ब्राह्मणादिपशुदशकमाह। [—अ० ३४।१।४]

तत् पाठस्तु—

**ब्रह्म॑णे ब्राह्म॒णङ्क्ष॒त्राय॑ राज॒न्य॑म्म॒रुद्भ्यो॒ वैश्य॒न्तप॑से शू॒द्रन्तम॑से॒ तस्क॑रन्ना॒रका॑य॑ वीर॒हण॑म् ।**

**पा॒प्मने॒ क्लीब॑मा॒क्र॒याया॑ अयो॒गूङ्का॒मा॑य पुंश्च॒लूमति॑क्रु॒ष्टाय माग॒धम् ॥ ५ ॥**

**ब्रह्मणे। ब्राह्मणम्। क्षत्राय। राजन्यम्। मरुद्भ्यः। वैश्यम्। तपसे। शूद्रम्। तमसे। तस्करम्। नारकाय। वीरहणम्॥**

**पाप्मने। क्लीबम्। आक्रयायै। अयोगूम्। कामाय। पुंश्चलूम्। अतिक्रुष्टाय। मागधम्॥ ५॥**

अत्र चतुर्थ्यन्ताः देवताः द्वितीयान्ताः पशवः। आलभत इति सर्वत्र अनुवर्तते। ब्रह्म ब्राह्मणजात्यभिमानी देवः, तस्मै कंचित् ब्रह्मवर्चसम् उक्तं ब्राह्मणजातीयपुरुषम् आलभते। "ब्रह्म वै ब्राह्मणो ब्रह्मैव तद् ब्रह्मणा समर्द्धयति, क्षत्राय राजन्यम्। क्षत्रं वै राजन्यः क्षत्रमेव तत् क्षत्रेण समर्द्धयति, मरुद्भ्यो वैश्यम्। विशो वै मरुतो विशमेव तद् विशा समर्द्धयति। तपसे शूद्रम्। तपो वै शूद्रस्तप एव तत् तपसा समर्द्धयतीति"। ( श. का १३। अ. ६। ब्रा. २। कं १० )। तमसे तस्करम्। तमसे अन्धकारदेवतायै तमःप्रियं चोरम्। 'निरयस्वामिने वीरहणम् अग्न्युत्सादकम्। "वीरहा वा एष देवानां योऽग्निमुद्वासयतीति" ब्राह्मणम्। पापस्वामिने नपुंसकम्। आक्रयायै सर्वद्रव्यक्रयकारिदेवाय, अयोगूम् अयोजशस्त्रस्य कर्तारम्। कामदेवाय पुंश्चलूम्, साधारणां स्त्रियम्। अतिक्रुष्टाय अनिन्दितदेवाय मागधं क्षत्रियायां वैश्येन उत्पादितम्। [—अ० ३४।१।५]

द्वितीयमाह—

**नृ॒त्ताय॑ सू॒तङ्गी॒ताय॑ शैलू॒षन्धर्मा॑य सभाच॒रन्न॒रिष्ठा॑यै भीम॒लम् ।**

**न॒र्माय॑ रे॒भꣳ हसा॑य॒ कारि॑मान॒न्दाय॑ स्त्रीष॒खम्प्रम॒दे॑ कुमारीपु॒त्रम्मे॒धायै॑ रथका॒रन्धैर्या॑य॒ तक्षा॑णम् ॥ ६ ॥**

---

१. नारकाय इत्यादि।

पदच्छेदः स्पष्टः ॥ ६ ॥

नृत्ताय नृत्ताभिमानिने सूतं ब्राह्मण्यां क्षत्रियेण उत्पादितम्, गानजीविनम् । पशून् आलभेत इति सर्वत्र समन्वयः । गीताय गीताभिमानिने, शैलूषम् अन्यस्मै स्वभार्याप्रदायिनम्, नर्तनजीविनम्, धर्माय धर्माभिमानिने सभाचरं सभायां नित्यं चरन्तम्, धर्मस्य प्रवक्तारम् । नरिष्ठायै नरि इष्टरूपे अन्यस्मिन् अवस्थिता नरिष्ठा, परतन्त्राभिमानिनी, तस्यै देवतायै, भीमलं भीरुं चपलास्यम् । नर्माय विनोदाभिमानिने रेभं मेधाविनं चाटूक्तिकुशलम् । हसाय हसाभिमानिने कारिं नृत्यन् इव यः गच्छति तादृशं विकटगमनकारिणम् । आनन्दाय आनन्दाभिमानिने स्त्रीषखं स्त्रीणां प्रियम् । प्रमदे, 'मदी हर्षे' इति धातुः । प्रकृष्टहर्षाभिमानिने, कुमारीपुत्रं दुहितुः पुत्रम् । मेधायै ग्रन्थार्थधारणाभिमानिन्यै रथकारं रथस्य कर्तारम् निपुणमतिम् । धैर्याय धैर्याभिमानिने तक्षाणं वर्द्धकिम् । [—अ० ३४।१।६]

तृतीयमाह—

**तप॑से कौला॒लम्मा॒यायै॑ क॒र्मार॑ꣳरू॒पाय॑ मणिका॒रꣳशु॒भे व॒पꣳश॑र॒व्या॑या इषुका॒रꣳ हे॒त्यै ध॑नुष्का॒रम् ।**
**कर्म॑णे ज्याका॒रन्दि॒ष्टाय॑ रज्जुस॒र्जम्मृ॒त्यवे॑ मृग॒युमन्त॑काय श्व॒निन॑म् ॥ ७ ॥**

पदच्छेदः स्पष्टः ॥ ७ ॥

तपसे तपोऽभिमानिने कौलालं कुलालस्यापत्यम्, मायायै चिकित्साकारणशक्त्यै कर्मारं लोहकारम्, रूपाय शुक्लकृष्णादिरूपाभिमानिने मणिकारं मणिमुक्तादिसंस्कर्तारम्, शुभे शोभनाभिमानिन्यै वपम्, 'टुवप् बीजसन्ताने' इति धातुः, बीजानां वप्तारम्, शरव्यायै बाणसमूहाभिमानिन्यै इषुकारं बाणानां संस्कर्तारम्, हेत्यै आयुधाभिमानिन्यै धनुष्कारं धनुषां संस्कर्तारम्, कर्मणे व्यापाराभिमानिने ज्याकारं ज्यानां संस्कर्तारम्, दिष्टाय भवितव्याभिमानिने रज्जुसर्जं रज्जूनां स्रष्टारम्, मृत्यवे मरणाभिमानिने मृगयुं मृगाणां हन्तारम्, अन्तकाय प्राणापहारिणे श्वनिनं श्वभिः सह क्रीडाजीविनम् इत्यर्थः । [—अ० ३४।१।७ ]

चतुर्थमाह—

**न॒दीभ्य॑ः पौञ्जि॒ष्टमृ॒क्षीका॑भ्यो॒ नैषा॑दम्पुरुषव्या॒घ्राय॑ दु॒र्मद॑ङ्गन्धर्वाप्स॒रोभ्यो॒ व्रात्य॑म् ।**
**प्र॒युग्भ्य॒ उन्म॑त्तꣳसर्पदेवज॒नेभ्योऽप्र॑तिपद॒मये॑भ्यः कित॒वमी॒र्यता॑या॒ अकि॑तवम्पि॒शाचेभ्यो॑ विदलका॒रीं या॑तु॒धाने॑भ्यः कण्टकीका॒रीम् ॥ ८ ॥**

पदच्छेदः स्पष्टः ॥ ८ ॥

नदीभ्यः नदीदेवताभ्यः पौञ्जिष्टं कैवर्तम्, ऋक्षाकाभ्यः शून्यस्थलीदेवताभ्यः नैषादम्, निषाद एव नैषादः, तम्, पुरुषव्याघ्राय पुरुषश्रेष्ठाभिमानिने दुर्म्मदम् अत्यन्तमदम्, गन्धर्वाप्सरोभ्यः गन्धर्वेभ्यः तदीययोषिद्भ्यश्च व्रात्यं शास्त्रीयहीनं पुरुषम्; प्रयुग्भ्यः प्रकर्षेणाभिमतफलसंयुक्तदेवेभ्यः उन्मत्तम् उन्मादयुक्तम्, सर्पदेवजनेभ्यः सर्पाभिमानिन्यः देवजनवाच्याः गारुडिकाभिमानिन्यश्च, अप्रतिपदं प्रतिपत् प्रतिपत्तिः संस्कारः तदयोग्यम्, अयेभ्यः गमनाभिमानिभ्यः कितवं द्यूतासक्तम्, ईर्यतायै, ईरा अन्नं, तत्र माधुर्यान्नसमृद्धा इत्यर्थः, तदभिमानिन्यै, अकितवं द्यूतादिव्यसन-

रहितम्, पिशाचेभ्यः देवयोनिविशेषेभ्यः विदलकारीम्, वंशान् विदलीकृत्य शूळसूर्पादिकं यः करोति तस्य स्त्री विदळकारी, तज्जातीयाम्, यातुधानेभ्यः रक्षोविशेषेभ्यः, कण्टकीकारीम्, आरामादिषु कण्टकावृतिकर्तुः स्त्रियम्, पशुमाळभेत इति शेषः। [—अ० ३४।१।८]

चतुस्त्रिंशेऽध्याये प्रथमोऽनुवाकः।

[ द्वितीयोऽनुवाकः ९—१३ ]

द्वितीयेऽनुवाके पञ्च पशुदशकानि उच्यन्ते। तत् प्रथमं पूर्वापेक्षया पञ्चदशकमाह—

**सन्धये जारङ्गेहायोपपतिमार्त्यै परिवित्तन्निर्ऋत्यै परिविविदानमराध्या एदिधिषुःपतिन्निष्कृत्यै पेशस्कारीᳪं सञ्ज्ञानाय स्मरकारीम्।**
**प्रकामोद्यायोपसदं वर्णायानुरुधम्बलायोपदाम् ॥ ९ ॥**

**सन्धये। जारम्। गेहाय। उपपतिम्। आर्त्यै। परिवित्तम्। निर्ऋत्यै। परिविविदानम्। अराध्यै। एदिधिषुःपतिम्। निष्कृत्यै। पेशस्कारीम्। संज्ञानाय। स्मरकारीम् ॥ प्रकामोद्याय। उपसदम्। वर्णाय। अनुरुधम्। बळाय। उपदाम् ॥ ९ ॥**

सन्धये जारम्, सन्धये संघटनाभिमानिन्यै जारं पारदारिकम्, गेहाय गृहाभिमानिने उपपतिं प्रज्ञातजारम्, पूर्वो जारः स्वविज्ञातः, अयं च भर्त्रा अनुज्ञात इति विशेषः। आर्त्यै दुःखदेवतायै परिवित्तं ज्येष्ठात् पूर्वमेव ऊढभार्यम्, निर्ऋत्यै निर्ऋतिदेवतायै परिविविदानं प्रथमतो विवाहशीलम्, तदाग्रहभक्तमित्यर्थः, आराध्यै कार्यसिद्धिप्रतिमाभिमानिन्यै एदिधिषुःपतिं बहूपपतीनां वर्द्धनमिच्छन्ती एदिधिषुः, तस्याः पतिम्, निष्कृत्यै कार्याभिमानिन्यै पेशस्कारीं सुवर्णकारस्य भार्याम्, संज्ञानाय समानज्ञानाभिमानिने स्मरकारीं मन्त्रौषधादिभिः भर्तुः कामोत्पादिकाम्, प्रकामोद्याय प्रकामं स्वेच्छानुसारेण वदतीति प्रकामोद्यः बहुप्रळापी, तदभिमानिने, उपसदम्, प्रयोजनमन्तरेणैव बहुभाषिणम्, सभायामुपरि वरिष्ठम्, वर्णाय शुक्लकृष्णाभिमानिने अनुरुधं स्वकीयप्रयोजनमन्तरेणैव परानुरोधेन यः प्रवर्तते तादृशम्, बळाय बळाभिमानिने उपदाम् अन्नमात्रप्रदानेन या कन्या गृह्यते सेयम् उपदा, तादृशीम्। [—अ० ३४।२।१]

षष्ठमाह—

**उत्सादेभ्यः कुब्जम्प्रमुदे वामनन्द्वार्भ्यः स्रामᳪं स्वप्नायान्धमधर्माय बधिरम्पवित्राय भिषजम्।**
**प्रज्ञानाय नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षाया अभिप्रश्निनम्मर्यादायै प्रश्नविवाकम् ॥१०॥**

**उत्सादेभ्यः। कुब्जम्। प्रमुदे। वामनम्। द्वार्भ्यः। स्रामम्। स्वप्नाय। अन्धम्। अधर्माय। बधिरम्। पवित्राय। भिषजम् ॥ प्रज्ञानाय। नक्षत्रदर्शम्। आशिक्षायै। प्रश्निनम्। उपशिक्षायै। अभिप्रश्निनम्। मर्यादायै। प्रश्नविवाकम् ॥ १० ॥**

उत्सादा देवाः, उत्सादेभ्यः कार्यनाशाभिमानिभ्यः, कुब्जं वक्रपृष्ठभागपुरुषम्, प्रमुदे प्रकृष्टहर्षाभिमानिने, वामनं खर्वशरीरं पुरुषम्, द्वार्म्यः द्वाराभिमानिभ्यः, स्रामं रोगिणम्, [1]स्वप्नाभिमानिने, अन्धं दृष्टिहीनम्, अधर्माय पापाभिमानिने, बधिरं श्रवणशक्तिहीनम्, पवित्राय शुद्धाभिमानिने भिषजं चिकित्सकम्, प्रज्ञानाय ज्ञानाभिमानिने नक्षत्रदर्शं ज्योतिःशास्त्रविदम् , आशिक्षायै वेदशास्त्रेषु आपरिचयः आशिक्षा, तदभिमानिन्यै, प्रश्निनं शास्त्रार्थेषु सन्देहे प्रश्नकर्तारम्, उपशिक्षायै वेदशास्त्रादिविषये सम्यक् परिचयः उपशिक्षा, तदभिमानिन्यै, अभिप्रश्निनं प्रश्नस्योत्तरनिपुणम्, परिपूर्णः प्रश्नः अभिप्रश्नः, तदुक्तम्, पूर्णप्रश्ननिराकर्तारम् इत्यर्थः। मर्यादायै शास्त्रव्यवस्थाभिमानिन्यै, प्रश्नविवाकं परकीयं प्रश्नं सम्यक् विविच्य उत्तरस्य वक्तारम्। [—अ० ३४।२।२ ]

सप्तममाह—

अर्मेभ्यो हस्तिपञ्जवायाश्वपम्पुष्ट्यै गोपालँ्वीर्यायाविपालन्तेजसेऽजपालमिरायै कीनाशम्।
कीलालाय सुराकारम्भद्राय गृहपꣳश्रेयसे वित्तधमाध्यक्षायानुक्षत्तारम् ॥११॥

अर्मेभ्यः। हस्तिपम्। जवाय। अश्वपम्। पुष्ट्यै। गोपाळम्। वीर्याय। अविपाळम्। तेजसे। अजपाळम्। इरायै। कीनाशम् ॥
कीलाळाय। सुराकारम्। भद्राय। गृहपम्। श्रेयसे। वित्तधम्। आध्यक्षाय। अनुक्षत्तारम् ॥ ११ ॥

अर्मेभ्यः गतिविशेषाभिमानिभ्यः हस्तिपं गजपालकम्, जवाय वेगाभिमानिने, अश्वपम् अश्वपालकम्, पुष्ट्यै पुष्ट्यभिमानिन्यै गोपालं गवां पालकम्, वीर्याय वीर्याभिमानिने अविपालं मेषाणां पालकम् तेजसे तेजोऽभिमानिने अजपालम् अजानां पालकम्, इरायै इराभिमानिन्यै कीनाशं कर्षकम्, कीलालाय जलाभिमानिने, सुराकारं सुरायाः उत्पादयितारम्, भद्राय कल्याणाभिमानिने गृहपं गृहाणां पालकम्, श्रेयसे कल्याणाभिमानिने, वित्तधं वित्तस्य पोषकम्, आध्यक्षाय प्रत्यक्षीकरणाभिमानिने, अनुक्षत्तारं सारथेः अनुचरम्। [—अ० ३४।२।३ ]

अष्टममाह

भायै दार्वाहारम्प्रभाया अग्न्येधम्ब्रध्नस्य विष्टपायाभिषेक्तारँ्वर्षिष्ठाय नाकाय परिवेष्टारम्।
देवलोकाय पेशितारम्मनुष्यलोकाय प्रकरितारꣳ सर्वेभ्यो लोकेभ्य उपसेक्तारमवर्ऋत्यै वधायोपमन्थितारम्मेधाय वासः पल्पूलीम्प्रकामाय रजयित्रीम् ॥१२॥

---

१. स्वप्नाय इत्यादिः।

भायै । दार्वाहारम् । प्रभायै । अग्न्येधम् । ब्रघ्नस्य । विष्टपाय । अभिषेक्तारम् । वर्षिष्ठाय । नाकाय । परिवेष्टारम् ॥
देवलोकाय । पेशितारम् । मनुष्यलोकाय । प्रकरितारम् । सर्वेभ्यः । लोकेभ्यः । उपसेक्तारम् । अवऋत्यै । वधाय । उपमन्थितारम् । मेधाय । वासःपल्पूलीम् । प्रकामाय । रजयित्रीम् ॥ १२ ॥

भायै दीप्यमानाभिमानिन्यै, दार्वाहारम् इन्धनस्य आहर्तारम्, प्रभायै प्रकृष्टदीप्त्यभिमानिन्यै, अग्न्येधम् अग्नेः प्रज्वलनेन वर्द्धयितारम्, 'एध वृद्धौ' इति धातुः । ब्रघ्नस्य विष्टपाय आदित्यलोकपालयित्रे, अभिषेक्तारम् अभिषेकस्य कर्तारम्, वर्षिष्ठाय अतिशयेन वृद्धाय, नाकाय स्वर्गाभिमानिने परिवेष्टारं भोजने परिवेषणकर्तारम्, देवलोकाय देवलोकाभिमानिने, पेशितारं प्रशान्तस्य वैरस्य उत्थापयितारम्, मनुष्यलोकाय मनुष्यलोकाभिमानिने, प्रकरितारं स्निग्धानां वैरस्य उत्पादनेन शोषयितारम् , सर्वेभ्यः लोकेभ्यः सर्वलोकाभिमानिभ्यः, उपसेक्तारं वैरस्य शमयितारम्, अवऋत्यै वधाय कृत्स्नाय विलक्षणवधाभिमानिने, उपमन्थितारं स्वयमुपेत्य वैरस्य जनयितारम्, मेधाय यज्ञमेधाभिमानिने, वासःपल्पूलीं वाससां शोधयित्रीं, रजकीम्, प्रकामाय प्रकृष्टकामाभिमानिने रजयित्रीं वस्त्रस्य रञ्जनकर्त्रीम् ॥ [—अ० ३४।२१४ ]

नवममाह—

**ऋ॒तये॑ स्ते॒नहृ॑दयँ॒व्वैर॑हत्याय॒ पिशु॑नंव्विवि॑क्त्यै क्ष॒त्तार॒मौप॑द्रष्ट्याया॒नुक्ष॒त्तार॒म्ब॒लाया॒नुच॒रम्भू॒म्ने परि॑ष्कन्दम्प्रि॒याय॑ प्रियवा॒दिन॒मरि॑ष्ट्या अश्वसा॒दꣳ स्व॒र्गाय॑ लो॒काय॑ भागदु॒घँव्वर्षि॑ष्ठाय॒ नाका॑य परिवे॒ष्टार॑म् ॥१३॥**

ऋतये । स्तेनहृदयम् । वैरहत्याय । पिशुनम् । विविक्त्यै । क्षत्तारम् । औपद्रष्टचाय । अनुक्षत्तारम् । बलाय । अनुचरम् । भूम्ने । परिष्कन्दम् । प्रियाय । प्रियवादिनम् । अरिष्ट्यै । आश्वसादम् । स्वर्गाय । लोकाय । भागदुघम् । वर्षिष्ठाय । नाकाय । परिवेष्टारम् ॥ १३ ॥

ऋतये चौरस्य चौर्यात् ऊद्ध्र्वंगमनम् ऋतिः, तदभिमानिन्यै, स्तेनहृदयम्, चौर्ये तात्पर्यम् । वरहत्याय वैरहत्याभिमानिने पिशुनं प्रभुकर्णे परस्य दोषकथकम्, विविक्त्यै कार्यविवेचनाभिमानिन्यै, क्षत्तारं सारथिम्, औपद्रष्टचाय, उपद्रष्टा राजगृहस्य प्रत्यवेक्षिता, तदभिमानिने, अनुक्षत्तारं सारथेः अनुचरम्, बलाय बलाभिमानिने, अनुचरं सेवकम्, भूम्ने महत्त्वाभिमानिने, परिष्कन्दं परिचारकम्, प्रियाय प्रियवादित्वाभिमानिने प्रियवादिनं मृदुभाषिणम्, अरिष्ट्यै अहिंसाभिमानिन्यै, अश्वसादम् अश्वस्यारोहम्, स्वर्गाय लोकाय स्वर्गलोकाभिमानिने, भागदुघं प्रजाभ्यः राजभागस्य सम्पादकम्, वर्षिष्ठाय नाकाय अतिवृद्धस्वर्गाभिमानिने परिवेष्टारं भोजनकाले परिवेषणस्य कर्तारम् । [—अ० ३४।२१५ ]

इति चतुस्त्रिंशे द्वितीयोऽनुवाकः ।

[ तृतीयोऽनुवाकः १४–१८ ]

तृतीये पञ्चपशुविषया दशका उच्यन्ते। तत् प्रथमं पूर्वसंख्यापेक्षया दशमदशकमाह—

**मन्यवेऽयस्तापङ्क्रोधाय निसरँय्योगाय योक्तारꣳ शोकायाभिसर्तारङ्क्षेमाय विमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनम् ।**
**वपुषे मानस्कृतꣳ शीलायाञ्जनीकारीन्निर्ऋत्यै कोशकारीँय्यमायासूम् ॥१४॥**

**मन्यवे। अयस्तापम्। क्रोधाय। निसरम्। योगाय। योक्तारम्। शोकाय। अभिसर्तारम्। क्षेमाय। विमोक्तारम्। उत्कूलनिकूलेभ्यः। त्रिष्ठिनम् ॥**
**वपुषे। मानस्कृतम्। शीलाय। अञ्जनीकारीम्। निर्ऋत्यै। कोशकारीम्। यमाय। असूम् ॥ १४ ॥**

मन्यवे मानसशोकाभिमानिने, अयस्तापम् [1]अयस्तापयितारं, लोहकारम्, क्रोधाय बाह्यक्रोधाभिमानिने, निसरं वध्यानां बहिर्निःसारयितारम्, योगाय अध्वराभिमानिने, योक्तारं रथे अश्वानां योजयितारम्, शोकाय शोकाभिमानिने, अभिसर्तारं रथस्य पुरतो गन्तारम्, क्षेमाय लब्धयानाभिमानिने, विमोक्तारं रथयुक्तानामश्वानां विमोक्तारम्, उत्कूलनिकूलेभ्यः काङ्क्षितात् अधिकलाभः उत्कूलः, तस्मात् अल्पलाभः निकूलः, तदभिमानिभ्यः, त्रिष्ठिनं पादाभ्यां दण्डेन इति एतैः त्रिभिः गन्तुम् अशक्तः एकत्र एवावस्थितः त्रिष्ठिनः, तादृशम्, वपुषे शरीराभिमानिने, मानस्कृतं मनसा एव अवश्यं योजयिता मनस्कृतः, तस्य पुत्रम्, शीलाय स्वभावविशेषः शीलम्, तदभिमानिने, अञ्जनीकारीम् अक्ष्णोः अञ्जनेन अलङ्कर्त्रीम्, निर्ऋत्यै पापदेवतायै, कोशकारीं ताम्रलोहघनकुशलाम्, खड्गादीनां वर्ममयकोशकारीं वा, यमाय प्राणहारिणे, असूं. सूतिः उत्पत्तिः, तत् रहितां वन्ध्यामित्यर्थः। [—अ० ३४।३।१ ]

एकादशदशकमाह—

**यमाय यमसूमथर्वभ्योऽवतोकाꣳसँव्वत्सराय पर्यायिणीम्परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्कद्वरीम् ।**
**वत्सराय विजर्जराꣳ सँव्वत्सराय पलिक्नीमृभुभ्योऽजिनसन्धꣳसाध्येभ्यश्चर्म्मम्नम् ॥१५॥**

**यमाय। यमसूम्। अथर्वभ्यः। अवतोकाम्। संव्वत्सराय। पर्यायिणीम्। परिवत्सराय। अविजाताम्। इदावत्सराय। अतीत्वरीम्। इद्वत्सराय। अतिष्कद्वरीम् ॥**
**वत्सराय। विजर्जराम्। संव्वत्सराय। पलिक्नीम्। ऋभुभ्यः। अजिनसन्धम्। साध्येभ्यः। चर्मम्नम् ॥ १५ ॥**

यमाय देवाय, यमसूं पुत्रयुगलप्रसवित्रीम्, अथर्वभ्यः अथर्वशाखागतमन्त्राभिमानिभ्यः, अवतोकां गर्भस्राविणीं स्त्रियम्, संवत्सराय, प्रभवादिषु अब्देषु प्रथमः यः संवत्सरः तदभिमानिने,

[1] अयस्तापितारम् उ. म्यु.

पर्यायिणीं प्रसवकालातिक्रमणेन या प्रसूयते सा पर्यायिणी, ताम्, परिवत्सराय, द्वितीयः अब्दः परिवत्सरः, तदभिमानिने, (भाष्यं नोपलब्धम् ?) अतिष्कद्वरीम्, गर्भपरिणामात् प्रागेव तत् प्रतिवन्धे सति सद्यः तद्युक्ता अतिष्कद्वरी ताम्, वत्सराय, पञ्चमः अब्दः वत्सरः, तदभिमानिने, विजर्जराम् अप्रसूत्या विजीर्णाम्, संवत्सराय सर्वस्य जगतः सद्मकारिणे, पलिक्नीम् प्रथमे वयसि एव पलिताङ्गीम्, वालगर्भिणीं वा, ऋभुभ्यः कालसन्धानहेतुभ्यः देवविशेषेभ्यः, अजिनसन्धं चर्मचयनसन्धानजीविनम्, साध्येभ्यः कालषाड्गुण्यहेतुभ्यः देवविशेषेभ्यः, चर्मम्नम् बाणादिप्रहारनिर्वारकचर्मनिर्मातारम् । [—अ० ३४।३।२ ]

द्वादशकमाह—

**सरोभ्यो धैवरमुपस्थावराभ्यो दाशँवैशन्ताभ्यो बैन्दन्नड्वलाभ्यः शौष्कलम् ।**
**पाराय मार्गारमवाराय केवर्तन्तीर्थेभ्य आन्दँविषमेभ्यो मैनालम् ।**
**स्वनेभ्यः पर्णकङ्गुहाभ्यः किरातꣳ सानुभ्यो जम्भकम्पर्वतेभ्यः किम्पूरुषम् ॥१६॥**

सरोभ्यः । धैवरम् । उपस्थावराभ्यः । दाशम् । वैशन्ताभ्यः । बैन्दम् । नड्वलाभ्यः । शौष्कलम् ॥
पाराय । मार्गारम् । अवाराय । केवर्तम् । तीर्थेभ्यः । आन्दम् । विषमेभ्यः । मैनालम् ॥
स्वनेभ्यः । पर्णकम् । गुहाभ्यः । किरातम् । सानुभ्यः । जम्भकम् । पर्वतेभ्यः । किंपूरुषम् ॥ १६ ॥

यानि सरांसि तदभिमानिभ्यः, धैवरम्, उभयतः जलं वध्नाति येन तेन जालविशेषेण मत्स्यग्राहिणम्, उपस्थावराभ्यः तरूणां समीपे प्रवाहमन्तरेण स्थिताः याः आपः तदभिमानिभ्यः, दाशं मत्स्यग्राहिणम्, वैशन्ताभ्यः पल्वलाभिमानिभ्यः, बैन्दम् बिन्दुः जलं, तेन जीवतीति बैन्दः, तम् नड्वलाभ्यः तृणसंयुक्तदेशवर्तिजलाभिमानिभ्यः, शौष्कलम् शुष्कलं बडिशं, तेन जीवतीति तम्, पाराय परतीराभिमानिने, मार्गारम् अन्तर्जले हस्ताभ्यां मत्स्यानां मार्गशीलम्, अवाराय अवतीराभिमानिने, केवर्तं कूले मत्स्यानां पुञ्जीकृत्य हन्तारम्, तीर्थेभ्यः अवतारस्थानाभिमानिभ्यः, आन्दं तीर्थसेतुवन्धेन मत्स्यग्राहिणम्, विषमेभ्यः अतीर्थाभिमानिभ्यः, मैनालं जालाजीविनम्, स्वनेभ्यः शब्दजलाभिमानिभ्यः, पर्णकं सविषं पर्णं जलोपरि स्थापयित्वा मत्स्यग्राहिणम्, गुहाभ्यः पर्वतगुहाभिमानिभ्यः, किरातं मृगघातिनम्, सानुभ्यः पर्वतशिखराभिमानिभ्यः, जम्भकं गात्राणां जम्भयितारम्, पर्वतेभ्यः पर्वताभिमानिभ्यः किंपूरुषं वनवासिनं गायकम् । [—अ० ३४।३।३ ]

त्रयोदशकमाह—

**बीभत्सायै पौल्कसँवर्णाय हिरण्यकारन्तुलायै वाणिजम्पश्चादोषाय ग्लाविनँ विश्वेभ्यो भूतेभ्यः सिध्मलम् ।**
**भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनँव्यृद्ध्या अपगल्भꣳसꣳशराय प्रच्छिदम् ॥१७॥**

बीभत्सायै । पौल्कसम् । वर्णाय । हिरण्यकारम् । तुलायै । वाणिजम् । पश्चादोषाय । ग्लाविनम् । विश्वेभ्यः । भूतेभ्यः । सिध्मलम् ॥
भूत्यै । जागरणम् । अभूत्यै । स्वपनम् । आर्त्यै । जनवादिनम् । व्यृद्ध्यै । अपगल्भम् । संशराय । प्रच्छिदम् ॥ १७ ॥

या दुष्टवस्तुषु हेयत्वबुद्धिः सा बीभत्सा, तदभिमानिन्यै, पौल्कसम् अतिनिकृष्टजातिम्, वर्णाय हिरण्यमणिमुक्तादिगतभास्वद्द्रव्याभिमानिने, हिरण्यकारं कटकमुकुटादिनिष्पादकम्, सुवर्णादिपरिमाणनिश्चयहेतुः तुला, तदभिमानिन्यै, वाणिजं क्रयविक्रयकारिणम्, पश्चादोषाय कुष्ठव्यतिरिक्तदोषाभिमानिने, ग्लाविनं नित्यकृशवपुषम्, विश्वेभ्यः भूतेभ्यः सिध्मलं कुष्ठरोगिणम्, भूतिः ऐश्वर्याभिमानिनी, तस्यै, जागरणं प्रबोधशीलम्, सर्वदा सावधानमित्यर्थः। अभूत्यै दारिद्र्याभिमानिन्यै, स्वपनं निद्रालुसमम्, प्रमादभूयिष्ठमित्यर्थः। आर्त्यै तदभिमानिन्यै, जनवादिनं परिवादशीलम्, व्यृद्ध्यै समृद्धिभावाभिमानिन्यै, अपगल्भं धार्ष्ट्यरहितम्, संसराय शराभिमानिने, प्रच्छिदं प्रकर्षेण छेत्तारम्।
[—अ० ३४।३।४ ]

चतुर्दशकमाह—

अक्षराजाय कितवङ्कृतायादिनवदर्शन्त्रेतायै कल्पिनन्द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुम्मृत्यवे गोव्यच्छमन्तकाय गोघातम् ।
क्षुधे योगाँव्विकृन्तन्तम्भिक्षमाण उपतिष्ठति दुष्कृताय चरकाचार्यम्पाप्मने सैलगम् ॥१८॥

अक्षराजाय । कितवम् । कृताय । आदिनवदर्शम् । त्रेतायै । कल्पिनम् । द्वापराय । अधिकल्पिनम् । आस्कन्दाय । सभास्थाणुम् । मृत्यवे । गोव्यच्छम् । अन्तकाय । गोघातम् ॥
क्षुधे । यः । गाम् । विकृन्तन्तम् । भिक्षमाणः । उप । तिष्ठति । दुष्कृताय । चरकाचार्यम् । पाप्मने । सैलगम् ॥ १८ ॥

अक्षाः द्यूतसाधनविशेषाः तेषां राजा, तदभिमानिने, कितवं द्यूतकुशलम्, कृताय कृतयुगाभिमानिने आदिनवदर्शम्, मर्यादया दोषस्य द्रष्टारं परीक्षकम्, त्रेतायै त्रेतायुगाभिमानिन्यै, कल्पिनम् अक्षाणां [१]कल्पिनम्, द्वापराय द्वापरयुगाभिमानिने, अधिकल्पिनम् अधिकमक्षविद्यायाः कल्पयितारम्, अधिकविद्यैकरतमित्यर्थः। आस्कन्दाय देवाय, सभास्थाणुम् अदेवनकालेऽपि यः सभां न मुञ्चति सोऽयं स्तम्भयमानत्वात् सभास्थाणुः, तम्, द्यूतसभाया अधिष्ठातारं वा तं पुरुषम्, मृत्यवे, गोव्यच्छं गवां विवासयितारम्, अन्तकाय, गोघातं विषकण्टकादिभिः गवां मारयितारम्, क्षुधे यः पुरुषः गां विकृन्तन्तं विच्छेदनं कुर्वाणं पुरुषं भिक्षमाणः याचमानः उपतिष्ठति सेवते क्षुन्निवारणार्थं नीचजातिः दरिद्रः गोविशसकं प्रति तदीयं मांसं याचते तस्मात् क्षुधे तदभिमानिन्यै देवतायै, तं नीचं पशुम् आलभते इत्यर्थः। दुष्कृताय दुर्घटकार्यकरणाभिमानिने, चरकाचार्यं वंशात् प्रवर्णनस्य शिक्षयितारम्। पाप्मने पापदेवतायै, सैलगम्, पथिकानां वस्त्रादिकम् अपहृत्य यः शैलं पर्वतं गच्छति, तादृशं पशुम् आलभेत।
[—अ० ३४।३।५]

इति चतुस्त्रिंशे तृतीयोऽनुवाकः।

---

१. कल्पकम् उ. म्यु.

[ चतुर्थोऽनुवाकः १९–२२ ]

पञ्चदशकमाह—

**प्रतिश्रुत्काया अर्तनङ्घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकꣳशब्दायाडम्बराघातम् ।**
**महसे वीणावादङ्क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मँवनाय वनपमन्यतोऽरण्याय दावपम् ॥१९॥**

**प्रतिश्रुत्कायै । अर्तनम् । घोषाय । भषम् । अन्ताय । बहुवादिनम् । अनन्ताय । मूकम् । शब्दाय । आडम्बराघातम् ॥**
**महसे । वीणावादम् । क्रोशाय । तूणवध्मम् । अवरस्पराय । शंखध्मम् । वनाय । वनपम् । अन्यतोऽरण्याय । दावपम् ॥ १९ ॥**

प्रतिश्रुत्कायै प्रतिध्वन्यभिमानिन्यै, अर्तनं देशवार्तानुकरणशीलम्, घोषाय ध्वन्यभिमानिने, भषम् असंबद्धप्रलापिनम्, अन्ताय छन्दोऽभिमानिने, बहुवादिनम् अधिकवदनशीलम्, अनन्ताय अपर्यवसितशब्दाभिमानिने, मूकं वाग्व्यवहाररहितम्, शब्दाय समन्तात् शब्दाभिमानिने, आडम्बराघातम् आडम्बरस्य आहन्तारम्, भेर्यादेः वादयितारमित्यर्थः । महसे कूजितशब्दाभिमानिने, वीणावादं वीणावादनकुशलम्, क्रोशाय महाशब्दाभिमानिने, तूणवध्मं वेणुवादकम्, अवरस्पराय हीनोत्तमशब्दाभिमानिने, शंखध्मं शंखस्य ध्मातारम्, वनाय वनाभिमानिने, वनपं वनस्य पालकम्, अन्यतोऽरण्याय एकपार्श्ववर्त्यरण्याभिमानिने, दावपम् अरण्याग्नेः पालकम् । [—अ० ३४।४।१ ]

षोडशकमाह—

**नर्माय पुꣳश्चलूꣳ हसाय कारिँ यादसे शाबल्याङ्ग्रामण्यङ्गणकमभिक्रोशकन्तान्महसे ।**
**वीणावादम्पाणिघ्नन्तूणवध्मन्तान्नृत्तायानन्दाय तलवम् ॥२०॥**

**नर्माय । पुंश्चलूम् । हसाय । कारिम् । यादसे । शाबल्याम् । ग्रामण्यम् । गणकम् । अभिक्रोशकम् । तान् । महसे ॥**
**वीणावादम् । पाणिघ्नम् । तूणवध्मम् । तान् । नृत्ताय । आनन्दाय । तलवम् ॥ २० ॥**

नर्माय प्रियवचनाभिमानिने, पुँश्चलूं साधारणस्त्रियम्, हसाय हास्याभिमानिने, कारिं नृत्यन् इव यः गच्छति तादृशम्, विकटगमनकारिणमित्यर्थः । यादसे जलचरप्राण्यभिमानिने, शाबल्यां शबलवर्णां स्त्रियम्, ग्रामण्यं ग्रामस्य नेतारम्, गणकम्, श्रुतिजातिस्वरमण्डलादिगणनकुशलः गणकः, तम्, अभिक्रोशकं नृत्यसभायां जनानाम् आह्वातारम्, नृत्यस्य प्रद्योतकध्वनिकर्तारम्, तान् शाबल्यादीन् चतुरः पशून् यादसे देवतायै आलभेत इति शेषः । महसे कूजितशब्दाभिमानिने, वीणावादं वीणां वादयितुं कुशलः वीणावादः, तम्, पाणिघ्नं पाणिद्वयसंयोगनिर्वर्त्तिततालकं, तम्, तूणवध्मम् मुरजवादिनम्, वेणुवादिनं वा, एतान् [1]वीणावादप्रभृतीन् त्रीन् पशून् महसे देवतायै

[1]. वादि उ. म्यु.

आलभेत। नृत्ताय नृत्ताभिमानिने, आनन्दाय मानसतुष्टयभिमानिने, एताभ्यां द्वाभ्यां देवताभ्याम्, तलवं काहालवादिनम्, मुखवाद्यकारिणं वा, एकं पशुम् आलभेत। [—अ० ३४।४।२ ]

सप्तदशकमाह—

**अग्नये पीवानम्पृथिव्यै पीठसर्पिणँव्वायवे चाण्डालमन्तरिक्षाय वꣳशनर्त्तिनन्दिवे खलतिꣳसूर्याय हर्यक्षम्।**
**नक्षत्रेभ्यः किर्मिरञ्चन्द्रमसे किलासमह्ने शुक्लम्पिङ्गाक्षꣳरात्र्यै कृष्णम्पिङ्गाक्षम्॥२१॥**

पदच्छेदः स्पष्टः॥ २१॥

अग्नये अग्निदेवतायै पीवानं प्रवृद्धशरीरम्, पृथिव्यै भूमिदेवतायै, पीठसर्पिणम्, यः भग्नचरणः दारुमयपीठावलम्बी भूमौ सर्पति, तादृशम्, वायवे वायुदेवतायै, चाण्डालं चाण्डालजातीयम्, अन्तरिक्षाय अन्तरिक्षदेवतायै, वंशनर्तिनं वंशाग्रनृत्यजीविनम्, दिवे द्युलोकदेवतायै, खलतिं केशहीनशिरस्कम्, सूर्याय सूर्यदेवतायै, हरितवर्णाश्वयुक्तायै, हर्यक्षं हरितवर्णाक्षियुक्तम्, नक्षत्रेभ्यः नक्षत्रदेवताभ्यः, किर्मिरं नानावर्णपशुम्, चन्द्रमसे देवाय, किलासं कुष्ठयुक्तम्, अह्ने अहर्देवतायै, शुक्लं शुक्लवर्णदेहम्, पिङ्गाक्षं पिङ्गलाक्षम्, रात्र्यै रात्रिदेवतायै, कृष्णं कृष्णवर्णदेहम्, पिङ्गाक्षं पिङ्गलाक्षियुक्तम्, पशुम् आलभेत। [—अ० ३४।४।३ ]

एवम् अतिरात्राख्ये मध्यमेऽहनि आलभ्यान् सप्तत्यन्तरपशुसंख्याकान् उक्त्वा, उत्तमेऽहनि अग्निष्टोमाख्ये आलभ्यनीयान् प्रजापतिदेवत्यान् अष्टौ पशून् दर्शयति—

**अथैतानष्टौ विरूपाना लभतेऽतिशुक्लञ्चातिकृष्णञ्चातिदीर्घञ्चातिह्रस्वञ्च।**
**अतिस्थूलञ्चातिकृशञ्चातिकूल्वञ्चातिलोमशञ्चाशूद्रा अब्राह्मणास्ते प्राजापत्याः।**
**मागधः पुंश्चली क्लीवः कितवोऽशूद्रा अब्राह्मणास्ते प्राजापत्याः॥२२॥**

**अथ। एतान्। अष्टौ। विरूपान्। आ। लभते। अतिशुक्लम्। च। अतिकृष्णम्। च। अतिदीर्घम्। च। अतिह्रस्वम्। च॥**
**अतिस्थूलम्। च। अतिकृशम्। च। अतिकूल्वम्। च। अतिलोमशम्। च। अशूद्राः। अब्राह्मणाः। ते। प्राजापत्याः॥**
**मागधः। पुंश्चली। क्लीवः। कितवः। अशूद्राः। अब्राह्मणाः। ते। प्राजापत्याः॥ २२॥**

अथ मध्यमे अहनि आलम्भनीयपश्वनन्तरम् एतान् वक्ष्यमाणान् विरूपान् चमादिना? विपरीतरूपान् अष्टौ पशून् आलभते, उत्तमे अहनि इति शेषः। अतिशुक्लम् अतिशयेन शुक्लवर्णम्, एवम् उत्तरत्रापि। अतिकूल्वम् अतिशयेन आसन्नम् इत्यर्थः। चकाराः परस्परसमुच्चयार्थाः। एते पशवः अशूद्राः शूद्रव्यतिरिक्ताः, अब्राह्मणाः ब्राह्मणव्यतिरिक्ताः, ब्राह्मणशूद्रव्यतिरिक्ताः अन्यजातीयाः अत्र पशवः इत्यर्थः। प्राजापत्याः प्रजापतिदेवत्याः। अत्र ब्राह्मणम्—"अष्टा उत्तमानालभतेऽष्टाक्षरा गायत्री ब्रह्म वै गायत्री ब्रह्मैवैतदस्य सर्वस्योत्तमं दधाति ( करोति )। तस्माद् ब्रह्म सर्वस्योत्तममित्याहुस्ते वै प्राजापत्या भवन्ति। तत्र ब्रह्म वै प्रजापतिर्ब्राह्मो हि प्रजापतिस्तस्मात् प्राजापत्या

भवन्तीति" ( श. का. १३ । अ. ६ । ब्रा. २ । कं ७, ८ )। पूर्वोक्तेषु पशुषु ब्राह्मणव्यतिरिक्ताः पशवः एते इत्याह मागधः इति मागधाद्याः चत्वारः पशवः ब्राह्मणशूद्रजातीयाः न भवन्ति । किन्तु अन्यजातीयाः । ते च प्राजापत्याः । यद्यपि तत्र देवतान्तरसम्बन्धः तथापि प्रजापतिना सृष्टत्वात् प्रजापतिसम्बन्धिनः इत्यर्थः । [—अ० ३४।४।४ ]

इति चतुर्थोऽनुवाकः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्तक-श्रीवीरु-बुक्कण-साम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थ-प्रकाशे काण्वसंहिताभाष्ये चतुस्त्रिंशोऽध्यायः ।



# अथ पञ्चत्रिंशोऽध्यायः

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

[ प्रथमोऽनुवाकः १–१६ ]

पूर्वस्मिन् अध्याये पशूपाकरणहोमार्थाः मन्त्राः पशवश्च उक्ताः। अस्मिन् अपि पौरुषमेधिकाः मन्त्राः उच्यन्ते। कात्यायनः—"नियुक्तान् ब्रह्माभिष्टौति होतृवदनुवाकेन सहस्रशीर्षेति" (अ. २१।१।११)। 'सहस्रशीर्षा' इत्यनेन षोडशर्च्चेन सूक्तेन नियुक्तान् ब्राह्मणादीन् पुरुषपशून् दक्षिणतः ब्रह्माभिष्टौति अभिष्टुयात् इत्यर्थः। तथा च ब्राह्मणम्—"नियुक्तान् पुरुषान् ब्रह्मा दक्षिणे तान् पुरुषेण नारायणेन अभिष्टौति। सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपादित्यनेन षोडशर्चेन, षोडशकलं वा इद१ँसर्वंपुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुध्या" (श. का. १३। अ. ६। ब्रा. २। कं. १२) इति। तत्र प्रथमामाह—

**स॒हस्र॑शीर्षा॒ पुरु॑षस्सहस्रा॒क्षस्स॒हस्र॑पात् ।**
**स भूमि॑१ँ स॒र्वत॑स्पृ॒त्वात्य॑तिष्ठद्दशाङ्गु॒लम् ॥ १ ॥**

सहस्रशीर्षा। पुरुषः। सहस्राक्षः। सहस्रपात् ॥
सः। भूमिम्। सर्वतः। स्पृत्वा। अति। अतिष्ठत्। दशाङ्गुलम् ॥ १ ॥

सहस्रशीर्षा; सहस्रशब्दस्य उपलक्षणत्वात् अनन्तैः शिरोभिः युक्त इत्यर्थः। यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात् तदीयानि एवेति सहस्रशीर्षत्वम्। एवम् अक्षिषु पादेष्वपि योजनीयम्। पुरुषः, ब्रह्माण्डरूपे पुरे शेते इति सर्वप्राणिसमष्टिरूपः ब्रह्माण्डदेहः विराडाख्यः पुरुष इत्यर्थः। तथा च ब्राह्मणं पुरुषशब्दं निरवोचत्, "इमे वै लोकाः पूः। अयमेव पुरुषो योऽयं पवते सोऽस्यां पुरि शेते, तस्मात् पुरुषः" (श. का. १३। अ. ६। ब्रा. २। कं. १) इति। यः एवम् उक्तः पुरुषः भूमिं शोभनरूपां सर्वतः संस्पृश्य सर्वतः आवृत्य दशाङ्गुलं दशाङ्गुलपरिमितं देशम् अत्यतिष्ठत् अतिक्रम्य अवस्थितः। दशाङ्गुलमिति उपलक्षणम्, ब्रह्माण्डाद् वहिरपि सर्वतः व्याप्य अवस्थित इत्यर्थः। [—अ० ३५।१।१]

द्वितीयामाह—

**पुरु॑ष ए॒वेद१ँ सर्वं॒ यद्भू॒तं यच्च॑ भा॒व्य॑म् ।**
**उ॒ताम॑ृत॒त्वस्येशा॑नो॒ यदन्ने॑ना॒ति॒रोह॑ति ॥ २ ॥**

पुरुषः। एव। इदम्। सर्वम्। यत्। भूतम्। यत्। च। भाव्यम् ॥
उत। अमृतत्वस्य। ईशानः। यत्। अन्नेन। अति। रोहति ॥ २ ॥

यद् भूतम् अतीतं जगत्, यच्च भाव्यं भविष्यं जगत्, यत् इदं वर्तमानं जगत्, तत् सर्वं पुरुष एव। यद्यपि अस्मिन् वाक्ये वर्तमानाः प्राणिदेवाः सर्वेऽपि विराट्पुरुषस्य अवयवाः तथैव अतीतागामिनोः अपि कल्पयोः द्रष्टव्यम्। उत अपि च अमृतत्वस्य देवत्वस्य अयम् ईशानः, यस्मात् कारणात् अन्नेन प्राणिनां भोगेन अन्नेन निमित्तभूतेन, स्वकीयां कारणावस्थाम् अतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति। तस्मात् प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारात् न इदं वस्तुतत्त्वमित्यर्थः। [—अ० ३५।१।२]

तृतीयामाह—

**एतावानस्य महिमातो ज्यायांश्च पूरुषः।**
**पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥ ३॥**

**एतावान्। अस्य। महिमा। अतः। ज्यायान्। च। पूरुषः॥**
**पादः। अस्य। विश्वा। भूतानि। त्रिपात्। अस्य। अमृतम्। दिवि॥ ३॥**

अतीतानागतवर्तमानरूपं जगत् यावत् अस्ति, एतावान् अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः, न तु तस्य वास्तवस्वरूपं, वास्तवस्तु पुरुषः। अतः महिम्नोऽपि ज्यायान् अतिशयेनाधिकः, एतच्च उभयं स्पष्टीक्रियते विश्वा भूतानि कालत्रयवर्तीनि प्राणिजातानि अस्य पुरुषस्य पादः चतुर्थांशः। अस्य अवशिष्टं त्रिपात् स्वरूपम् अमृतं विनाशरहितं सत् दिवि द्योतमानात्मके स्वप्रकाशरूपे अवतिष्ठते। यद्यपि—**"सत्यं ज्ञानमनन्तं ब्रह्म"** (तै. उ. २।१) इत्याद्यस्य आम्नातस्य परंब्रह्मणः इयत्तायाः अभावात् अंशचतुष्टयं च निरूपयितुं न शक्यं तथापि जगत् इदं ब्रह्मस्वरूपापेक्षया अत्यल्पमिति विवक्षितत्वात् पादत्वोपन्यासः। [—अ० ३५।१।३]

चतुर्थीमाह—

**त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।**
**ततो विष्वङ् व्यक्रामत्साशनानशने अभि॥ ४॥**

**त्रिपात्। ऊर्ध्वः। उत्। ऐत्। पुरुषः। पादः। अस्य। इह। अभवत्। पुनः॥**
**ततः। विष्वङ्। वि। अक्रामत्। साशनानशने। अभि॥ ४॥**

यः अयं त्रिपात् पुरुषः संसारस्पर्शरहितः ब्रह्मरूपः सः अयम् ऊर्ध्वः उदैत् अस्मात् अज्ञानकार्यात् संसारात् बहिर्भूतः सन् अत्रत्यैः गुणदोषैश्च अस्पृष्टः उत्कर्षेण स्थितवान्। तस्य यः अयं पादलेशः सः अयम् इह मायायां पुनः अभवत्। सृष्टिसंहाराभ्यां पुनः पुनः आगच्छति। अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवता अपि उक्तम्—**"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्"** ( गीता अ. १०।४२ ) इति। ततः मायायाम् आगत्य अनन्तरं विष्वङ् देवतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान्। साशनानशने अभिलक्ष्य साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणिजातम् अनशनं तद्रहितम् अचेतनं गिरिनद्यादिकं, तत् उभयं यथा स्यात् तथा स्वयमेव विविधः भूत्वा व्याप्तवान् इत्यर्थः। [—अ० ३५।१।४]

पञ्चमीमाह—

**ततो॑ वि॒राळ॑जायत वि॒राजो॒ अधि॒ पूरु॑षः ।**
**स जा॒तो अत्य॑रिच्यत प॒श्चाद्भूमि॒मथो॑ पु॒रः ॥ ५ ॥**

**ततः । विराट् । अजायत । विराजः । अधि । पूरुषः ॥**
**सः । जातः । अति । अरिच्यत । पश्चात् । भूमिम् । अथो । पुरः ॥ ५ ॥**

विष्वङ् व्यक्रामत् इति यदुक्तं तदेव प्रपञ्च्यते। तस्मात् आदिपुरुषात् विराट् अजायत ब्रह्माण्डदेहः उत्पन्नः। विविधं[1] राजन्ते वस्तूनि अत्रेति विराट्। विराजो अधि, विराड्देहस्य उपरि तमेव देहम् अधिकरणं कृत्वा पुरुषः तद्देहाभिमानी कश्चित् पुमान् अजायत। यः अयं सर्ववेदान्तवेद्यः परमात्मा स एव स्वकीयमायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवः अभवत्। एतच्च आथर्वणिका उत्तरतापनीये विस्पष्टम् आमनन्ति, **"स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव"** इति। स जातः विराट् पुरुषः अत्यरिच्यत अतिरिक्तोऽभूत्। विराड्व्यतिरिक्तः देवतिर्यङ्मनुष्यादिरूपः अभूत्। पश्चात् देवादिदेहभावात् ऊर्ध्वं भूमिं ससर्ज इति शेषः। अथो भूमिसृष्टेः अनन्तरं तेषां जीवानां पुरः ससर्ज। पूर्यन्ते सप्तधातुभिः इति पुरः शरीराणि। [—अ० ३५।१।५]

अथ षष्ठीमाह—

**तस्मा॑द्य॒ज्ञात्स॑र्व॒हुतः॒ सम्भृ॑तं पृषदा॒ज्यम् ।**
**प॒शूꣳस्ताꣳश्च॑क्रे वाय॒व्या॑नार॒ण्या ग्रा॒म्याश्च॒ ये ॥ ६ ॥**

**तस्मात् । यज्ञात् । सर्वहुतः । सम्भृतम् । पृषदाज्यम् ॥**
**पशून् । तान् । चक्रे । वायव्यान् । आरण्याः । ग्राम्याः । च । ये ॥ ६ ॥**

सर्वहुतः, सर्वात्मकः पुरुषः यस्मिन् यज्ञे हूयते सोऽयं सर्वहुत्। वसन्ताज्यादिरूपस्य बाह्यद्रव्यस्य अद्यापि अनुपपन्नत्वेन हविरन्तरासम्भवात् पुरुषस्वरूपमेव मनसा हविषा इव संकल्प्य, तेन पुरुषाख्येन हविषा देवा[2] मानसं यज्ञम् अकार्षुः इति उत्तरत्र वक्ष्यते। तस्मात् मानसाद् यज्ञात् पृषदाज्यं दधिमिश्रम् आज्यं सम्भृतं सम्पादितम्। दधि च आज्यं च इत्येवम् आदि सर्वं सम्पादितमित्यर्थः। तथा वायव्यान् वायुदेवताकान् तान् लोकसिद्धान् पशून् चक्रे उत्पादितवान्। ये आरण्याः द्विखुरादयः, ये च ग्राम्याः, ग्रामे भवाः गवाश्वादयः तान् उत्पादितवान्। पशूनाम् अन्तरिक्षद्वारा वायुदेवत्यं मन्त्रान्तरव्याख्याने समाम्नातम्। **"वायवः स्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षः अन्तरिक्षदेवत्याः खलु वै पशवः वायव एवैनान्परिददातीति"** ( तै. ब्रा. ३।२।१।३ )। [—अ० ३५।१।६]

सप्तमीमाह—

**तस्मा॑द्य॒ज्ञात्स॑र्व॒हुत॒ ऋचः॒ सामा॑नि जज्ञिरे ।**
**छन्दा॑ꣳसि जज्ञि॒रे तस्मा॒द्यजु॒स्तस्मा॑दजायत ॥ ७ ॥**

**पदच्छेदः स्पष्टः ॥ ७ ॥**

---

१. वि उ० म्यु० । २. यद् उ. म्यु. ।

सर्वहुतः तस्मात् यज्ञात् ऋचः नियतबद्धाः सामानि गीतिप्रधानानि च जज्ञिरे प्रादुरभवन्। तथा तस्मात् छन्दांसि गायत्र्यादीनि जज्ञिरे। तस्मात् यजुः प्रश्लिष्ट[1]पठितम् अजायत।

[—अ० ३५।१।७]

अथ अष्टमीमाह—

**तस्मा॒दश्वा॑ अजाय॒न्त॒ ये के चो॑भ॒याद॑तः।**
**गावो॑ ह जज्ञिरे॒ तस्मा॒त्तस्मा॑ज्जा॒ता अ॑जा॒वयः॑ ॥ ८ ॥**

**तस्मात्। अश्वाः। अजायन्त। ये। के। च। उभयादतः॥**
**गावः। ह। जज्ञिरे। तस्मात्। तस्मात्। जाताः। अजावयः॥ ८॥**

तस्मात् यज्ञात् अश्वाः अजायन्त। ये के यज्ञे तत् उभयादतः उभयोः ऊर्ध्वाधोभागयोः दन्तयुक्ताः अश्वव्यतिरिक्ताः गर्दभाश्वतराश्च सन्ति तेऽपि अजायन्त। तस्मात् गावश्च जज्ञिरे। तस्मात् अजावयः जाताः उत्पन्नाः।

[—अ० ३५।१।८]

नवमीमाह—

**तँय्य॒ज्ञम्ब॒र्हिषि॒ प्रौक्ष॒न्पुरु॑षञ्जा॒तम॑ग्र॒तः।**
**तेन॑ दे॒वा अ॑यजन्त सा॒ध्या ऋष॑यश्च॒ ये ॥ ९ ॥**

**तम्। यज्ञम्। बर्हिषि। प्र। औक्षन्। पुरुषम्। जातम्। अग्रतः॥**
**शिष्टं स्पष्टम्॥ ९॥**

यज्ञं यज्ञसाधनभूतम्, अग्रतो जातम्, सर्वसृष्टेः पूर्वम् उत्पन्नम्। एतच्च पूर्वमेव उक्तम्। "ततो विराळजायत विराजो अधि पूरुष" (३५।५) इति। त पुरुषं पुरुषपशुत्वभावनया यूपे बद्धं बर्हिषि मानसे यज्ञं यज्ञे प्रौक्षन्, 'उक्ष सेचने' प्रोक्षितवन्तः। प्रोक्षणाख्यं संस्कारं कृतवन्तः। तेन प्रोक्षितेन पुरुषरूपेण पशुना देवा अयजन्त मानसयज्ञं निष्पादितवन्तः। के देवा इति त एव उच्यन्ते—साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्राणरूपाः तदनुकूलाः ऋषयः मन्त्रद्रष्टारश्च ये सन्ति ते सर्वेऽपि अयजन्त।

[—अ० ३५।१।९]

दशमीमाह—

**यत्पुरु॑षँ॒ व्यद॑धुः कति॒धा व्य॑कल्पयन्।**
**मु॒खङ्किम॑स्यासी॒त्किम्बा॒हू किमू॒रू पादा॑ उच्येते ॥ १० ॥**

**यत्। पुरुषम्। वि। अदधुः। कतिधा। वि। अकल्पयन्॥**
**मुखम्। किम्। अस्य। आसीत्। किम्। बाहू। किम्। ऊरू। पादौ। उच्येते॥ १०॥**

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुम् अत्र ब्रह्मवादिनां प्रश्ना उच्यन्ते—प्रजापतेः प्राणरूपा देवाः यत् यदा पुरुषं विराड्रूपं व्यदधुः संकल्पेन उत्पादितवन्तः तदानीं कतिधा कतिभिः प्रकारैः व्यकल्पयन् विविधं कल्पितवन्तः। एषः सामान्यरूपः प्रश्नः। मुखं किमित्यादयः विशेषप्रश्नाः। अस्य एतादृग्रूपस्य पुरुषस्य किं मुखम् आसीत्। किं कौ बाहू स्तः। किं कौ ऊरु स्तः। कौ पादौ उच्येते।

[—अ० ३५।१।१०]

---

१. प्रतिनियतपदावसानम् उ. म्यु.।

एकादशीमाह—

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्याꣳशूद्रो अजायत ॥ ११ ॥

पदच्छेदः स्पष्टः ॥ ११ ॥

यः अयं ब्राह्मणजातिविशिष्टः पुरुषः सोऽयम् अस्य प्रजापतेः मुखम् आसीत्, मुखात् उत्पन्न इत्यर्थः । यः अयं राजन्यः क्षत्रियजातिः सः बाहू कृतः, बाहुभ्याम् उत्पादित इत्यर्थः । तत् तदानीं यत् यौ अस्य प्रजापतेः ऊरू तद् वैश्यः तद्रूपः सम्पन्नः । ऊरुभ्याम् उत्पन्न इत्यर्थः । तथा पद्भ्यां प्रजापतेः पादाभ्यां शूद्रः अजायत उत्पन्नः । इयं च मुखादिभ्यः ब्राह्मणादीनाम् उत्पत्तिः तैत्तिरीये सप्तमकाण्डे समाम्नाता—"प्रजापतिरकामयत प्रजायेयेति, स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवा-नन्वसृज्यत गायत्रं छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणाम्" इत्यादि । अत्रत्ये प्रश्नोत्तरे उभे अपि तत्परत्वेन योज्ये ।

[—अ० ३५।१।११]

द्वादशीमाह—

चन्द्रमा मनसो जातश्चक्षोस्सूर्यो अजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥

पदच्छेदः स्पष्टः ॥ १२ ॥

यथा दध्याज्यादिद्रव्याणि गवादिपशवः ऋगादिवेदाः ब्राह्मणादिमनुष्याश्च तस्मात् उत्पन्नाः तथा प्रजापतेः मनसः चन्द्रमा जातः, तस्य चक्षोः चक्षुषः सूर्यः अजायत । तस्य श्रोत्राद् वायुः वायु-रूपः प्राणः, शरीरे प्राणापानव्यानात्मना संचरन् वायुश्च जातः । चकारौ परस्परसमुच्चयार्थौ । तस्य मुखात् अग्निः अजायत ।

[—अ० ३५।१।१२]

त्रयोदशीमाह—

नाभ्या आसीदन्तरिक्षꣳशीर्ष्णो द्यौस्समवर्त्तत ।
पद्भ्याम्भूमिर्दिशश्श्रोत्रात्तथा लोकाँ२ अकल्पयन् ॥ १३ ॥

नाभ्याः । आसीत् । अन्तरिक्षम् । शीर्ष्णः । द्यौः । सम् । अवर्त्तत ॥
पद्भ्याम् । भूमिः । दिशः । श्रोत्रात् । तथा । लोकान् । अकल्पयन् ॥ १३ ॥

पूर्वं देवतासृष्टिम् उक्त्वा लोकसृष्टिम् आह । तस्य प्रजापतेः नाभ्याः सकाशात् अन्तरिक्षम् उत्पन्नम् आसीत् । शीर्ष्णः शिरसः सकाशात् द्यौः द्युलोकः समवर्त्तत उत्पन्नः अभूत् । पद्भ्यां पादाभ्यां भूमिः, तस्य श्रोत्रात् दिशः, तथा तेन उक्तप्रकारेण लोकान् अन्तरिक्षादीन् प्रजापतेः नाभ्या-द्यवयवान् अकल्पयन् उत्पादितवन्तः ।

[—अ० ३५।१।१३]

चतुर्दशीमाह—

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यङ्ग्रीष्म इध्मश्शरद्धविः ॥ १४ ॥

यत् । पुरुषेण । हविषा । देवाः । यज्ञम् । अतन्वत ॥
वसन्तः । अस्य । आसीत् । आज्यम् । ग्रीष्मः । इध्मः । शरत् । हविः ॥ १४ ॥

पूर्वं देवाः पुरुषेण पुरुषरूपेण हविषा बाह्यद्रव्यस्य अद्यापि अनुत्पन्नत्वेन हविः अन्तरा असम्भवात् पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्पितेन पुरुषाख्येन हविषा देवा मानसं यज्ञम् अतन्वत अकुर्वत । तत् तदानीम् अस्य यज्ञस्य वसन्तर्तुः आज्यम् आसीत् । तमेव आज्यत्वेन संकल्पितवन्तः । एवं ग्रीष्मः इध्मत्वेन परिकल्पितः । शरत् पुरोडाशादि हविष्ट्वेन संकल्पिता । पूर्वं पुरुषस्य हविः सामान्यरूपत्वेन संकल्पितम् । वसन्तादीनां तु आज्यादिविशेषरूपत्वेन इति द्रष्टव्यम् ।
[—अ० ३५।१।१४]

पञ्चदशीमाह—

**स॒प्तास्या॑सन्परि॒धय॒स्त्रिस्स॒प्त स॒मिधः॑ कृ॒ताः ।**
**दे॒वा यद्य॒ज्ञन्त॑न्वा॒ना अब॑ध्न॒न्पुरु॑षम्प॒शुम् ॥ १५ ॥**

सप्त । अस्य । आसन् । परिधयः । त्रिः । सप्त । समिधः । कृताः ॥
देवाः । यत् । यज्ञम् । तन्वानाः । अबध्नन् । पुरुषम् । पशुम् ॥ १५ ॥

अस्य परिकल्पितयज्ञस्य गायत्र्यादीनि छन्दांसि परिधयः आसन् । ऐष्टिकस्य आहवनीयस्य त्रयः परिधयः औत्तरवेदिकाः त्रयः आदित्यश्च सप्तमः परिधिः प्रतिनिधिरूपः । अत एव आम्नायते— **"न पुरस्तात् परिदधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्तीति"** ( तै. सं. २।६।६।३ ) । तत एत आदित्यसहिताः सप्त परिधयः अत्र सप्त छन्दोरूपाः तथा समिधः त्रिः सप्त, त्रिगुणीकृतसप्तसंख्याकाः एकविंशतिः कृताः । **"द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः"** ( तै. सं. ५।१।१०।३ ) इति श्रुताः पदार्थाः एकविंशति दारुयुक्तेध्मत्वेन भाविताः, यत् यः पुरुषःवैराजोऽस्ति तं पुरुषं देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं कुर्वाणाः पशुम् अबध्नन् विराट्पुरुषत्वेन भावितवन्तः । एतदेव अभिप्रेत्य पूर्वत्र पुरुषेण हविषा इति उक्तम् । [—अ० ३५।१।१५]

षोडशीमाह—

**य॒ज्ञेन॑ य॒ज्ञम॑यजन्त दे॒वास्तानि॒ धर्मा॑णि प्रथ॒मान्या॑सन् ।**
**ते ह॒ नाक॒म्मह॒िमान॑स्सचन्त॒ यत्र॒ पूर्वे॑ सा॒ध्यास्सन्ति॑ दे॒वाः ॥ १६ ॥**

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ॥
ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥ १६ ॥

अथ कृत्स्नानुवाकतात्पर्यं संक्षिप्य उपन्यस्य देवाः प्रजापतिप्राणभूताः यज्ञेन यथोक्तेन मानसेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिम् अयजन्त पूजितवन्तः । तस्मात् पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकारिणां धारकाणि प्रथमानि मुख्यानि भूतानि आसन् । एतावता सृष्टिप्रतिपादकः अयम् अनुवाकार्थः संगृहीतः ।

अथ देवानां यागसाधारणफलं दर्श्यते—यत्र यस्मिन् विराट्प्राप्तिरूपे यज्ञे पूर्वे साध्याः पुरातनाः विराडुत्पत्तिसाधका देवाः सन्ति तिष्ठन्ति तत् नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानः यष्टारः

महात्मानः सचन्त सचन्ते समवयन्ति प्राप्नुवन्ति इत्यर्थः । तत्र ब्राह्मणम्—"यज्ञेन हि तं यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्" इति (श., का० १० । अ.२। ब्रा.२। कं.२) "ते हि धर्माः प्रथमेऽक्रियन्त ते ह नाकं महिमानः सचन्तेति स्वर्गो वै लोको नाको देवा महिमानस्ते देवाः स्वर्गं लोकं[१] सचन्त ये तं यज्ञमयजन्नित्येतद् यत्र पूर्वे साध्याः सन्ति देवा इति प्राणा वै साध्या देवास्त एतमग्र एवमसाधयन्" इति । (श. का. १० । अ. २ । ब्रा. २ । कं. २—३) पूर्वशब्दः ऋषिप्रवाहः नित्यः इति एतावद् दर्शनार्थः । [—अ० ३५।१।१६]

पञ्चत्रिंशे प्रथमोऽनुवाकः ।

[ द्वितीयोऽनुवाक. १७—२२ ]

अथोत्तरनारायणाख्यः द्वितीयोऽनुवाकः । तस्य विनियोगं कात्यायन आह—"समारोह्यात्मन्नग्नी सूर्यमुपस्थायादभ्यः सम्भृत इति षडृचेनानुवाकेनानवेक्षमाणोऽरण्यं गत्वा न प्रत्येयात् ग्रामे वा विवत्सन्नरण्योः" ( इति अ.२१।१।१७-१८ ) इति । पुरुषमेधाख्यं यज्ञं कृत्वा आत्मनि अग्नी-समारोह्य सूर्यम् आदित्यम् "अद्भ्यः सम्भृत" इति षड्ऋचेन अनुवाकेन उपस्थाय स्वयमेनम् अनवेक्षमाणः अरण्यं गत्वा न प्रत्यागच्छेत् । यदि वा ग्रामं विवत्सति अरण्योः अग्नी समारोह्य वसेत् इत्यर्थः । तथा च ब्राह्मणम्—"अथात्मन्नग्नी समारोह्योत्तरनारायणेनादित्यमुपस्थायानवेक्षमाणोऽरण्यमभिप्रेयात्तदेव मनुष्येभ्यस्तिरो भवति । यद्यु ग्रामे विवत्सेदरण्योरग्नी समारोह्योत्तरनारायणेनैवादित्यमुपस्थाय गृहेषु प्रतिवसेत् ( श. का० १३ । अ० ६ ब्रा. २ कं २० ) इति । उत्तरनारायण इत्यस्यानुवाकस्य संज्ञा ।

तत्र प्रथममाह—

**अ॒द्भ्यस्सम्भृ॑तः पृथि॒व्यै रसा॑च्च वि॒श्वक॑र्मण॒स्सम॑वर्त्त॒ताग्रे॑ ।**
**तस्य॒ त्वष्टा॑ वि॒दध॑द्रू॒पमे॑ति॒ तन्मर्त्य॑स्य दे॒व॒त्वमा॒जान॒मग्रे॑ ॥१७॥**

अद्भ्यः । सम्भृतः । पृथिव्यै । रसात् । च । विश्वकर्मणः । सम् । अवर्तत । अग्रे ॥
तस्य । त्वष्टा । विदधत् । रूपम् । एति । तत् । मर्त्यस्य । देवत्वम् । आजानम् । अग्रे ।१७।

यः अयं विराड्रूपः नारायणाख्यः पुरुषः स अद्भ्यः सम्भृतः सर्वतः व्याप्तेषु जलेषु क्षीराब्धिमध्ये मण्डलं ब्रह्माण्डगोलकम् उत्पन्नम् न केवलम् अद्भ्यः एव, किन्तु पृथिव्यै पृथिव्याः रसाच्च भूम्याः सम्बन्धी यः अयं सारः अंशः तस्मात् उत्पन्नः । अण्डस्य यः अयं घनीभावः स पार्थिवः, ये च तन्मध्ये द्रवांशाः तदापः । "यत् कठिनं सा पृथिवी यद् द्रवं तदापः" इति श्रुतेः । विश्वकर्मणः जगत्कर्तुः परमेश्वरात् अग्रे इतरसृष्टेः प्राक् समवर्तत विराड्रूपः पुरुषः उत्पन्न इत्यर्थः । "ततो विराळजायत" (यजु. अ. ३१ । ५) इति श्रुतेः । यः अयं ब्रह्माण्डाभिमानी चेतनः पुमान् सः अयम् ईश्वरांशः, तस्य विराट्पुरुषस्य रूपं चतुर्दशलोकावयवसंस्थानं विदधत् निष्पादयन् त्वष्टा विश्वकर्मा ईश्वरः एति सर्वत्र प्रवर्तते । यत एवं तत् तस्मात् मर्त्यस्य मरणशीलस्य विनश्वरस्य ब्रह्माण्डदेहस्य अग्रे प्रथमं[२] स्वामित्वम् आजानं निष्पन्नम् । विराट्पुरुषस्य सृष्टयादौ परमेश्वरस्य कारणत्वं सम्पन्नमित्यर्थः । [—अ० ३५ । २ । १]

१. वाच्याः उ. म्यु. । २. देवत्वमित्यादि ।

द्वितीयमाह—

वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥१७॥

वेद । अहम् । एतम् । पुरुषम् । महान्तम् । आदित्यवर्णम् । तमसः । परस्तात् ॥
तम् । एव । विदित्वा । अतिमृत्युम् । एति । न । अन्यः । पन्थाः । विद्यते । अयनाय ॥१७॥

यथोक्तं विराट्पुरुषस्य ध्यानं तदेव संसारनिर्वर्तकम् इति प्रतिपाद्यते । तत्रादौ मन्त्रद्रष्टा स्वकीयं ज्ञानात् उद्भवं प्रकटयति । तमशः अज्ञानात् अन्धकारात् आदित्यवर्णं आदित्यवत् प्रकाशमानं स्वतेजसा अज्ञानम् अधःकृत्य वर्तमानम् इत्यर्थः । पुरुषः पुरि शेते इति पुरुषः तम्, अनेन प्राप्तं परिच्छेदं वारयति महान्तमिति पदेन । महान्तम् अपरिच्छिन्नम् । एवं साक्षात् अपरोक्षं पुरुषम् अहं शोधितत्वंपदार्थः अहं वेद जानामि ध्यानेन सर्वदा अनुभवामि इत्यर्थः । तं सर्ववेदान्तप्रतिपाद्यं पुरुषं विदित्वा एव मृत्युं संसारम् अतिक्रामति । "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" (गीता अ. ३ । २० ) कर्मणा एव संसारनिवृत्तिः इति । एवम् आदितमं तं व्यावर्तयितुम् एवकारः । तस्यैव प्रदर्शनं नान्य इत्यादि । अयनाय स्वस्वरूपप्राप्तये ज्ञानात् अन्यः पन्था न विद्यते । [—अ० ३५।२।२ ]

तृतीयमाह—

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते ।
तस्य योनिम्परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥१८॥

प्रजापतिः । चरति । गर्भे । अन्तः । अजायमानः । बहुधा । विजायते ॥
तस्य । योनिम् । परि । पश्यन्ति । धीराः । तस्मिन् । ह । तस्थुः । भुवनानि । विश्वा ॥१८॥

गर्भे ब्रह्माण्डरूपे अन्तःमध्ये प्रजापतिः अन्तर्यामिरूपेण चरति । अजायमानः स च वस्तुरूपेण "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. उ., बल्ली २ ) अनु इति एतादृशत्वात्, अजायमानः अपि बहुधा अनेकेन रूपेण स्थावरजङ्गमादिबहुप्रकारविशेषेण जायते । तस्य प्रजापतेः योनिं जगत्कारणरूपां धीराः धैर्यवन्तः योगेन निरुद्धेन्द्रियाः महात्मानः परिपश्यन्ति जानन्ति । ह शब्दः अवधारणे । तस्मिन् एव प्रजापतौ विश्वानि सर्वाणि तस्थुः कार्यत्वेन तिष्ठन्ति । [ —अ० ३५ । २ । ३ ]

चतुर्थमाह—

यो देवेभ्य आतपति यो देवानाम्पुरोहितः । ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥२०॥

पदच्छेदः स्पष्टः ॥२०॥

यः परमेश्वरः देवेभ्यः देवार्थम् आतपति सर्वत्र प्रकाशते । देवानां देवत्वसिद्धये तत्तत् हृदयेषु चैतन्यरूपेण आविर्भवति, यः च देवानां पुरोहितः बृहस्पतिः बभूव । "बृहस्पतिर्देवानां पुरोहितः"

( श. का. ५ । अ. ३ । ब्रा. १ । कं. २ ) इति श्रुतेः । यः च देवेभ्यः पूर्वः जातः प्रथमभाविहिरण्यगर्भरूपेण उत्पन्नः "हिरण्यगर्भः समवर्तताग्रे" ( यजु., अ० २५ । १ ) इति श्रुतेः, तादृशाय रुचाय रोचमानाय स्वयं प्रकाशाय ब्राह्मये परब्रह्मस्वरूपाय, ब्रह्मणा वेदेन प्रतिपाद्याय वा नमोऽस्तु नमस्कारः अस्तु । [ —अ० ३५ । २ । ४ ]

पञ्चममाह:—

**रुचम्ब्राह्मञ्जनयन्तो देवा अग्रे तदब्रुवन् ।**
**यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥२१॥**

**रुचम् । ब्राह्मम् । जनयन्तः । देवाः । अग्रे । तत् । अब्रुवन् ॥**
**यः । त्वा । एवम् । ब्राह्मणः । विद्यात् । तस्य । देवाः । असन् । वशे ॥२१॥**

देवा: सर्वे अग्रे सृष्टयादौ ब्रह्मविद्यासम्प्रदायप्रवर्तनकाले ब्राह्मं रुचं परब्रह्मसम्बन्धि चैतन्यं जनयन्तः विद्यया प्रादुर्भावयन्तः तत्त्वं ब्राह्मतत्त्वं सम्बोध्य तत् अवेक्ष्यमाणं वाक्यम् उक्तवन्तः अग्रे वक्ष्यमाणं सूचयन्यः । कि तद् वाक्यमिति तत् उच्यते—यः कश्चित् ब्राह्मणः पुमान् त्वामेवं यथोक्तप्रकारेण विद्यात् तस्य ब्रह्मविदः सर्वे देवाः वशे असन् अधीना भवन्ति । अयं हि तेषाम् अन्तर्यामी परमात्मा भवति, तस्मात् देवाः एतदधीनाः, न तु अस्य देवाः ईश्वराः । एषः अर्थः ब्राह्मणे विस्पष्टम् उक्तः । "य एवं वेदाहमस्मीति स इदꣳसर्वं भवति तस्य ह न देवाश्चनो भूत्वा ईशत आत्मा ह्येषाꣳ सम्भवति" इति । [ अ० ३५।२।५ ]

षष्ठमाह—

**श्रीश्च ते लक्ष्मीश्च पत्न्या अहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।**
**इष्णन्निषाणामुम्म इषाण सर्वलोकम्म इषाण ॥२२॥**

**श्रीः । च । ते । लक्ष्मीः । च पत्न्यौ । अहोरात्रे । पार्श्वे । नक्षत्राणि । रूपम् । अश्विनौ । व्यात्तम् ।**
**इष्णन् । इषाण । अमुम् । मे । इषाण । सर्वलोकम् । मे । इषाण ॥२२॥**

श्रीः आश्रयणीया लक्ष्मीः धनकनकादिरूपा ऐश्वर्याभिमानिनी देवता, हे परमात्मन् श्रीश्च लक्ष्मीश्च ते तव पत्न्यौ भार्यास्थानीये च, अहोरात्रे ते पार्श्वे पार्श्वद्वयस्थानीये, नक्षत्राणि आकाशे दृश्यमानानि तव रूपं तव शरीरस्थानीयम्, तथा यौ अश्विनौ देवौ [1]तव व्यात्तं विवृतमुखस्थानीयम् । तथाविध हे विराट् हे पुरुष इष्णन् इच्छन् सर्वं जगत् स्ववशे कुर्वन् इषाण इच्छ, मह्यम् अभीप्सितं प्रयच्छ इत्यर्थः । तस्य एव विवरणं मे मह्यम् अमुं स्वर्गलोकम् इषाण प्रयच्छ । किं च मे मह्यं सर्वलोकं ब्रह्माण्डम् इषाण प्रयच्छ । सर्वत्र इषेः लोटि श्नः शानजादेशे रूपम् । "अहमेवेदं सर्वं" मिति परमात्मनः सर्वात्मत्वं तादृशं त्वत् स्वरूपम् अतः मह्यं सार्वात्म्यं प्रयच्छ इत्यर्थः ।

[ —अ०३५।२।६ ]

इति पञ्चत्रिंशेऽध्याये द्वितीयोऽनुवाक: ।

---

१. तौ इत्यादि ।

[ तृतीयोऽनुवाकः २३-३४ ]

पूर्वस्मिन् अनुवाकद्वये पौरुषमेधिकाः उक्ताः। अस्मिन् अनुवाके सार्वमेधिकाः मन्त्राः उच्यन्ते। तथाहि ब्राह्मणे,—"पुरुषो ह नारायणोऽकामयत" (श. का. १३। अ. ६ ब्रा. १। कं. १) इति अस्मिन् अध्याये पुरुषमेघं सप्रपञ्चं प्रदर्श्य अनन्तरमेव ',ब्रह्म वै स्वयम्भूस्तपोऽतप्यत" (श., का. १३। अ. ७। ब्रा. १ कं. १ ) इत्युपक्रम्य "स वा एष सर्वमेधो दशरात्रो यज्ञक्रतुर्भवति" ( श. का. १३। अ. ७। ब्रा. १। कं. २ ) इत्यादिना "तस्य अग्निष्टुदग्निष्टोमः प्रथममहर्भवति, इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवति, सूर्यस्तुदुक्थ्यस्तृतीयमहर्भवति, वैश्वदेवश्चतुर्थमहर्भवति, आश्वमेधिकं मध्यमं पञ्चममहर्भवति पौरुषमेधिकं मध्यमं षष्ठमहर्भवति" ( श. का. १३। अ. ७। ब्रा. १ कं. ३-७ ) इति षडहानि प्रदर्श्य 'आप्तोर्यामः सप्तममहर्भवति, अत्र सर्वं जुहोति सर्वस्मै जुहोति सर्वस्याप्त्यै सर्वस्यावरुद्धयै" ( श०, का० १३। अ० ७। ब्रा० १। कं० ६ ) इति उक्तत्वात् एषः अनुवाकः अत्र आप्तोर्यामाख्ये सप्तमे अह्नि सर्वहोमे विनियुक्त इति अवगम्यते। "अपेतो यन्तु पणय" ( यजु०, अ० ३५।३५) इति उत्तरस्यानुवाकस्य पितृमेघे विनियुक्तत्वात् पितृमेधपुरुषमेघयोः मध्ये सर्वमेघस्य उक्तत्वात् तत्र एकः अयम् अनुवाक इति अवसीयते। तत्र आदौ काश्चित् ऋचः ब्रह्मतत्त्वं प्रतिपादयन्ति।

तत्र प्रथममाह—

**तदे॒वाग्निस्तदा॑दि॒त्यस्तद्वा॒युस्तदु॑ च॒न्द्रमाः॑।**
**तदे॒व शु॒क्रन्तद् ब्रह्म॒ तदाप॒स्तत्प्र॒जाप॑तिः॥२३॥**

पदच्छेदः स्पष्टः।२३।

अविशेषेण यत्र सर्वजगदात्मकत्वं ब्रह्मणः पूर्वत्र उक्तं तदेव प्रपञ्चयति। अग्निः प्रतीयमानः अग्नि। तत् एतत् ब्रह्म एव। एवम् आदित्यादीनां ब्रह्मात्मकत्वमित्यर्थः। तथा शुक्रं दीप्यमानं नक्षत्रादिकम् अमृतं देवैः सेव्यं पीयूषम्, तत उभयम् अपि च तदेव अधिष्ठानमेव, यत् ब्रह्म हिरण्यगर्भरूपं तत् अपि तदधिष्ठानात्मकमेव। आपस्तु उपलक्षणम्, पञ्चमहाभूतानि। यश्च प्रजापतिः विराड्रूपः तत् उभयमपि अधिष्ठानरूपमेव। [ —अ० ३५।३।१ ]

यत् जगत् अविद्यादृष्टया नानाविधं प्रतीयते तत् सर्वं विद्यादृष्टया अखण्डैकरसं ब्रह्म एव। अत एव दृष्टिद्वयम् अभिप्रेत्य समाम्नातम् "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति ( बृ. उ., अ. २। ब्रा ४ ) इति अविद्यादृष्टिः। "यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येत् ( बृ. उ. अ. २। ब्रा. ४ ) इति विद्यादृष्टिः। ननु "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सन्ततम्" इति विष्णुपुराणे कालस्य नित्यत्वाभिमानात् विद्यादृष्टयापि ब्रह्मरूपत्वं नास्ति इति आशंक्य पुराणस्य अविद्यादृष्टविषयत्वम् अभिप्रेत्य विद्यादृष्टया कालस्य ब्रह्मत्वविषयात् ब्रह्मणः सकाशात् उत्पत्तिम् आदौ च दर्शयति "सर्वे निमेषा" इति। तेन काललोकादिसर्वकारणस्य सर्वत्र अनुगतत्वात्, कुतः प्राणिभिः असौ न गृह्यते इति आशंक्य तस्य परमात्मनः ऊर्ध्वत्वाद्याकारविशेषात् इति दर्शयति—

**सर्वे॑ नि॒मे॒षा ज॑ज्ञिरे वि॒द्युतः॒ पुरु॑षा॒दधि॑।**
**नैन॑मू॒र्द्ध्वन्न ति॒र्य॑ञ्च॒न्न मध्ये॒ परि॑जग्रभत्॥२४॥**

**सर्वे । निमेषाः । जज्ञिरे । विद्युतः । पुरुषात् । अधि ॥**
**न । एनम् । उद्ध्वंम् । न । तिर्यञ्चम् । न । मध्ये । परि । जग्रभत् ॥२४॥**

निमिः नाम जनकस्य पूर्वजः आद्यः मिथिलेश्वरः संसीदति, उपविशति वर्तते देववरप्रसादात् येषु अक्षिपक्ष्मपातेषु इति (ते) निमेषा "अन्येभ्योऽपि दृश्यते" इति डः। [1]हस्तलवो निमेषा इत्युच्यन्ते। पक्ष्मपातपरिमिताः सूक्ष्माः कालविशेषा इत्यर्थः। ते सर्वेऽपि विद्युतः विशेषेण द्योतमानात् पुरुषात् परिपूर्णात् परमेश्वरात् अधिजज्ञिरे आधिक्येन उत्पन्नाः। एतेन कलामुहूर्तकाष्ठादयश्च सर्वे कालविशेषाः समुत्पन्ना इत्यर्थः। तथा च तैत्तिरीया आमनन्ति "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि। कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वतः। अर्धमासा मासा ऋतवः सम्वत्सरश्च कल्पताम्" इति। एवमेवंविधं सर्वस्य जगतः कारणं परमात्मानम् ऊर्द्ध्वं सम्भवत् ऊर्द्ध्वाकारं कश्चिदपि पुरुषः न परिगृह्णाति। तथा च तिर्यगाकारं वा न परिगृह्णाति। तथा मध्ये अवस्थितं पुरुषमिव न परिजग्रभत् न परिगृह्णाति। तस्मिन् ऊर्द्ध्वाकारासम्भवात्। "अशब्दमस्पर्शमरूपम्" ( क. उ. अ. १ वल्ली ३। १५ ) इति रूपादिहीनतया प्रत्यक्षागोचरत्वात्। अत एव व्याप्त्यादिग्रहणासम्भवेन अनुमानाद्यविषयत्वात् प्राकृतैः न परिग्रहीतुं शक्यते इत्यर्थः। [ —अ० ३५।३।२ ]

तृतीयमाह—

**न तस्य॑ प्रति॒मा अ॑स्ति॒ यस्य॒ नाम॑ म॒हद्यशः॑ ।**
**हि॒र॒ण्य॒ग॒र्भ इत्ये॒षः ॥२५॥**

**पदच्छेदः स्पष्टः ॥२५॥**

यस्य परमात्मनः महद्यश इति नाम सम्पन्नं स्थावरादि ब्रह्मान्तम् उत्तरोत्तरम् आनन्दाभिवृद्धेः केवलानन्दमयपरमात्मा इत्यर्थः। तस्य प्रतिमा सादृश्यं नास्ति, यत् सदृशं वस्तु अभिधीयते। सर्वस्य तदात्मकत्वेन तस्यापि तदात्मकत्वात् इति भावः। उक्तार्थदाढर्याय प्रदेशान्तरपठितं मन्त्रम् उदाहरति—"हिरण्यगर्भ इत्येषः"। प्रतीकम् एतत्। हिरण्ये ब्रह्माण्डे गर्भरूपेण अवस्थितः प्रजापतिः हिरण्यगर्भः। स च भूतस्य प्राणिजातस्य अग्रे समवर्तत, प्राणिजातोत्पत्तेः पुरा स्वयं शरीरधारी बभूव। स च जातः उत्पन्नमात्रः एक एव उत्पत्स्यमानस्य सर्वस्य जगतः पतिः आसीत्। एषः सर्वं पृथिवीं द्यां विस्तीर्णां दाधार धृतवान्। अपि च इमां भूमिं दाधार। तादृशाय कस्मै ब्रह्मणे हविषा विधेम परिचरेम इत्यर्थः। यथा हिरण्यगर्भादयः परमात्मोपलक्षकाः तथा परमात्मना सृष्टं दिगादिकं जगत् विराण्मूर्तिश्च परमात्मानम् उपलक्षयति इत्याह। [ —अ० ३५।३।३ ]

**ए॒षो ह॑ दे॒वः प्र॒दिशोऽनु॒ सर्वाः॒ पूर्वो॑ ह जा॒तस्स उ॒ गर्भे॑ अ॒न्तः ।**
**स ए॒व जा॒तस्स ज॑नि॒ष्यमा॑णः प्र॒त्यङ्ज॒नास्ति॑ष्ठति स॒र्वतो॑मुखः ।**
**यस्मा॒न्न जा॒त इत्ये॒षः ॥२६॥**

**एषः । ह । देवः । प्रदिशः । अनु । सर्वाः । पूर्वः । ह । जातः । सः । उ । गर्भे । अन्तः ॥**
**सः । एव । जातः । सः । जनिष्यमाणः । प्रत्यङ् । जनाः । तिष्ठति । सर्वतोमुखः ॥**
**यस्मात् । न । जातः । इति । एषः ॥ २६ ॥**

---

१. हस्तलवो निमेषा इत्युच्यते।

एषः विद्वद्भिः अनुभूयमानः देवः स्वप्रकाशः परमात्मा प्रदिशः प्रकृष्टाः प्राच्याद्याः आग्नेयाद्याश्च सर्वाः दिशः अनुप्रविश्य अवस्थित इत्यर्थः। 'ह'शब्दः प्रवेशस्य श्रुत्यन्तरप्रसिद्धयर्थः। तथा पूर्वः जातः हिरण्यगर्भरूपत्वेन अयमेव प्रथमम् उत्पन्नः 'ह' शब्देन **"हिरण्यगर्भः समवर्ततात्रे"** (यजु० अ० २५।१) इति मन्त्रप्रसिद्धिः सूच्यते। सः, 'उ' शब्दः अवधारणे, स एव परमेश्वरः गर्भे अन्तः ब्रह्माण्डरूपस्य गर्भस्य मध्ये वर्तते। स एव जातः देवतिर्यगादिरूपेण उत्पन्नः इतः परम् अपि स एव जनिष्यमाणः, स च प्रत्यङ् अन्नमयादिकोषेभ्यः आन्तरं, जनाः जनेः 'आस्' प्रत्ययः, इदानीम् अपि नानारूपेण जायमानः, यद् वा जना इति षष्ठ्याः सुब्व्यत्ययः। विद्वज्जनानां प्रत्यक्षभूतः इत्यर्थः। सर्वतोमुखः सर्वतः मुखानि रूपाद्युपलब्धिद्वारा चक्षुरादीनि यस्य असौ सर्वतोमुखः, तादृशः अयं जगदधिष्ठानत्वेन तिष्ठति, ब्रह्माण्डरूपं देहं धारयिता। सर्वप्राणिदेहस्वरूपत्वात्, तदीयैः सर्वैः चक्षुरादिभिः युक्तः इत्यर्थः। **"विश्वतश्चक्षुरुत विश्वतोमुखः"** (यजु०, अ० १८।१९) इति श्रुतेः। **"सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति।"** (गीता अ० १३।१३) इति। उक्तार्थदाढर्चाय प्रदेशान्तरपठितं मन्त्रम् उदाहरति—**"यस्मान्न जात इत्येष"** इति। **"यस्मान्न जातः परो अन्यो अस्ति"** (यजु०,८।१७) इत्यस्य प्रतीकम् एतत्। स तु व्याख्याततरः। उक्तार्थे श्रद्धातिशयम् उत्पादयितुं मन्त्रद्वयेन गन्धर्ववृत्तान्तं दर्शयति। तत्र प्रथममन्त्रं पठति—

[—अ० ३५।३।४]

**वेनस्तत्पश्यन्निहितं गुहा सद्यत्र विश्वम्भवत्येकनीळम्।**
**तस्मिन्निदꣳ सं च वि चैति सर्वꣳ स ओतः प्रोतश्च विभूः प्रजासु ॥२७॥**

**वेनः। तत्। पश्यन्। निहितम्। गुहा। सत्। यत्र। विश्वम्। भवति। एकनीळम् ॥**
**तस्मिन्। इदम्। सम्। च। वि। च। एति। सर्वम्। सः। ओतः। प्रोतः। च। विभूः।**
**प्रजासु ॥२७॥**

वेनः नाम गन्धर्वः, गुहा तदाकारः गुहायां स्वहृदये निहितम् अवस्थितं, सत् सर्वत्र विद्यमानं तद् ब्रह्म पश्यन् स्वरूपत्वेन साक्षात् कुर्वन् वर्त्तते। यत्र यस्मिन् परमात्मवस्तुनि विश्वं सर्वं जगत् एकनीडम् एकनिलयं भवति, एकत्वेन विश्वम् अवस्थितं सत् तादात्म्यं प्राप्नोति इत्यर्थः। किं च वेनेन दृष्टे तस्मिन् परमात्मनि इदं परिदृश्यमानं जगत् समेति संगच्छते, व्येति विनीडं च भवति। सः अद्वितीयतत्त्वरूपः परमात्मा विभूः व्यापी सन् प्रजासु सर्वासु ओतः दीर्घतन्तुवत् तिर्यक्तन्तुः प्रोतश्च अवतिष्ठते। [—अ० ३५।३।५]

द्वितीयमाह—

**प्र तद्वोचेदमृतन्नु विद्वान्गन्धर्वो धाम बिभृतं गुहा सत्।**
**त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुः पितासत् ॥२८॥**

**प्र। तत्। वोचेत्। अमृतम्। नु। विद्वान्। गन्धर्वः। धाम। बिभृतम्। गुहा। सत् ॥**
**त्रीणि। पदानि। निहिता। गुहा। अस्य। यः। तानि। वेद। सः। पितुः। पिता।**
**असत् ॥२८॥**

विद्वान् आत्मसाक्षात्कारेण सर्वं जगत् तदात्मकम् इति जानानः वेननामा गन्धर्वः गुहा गुहायां स्वहृदये विभृतम् अवस्थितं धाम स्वप्रकाशं सत् सर्वत्र विद्यमानम्, अमृतं विनाशरहितं तद् वस्तु

प्रवोचेत् शिष्येभ्यः प्रोवाच। खल्वस्य[1] परमात्मनः गुहा गुहासु सर्वप्राणिनां बुद्धिषु त्रीणि पदानि जाग्रत्-स्वप्न-सुषुप्तिरूपाणि स्थानानि निहिता अवस्थितानि विशन्ति। तानि जाग्रदादीनि पदानि यः वेद तत्र[2] अनुगतं परमात्मवस्तु यः जानाति सः पुमान् पितुः उत्पादकस्य स्वीयजनकस्यापि पितासत् जनकः भवति। लोकप्रसिद्धः पिता पुत्रस्य देहमात्रं जनयति, ब्रह्मतत्त्वाभिज्ञस्तु परमात्मस्वरूपेण सर्वजगदुत्पादकत्वात् लोकप्रसिद्धस्य स्वजनकस्यापि स्वयम् उत्पादकः भवति। "यस्ता विजानात् स पितुः पितासत्" (ऋक् १।१६४।१६) इति श्रुतेः। तथा च छन्दोगब्राह्मणम्—"शैशवं भवति शिशुर्वा आङ्गीरसो मन्त्रकृतां मन्त्रकृदासीत् पितॄन् पुत्रका इति आमन्त्रयन्तं पितरोऽब्रुवन्न धर्मं करोति यो नः पितॄंस्ततः पुत्रका इति आमन्त्र्य स इति सोऽब्रवीदहं वा पितास्मि यो मन्त्रकृदस्मि" इति।

[—अ० ३५।३।६]

तस्य परमेश्वरस्य सर्वप्राण्युपकारकत्वं दर्शयति—

**स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा।**
**यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ॥२९॥**

**सः। नः। बन्धुः। जनिता। सः। विधाता। धामानि। वेद। भुवनानि। विश्वा॥**
**यत्र। देवाः। अमृतम्। आनशानाः। तृतीये। धामन्। अधि। ऐरयन्त ॥२९॥**

स परमेश्वरः नः अस्माकं सर्वेषां बन्धुः, अस्मदनुष्ठितसुकृतानुसारेण हितकारित्वात्। जनिता जनकः उत्पादकः, सर्वजगत्स्रष्टृत्वात्। स च विधाता जगतः निर्माता सन् विश्वा विश्वानि भूतानि सर्वान् उत्तमाधमलोकान् धामानि तेषु लोकेषु देवादीनां योग्यानि स्थानानि च वेद जानाति। यत्र यस्मिन् तृतीये धामनि स्वर्गाख्यलोके देवाः इन्द्रादयः आनशानाः स्वतेजसा भासमानाः व्याप्नुवन्तः अमृतं सुधाम् अध्यैरयन्त अधिकं प्राप्नुवन्तः। तत् सर्वं विदित्वा तत्तदनुष्ठितकाम्यकर्मानुसारेण फलं प्रयच्छन्ति इत्यर्थः। यद् वा, नः अस्माकं परमात्मा बन्धुः। "एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते" इति श्रुतेः। सर्वधामानि स्थानानि तत्तत्प्राणिनामानि वा भुवनानि भूतजातानि कार्यत्वेन जानाति। यत्र तृतीये पादत्रयलक्षणे कार्यत्रयलक्षणे धामन् धामानि स्वप्रकाशे ब्रह्मस्वरूपे अमृतं मोक्षरूपम् आनशानाः सम्यग्ज्ञानेन व्याप्नुवन्तः वर्तन्ते। "त्रिपादस्यामृतं दिवि" (यजु० अ० ३१।३) इति श्रुतेः।

[—आ० ३५।३।७]

अथ विदुषः स्वस्वरूपप्राप्तिप्रकारं दर्शयति—

**परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च।**
**उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश ॥३०॥**

**परीत्य। भूतानि। परीत्य। लोकान्। परीत्य। सर्वाः। प्रदिशः। दिशः। च॥**
**उपस्थाय। प्रथमजाम्। ऋतस्य। आत्मना। आत्मानम्। अभि। सम्। विवेश ॥३०॥**

भूतानि देवमनुष्यप्राणिदेहान् परीत्य व्याप्य लोकान् भूरादीन् प्राप्य सर्वाः प्रदिशः आग्नेयादिदिशः प्राच्याद्याश्च दिशः परीत्य सर्वतः व्याप्य वर्तमानम् ऋतस्य सत्यस्य ब्रह्मणः प्रथमजां प्रथमकार्यं तं हिरण्यगर्भम् उपस्थाय सम्यग् विदित्वा आत्मना स्वस्वरूपेण तद्विषयतत्त्वज्ञानेन इत्यर्थः।

---

१. अस्य खलु उ० म्यु०। २. अत्र उ० म्यु०।

आत्मानं सत्यज्ञानादिलक्षणम् अभिसंविवेश अनुप्रविष्टः। हिरण्यगर्भद्वारा विद्वान् पुरुषः स्वस्वरूपं प्राप्तवान् इत्यर्थः। [—अ० ३५।३।८]

अथ उक्तां ब्रह्मविद्याम् उपसंहरति—

**परि द्यावापृथिवी सद्य इत्वा परि लोकान्परि दिशः परि स्वः ॥**
**ऋतस्य तन्तुँ वितर्तँ विचृत्य तदपश्यत्तदभवत्तदासीत् ॥३१॥**

परि। द्यावापृथिवी। सद्यः। इत्वा। परि। लोकान्। परि। दिशः। परि। स्वः॥
ऋतस्य। तन्तुम्। विततम्। विचृत्य। तत्। अपश्यत्। तत्। अभवत्। तत्।
आसीत् ॥३१॥

विदिततत्त्वः पुरुषः द्यावापृथिवी द्यावापृथिव्यौ सद्यः बोधक्षणे एव परि सर्वतः इत्वा प्राप्तः। तथा लोकान् अवशिष्टान्तरिक्षादीन् च व्याप्य दिशः प्राच्याद्याः चतस्रः स्वर्गलोकं च व्याप्य एवं सर्वात्मकत्वेन सर्वं जगद् व्याप्य ऋतस्य.सत्यस्य परं ब्रह्मणः तन्तुम् अविभेदेनावस्थानं विततं विस्तीर्णं यथा भवति तथा विचृत्य गुरुशास्त्रोक्तमुखात् निश्चित्य, अथवा ऋतस्य यज्ञादेः तन्तुम् अदृष्टरूपम् अनेकभोगहेतुं विततं विस्तृतम् अनेकजन्मार्जितं च विचृत्य सम्यग् ज्ञानेन विच्छिद्य, ज्ञानाग्निना दग्ध्वा इत्यर्थः। "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन" (गीता ४।३७) इति स्मृतेश्च, तत्त्वं ब्रह्मतत्त्वम् अपश्यत्। यः साक्षात्कृतवान् स विद्वान्। तद् ब्रह्मतत्त्वमन्त्रवित् "ब्रह्म वेद ब्रह्मैव भवति" (मुण्डक उ० ३।२।९) इति श्रुत्यन्तरात्। 'तदासीत्' इति वचनं विलम्बाभावद्योतकम्। यदा तत्त्वज्ञानम् उत्पद्यते तदैव सर्वात्मकं ब्रह्म भवति इत्यर्थः। [—अ० ३५।३।९]

अथ द्वाभ्यां मन्त्राभ्यां ब्रह्मप्राप्त्यर्थम् अन्तर्यामिणं प्रार्थयते तत्र आद्यं पठति—

**सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ॥**
**सनिम्मेधामयासिषँ स्वाहा ॥३२॥**

सदसः। पतिम्। अद्भुतम्। प्रियम्। इन्द्रस्य। काम्यम्॥
सनिम्। मेधाम्। अयासिषम्। स्वाहा ॥३२॥

सीदति अस्मिन् अव्याकृते कारणे सर्वं जगत् इति सदः, तस्य पतिं पालकम् अन्तर्यामिणम् अयासिषम् अहं प्राप्तवान् अस्मि। शीघ्रं प्राप्तवान् इति अनया विवक्षया भूतार्थनिर्देशः। कीदृशं सदसस्पतिम्, अद्भुतम् आश्चर्यरूपम्, मनसा अपि अचिन्त्यम्, रचनारूपस्य जगतः अनायासेन निर्मातृत्वम् अद्भुततरम्। इन्द्रस्य देवराजस्यापि प्रियम्। सः अपि अन्तर्यामिणं कदा प्राप्स्यामि इत्येवम् आशास्ते। अत एव सर्वैः अन्यैः काम्यम् अपेक्षणीयम्। सनिं कर्मफलस्य दातारम्, मेधां श्रुताधीतग्रन्थधारणशक्तिं प्रयच्छन्तम् इति शेषः। स्वाहा इति होमार्थः युक्तः, सर्वमेधे विनियुक्तत्वात् इति भावः। [—अ० ३५।३।१०]

द्वितीयमाह—

**याम्मेधान्देवगणाः पितरश्चोपासते ॥**
**तया मामद्य मेधयाग्ने मेधाविनङ्कुरु स्वाहा ॥३३॥**

याम् । मेधाम् । देवगणाः । पितरः । च । उप । आसते ॥
तया । माम् । अद्य । मेधया । अग्ने । मेधाविनम् । कुरु । स्वाहा ॥३३॥

हे अग्ने अग्निप्रकाशान्तर्यामिन् देवगणाः देवसमूहाः यां मेधाम् उपासते प्रार्थयन्ते, तया मेधया अद्य इदानीं मां मेधाविनं कुरु स्वाहा इति होमार्थः । [—अ० ३५।३।११]

कामनाप्रसङ्गात् श्रीकामस्य कंचिन्मन्त्रं दर्शयति—

**इ॒दम्मे॒ ब्रह्म॑ च क्ष॒त्रञ्चो॒भे श्रिय॑मश्नुताम् ।**
**मयि॑ दे॒वा द॑धतु॒ श्रिय॒मुत्त॑मा॒न्तस्यै॑ ते॒ स्वाहा॑ ॥३४॥**

इदम् । मे । ब्रह्म । च । क्षत्रम् । च । उभे । श्रियम् । अश्नुताम् ॥
मयि । देवाः । दधतु । श्रियम् । उत्तमाम् । तस्यै । ते । स्वाहा ॥३४॥

इदं ब्रह्म ब्राह्मणजातिः, क्षत्रं क्षत्रियजातिः चकारौ परस्परसमुच्चयार्थौ । एते उभे ब्रह्मक्षत्रे मे मदीयां श्रियम् अश्नुतां व्याप्नुताम् उपजीवताम् । श्रीः अपि प्रभूतं भवतु इत्यर्थः । किं च देवाः देवनादिगुणयुक्ताः इन्द्रादयः उत्तमाम् उत्कृष्टाम् अनवच्छिन्नां श्रियं धनधान्यादिश्रियं मयि दधतु स्थापयन्तु । अथ अपरोक्षनिर्देशः । तस्यै ते तुभ्यं श्रियै देवतायै स्वाहा हविः प्रयच्छामि इत्यर्थः ।

[—अ० ३५।३।१२]

इति पञ्चत्रिंशोऽध्याये तृतीयः अनुवाकः ।

[चतुर्थोऽनुवाकः ३५—५५]

पूर्वस्मिन् अनुवाके सार्वमेधिकाः मन्त्राः उक्ताः । इदानीं पितृमेधिकाः मन्त्राः उच्यन्ते । अग्निचिति मृते अस्थिसंचयनात् ऊर्ध्वं लोष्टचयनं कर्त्तव्यम् । "चयनं तमग्निचित" इति आपस्तम्बस्मरणात् । तत्र एषः अनुवाकः विनियुक्तः । कात्यायनः—"अपेतो यन्त्विति पलाशशाखया व्युदूहति" (अ० २१।६४) इति । उपदक्षिणाप्रवणे कक्षदेशे कक्षे न्यग्रोधाश्वत्थादिवृक्षवर्जिते यथोक्ते देशे चतुर्दिक्षु पालाशशमीकवारुणदेहशङ्कून् अपहृत्य अपसलवि सृष्ट्या रज्ज्वा परितत्य "अपेतो यन्तु" इति मन्त्रेण पलाशशाखया व्युदूहेत् ।

तत्पाठस्तु—

**अपे॒तो य॑न्तु प॒णयो॒ऽसु॑म्ना देव॒पीय॑वः ॥**
**अ॒स्य लो॒कस्सु॒ताव॑तः ॥३५॥**

अप । इतः । यन्तु । पणयः । असुम्ना । देवपीयवः ॥
अस्य । लोकः । सुतावतः ॥३५॥

पणयः नाम कर्मविघ्नकारिणः असुराः इतः अस्मात् श्मशानलक्षणदेशात् अपयन्तु अपसरन्तु निर्गच्छन्तु । कीदृशाः, असुम्नाः, सुम्नं सुखम्, असुखकारिणः । अत एव देवयपीयवः पीयतिः हिंसाकर्मा, हविराद्यपहरणेन देवानां हिंसितारः । किमर्थमपहरणं तदाह—अस्य लोक इति । सुतावतः सोमाभिषवं कृतवतः, सोमयाजिनः अस्य यजमानस्य अयं लोकः श्मशानलक्षणं स्थानं तदीयमेव नतु युष्मदीयम् इत्यर्थः । [—अ० ३५।४।१]

कात्यायनः,—"दक्षिणा शाखां निरस्य परिश्रिद्भिः परिश्रयति पूर्ववदपरिमिताभिः" (अ० २१।६५) इति, पलाशशाखां दक्षिणतः निरस्य "द्युभिरहोभिः" इति मन्त्रेण परिश्रयति। तत्पाठस्तु—

द्युभिरहोभिरक्तुभिर्व्यक्तँय्यमो ददात्ववसानमस्मै ।
सविता ते शरीरेभ्यः पृथिव्याँल्लोकमिच्छतु ॥
तस्मै युज्यन्तामुस्रियाः ॥३६॥

द्युभिः । अहोभिः । अक्तुभिः । व्यक्तम् । यमः । ददातु । अवसानम् । अस्मै ॥
सविता । ते । शरीरेभ्यः । पृथिव्याम् । लोकम् । इच्छतु ॥
तस्मै । युज्यन्ताम् । उस्रियाः ॥३६॥

द्युभिः दीप्यमानैः अहोभिः, अक्तुः इति रात्रिनाम, रात्रिभिः व्यक्तं स्पष्टीकृतम्, अवसानम्, "षोऽन्तकर्मणि" इति धातुः, अवस्यति अस्मिन् इति श्मशानलक्षणं शवसंस्कारस्थानम्, अस्मै यजमानाय यमः ददातु ।

कात्यायनः—"सविता त इति जपति" ( अ० २१।६६ ) इति। उत्तरतः औदुम्वरसीरे षड्गवे युज्यमाने प्रथमतः युक्तेति संप्रेष्य "सविता ते" इति मन्त्रं जपेत्। पाठस्तु "सविता ते" इत्यादि। हे संस्क्रियमाण यजमान ते तव शरीरेभ्यः शरीरोपलक्षितसविता सर्वस्य कर्मणः प्रेरयिता एतन्नामकः देवः पृथिव्यां लोकं स्थानम् इच्छतु अनुजानातु। तस्मै सवित्रानुज्ञातक्षेत्राय क्षेत्रं गन्तुम् उस्रियाः सरणशीलाः अनड्वाहः युज्यन्ताम्, औदुम्वरसीरे नियुज्यन्ताम्।

[—अ० ३५।४।२]

कात्यायनः—"अनुरज्जु चतस्रः सीताः कृषति वायुः पुनात्विति प्रतिमन्त्रम्" (अ० २१।६७) इति। अवसानविसृष्टां रज्जुम् अनुसृत्य वायुः पुनातु इत्यादिभिः चतुर्भिः मन्त्रैः चतस्रः सीताः कृषति। पाठस्तु—

वायुः पुनातु सविता पुनात्वग्नेर्भ्राजसा सूर्यस्य वर्चसा ।
विमुच्यन्तामुस्रियाः ॥३७॥

वायुः । पुनातु । सविता । पुनातु । अग्नेः । भ्राजसा । सूर्यस्य । वर्चसा ॥
वि । मुच्यन्ताम् । उस्रियाः ॥३७॥

प्रथमतः वायुः पुनातु। उत्तरतः प्रतीचीं प्रथमां सीतां कृषतु इत्यर्थः। सविता पुनातु द्वितीयाम् इति विशेषः। अग्नेः भ्राजसा तेजसा सविता पुनातु तृतीयाम्। सूर्यस्य वर्चसा तेजसा दीप्त्या च सविता पुनातु चतुर्थीम् इति विशेषः।

कात्यायनः, "अनडुहो विमुच्य विमुच्यन्ताम्" (अ०२१।७०) इति मन्त्रेण अनडुहः विमुञ्चेत्। पाठस्तु—"विमुच्यन्तामुस्रियाः" इति। उस्रियाः सरणशीलाः सीरे विमुच्यन्ताम् अनड्वाहः विमुच्यन्ताम्।

[—अ० ३५।४।३]

कात्यायनः—"अश्वत्थे व इति सर्वौषधं वपति" (अ० २१।७०) इति मन्त्रेण सर्वौषधं वपेत्।

तत्पाठस्तु–

अश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृता ॥
गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥३७॥

अश्वत्थे । वः । नि । सदनम् । पर्णे । वः । वसतिः । कृता ॥
गोभाजः । इत् । किल । असथ । यत् । सनवथ । पुरुषम् ॥३८॥

व्याख्यातः अयं मन्त्रः (अ० १३।८०) । [—अ० ३५।४।४]

कात्यायनः—"सविता त इति शरीराणि वपतीति" (अ० २१।७१) यजमानास्थीनि "सविता ते" इति मन्त्रेण तत्र वपेत् । पाठस्तु–

सविता ते शरीराणि मातुरुपस्थ आवपतु ॥
तस्मै पृथिवि शम्भव ॥
प्रजापतौ त्वा देवतायामुपोदके लोके निदधाम्यसौ ॥३९॥

सविता । ते । शरीराणि । मातुः । उपस्थे । आ । वपतु ॥
तस्मै । पृथिवि । शम् । भव ॥
प्रजापतौ । त्वा । देवतायाम् । उपोदके । लोके । नि । दधामि । असौ ॥३९॥

मातुः पृथिव्याः उपस्थे उत्सङ्गे ते तव शरीराणि शरीरोपलक्षितानि अस्थीनि सविता आवपतु पृथिव्याम् अन्तः स्थापयतु । तस्मै अस्थिरूपाय उप्ताय यजमानाय हे पृथिवि शं सुखं भव, सुखकारिणी भव । अथ संस्कर्ता "प्रजपतौ" इति मन्त्रशेषेण अस्थिरूपं यजमानम् अपरोक्षेण आह–प्रजापतौ देवतायाम् अधिष्ठात्र्याम् उपोदके सन्निहितोदके लोके स्थाने असौ त्वा त्वाम् अस्थिभूतं निदधामि आवपामि । असौ इति यजमानस्य नामग्रहणं वा । एतन्नामानं त्वाम् आवपामि इत्यर्थः । [—अ० ३५।४।५]

कात्यायनः–"दक्षिणाऽनवानं सृत्वा प्रत्यागते परं मृत्यो इति जपतीति" (अ० २१।७२–७३) दक्षिणतः अनिरुच्छ्वासं गत्वा प्रत्यागते "परं मृत्यो" इति मन्त्रं जपेत् । पाठस्तु–

परम्मृत्यो अनु परेहि पन्थाँय्यस्ते अन्य इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳरीरिषो मोत वीरान् ॥४०॥

परम् । मृत्यो । अनु । परा । इहि । पन्थाम् । यः । ते । अन्यः । इतरः । देवयानात् ॥
चक्षुष्मते । शृण्वते । ते । ब्रवीमि । मा । नः । प्रजाम् । रीरिषः । मा । उत । वीरान् ॥४०॥

हे मृत्यो परं पन्थां पन्थानम् अनु परेहि पराङ्मुखः भूत्वा अनुगच्छ । पन्थानमेव विशिनष्टि–ते त्वदीयः देवयानात् देवमार्गात् इतरः स्वरूपतः पृथग्भूतः, अन्यमार्गतः अपि पृथग्भूतः पितृयाणत्वात्, तथाविधः अयम्, तं पितृयाणं गच्छ इत्यर्थः । किं च चक्षुष्मते, अतिशयेन चक्षुः अस्य अस्तीति चक्षुष्मान्, तस्मै, शृण्वते श्रवणं कुर्वते तुभ्यं ब्रवीमि । नहि त्वया अदृष्टम् अश्रुतं वा विद्यते । अतः वदामि इत्यर्थः । नः अस्माकं प्रजां पश्वादिकां मा रीरिषः मा हिंसीः । 'रुष रिष हिंसायाम्' इति धातुः

उत अपि च मे वीरान् कर्मणि दक्षान् पुत्रान् मा रीरिषः। छान्दसः लोट्, मा विनाशय इत्यर्थः। [अ० ३५।४१६]

कात्यायनः—"शं वात इति यथाङ्गं कल्पयित्वेष्टकां निदधाति" इति (अ० २१।७४)। 'शं वातः,' 'कल्पन्ताम्' इति द्वाभ्यां मन्त्राभ्यां यजमानस्य अस्थीनि यथावयवसन्निवेशं कल्पयित्वा तत्र इष्टकां निदध्यात्। पाठस्तु—

शँव्वातश्शꣳहि ते घृणिश्शन्ते भवन्त्विष्टकाः।
शन्ते भवन्त्वग्नयः पार्थिवासो मा त्वाभिशूशुचन् ॥४१॥

शम्। वातः। शम्। हि। ते। घृणिः। शम्। ते। भवन्तु। इष्टकाः॥
शम्। ते। भवन्तु। अग्नयः। पार्थिवासः। मा। त्वा। अभि। अशूशुचन् ॥४१॥

एवंविधस्य यजमानस्य ते तव वातः वायुः शं सुखकरः भूयात्। तथा घृणिः दीप्यमानः सूर्यः ते सुखकरः भूयात्। तथा ते तव निहिता इष्टकाः शं भवन्तु। अग्नयश्च ते शं भवन्तु। तथा पार्थिवासः पार्थिवाः पृथिवीसम्बन्धिनः अस्थ्यादयश्च अस्थिरूपं त्वा त्वां मा अभिशूशुचन् मा शोचयन्तु मा अपसारयन्तु इत्यर्थः। [—अ० ३५।४१७]

द्वितीयः—

कल्पन्तान्ते दिशस्तुभ्यमापः शिवतमास्तुभ्यम्भवन्तु सिन्धवः।
अन्तरिक्षꣳशिवन्तुभ्यङ्कल्पन्तान्ते दिशस्सर्वाः ॥४२॥

कल्पन्ताम्। ते। दिशः। तुभ्यम्। आपः। शिवतमाः। तुभ्यम्। भवन्तु। सिन्धवः॥
अन्तरिक्षम्। शिवम्। तुभ्यम्। कल्पन्ताम्। ते। दिशः। सर्वाः ॥४२॥

ते तुभ्यं दिशः प्राच्याद्याः कल्पन्तां सुखकारिण्यः भवन्तु। आपश्च शिवतमाः भवन्तु। साधारणेन उक्त्वा विशेषेण आह—सिन्धवः स्यन्दमानाः नद्यश्च तुभ्यं शिवतमाः भवन्तु। अन्तरिक्षमपि शिवं करोतु। सर्वाः दिशः विदिशश्च ते तुभ्यं शिवतमाः कल्पन्ताम्। [—अ० ३५।४१८]

कात्यायनः—"दक्षिणतः कुटिले कर्षू खात्वा क्षीरोदकाभ्यां पूरयन्ति सप्तोत्तरतः प्राचीरुदकस्य त्रींस्त्रीनावपत्यश्मनः अध्यधिगच्छन्त्यश्मन्वतीरिति" (अ० २१।७६।७९)। दक्षिणदेशे कुटिलभूते द्वे कुल्ये खात्वा क्षीरोदकाभ्यां पूरयेत्। अस्य उदकस्य उत्तरतः प्राचीः कर्षूःकुल्याः कर्त्तव्याः, तत्र प्रत्येकं त्रीन् त्रीन् पाषाणान् आवपेयुः। ताः कर्षूः "अश्मन्वती" इति[1] मन्त्रेण अभिगच्छेयुः। पाठस्तु—

अश्मन्वती रीयते सꣳरभध्वमुत्तिष्ठत प्रतरता सखायः।
अत्रा जहीमोऽशिवा ये असञ्छिवान्वयमुत्तरेमाभि वाजान् ॥४३॥

अश्मन्वती। रीयते। सम्। रभध्वम्। उत्। तिष्ठत। प्र। तरत। सखायः॥
अत्र। जहीमः। अशिवाः। ये। असन्। शिवान्। वयम्। उत्। तरेम। अभि। वाजान् ॥४३॥

---

१. अनेन उ. म्यु.

हे सखायः बन्धवः अश्मन्वती पाषाणवती नदी रीयते अस्माभिः गम्यते। 'री' गतिरेषणयोः इति धातुः। एकवचनं प्रत्येकविवक्षया उक्तम्। अतः यूयं संरभध्वं कर्षूभरणे प्रयत्नं कुरुध्वम्। उत्तिष्ठत अस्मात् देशात्। ततः ताः कर्षूः प्रतरत प्रतरणं कुरुत। ण्यन्तर्भावात् सखायः देवाः अस्मान् प्रतारयत। किमर्थम् इत्याह—अत्र अस्मिन् श्मशानलक्षणे देशे ये अशिवाः असुखकराः पाषाणमयाः असन् आसते [1]तानेव जहीमः। ततः वयं शिवान् सुखकरान् वाजान् अन्नविशेषान् अभि अभिरक्ष्य उत्तरेम। [—अ० ३५।४।९]

कात्यायनः—"अपाघमित्यपामार्गैरपमृजत इति (अ० २१।९०)। स्पष्टार्थः।

पाठस्तु—

**अपाघमप किल्बिषमप कृत्यामपो रपः।**
**अपामार्ग त्वमस्मदप दुःष्वप्न्यꣳ सुव ॥४४॥**

**अप। अघम्। अप। किल्बिषम्। अप। कृत्याम्। अप। उ। रपः॥**
**अपामार्ग। त्वम्। अस्मत्। अप। दुःस्वप्न्यम्। सुव ॥४४॥**

हे अपामार्ग! अघं महापातकम् अस्मत् अस्मत्तः अपसुव अपगमय। किल्बिषम् अभक्ष्यभक्षणनिमित्तम्[2] उपपातकम् अपसुव। तथा कृत्याम् अगम्यागमनादिजातं पापम् अपसुव। रपः यथोक्तकर्माननुष्ठानादिना कृतं पापम्, अपो, अप उ इति निपातद्वयम्, अपगमय एव। तथा[3] दुःस्वप्नप्रयुक्तदुःखफलस्य हेतुभूतं दुरितम् अपसुव। [—अ० ३५।४।१०]

कात्यायनः—"सुमित्रिया न इति स्नात्वा" इति (अ०२१।९१)। तत्पाठस्तु—

**सुमित्रिया न आप ओषधयस्सन्तु दुर्मित्रियास्तस्मै सन्तु।**
**योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः ॥४५॥**

**पदच्छेदः स्पष्टः ॥४५॥**

"सुमित्रिया न" इति व्याख्यातम् (अ० २२।६)। [—अ० ३५।४।११]

कात्यायनः—"अहतवाससोऽनडुत्पुच्छमन्वारभ्यानड्वाहमिति" (अ० २१।९१)। तत्र स्नात्वा अहतवाससो भूत्वा "अनड्वाहम्" इति मन्त्रेण अनडुत्पुच्छम् अन्वारभेरन्। तत्पाठस्तु—

**अनड्वाहमन्वारभामहे स्वस्तये।**
**स न इन्द्र इव देवेभ्यो वह्निस्सन्तारणो भव ॥४६॥**

---

१. तत्रैव उ. म्यु.

२. जनितम् उ. म्यु.

३. दुःस्वप्न्यम् इत्यादि।

अनड्वाहम् । अनु । आ । रभामहे । स्वस्तये ॥
सः । नः । इन्द्रः । इव । देवेभ्यः । वह्निः । सम् । तारणः । भव । ॥४६॥

स्नाता वयं स्वस्तये क्षेमार्थम् अनड्वाहम् अनडुत्पुच्छम् अन्वारभामहे अन्वारम्भणं कुर्मः । वह्निः, वहनाद् वह्निः भारस्य वोढा, सः अनड्वान् च नः अस्माकं सन्तारणः भव सन्तारकः भव । तत्र दृष्टान्तः—इन्द्र इव देवेभ्यः इति । इन्द्रः यथा देवानां सर्वापद्भ्यः सन्तारकः भवति तद्वत् ।
[—अ० ३५।४।१२]

कात्यायनः,—"उद्वयमित्युक्त्वा क्रामन्तीति" ( अ० २१।६१ ) । उद्वयन्तमसस्परीति कर्षूरुपक्रामन्तीति ।

उद्वयन्तमसस्परि स्वः पश्यन्त उत्तरम् ।
देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥४७॥

उत् । वयम् । तमसः । परि । स्वः । पश्यन्तः । उत्तरम् ॥
देवम् । देवत्रा । सूर्यम् । अगन्म । ज्योतिः । उत्तमम् ॥४७॥

उद्वयमिति व्याख्यातः मन्त्रः (अ० २२।७) । [—अ० ३५।४।१३ ]

कात्यायनः—"अञ्जनाभ्यञ्जने कृत्वौपासनं परिस्तीर्य वारणान् परिधीन् परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्न आयूꣳष्यायुष्मानग्न इति" (अ० २१।६३) । द्वाभ्याम् एकाहुतिं जुहुयात् । प्रथममन्त्रपाठस्तु —

अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥४८॥

अग्ने । आयूंषि । पवसे । आ । सुव । ऊर्जम् । इषम् । च । नः ॥
आरे । बाधस्व । दुच्छुनाम् ॥४८॥

"अग्न आयूंषि" इति व्याख्यातः (अ० २१।४०) [—अ० ३५।४।१४]

द्वितीयमन्त्रस्तु—

आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि ।
घृतम्पीत्वा मधु चारु गव्यम्पितेव पुत्रमभिरक्षतादिमान्त्स्वाहा ॥४९॥

आयुष्मान् । अग्ने । हविषा । वृधानः । घृतप्रतीकः । घृतयोनिः । एधि ॥
घृतम् । पीत्वा । मधु । चारु । गव्यम् । पिता । इव । पुत्रम् । अभि । रक्षतात् । इमान् । स्वाहा ॥४९॥

हे अग्ने ! हविषा अस्मदीयेन वृधानः घृतप्रतीकः दीप्यमानावयवः घृतयोनिः घृतेन उत्पन्नज्वालः त्वम् आयुष्मान् एधि, अस्माकं दीर्घमानायुर्युक्तो भव । अस्माकम्, आयुर्देहीत्यर्थः ।

अत एव अन्यत्र आम्नातम्—"आयुर्दा अग्न" इति। तथा मधु मधुरं चारु मनोहरं गव्यं गोसम्बन्धिघृतं पीत्वा इमं यजमानम् अभिरक्षतात् सर्वत्र। तत्र दृष्टान्तः—यथा पुत्रं पिता रक्षति तद्वत्। स्वाहेति होमार्थः। [—अ० ३५।४।१५]

कात्यायनः—"ग्रामश्मशानान्तरे मर्यादालोष्टं निदधातीमं जीवेभ्य" (अ० २१।९२) इति। मन्त्रेणानेन ग्रामश्मशानमध्ये मर्यादालोष्टं निदध्यात्। तत्पाठस्तु—

इ॒मञ्जी॒वेभ्यः॑ परि॒धिन्द॑धामि॒ मैषा॒न्नु गा॒दप॑रो॒ अर्थ॑मे॒तम्।
श॒तञ्जी॑वन्तु श॒रदः॑ पु॒रू॒चीर॒न्तर्मृ॒त्युन्द॑धता॒म्पर्व॑तेन ॥५०॥

इमम्। जीवेभ्यः। परिधिम्। दधामि। मा। एषाम्। नु। गात्। अपरः। अर्थम्। एतम्॥
शतम्। जीवन्तु। शरदः। पुरूचीः। अन्तः। मृत्युम्। दधताम्। पर्वतेन ॥५०॥

परिधिं, परिधीयत इति परिधिः, परिधीभूतम् इमं लोष्टं जीवेभ्यः जीवनवद्भ्यः अस्मदादिभ्यः तन्निमित्तं निदधामि ग्रामश्मशानमध्ये स्थापयामि। किमर्थम्, एषां जीवानां मध्ये अपरः कश्चिदपि अर्थं पितृभिः अर्थ्यमाणम् एतद् यमलोकं नु क्षिप्रं मा गात् मा गच्छतु। ततः पुरूचीः बह्वञ्चिताः दानाध्ययनयागादिना अञ्चनवतीः शतं शरदः जीवन्तु। शतसँवत्सरपर्यन्तं यागादिकं कुर्वन्तः जीवनयुक्ताः भवन्तु। तदर्थमेव पर्वतेन अवस्थापितेन लोष्टेन मृत्युं मरणम् अन्तर्दधतां तिरोधानं कुर्युः। [अ० ३५।४।१६]

कात्यायनः—"अथैषां परिदां वदति परीमेगामनेषतेति" (अ० २१।९४)।
पाठस्तु—

परी॒मे गाम॑नेषत॒ पर्य॒ग्निम॑हृषत।
दे॒वेष्व॑क्रत॒ श्रवः॒ क इ॒माँ आद॑धर्षति ॥५१॥

परि। इमे। गाम्। अनेषत। परि। अग्निम्। अहृषत॥
देवेषु। अक्रत। श्रवः। कः। इमान्। आ। दधर्षति ॥५१॥

इमे जीवाः गां भूमिं पर्यनेषत परितः प्रापितवन्तः। तथा अग्निं पर्यहृषत यज्ञार्थम् आहनीयादिषु परिहृतवन्तः। ततः देवेषु इन्द्रादिषु श्रवः हविर्लक्षणम् अन्नम् अक्रत कृतवन्तः। अतः इमान् यष्टॄन् जीवान् कः को नाम असुरः आदधर्षति तिरःकुर्यात्। [—अ० ३५।४।१७]

कात्यायनः,—"अद्वारेणौपासनं निरस्यति क्रव्यादमग्निमितीहैवायमिति जपतीति" औपासनाग्निं तम् अद्वारेण विभक्तं "क्रव्यादमग्निम्" इति पूर्वार्द्धर्चेन एकं निरस्येत्, अन्यम् "इहैवायम्" इति उत्तरार्द्धर्चेन जपेत्। तत्पाठस्तु—

क्र॒व्याद॑म॒ग्निम्प्रहि॑णोमि (दू॒रँ) दू॒तँय्य॑म॒राज्यङ्ग॑च्छतु रिप्रवा॒हः।
इ॒हैवायमित॑रो जा॒तवे॑दा दे॒वेभ्यो॑ ह॒व्यँव्व॑हतु प्रजा॒नन् ॥५२॥

क्रव्यादम्। अग्निम्। प्र। हिणोमि। दूतम् (दूरम्)। यमराज्यम्। गच्छतु। रिप्रवाहः॥
इह। एव। अयम्। इतरः। जातवेदाः। देवेभ्यः। हव्यम्। वहतु। प्रजानन् ॥५२॥

क्रव्यादम्, क्रव्यम् आममांसम् अत्तीति क्रव्यात्, तं क्रव्यादम्, शवशरीरदाहकम्, दूतं दूतकर्मवन्तम् अग्निं प्रहिणोमि प्रापयामि । सः अग्निः रिप्रवाहः, 'रिप्रम्' इति पापनाम, रिप्रं पापरूपं वहतीति रिप्रवाहः, सः अग्निः यमराज्यं यमेन अधिष्ठितं लोकं गच्छतु । इतरः क्रव्यादग्निः (ग्नेः)अन्यः जातवेदाः जातप्रज्ञः अयम् अग्निः इहैव अस्मिन् एव देशे स्थित्वा प्रजानन् देवानां हविर्भागम् अवगच्छन् देवेभ्यः हव्यम् अस्माभिः दत्तं हविः वहतु प्रापयतु । [—अ० ३५।४।१८]

अष्टकासु "वह वपां जातवेदः पितृभ्यः" इति एषः मन्त्रः वपाहोमे विनियुक्तः । तत्र कात्यायनः (सूत्रकारः)—"तस्यै वपां जुहोति वह वपां जातवेदः पितृभ्यः" (पार० ३।३) इति । तत्पाठस्तु—

**वह॑ व॒पाञ्जा॑तवेदः पि॒तृभ्यो॒ यत्रै॑ना॒न्वेत्थ॒ निहि॑तान्परा॒के ।**
**मेद॑सः कु॒ल्या उप॒तान्त्स्र॑वन्तु स॒त्या ए॑षामा॒शिष॑स्सन्तु॒ कामा॒स्स्वाहा॑ ॥५३॥**

वह । वपाम् । जातवेदः । पितृभ्यः । यत्र । एनान् । वेत्थ । निहितान् । पराके ॥
मेदसः । कुल्याः । उप । तान् । स्रवन्तु । सत्याः । एषाम् । आशिषः । सन्तु । कामाः ।
स्वाहा ॥५३॥

हे जातवेदः जातप्रज्ञ अग्ने ! पितृभ्यः तदर्थं हूयमानां वपां वह प्रापय । यत्र यस्मिन् पराके अतिदूरदेशे निहितान् स्थितान् एनान् पितॄन् वेत्थ जानासि, तत्र एभ्यः पितृभ्यः हव्यं वह इति समन्वयः । तत्स्थान्[1] पितॄन् मेदसः कुल्याः बहूनि मेदांसि उप तान् स्रवन्तु समीपे गच्छन्तु । एषां वपायाः दातॄणां यजमानानाम् आशिषः इष्टार्थस्य शंसनीयानि सत्याः यथार्थानि भवन्तु । कामाश्च सत्याः सन्तु । स्वाहेति होमार्थः । [—अ० ३५।४।१९]

आग्रहायणीकर्मणि "स्योना पृथिवी" इति संवेशनार्थः मन्त्रः । तथा च सूत्रकारः—"स्योना पृथिवि नो भवेति दक्षिणपार्श्वे प्राक्शिरसः संविशन्तीति" (पार. ३।२) । तत्पाठस्तु—

**स्यो॒ना पृ॑थिवि नो भवानृक्ष॒रा नि॒वेश॑नी ।**
**यच्छा॑ न॒श्शर्म॑ स॒प्रथाः॑ ।**
**अप॑ न॒श्शोशु॑चद॒घम् ॥५४॥**

स्योना । पृथिवि । नः । भव । अनृक्षरा । निवेशनी ॥
यच्छ । नः । शर्म । सप्रथाः ॥
अप । नः । शोशुचत् । अघम् ॥५४॥

हे पृथिवि नः अस्माकं स्योना, "स्योन" इति सुखनाम, सुखकारिणी भव । कीदृशी, अनृक्षरा । नृक्षरं कण्टकः, अकण्टका, चोरदानवादिरहिता । निवेशनी प्रतिष्ठारूपिणी । तथा सप्रथाः प्रथनयुक्ता त्वं नः अस्माकं शर्म, शीर्यते अस्मिन् इति शर्म गृहम्, तद् यच्छ प्रयच्छ । शावे

---

१ तत्स्थान् उ. म्यु.

कर्मणि सपिण्डानाम् उदकक्रियायाम् 'अप नः शोशुचत् अघम्" इति मन्त्रः जलापनोदने विनियुक्तः। तथा च सूत्रकारः—"प्राचीनावीतिनो मुक्तशिखाः सव्यस्यानामिकयापनोद्य अप नः शोशुचदघमिति" (पार० ३।१०) तन्मन्त्रस्य देशान्तरपठितत्वात् अत्र प्रतीकेन आह "अप नः शोशुचघम्" इति। अस्यार्थः हे अग्ने अपाम् अधिष्ठानदेव नः अस्माकम् अघं पापजातम् अपशोशुचत् अपमोचय। अघं छित्वा जय इत्यर्थः। तथा रयिं किल्विषरूपं दुष्प्रतिग्रहादिना जातम् आशुशुरिव समन्तात् मोचय, अपगमय इत्यर्थः। [—अ० ३५।४।२०]

पित्र्यकर्मणि शवदाहने, "अस्मात्त्वमधिजातोऽसि" इति एष मन्त्रः विनियुक्तः। पाठस्तु—

**अस्मात्त्वमधिजातोऽसि त्वदयञ्जायताम्पुनः।**
**असौ स्वर्गाय लोकाय स्वाहा।**
**अप नश्शोशुचदघम् ॥५५॥**

**अस्मात्। त्वम्। अधिजातः। असि। त्वत्। अयम्। जायताम्। पुनः॥**
**असौ। स्वर्गाय। लोकाय। स्वाहा॥**
**अप। नः। शोशुचत्। अघम्॥५५॥**

हे अग्ने त्वम् अस्मात् यजमानात् अधिजातः असि। साधनकाले यजमानेन मन्थनेन निष्पादितोऽसि।[1] तथा अयं यजमानः त्वत् त्वत्तः सकाशात् पुनर्जायताम्। त्वदीयकर्मानुष्ठान-समर्थः विशिष्टकुले जायताम् इत्यर्थः। असौ इदं नाम्ना अयं देवदत्तः स्वर्गाय लोकाय स्वर्गलोक-प्राप्त्यर्थं स्वाहा सुहुतः भवतु। [—अ० ३५।४।२१]

**वेदार्थस्य प्रकाशेन तमो हार्दं न्यवारयत्।**
**पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः॥**

**इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्तक-वीरबुक्कणभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये पञ्चत्रिंशोऽध्यायः॥**



१. इत्यर्थः उ० म्यु०।

# अथ षट्त्रिंशोऽध्यायः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

[ प्रथमोऽनुवाकः १—२५ ]

पञ्चत्रिंशे पैतृकमेधिका मन्त्रा उक्ताः । अथ षट्त्रिंशेऽनारम्याधीतस्य ज्योतिष्टोमाङ्गभूतस्य प्रवर्ग्यस्य आद्यन्तयोः जप्या शान्तिकरणा मन्त्रा आम्नायन्ते । अत एव सूत्रकृतोक्तम्—"शान्तिकरणमाद्यन्तयोः स्वाध्यायदर्शनादिति" ( कात्यायनानुक्रमण्याम् ) । तत्र प्रथमः मन्त्रः यजुरात्मकः । तत्पाठस्तु—

**ऋचँ॒ वाचम्प्रप॑द्ये मनो॒ यजुः॒ प्रप॑द्ये साम॑ प्रा॒णम्प्रप॑द्ये चक्षुः॒ श्रोत्र॒म्प्रप॑द्ये ।**
**वागोज॑स्स॒हौजो॒ मयि॑ प्राणापा॒नौ ॥ १ ॥**

**ऋचम् । वाचम् । प्रपद्ये । मनः । यजुः । प्रपद्ये । साम । प्राणम् । प्रपद्ये । चक्षुः । श्रोत्रम् । प्रपद्ये ॥**
**वाक् । ओजः । सहः । ओजः । मयि । प्राणापानौ ॥ १ ॥**

वाचं वागिन्द्रियात्मिकाम् ऋचं प्रवर्ग्योपयुक्ताम्, पादे व्यवस्थितम् ऋक्मन्त्रं प्रपद्ये आश्रयत्वेन भजे । अयमर्थः—स्वकीये वागिन्द्रिये ऋग्वेदबुद्धिं कृत्वा तं शरण्यं भजे इति । तथा मनः अन्तःकरणम्, यजुरात्मकमिति प्रपद्ये । मनसि यजुर्बुद्धिं प्रकृत्य प्रवर्ग्यसम्पत्त्यर्थं तत् शरण्यं प्राप्नुयाम् । तथा सामवेदं प्राणं प्राणवाय्वात्मकं प्रपद्ये । साम्नि प्राणबुद्धिः कार्या, इत्यर्थः । एवं प्रवर्ग्योपयुक्तानि ऋक्सामयजूंषि देवतारूपेण स्वकीयवागादिषु तिष्ठन्तीति अनुस्मृत्य इन्द्रियपाटवस्यापि अशक्तत्वात् तत्प्रतिपत्तिः उच्यते—चक्षुरिति । चक्षुःरूपसाधनमिन्द्रियम् । [ श्रोत्रम् ] एतदुभयं प्रपद्ये । आदित्यादिदेवताधिष्ठितत्वात् चक्षुरादेः प्रतिपत्तिविषयत्वम् । एतच्च अन्येषां त्वग्रसनाघ्राणादीनामपि इन्द्रियाणाम् उपलक्षणम् । अतश्च सर्वा अपि इन्द्रियदेवता अहं शरण्यं भजे इत्युक्तं भवति । अपि च वाग् वचनसामर्थ्यलक्षणम् ओजः बलम्, सहः सहनकर्मानुष्ठानशक्तिलक्षणम्, यत् ओजः बलम्, तत् उभयमपि तिष्ठतु । प्रवर्ग्यम् अतीत्य पलायनं मा कार्षीत् । तथा प्राणापानौ, मुखनासिकयोः ऊर्द्ध्वं संचरन् प्राणवायुः, तत्प्रभृतिनाभिपर्यन्तम् अवाङ्मुखः संचरन् अपानवायुः, तौ उभौ मदीये देहे चिरं तद् वर्तयेताम् । कदाचिदपि ताभ्यां वियोगः मा भूत् । प्रवर्ग्यस्य आदित्यात्मकत्वेन दुःसहेन तेजसा युक्तत्वात् एतत् प्रार्थनम् । [ —अ० ३६।१।१ ]

द्वितीयो मन्त्रः—

**यन्मे॑ छि॒द्रञ्चक्षु॑षो॒ हृद॑यस्य॒ मन॑सो॒ वाति॑तृण्णम्बृ॒हस्पति॑र्मे॒ तद्द॑धातु ।**
**शन्नो॑ भवतु॒ भुव॑नस्य॒ यस्पतिः॑ ॥ २ ॥**

यत् । मे । छिद्रम् । चक्षुषः । हृदयस्य । मनसः । वा । अति । तृण्णम् । बृहस्पतिः । मे ।
तत् । दधातु ॥
शम् । नः । भवतु । भुवनस्य । यः । पतिः ॥ २ ॥

मे मम चक्षुषः चक्षुरिन्द्रियस्य छिद्रं प्रवर्ग्यदर्शने वैकल्यं, हृदयस्य हृदयगतस्य आत्मनः यद् वैकल्यं, मनसः अन्तःकरणस्य वा अतितृण्णम्, 'उतृदिर् हिंसानादरयोः', नितरां हिंसितम्, तत्सर्वं मम चक्षुरादिगतं छिद्रं बृहस्पतिः देवः दधातु संदधातु पूरयतु। दोषोपशमं करोतु इत्यर्थः। अपि च यः भुवनस्य भूतजातस्य पतिः सः नः अस्माकं शं सुखं भवतु सुखं करोतु इत्यर्थः ।

[ —अ० ३६।१।२ ]

तृतीयो मन्त्रः—

भूर्भुवस्स्वः ।
तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥ ३ ॥

भूः । भुवः । स्वः ॥
तत् । सवितुः । वरेण्यम् । भर्गः । देवस्य । धीमहि ॥
धियः । यः । नः । प्र । चोदयात् ॥ ३ ॥

भूः भूलोकः। भुव इति अन्तरिक्षलोकः। स्वः स्वर्गलोकः। एतल्लोकत्रयाभिमानिनः अग्नि-वायुसूर्याख्या देवताः प्रवर्ग्यकर्तॄन् अस्मान् अनुगृह्णन्तु[1] इति शेषः। अपि च यः प्रसिद्धः सविता सः नः अस्माकं धियः बुद्धीः धर्मविषये प्रचोदयात् प्रेरयेत्। तस्य सवितुः देवस्य द्योतमानस्य वरेण्यं सर्वप्राणिभिः संवरणीयं तत् प्रसिद्धं भर्गः पापस्य भर्जकं तेजः धीमहि ध्यायामः ।

[—अ० ३६।१।३]

चतुर्थो मन्त्रः—

कया नश्चित्र आभुवदूती सदावृधस्सखा ।
कया शचिष्ठया वृता ॥ ४ ॥

कया । नः । चित्रः । आ । भुवत् । ऊती । सदावृधः । सखा ॥
कया । शचिष्ठया । वृता ॥ ४ ॥

चित्रः चायनीयः प्रजापतिः सखा अस्माभिः समानः सन् कया किंरूपया खलु ऊती ऊत्या रक्षया सदावृधः सदा सर्वदा वर्धनीयान् पोषणीयान् नः अस्मान् आभुवत् व्याप्नुयात्। तथा शचिष्ठया शचीति कर्मनाम, अतिशयेन कर्मानुकूलया, कीदृश्या वृता वर्तनक्रियया अस्मान् व्याप्नुयात्। तत्कर्तृकारकात् तदीयं वर्तनं तादृशीं वाचं न गोचरीभवतीति किं शब्देन काक्वा द्योत्यते ।

[—अ० ३६।१।४ ]

---

१. अनु भवन्तु उ० म्यु० ।

पञ्चमो मन्त्रः—

कस्त्वा॑ स॒त्यो मदा॑ना॒म्मꣳहि॑ष्ठो मत्स॒दन्ध॑सः ।
दृ॒ह्ला चि॑दा॒रुजे॒ वसु॑ ॥ ५ ॥

कः । त्वा । सत्यः । मदानाम् । मंहिष्ठः । मत्सत् । अन्धसः ॥
दृह्ळा । चित् । आ । रुजे । वसु ॥ ५ ॥

हे प्रजापते सत्यः सत्सु साधुः, मदानां मदनहेतूनां हविषां मंहिष्ठः दातृतमः को नाम यजमानः त्वा त्वाम् अन्धसः, अन्ननामैतत्, हविर्लक्षणस्य अन्नस्य भोगेन मत्सात् मादयेत् । किमर्थम्, दृह्ळा-चित् दृढ़ानि सुदृढ़तराण्यपि वसु वसूनि धनानि आरुजे आरोजनाय शिथिलीकरणाय ।
[—अ० ३६।१।५ ]

षष्ठो मन्त्रः—

अ॒भी षु ण॒स्सखी॑नामवि॒ता ज॑रितृ॒णाम् ।
श॒तम्भ॑वास्यू॒तिभिः॑ ॥ ६ ॥

अभि । सु । नः । सखीनाम् । अविता । जरितृणाम् ॥
शतम् । भवासि । ऊतिभिः ॥ ६ ॥

सखीनां तव सख्यं प्राप्तानां जरितृणां नः अस्माकम्, हे प्रजापते त्वम् अविता रक्षकः सन् सु सुष्ठु अभिमतो भव । सः त्वम् अस्माकम् ऊतिभिः त्वत्कृताभिः रक्षाभिः, शतं शतसंख्याकं धनं तदात्मको भवासि भवेः । यद्वा शतसंख्याकं धनम् अस्मान् प्रापय, 'भू प्राप्तौ' इति धातुः ।
[—अ० ३६।१।६ ]

सप्तमो मन्त्रः—

कया॒ त्वन्न॑ ऊ॒त्याभि प्र म॑न्दसे वृषन् ।
कया॑ स्तो॒तृभ्य॒ आ भ॑र ॥ ७ ॥

कया । त्वम् । नः । ऊत्या । अभि । प्र । मन्दसे । वृषन् ॥
कया । स्तोतृभ्यः । आ । भर ॥ ७ ॥

हे वृषन्, कामानां वर्षणशील, इन्द्र, त्वं कया कीदृश्या खलु ऊत्या कया नः अस्मान् अभि प्रमन्दसे अभितः प्रमोदयसि । अपि च कया खलु ऊत्या अन्येभ्यः अपि स्तोतृभ्यः आ भर धनम् आहरेः । सा एषा ऊतिः अस्माभिः वर्णयितुम् अशक्या, परं प्रार्थ्यते । [—अ० ३६।१।७ ]

अथाष्टमः—

इन्द्रो॒ विश्व॑स्य राजति ।
शन्नो॑ अस्तु द्वि॒पदे॒ शञ्चतु॑ष्पदे ॥ ८ ॥

पदच्छेदः स्पष्टः ॥ ८ ॥

यः असौ देवतानाम् अधिपतिः इन्द्रः असौ विश्वस्य जगतः स्थावरजङ्गमात्मकस्य लोकस्य राजति अधिपतिः भूत्वा दीप्यते । यद्वा राजतिः ऐश्वर्यकर्मा । सर्वस्य जगतः राजति ईष्टे ईश्वरः

भवति। तस्य प्रसादात् नः अस्माकं शं सुखम् अस्तु। चतुष्पदे चत्वारः पादाः अस्येति चतुष्पात्। अत्र जातौ एकवचनम्। चतुष्पाद्भ्यः अस्मदीयगवाश्वादिभ्यश्च शं सुखं शान्तिः अस्तु। यद्वा दुरितानां शान्तिरस्तु। अपि च द्वौ पादौ अस्य द्विपात्। जात्या पूर्ववत् एकवचनम्। द्विपाद्भ्यः पुत्रपौत्रादिमनुष्येभ्यः अस्मदीयगवाश्वादिभ्यश्च सुखं शान्तिरस्तु। प्रवर्ग्यातिशयिततेजोरूपत्वात् दुःसहेन तेजसा बाधं सम्भाव्य तच्छमनम् अत्र प्रार्थ्यते। [—अ० ३६।१।८]

नवमः—

**शन्नो मित्रश्शँव्वरुणश्शन्नो भवत्वर्यमा।**
**शन्न इन्द्रो बृहस्पतिश्शन्नो विष्णुरुरुक्रमः ॥ ९ ॥**

**शम्। नः। मित्रः। शम्। वरुणः। शम्। नः। भवतु। अर्यमा॥**
**शम्। नः। इन्द्रः। बृहस्पतिः। शम्। नः। विष्णुः। उरुक्रमः॥ ९॥**

मित्रः, मितेः मरणात् त्रायकः। द्वादशादित्यानाम् अन्यतमः मित्राख्यः देवः, नः अस्माकं शं सुखमस्तु सुखकरः भवतु। युगावसाने प्रलयबृद्धेन जलेन सर्वजगत् वृणोति आवृणोति इति वरुणाख्योऽपि आदित्यानाम् अन्यतमः देवः। यद्वा स्वकीयैः पाशैः पापिष्ठान् जनान् शिक्षयितुं वृणोति बध्नातीति वरुणशब्दव्युत्पत्तिः। वृणोतेः औणादिक 'उनन्' प्रत्ययः। स च अस्माकं शं सुखं भवतु करोतु। यद्वा वरुणः उदकस्य वरुणः शान्तिं करोतु। अस्मान् पाशैः न बध्नातु इत्यर्थः। अर्यमा अर्यः स्वामी सन् माति सर्वं परिच्छिनत्तीति, अरीन् शत्रून् यमयति निगृह्णातीति वा अर्यमा। सोऽपि नः अस्माकं शं सुखं भवतु शत्रून् विहस्य अस्य दुरितस्य उपशमनं वा करोतु। अपि च बृहस्पतिः बृहतां महतां महानुभावानां पतिः इन्द्रः नः अस्माकं शं भवतु सुखहेतुः भवतु। आधिपत्यलक्षणस्य ऐश्वर्यस्य अविद्यातीर्थं दुरितम् उपशमयतु। विष्णुरुरुक्रम इति उपरितनवाक्ये उपरि तनशब्दस्य विष्णुविशेषणत्वदर्शनात्, **'शन्नो मित्रश्शँव्वरुण'** इति पुरस्तात् शब्दप्रयोगभावेन वाक्यभेदप्रतीतेः बृहस्पतिशब्दविशेषणतया नेयः। अथवा **'रूढिर्योगमपहरति'** इति न्यायात् इन्द्रादीनां देवानां गुरुरेव रूढ्या शीघ्रम् अवबुध्यते। अतः तदनुसारेण वाक्यादौ तन्त्रेण श्रुतः शं शब्दः उभयत्र योजनीयः। अत एव आचार्येण वार्तिककारेण देवतायामभिधेयायां बृहस्पतिशब्दः व्युत्पादितः, **"तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च"** ( पा. सू. ६।१।१५७, वा. ३७१३ ) इति। युक्तं च तत्। मित्रादीनाम् उत्तरोत्तरं श्रेष्ठचदर्शनात्। इन्द्रादपि श्रेष्ठस्य बृहस्पतेः प्रार्थनं, ततोऽपि श्रेष्ठस्य विष्णोरिति। उरु विपुलं क्रामति वामनावतारे लोकत्रयं पद-त्रयेणैव आक्रामति स्म इति उरुक्रमः। अथवा गुरुभिः, गकारलोपः, गुरुभिः महानुभावैः योगिभिः क्रमणीयः प्राप्तव्यः। **'तद्विष्णोः परमं पदम्'** ( यजुः अ. ६।६ ) इत्यादिमन्त्रवर्णात् तादृशः विष्णुः व्याप्तः नारायणः उपेन्द्ररूपी वर्तमानः नः अस्माकं शं सुखं भवतु। आत्मीयस्य पदस्य प्रदानेन अस्मान् निरतिशयानन्दप्राप्तिद्वारा सुखयतु। यद्वा तादृशस्य आत्मभूतस्य विरोधाय कंसासुरम् उपशमयतु। [—अ० ३६।१।९]

दशमः—

**शन्नो वातः पवताꣳशन्नस्तपतु सूर्यः।**
**शन्नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु ॥ १० ॥**

शम् । नः । वातः । पवताम् । शम् । नः । तपतु । सूर्यः ॥
शम् । नः । कनिक्रदत् । देवः । पर्जन्यः । अभि । वर्षतु ॥ १० ॥

वातः वायुः नः अस्माकं शं सुखं शान्तिर्वा यथा भवति तथा पवतां वर्त्तताम् । पू गतौ इति भौवादिकः । तथा सूर्यः शोभनवीर्यः, "सुवीर्यो मर्या यथा गोपायत इति तत्सूर्यस्य सूर्यत्वम्" (तै. ब्रा० २।२।१०।४ ) इति श्रुतेः । यद्वा सुवति प्राणिजातं स्वस्वकार्ये प्रेरयतीति सूर्यः । "राजसूय—" ( पा. सू. अ. ३।१।११४ ) इत्यादिना सुवतेः कर्त्तरि क्यपि रुगागमे सति निपात्यते । सूर्यस्य सर्वप्रेरकत्वं प्राणात्मकत्वात् अत एव श्रूयते—"योऽसौ तपन्नुदेति भूतानां[1] प्राणदाय उदेतीति ।" स च सूर्यः नः अस्माकं शं सुखं शान्तिर्वा यथा भवति तथा भवतु । आकाशमार्गेण संचरतु । कनिक्रदत् अत्यर्थं शब्दायमानः देवः देवनशीलः पर्जन्यः नः अस्माकं शं सुखं दुरितोपशमनं यथा भवति तथा अभिवर्षतु अभिषिञ्चतु । [—अ० ३६।१।१०]

एकादशः—

**अहा॑नि॒ शम्भ॑वन्तु न॒श्शꣳरात्रिः॒ प्रति॑धीयताम् ॥ ११ ॥**

अहानि । शम् । भवन्तु । नः । शम् । रात्रिः । प्रति । धीयताम् ॥ ११ ॥

अहानि दिवसाः नः अस्माकं शं सुखं शान्तिः भवन्तु, तद्धेतवः भवन्तु । रात्रिश्च शं सुखं शान्तिर्वा तद्धेतुत्वेन प्रतिधीयतां स्थाप्यताम् । दिवसेषु बहुव्यापारदर्शनात् अहानीति बहुत्वेन उपादानम् । [—अ० ३६।१।११]

द्वादशः—

**शन्न॑ इन्द्रा॒ग्नी भ॑वता॒मवो॑भि॒श्शन्न॒ इन्द्रा॒वरु॑णा रा॒तह॑व्या ।**
**शन्न॑ इन्द्रापू॒षणा॒ वाज॑सातौ॒ शमिन्द्रा॒सोमा॑ सुवि॒ताय॒ शँय्योः ॥ १२ ॥**

शम् । नः । इन्द्राग्नी । भवताम् । अवोभिः । शम् । नः । इन्द्रावरुणा । रातहव्या ॥
शम् । नः । इन्द्रापूषणा । वाजसातौ । शम् । इन्द्रासोमा । सुविताय । शम् । योः ॥ १२ ॥

इन्द्रश्च अग्निश्च इन्द्राग्नी । तौ उभौ देवौ नः अस्माकम् अवोभिः रक्षणैः शं भवतां सुखकरौ भवताम् । तथा इन्द्रावरुणा, इन्द्रश्च वरुणश्च इन्द्रावरुणौ, "सुपां सुलुक्०—" (पा. सू. अ. ७।१।३९) इति विभक्तेः आकारः । रातहव्या, 'रा' दाने, रातं दत्तं हव्यं हविः ययोः तौ रातहव्यौ । पूर्ववत् आकारः । एवं भूतौ च देवौ नः अस्माकं शं भवताम् । अपि च इन्द्रापूषणा इन्द्रापूषणौ, "देवताद्वन्द्वे च" ( पा. सू. अ. ७।३।२१ ) इति पूर्वपदस्य आनङादेशः । वाजसातौ, वाजस्य अन्नस्य सनितारौ दातारौ । यद्वा वाजानां सातिः लाभो वा वाजसातिः । अन्नस्य लाभे निमित्तभूते नः अस्माकं शं सुखं शान्तिर्वा तद्धेतू भवताम् । तथा इन्द्रासोमा, इन्द्रश्च सोमश्च उभौ सुविताय सुष्ठु प्राप्तव्याय शं सुखहेतू भवताम् । तथा प्राप्तानां दुःखानां शं शमनाय, अप्राप्तानां रोगादीनां योः पृथक्करणाय च सुखं भवताम् । "शमनं च रोगाणां यावनं च भयानाम्" ( निरु. अ. ४।४८ ) इति शंयोरिति पदं यास्केन व्याख्यातम् । [—अ० ३६।१।१२]

---

१. स सर्वेषाम् इति उ. म्यु. ।

**शन्नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑ ।**
**शँय्योर॒भिस्र॑वन्तु नः ॥ १३ ॥**

**शम् । नः । देवीः । अभिष्टये । आपः । भवन्तु । पीतये ॥**
**शम् । योः । अभि । स्रवन्तु । नः ॥ १३ ॥**

देवीः देव्यः देवनशीला आपः नः अस्माकं पीतये पानाय अभिष्टये अभ्येषणाय इष्टार्थाभिगमनाय च शं सुखं यथा भवति तथा भवन्तु । अपि च नः अस्माकं शंयोः रोगाणां शमनाय भयानां पृथक्करणाय च अभिस्रवन्तु अभितः प्रवहन्तु । [—अ० ३६।१।१३]

**स्यो॒ना पृ॑थिवि नो भवानृक्ष॒रा नि॒वेश॑नी ।**
**यच्छा॑ न॒श्शर्म॑ स॒प्रथा॑ः ॥ १४ ॥**

**स्योना । पृथिवि । नः । भव । अनृक्षरा । निवेशनी ॥**
**यच्छ । नः । शर्म । सप्रथाः ॥ १४ ॥**

हे पृथिवि, त्वं नः अस्माकं स्योना, स्योनमिति सुखनाम । सुखकरी, अनृक्षरा, "ऋक्षरः कण्टक ऋच्छते" ( निरु. अ. ९।३२ ) इति यास्कः । कण्टकादिरहिता । अत एव निवेशनी, निवेशनस्य विषयस्य प्रधानभूता भव । अपि च सप्रथाः सर्वतः विस्तीर्णा त्वं नः अस्माकं शर्म शरणं गृहं सुखं वा यच्छ देहि । [—अ० ३६।१।१४]

**आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन ।**
**म॒हे रणा॑य॒ चक्ष॑से ॥ १५ ॥**

**आपः । हि । स्थ । मयोभुवः । ताः । नः । ऊर्जे । दधातन ॥**
**महे । रणाय । चक्षसे ॥ १५ ॥**

हे आपः यूयं मयोभुवः, मयसः सुखस्य भावयित्र्यः स्थ भवथ । हि यस्मात् एवं तस्मात् ताः तथाविधा यूयं नः अस्मान् ऊर्जे प्राणप्रदाय युष्मदीयाय रसाय तत्प्राप्तये दधातन धारयत । "तप्तनप्तनथनाश्च" ( पा. सू. अ. ७।१।४५ ) इति तनबादेशः । अपि च महे महते रणाय रमणीयाय प्रशस्याय कर्मफलाय चक्षसे दर्शनाय चिरजीवनाय च अस्मान् धारयत । [—अ० ३६।१।१५]

**यो व॑श्शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह नः ।**
**उ॒श॒तीरि॑व मा॒तरः॑ ॥ १६ ॥**

**यः । वः । शिवतमः । रसः । तस्य । भाजयत । इह । नः ॥**
**उशतीः । इव । मातरः ॥ १६ ॥**

हे आपः, वः युष्माकं यः रसः शिवतमः अतिशयेन सुखप्रदः तस्य रसस्य "क्रियाग्रहणं कर्तव्यम्" इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । तं रसं नः अस्मान् इह अस्मिन् यज्ञे भाजयत प्रापयत । तत्र दृष्टान्तः—उशत्यः कामयमानाः पुत्रेषु स्नेहं कुर्वाणाः मातर इव । ताः यथा शिशुं स्तन्यं पाययन्ति एवमेव युष्माकं स्तन्यभूतं रसम् अस्मान् पाययन्तु इति भावः । [—अ० ३६।१।१६]

**तस्मा अरंङ्गमाम वो यस्य क्षयाय जिन्वथ ।**
**आपो जनयथा च नः ॥ १७ ॥**

**तस्मै । अरम् । गमाम । वः । यस्य । क्षयाय । जिन्वथ ॥**
**आपः । जनयथ । च । नः ॥ १७ ॥**

हे आपः, यूयं वः युष्माकम् अवस्थितस्य यस्य रसस्य क्षयाय निवासाय जिन्वथ प्रीणत तस्मै रसाय वयम् अरम् अलं पर्याप्तं गमाम गच्छाम, तं रसं प्राप्तवन्तः । अपि च नः अस्मान् जनयथ स्नानपानादिसंस्कारेण पुनर्जातान् पापरहितान् कुरुत । [—अ० ३६।१।१७]

**द्यौश्शान्तिरन्तरिक्षꣳशान्तिः पृथिवी शान्तिरापश्शान्तिरोषधयश्शान्तिः ।**
**वनस्पतयश्शान्तिश्शान्तिरेव शान्तिः ॥ १८ ॥**

**पदच्छेदः स्पष्टः ॥ १८ ॥**

द्यौः अस्माकं शान्तिः शान्तिरूपा भवतु । द्युलोकवासिजनानां यद् दुरितं सम्भाव्यते तद् द्यौरेव शान्ति करोतु इति भावः । तथा अन्तरिक्षम् अन्तरिक्षलोकः सोऽपि शान्तिः शान्तिरूपः भवतु । पृथिवी भूलोकश्च अस्मद् दुरितशान्तिकरा भवतु । आपश्च शान्तिः शान्तिरूपाः भवन्तु । ओषधयः पाकदशासु हीयन्त इति ओषधयः व्रीहियवादयः, ताश्च शान्तिः शान्तिरूपाः भवन्तु । वनस्पतयः बने जायन्ते ये इक्षुचूतपनसामलकाद्याः वनस्पतयश्च अस्माकं शान्तिः शान्तिरूपाः[1] भवन्तु । या च शान्तिः शान्तिस्वरूपिणी देवता साऽपि शान्तिः सदा शान्तिकरी भवतु । [—अ० ३६।१।१८]

**[2]धृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ।**
**मित्रस्याहञ्चक्षुषा सर्वाणि भूतानि समीक्षे ॥ १९ ॥**

**धृते । दृंह । मा । मित्रस्य । मा । चक्षुषा । सर्वाणि । भूतानि । सम् । ईक्षन्ताम् ।**
**मित्रस्य । अहम् । चक्षुषा । सर्वाणि । भूतानि । सम् । ईक्षे ॥ १९ ॥**

हे मित्र धृते धारिते जीवविशिष्टे एव देहे वर्तमाने सति मां दृंह दृढीकुरु । हीनं शरीरं पुनरपि व्यवहारसमर्थं दृढं कुरु । यद्वा, हे धृते मद्देहावस्थितधैर्ये दृढं कुरु । अपि च सर्वाणि भूतानि भूतजातानि मनुष्यगवादीनि मित्रस्य सर्वेषाम् अनुग्रहशीलस्य तदाख्यस्य देवस्य चक्षुषा दृष्ट्या मां समीक्षन्तां संपश्यन्तु । अहं च तस्य मित्रस्यैव चक्षुषा तानि सर्वाणि भूतानि समीक्षे पश्यामि । न केवलम् अहमेव द्रक्ष्ये, ये अस्मदीयाः सन्ति ते सर्वे वयं मित्रस्यैव देवस्य ( चक्षुषा ) सर्वाणि भूतानि समीक्षामहे पश्यामः । एवम् अन्योन्यं मैत्रदृष्ट्या दर्शनप्रतिपादनेन चिकीर्षितस्य कर्मणः पर (फल) प्राप्तिः निर्विघ्ना सिद्धा भवति । [—अ० ३६।१।१९]

**[3]धृते दृꣳह मा ।**
**ज्योक्ते सन्दृशि जीव्यासञ्ज्योक्ते सन्दृशि जीव्यासम् ॥ २० ॥**

---

१. कराः उ. म्यु. । २. हते इति मुद्रितपुस्तके ।

३. हते इति मुद्रितपुस्तके ।

घृते । दृंह । मा ॥
ज्योक् । ते । सन्दृशि । जीव्यासम् । ज्योक् । ते । सन्दृशि । जीव्यासम् ॥ २० ॥

घृते दृंह इति पूर्ववत् । हे मित्र ते तव सन्दृशि । सन्दर्शने अस्मिन् जीवलोके ज्योक् चिरकालं जीव्यासं संजीवेयम् । पुनरुक्तिः आदरार्था । अभ्यासो हि भूयस्त्वसमर्थस्य भवति । यथा अहो दर्शनीया अहो दर्शनीया इति । [—अ० ३६।१।२०]

**नम॑स्ते हर॑से शोचिषे नम॑स्ते अस्त्वर्चिषे॑ ।**
**अन्याँस्ते॑ अस्मत्त॑पन्तु हेतय॑ः पाव॒को अ॒स्मभ्य॑ꣳशिवो भ॑व ॥ २१ ॥**

नमः । ते । हरसे । शोचिषे । नमः । ते । अस्तु । अर्चिषे ।
अन्यान् । ते । अस्मत् । तपन्तु । हेतयः । पावकः । अस्मभ्यम् । शिवः । भव ॥ २१ ॥

हे अग्ने ते तव हरसे हरणशीलाय तिमिरनिकरनिराकरणक्षमाय शोचिषे तेजसे नमः अस्तु । तथा अर्चिषे अर्चनीयाय शान्ताय तेजसे नमः अस्तु । ते तव हेतयः हिंसाहेतवः ज्वालाः अस्मत्तः अन्यान् द्वेष्यान् तपन्तु हिंसन्तु । अस्मभ्यं अस्मदर्थं त्वं पावकः शोधकः सन् शिवः सुखकरः भव । [—अ० ३६।१।२१]

**नम॑स्ते अस्तु वि॒द्युते॒ नम॑स्ते स्तनयि॒त्नवे॑ ।**
**नम॑स्ते भगवन्नस्तु यत॒स्स्व॑स्स॒मीह॑से ॥ २२ ॥**

नमः । ते । अस्तु । विद्युते । नमः । ते । स्तनयित्नवे ॥
नमः । ते । भगवन् । अस्तु । यतः । स्वः । सम् । ईहसे ॥ २२ ॥

हे अग्ने ते तव संवन्धिन्यै विद्युते विद्योतमानायै तडिते त्वदीयाय वैद्युततेजसे नमः अस्तु । तथा स्तनयित्नवे स्तनितस्य गर्जितस्य कर्त्रे तव संवन्धिने मेघाय नमः अस्तु । प्रवर्ग्यानुष्ठानसमये विद्युदादिदर्शने प्रायश्चित्तं वक्ष्यते । अतः तयोः अप्रादुर्भावाय प्रार्थनम् । हे भगवन् समग्रैश्वर्यादिषड्गुणयुक्त, स्मर्यते हि—

"ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरितः ॥"

( विष्णुपुराणे ६ अंशे ५ अध्यायः ) इति । स्वः इति आदित्यनाम । तथा च निरुक्तम्, "स्वरित्यादित्यो भवति सु अरणः, सु ईरणः" ( अ. २ । खं. १४।१ ) इति । हे भगवन् आदित्य यतः यस्मिन् स्थाने समीहसे चेष्टसे, 'ईह चेष्टायाम्', तत्र स्थापयेः तुभ्यं नमोऽस्तु । अयं नमस्कृतो भवतु । [—अ० ३६।१।२२]

**यतो॑ यत॒स्स॒मीह॑से॒ ततो॑ नो॒ अभ॑यङ्कुरु ।**
**शन्न॑ः कुरु प्र॒जाभ्योऽभ॑यन्नः प॒शुभ्य॑ः ॥ २३ ॥**

यतः । यतः । सम् । ईहसे । ततः । नः । अभयम् । कुरु ॥
शम् । नः । कुरु । प्रजाभ्यः । अभयम् । नः । पशुभ्यः ॥ २३ ॥

अपि च हे सूर्य त्वं यतः यतः यस्मात् यस्मात् स्थानात् समीहसे संचेष्टसे ततः तस्मात् सर्व-

स्मात् स्थानात् नः अस्माकम् अभयं भयरहितत्वं कुरु निर्वर्तय। किं च नः अस्माकं प्रजाभ्यः पुत्र-पौत्रादिभ्यः शं सुखं कुरु। पशुभ्यः अरण्ये संचरद्भ्यः अभयं व्याघ्रादेः भयराहित्यं कुरु।

[—अ० ३६।१।२३]

**सुमित्रिया न आप ओषधयस्सन्तु दुर्मित्रियास्तस्मै सन्तु।**
**योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः॥ २४॥**

सुमित्रियाः। नः। आपः। ओषधयः। सन्तु। दुर्मित्रियाः। तस्मै। सन्तु॥
यः। अस्मान्। द्वेष्टि। यम्। च। वयम्। द्विष्मः॥ २४॥

नः अस्माकम् आपः ओषधयश्च सुमित्रियाः शोभनमैत्रीयुक्ताः सन्तु। यः खलु शत्रुः अस्मान् द्वेष्टि विरुणद्धि यं च शत्रुं वयं द्विष्मः तस्मै शत्रवे दुर्मित्रियाः दुर्मैत्रीयुक्ताः सन्तु दुष्कारिणः भवन्तु इत्यर्थः।

[—अ० ३६।१।२४]

**तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत्।**
**पश्येम शरदश्शतञ्जीवेम शरदश्शतश्शृणुयाम शरदश्शतम्॥ २५॥**

तत्। चक्षुः। देवहितम्। पुरस्तात्। शुक्रम्। उत्। चरत्॥
पश्येम। शरदः। शतम्। जीवेम। शरदः। शतम्। शृणुयाम। शरदः। शतम्॥२५॥

देवहितं पुरस्तात् प्राच्यां दिशि देवेन द्योतनशीलेन स्वप्रकाशेन परं ब्रह्म स्थापितं शुक्रं शुद्धं पापलेशरहितं कीदृशं तंत् सूर्यमण्डलम् उच्चरत् उच्चं दृश्यते तदेव अस्माकं चक्षुरिन्द्रियस्थानीयम्, तेन नित्येन चक्षुषा शरदः शतम् अस्माकम् आयुष्ट्वेन परिकल्पितान् शतं संवत्सरान् पश्येम अवलोकयाम। तथा तावतः शतसंवत्सरान् जीवेम। अत्यन्तसंयोगे द्वितीया। तावत्कालपर्यन्तं जीवनवन्तः भवेम। तदपि जीवनं वाधिर्यादिदोषरहितमेव प्रार्थ्यते शृणुयाम इति। शतसंवत्सरपर्यन्तं शृणुयाम श्रोत्रेन्द्रियेण शब्दग्रहणसमर्था भवेम। एवम् अन्येषामपि इन्द्रियव्यापाराणाम् उपलक्षणम्। तदिन्द्रियपाटवत्वेन तत्तद्व्यापारयुक्ता एव, न पुनः कुडचकाष्ठादिवत् इन्द्रियपाटवरहिता इति।

[—अ० ३६।१।२५]

षट्त्रिंशेऽध्याये प्रथमोऽनुवाकः।

**वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।**
**पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः॥**

**इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्तक-वीरबुक्कणभूपालसाम्राज्य-धुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये षट्त्रिंशोऽध्यायः।**

# अथ सप्तत्रिंशोऽध्यायः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

[ प्रथमोऽनुवाकः १—१० ]

प्रवर्ग्यस्य आद्यन्तयोः शान्तिकरणार्थः अध्यायः गतः । अथ सप्तत्रिंशे प्रवर्ग्यस्य संभरणादिमन्त्रा उच्यन्ते । मृद्वल्मीकवराहविहतपूतिकाजापयोगवेधुकाकृष्णाजिनमित्येवमाद्याः प्रवर्ग्यसंभाराः, तान् सम्भारान् आह । औदुम्बरीं वैकङ्कतीं वा प्रादेशमात्रमात्रीम् अभ्रिं "देवस्य त्वा" इत्यनेन आदत्ते । तथा च सूत्रकारः, "दीक्षासु महावीरान्त्सम्भरति" इति उपक्रम्यासूत्रयत्, "देवस्य त्वेत्याभ्रिमादायौदुम्बरीं वैकङ्कतीम् ( कात्यायनश्रौतसूत्रम्, अ. २६।१।३ ) इति । तत् पाठस्तु—

**दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्या॑म्पू॒ष्णो हस्ता॑भ्याम् ।**
**आद॑दे॒ नारि॑रसि ॥ १ ॥**

**देवस्य । त्वा । सवितुः । प्रसवे । अश्विनोः । बाहुभ्याम् । पूष्णः । हस्ताभ्याम् ॥**
**आ । ददे । नारिः । असि ।**

हस्ताभ्याम् इत्यन्तः व्याख्यातः ( अ. २१।६८ ) । हे अभ्रे त्वाम् आददे सम्भारान् आहर्तुं गृह्णामि । सा त्वं नारिः नरस्य सर्वस्य नेतुः ईश्वरस्य सम्बन्धिनी असि । यद् वा 'नृ नय' इत्यस्माद् धातोः औणादिकः 'इस्' प्रत्ययः । सर्वस्य नेता भवसि । "अभ्र्या वज्रो वा अभ्रिः" ( श. ब्रा. का. १४ । अ. १ । ब्रा. २ । कं. ३ ) इति उपक्रम्य, "तामादत्ते । देवस्य त्वा" ( श. ब्रा. का. १४ । अ. १ । ब्रा. २ । कं. ७ ) इत्यादिकमत्र ब्राह्मणमनुसन्धेयम् । [ —अ० ३७।१।१ ]

कात्यायनः—"सव्ये कृत्वा दक्षिणेनालभ्य युञ्जत इति जपतीति" ( अ. २६ । १ । ३ ) ।

पाठस्तु—

**यु॒ञ्जते॒ मन॑ उ॒त यु॑ञ्जते॒ धियो॒ विप्रा॒ विप्र॑स्य बृह॒तो वि॑प॒श्चितः॑ ।**
**वि होत्रा॑ दधे वयुना॒विदेक॒ इन्म॒ही दे॒वस्य॑ सवि॒तुः परि॑ष्टुतिः ॥ २ ॥**

**युञ्जते । मनः । उत । युञ्जते । धियः । विप्राः । विप्रस्य । बृहतः । विपश्चितः ॥**
**वि । होत्राः । दधे । वयुनावित् । एकः । इत् । मही । देवस्य । सवितुः । परिष्टुतिः ॥२॥**

विप्राः मेधाविनः ऋत्विजः, विप्रस्य मेधाविनः, बृहतः महानुभावस्य, विपश्चितः सर्वम् अर्थजातं विदुषः, सवितुः देवस्य स्तुत्यर्थम् आत्मीयं मनः अन्तःकरणयुक्तं युञ्जते यावज्जीवं कुर्वन्ति । उत धियः बुद्धीः अन्तःकरणवृत्तीः अपि युञ्जते स्मृतिविषयाः कुर्वन्ति । स च वयुनावित्, वयुनेति

ज्ञाननाम। ज्ञातव्यस्य सर्वस्य सर्वस्यार्थस्य वेत्ता, एक इत् असहाय एव, होत्राः होतृमैत्रावरुणादि-सप्तानां वषट्कर्तॄणां क्रियाः विदधे करोति। अतः तस्य देवस्य सवितुः परिष्टुतिः परिदृश्यमाना स्तुतिः मही महती, सा मया वर्णयितुमशक्या इति शेषः। [ —अ० ३७।१।२ ]

कात्यायनः—"मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी इति" ( अ. २६।१।४ )। तत्पाठस्तु—

**देवी॑ द्यावापृथिवी म॒खस्य॑ वाम॒द्य शिरो॑ राध्यासन्देव॒यज॑ने पृथि॒व्याः।**
**म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे॑॥ ३॥**

**देवी। द्यावापृथिवी। मखस्य। वाम्। अद्य। शिरः। राध्यासम्। देवयजने। पृथिव्याः॥**
**मखाय। त्वा। मखस्य। त्वा। शीर्ष्णे॥ ३॥**

देवी देव्यौ, द्यावापृथिवी द्यावापृथिव्यौ, अद्य अस्मिन् काले वां युवयोः वर्तमानं मखस्य यज्ञस्य शिरः प्रवर्ग्याख्यम् उत्त[1]माङ्गं राध्यासं प्राप्नुयाम्। तदर्थं च पृथिव्याः सम्बन्धिनि देवयजने, देवा इज्यन्ते अस्मिन् इति देवयजनम्, देवयजनाख्ये देशे यज्ञभूमौ, हे मृत्पिण्ड त्वां मखाय मखं प्रारिप्सितव्यं यज्ञं निर्वर्तयितुं त्वां परिगृह्णामि। तत्सिद्धयर्थं मखस्य यज्ञस्य शीर्ष्णे शिरसे प्रवर्ग्याय प्रावृञ्जनसाधनमहावीरनिर्माणाय त्वाम् आददे। एवं मृदम् आहृत्य उत्तरतः कृष्णाजिने निवपति। [ —अ० ३७।१।३ ]

कात्यायनः—"देव्यो वम्रियो इति वल्मीकवपामिति" ( अ. २६।१।५-६ )। आदत्ते इत्यनुषङ्गः। तत्पाठस्तु—

**दे॒व्यो॑ वम्रियो भू॒तस्य॑ प्रथम॒जा म॒खस्य॑ वो॒ऽद्य शिरो॑ राध्यासन्देव॒यज॑ने पृथि॒व्याः।**
**म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे॑॥ ४॥**

**देव्यः। वम्रियः। भूतस्य। प्रथमजाः। मखस्य। वः। अद्य। शिरः। राध्यासम्। देवयजने। पृथिव्याः॥**
**मखाय। त्वा। मखस्य। त्वा शीर्ष्णे॥ ४॥**

वम्रियः वमनशीलाः ऊतीकाः वल्मीककारिण्यः, हे देव्यः द्योतनशीला वम्रियः यूयं भूतस्य भुवनजातस्य सर्वप्राणिजातस्य प्रथमजाः पूर्वमेव ब्रह्मणः सकाशात् उत्पन्नाः तत् तथाविधानां वः युष्माकं कार्यभूतया युष्माकं निर्वर्त्तितया वल्मीकमृत्तिकया अद्य अस्मिन् काले मखस्य यज्ञस्य शिरः राध्यासं राधये। पृथिव्याः सम्बन्धिनि देवयजनदेशे, मखाय त्वा इत्यादि पूर्ववत्। कृष्णाजिने निदध्यात्। [ —अ० ३७।१।४ ]

कात्यायनः—"इयत्यग्र इति वराहविहतमिति" ( अ. २६।१।७ )। इयत्यग्र इति मन्त्रेण वराहान् कृष्णान् पशून् आहृत्य (?) कृष्णाजिने निदध्यात्। तत्पाठस्तु—

**इ॒यत्य॑ग्र॑ आसीर्म॒खस्य॑ ते॒ऽद्य शिरो॑ राध्यासन्देव॒यज॑ने पृथि॒व्याः।**
**म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे॑॥ ५॥**

---

१. उत्तमांशम्, उ. म्यु,

**इयती । अग्रे । आसीः । मखस्य । ते । अद्य । शिरः । राध्यासम् । देवयजने । पृथिव्याः ॥ शिष्टं स्पष्टम् ॥ ५ ॥**

हे पृथिवि ! त्वम् अग्रे श्रीवराहेण प्रलयान्तर्गतायाः भूमेः उद्धरणसमये इयती, प्रादेशमात्रस्य अभिनयपरा एषा क्रिया । वराहदंष्ट्रालग्ना सती प्रादेशमात्रपरिमितैव आसीः । "**इयती ह वा इयमग्रे पृथिव्यास प्रादेशमात्री तामेमूष इति वराह उज्जघान । सोऽस्याः पतिः**" ( श. ब्रा., का. १४ । अ. १ । ब्रा. २ । कं, ११ ) इत्यादि ब्राह्मणमनुसन्धेयम् । हे तथाभूते पृथिवि ! ते तव सम्बन्धिना वराहविहतेन अद्य अस्मिन् काले मखस्य यज्ञस्य शिरः राध्यासं संसाधयेयम् । पृथिव्याः सम्बन्धिनि देवयजने वेदिलक्षणस्थाने हे वराहविहत मखाय यज्ञार्थं त्वाम् आहरामि । मखस्य यज्ञस्य शीर्ष्णं प्रवर्ग्याय त्वाम् आहरामि । [ —अ० ३७।१।५ ]

कात्यायनः—**इन्द्रस्यौजः स्थेति पूतीकान्**" ( अ. २६।१।८ ) इति ।

**इन्द्रस्यौज॑स्स्थ म॒खस्य॑ वो॒ऽद्य शिरो॑ राध्यासन्दे॒वयज॑ने पृथि॒व्याः ।
म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे ।**

**इन्द्रस्य । ओजः । स्थ । मखस्य । वः । अद्य । शिरः । राध्यासम् । देवयजने । पृथिव्याः ॥ शिष्टं स्पष्टम् ।**

पूतीकाः सोमप्रतिनिधिभूता लताविशेषाः । यदा खलु निष्क्रान्तं यज्ञं विष्ण्वात्मकम् इन्द्रः बलेन पर्यवेष्टयत् तदानीं पर्यवेष्टयितस्य यज्ञस्य रसस्रावः अभूत् । तथा[1] प्रबलं प्राप्तः इहावस्थानात् पूतीकाख्यः अभवत् । तथा च ब्राह्मणम्—"**इन्द्रस्यौजस्थेति यत्र वा एनमिन्द्र ओजसा पर्यगृह्णात्तदस्य परिगृहीतस्य रसोव्यक्षरत्**" ( श. ब्रा. का. १४ । अ. १ । ब्रा. २ । कं. १२ ) इत्यादि । हे तथाविधाः पूतीकाः यूयम् इन्द्रस्य परमैश्वर्ययुक्तस्य देवानाम् अधिपतेः ओजः बलमेव स्थ । अत एव यज्ञस्य निमित्तेन स्रुतस्य रसस्य यतः यूयं परिणामभूताः अतः यूयम् इन्द्रस्य ओज एव भवथ । यस्मात् एवं तस्मात् वः युस्माकं सम्बन्धिनि पूतीकासम्भरणे अद्य अस्मिन् काले मखस्य शिरः राध्यासम् । अन्यत् पूर्ववत् योज्यम् ।

कात्यायनः—"**मखाय त्वेति पय**" इति (अ. २६।१।९) । मखाय त्वेति मन्त्रेण अजापयः सम्भरति । तत्पाठस्तु—

**म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे ।**

**पदच्छेदः स्पष्टः ।**

हे पयः त्वां मखाय यज्ञाय सम्भरामि । गतमन्यत् ।

कात्यायनः—"**सम्भृतानभिमृशति मखायेति** (२६।१।११) । मृद्वल्मीकवराहविहतादीन् आहृतान् सम्भारान् मखायेति मन्त्रेण अभिमृशतीति । तत्पाठस्तु—

**म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे । ६ ।**

**पदच्छेदः स्पष्टः । ६ ।**

---

**१. तथेन्द्रबलम् इति भवितुमर्हति ।**

हे सम्भारसमूह त्वां मखार्थम् अभिमृशामि। अन्यत् पूर्ववत्। [ —अ० ३७।१।६ ]
कात्यायनः—"कृष्णाजिनं परिगृह्योत्तरतः परिवृतं गच्छन्ति प्रैतु ब्रह्मणस्पतिरिति ( अ. २६। १।१२ )। मृद्वल्मीकवपादिसम्भारान् कृष्णाजिने निधाय तत्—परितः धृत्वा देवयजनस्य उत्तरदेशं कटादिभिः परिवेष्टितम् अध्वर्यु ब्रह्मादयः सर्वे प्रवर्ग्यकर्तारः गच्छेयुः प्रैतु ब्रह्मणस्पतिरिति मन्त्रेण। तत्पाठस्तु—

**प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता। अच्छा वीरन्नर्यम्पङ्क्तिराधसन्देवा यज्ञन्नयन्तु नः।**
**मखाय त्वा मखस्य त्वा शीर्ष्णे।**
**मखाय त्वा मखस्य त्वा शीर्ष्णे।**
**मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ७ ॥**

प्र। एतु। ब्रह्मणस्पतिः। प्र। देवी। एतु। सुनृता। अच्छ। वीरम्। नर्यम्। पङ्क्तिराधसम्। देवाः। यज्ञम्। नयन्तु। नः॥
शिष्टं स्पष्टम् ॥ ७ ॥

ब्रह्मणः वेदात्मकस्य शब्दब्रह्मणः पतिः एतदाख्यः देवः प्रैतु गच्छतु। देवी देवनशीला सूनृता प्रियसत्यात्मिका सरस्वती[1] प्रैतु गच्छतु। ब्रह्मणस्पत्यादिरूपेण प्रवर्ग्यसम्भारजातम् उपलक्ष्यते। अतश्चायमर्थः, सम्भाराभिमानितया वर्तमानः ब्रह्मणस्पतिः सूनृता देवी च परिवृतं देशं गच्छतु। अपि च सर्वे देवाः[2] वीर्यवन्तं नर्यं नरेभ्यः हितकारिणं पंक्तिराधसं पंक्तिशः पञ्चसंख्यया धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्या इति पञ्चहविर्भिः साध्यम्, एवं भूतं यज्ञम् अच्छ अभिलक्ष्य नः अस्मान् नयन्तु प्रापयन्तु। पुरा खलु यज्ञः विष्णुरूपम् आस्थाय अतिवीर्ययुक्तः घर्मीभूत्वा निश्चक्राम। तत्प्राप्तिप्रार्थनेयम्। कात्यायनः—"**परिवृते निदधाति सम्भारानुद्धतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखायेति**" ( अ० २६।१।१३-१४ ) उद्धरणादिसंस्कारपरिश्रिते देवयजनोत्तरदेशे मखाय त्वेति मन्त्रेण सम्भारं कृष्णाजिनं निदधाति। तथा च ब्राह्मणम्—"**अथ खरे सादयति मखाय त्वा मखस्य त्वा शीर्ष्णे**" इति ( श० का० १४। अ० १। ब्रा० २। कं० १७)। पूर्ववत् मन्त्रवाक्ययोजना। कात्यायनः—"**सम्भारैः सꣳसृजति मखाय त्वेति**" (अ० २६। १।१५ ) मृद्वल्मीकवपादिसम्भारैः संस्कृतान् करोति। तथा च ब्राह्मणम्—"**अथ प्रयौति मखाय त्वा मखस्य त्वा शीर्ष्णे**" ( श० का० १४। अ० १। ब्रा० २। कं० १७ ) इति। हे सम्भारसमूह त्वां मखाय यज्ञार्थं संसृजामि। गतमन्यत्। कात्यायनः—"**मृदमादाय मखायेति महावीरं करोति**"। ( अ० २६।१।१६ ) इति। श्लक्ष्णीकृत्य पिण्डीकृतां मृदमादाय मखायेति मन्त्रेण प्रादेशमात्रमुपरि विनियुक्तं मध्ये सर्वमेवमासेचनगुणविशिष्टं महावीराख्यं पात्रं कुर्यात्। ब्राह्मणम्—"**अथ मृत्पिण्डमुपादाय महावीरं करोति मखाय त्वा मखस्य त्वा शीर्ष्णेति त्रिः**" ( श० का० १४। अ० १। ब्रा० २। कं० १७ )। मन्त्रार्थस्तु हे मृत्पिण्ड त्वां मखाय यज्ञार्थं महावीरात्मना करोमि। गत-

१. ब० उ० म्यु०। २. वीरमित्यादि।

मन्यत् । अत्र मखायत्वेति त्रिः त्रिवारम् आम्नातानां मन्त्राणां ब्राह्मणसूत्राभ्यां विनियोगभेदप्रदर्शन-पुरःसरम् अर्थः कल्पितः । अनेन प्रकारेण त्रीन् महावीरान् कुर्यात् । [ —अ० ३७।१।७ ]

तान् त्रीन् "मखस्य शिरः" इति मन्त्रेण क्रमेण अभिमृशेत् । अभिमर्शणीयस्य त्रित्वात् मन्त्रोऽपि त्रिः आम्नातः । तथा च सूत्रितम्— 'अभिमृशति मखस्य शिर इत्यादानमेक एवमितरौ प्रतिमन्त्रमिति" ( का० अ० २६।१।१७-१६ ) । तत्पाठस्तु—

मखस्य शिरोऽसि ।

पदच्छेदः स्पष्टः ।

हे महावीर त्वं मखस्य यज्ञस्य शिरोऽसि । त्वां मखाय यज्ञाय अभिमृशामि । मखस्य यज्ञस्य शीर्ष्णे शिरसे प्रवर्ग्याय त्वाम् अभिमृशामि । एवं द्वितीयतृतीययोरपि योज्यम् । कात्यायनः— "गवेधुकाभिः श्लक्ष्णयति मखाय त्वेति प्रतिमन्त्रमिति" ( अ० २६।१।२२ ) । गवेधुकाः श्लक्ष्णी-करणसाधनविशेषाः । तत्पाठस्तु—

मखाय त्वा मखस्य त्वा शीर्ष्णे ।
मखस्य शिरोऽसि ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ।
मखस्य शिरोऽसि ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ८ ॥

पदच्छेदः स्पष्टः । ८ ।

महावीरत्रयापेक्षया मन्त्रस्य त्रिरावृत्तिः । हे प्रथममहावीर त्वां मखाय यज्ञार्थं श्लक्ष्णी-करोमि । एतावानेव विशेषः । अन्यत् पूर्ववत् योज्यम् । [ —अ० ३७।१।८ ]

कात्यायनः—"अश्वशकृता धूपयत्यश्वस्येति प्रतिमन्त्रमिति" ( अ० २६।१।२३ ) । अश्व-स्येति मन्त्रः त्रिः आम्नातः । तैः त्रीन् महावीरान् क्रमेण धूपयेत् । तत्पाठस्तु—

अश्वस्य त्वा वृष्णश्शक्ना धूपयामि देवयजने पृथिव्याः ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ।
अश्वस्य त्वा वृष्णश्शक्ना धूपयामि देवयजने पृथिव्याः ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ।
अश्वस्य त्वा वृष्णश्शक्ना धूपयामि देवयजने पृथिव्याः ।

मखायं त्वा मखस्यं त्वा शीर्ष्णे ।
मखायं त्वा मखस्यं त्वा शीर्ष्णे । मखायं त्वा मखस्यं त्वा शीर्ष्णे । मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ ९ ॥

पदच्छेदः स्पष्टः । ९ ।

हे महावीर वृष्णः सेचनसमर्थस्य प्रजापतिपरिणामरूपस्य तुरगस्य शक्ना शकृता त्वा त्वां धूपयामि, धूपनं सन्तापनं करोमि । "पद्दन्" ( पा० सू० अ० ६।१।६३ ) इत्यादिना शकृच्छब्दस्य शकन्नादेशः । कुत्र स्थाने धूपनमिति तदुच्यते । पृथिव्याः सम्बन्धिनि देवयजनदेशे हे महावीर मखाय यज्ञार्थं त्वाम् अश्वशकृता धूपयामि । गतमन्यत् । एवम् एतौ द्वितीयतृतीयावपि मन्त्रौ व्याख्येयौ । कात्यायनः—"उखावदग्निः प्रदहनं च मखायेति प्रतिमन्त्रम्" ( अ० २६।१।२४ ) इति । येन प्रकारेण अग्निचयने उखाख्यभाण्डस्य, एवमेव तेनैव प्रकारेण महावीरादीनि मृण्मयादीनि प्रवर्ग्यपात्राणि प्रदहेत् । तत्र मखाय त्वेत्यादिभिः त्रिभिः मन्त्रैः त्रीन् महावीरान् प्रदहेत् । तत्पाठस्तु मखाय त्वेति । पूर्ववत् व्याख्येयः । [ अ० ३७।१।९ ]

कात्यायनः—"पक्वानुद्धरत्यृजवे त्वेति ।" ( अ० २६।१।२५ ) उद्वपति त्रिभिः मन्त्रैः ।

ऋजवें त्वा साधवें त्वा सुक्षित्यै त्वा ।
मखायं त्वा मखस्यं त्वा शीर्ष्णे ।
मखायं त्वा मखस्यं त्वा शीर्ष्णे ।
मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ १० ॥

पदच्छेदः स्पष्टः ॥ १० ॥

हे प्रथम महावीर ऋजवे ऋजुत्वाय अकुटिलाय स्वर्गलोकाय त्वा त्वाम् उद्वपामि । "असौ वै लोक ऋजुः" ( श० का० १४ । अ० १ । ब्रा० २ । कं० २२ ) इति श्रुतेः । द्युलोकाभिधायी ऋजुशब्दः । हे द्वितीयमहावीर साधवे, "अयं वै साधुर्योऽयं पवते" ( श० का० १४ । अ० १ । ब्रा० २ । कं० २३ ) इति श्रुतेः । अन्तरिक्षलोकवर्त्ती वायुः साधुः, तस्मै साधवे । तदर्थं त्वाम् उद्वपामि । हे तृतीय महावीर त्वां सुक्षित्यै, सर्वाणि भूतानि सुष्ठु क्षियन्ति इति सुक्षितिः । "[1]भूर्लोकः सुक्षितिः" ( श० का० १४ । अ० १ । ब्रा० २ । कं० २४ ) इति श्रुतेः । तस्यै सुक्षित्यै, तदर्थं त्वाम् उद्वपामि । कात्यायनः—"अजापयसावसिञ्चति मखायेति प्रतिमन्त्रम्" ( अ० २६।१।२६ ) इति । 'मखाय त्वा इत्यादिभिः त्रिभिः मन्त्रैः त्रीन् महावीरान् अजापयसा उक्षति । तत्पाठस्तु "मखाय त्वा मखस्य त्वा शीर्ष्णे" इति त्रिः । हे प्रथममहावीर, त्वां मखाय यज्ञार्थम् अजापयसा अवसिञ्चामि, अन्यत् पूर्ववत् योज्यम् । एतावता प्रवर्ग्यसम्भरणमन्त्राः गताः । अथ तत्प्रचरणमन्त्रा उच्यन्ते ।

[ अ० ३७।१।१० ]

सप्तत्रिंशेऽध्याये प्रथमोऽनुवाकः ।

---

१. "अयं वै लोक" इति मुद्रित शतपथब्राह्मणे ।

[ द्वितीयोऽनुवाकः ११-१३ ]

कात्यायनः—"ब्रह्मानुज्ञातो यमायेति महावीरं प्रोक्षति प्रतिमन्त्रं वा वाक्यभेदात्" ( अ० २६।२।१३ ) इति। ब्रह्मणा अनुज्ञातः अध्वर्युः 'यमाय त्वा' इत्यादिभिः त्रिभिः मन्त्रैः एकैकं महावीरं प्रोक्षति। यमाय त्वा प्रतिमन्त्रम्। 'त्वा' शब्दश्रवणात् वाक्यभेदात् क्रमेण एकेन मन्त्रेण एकमहावीरं प्रोक्षेदिति। तत्पाठस्तु—

**य॒माय॑ त्वा म॒खाय॑ त्वा॒ सूर्य॑स्य त्वा॒ तप॑से।**

पदच्छेदः स्पष्टः।

हे प्रथममहावीर त्वा त्वां यमाय, यच्छति नियच्छति सर्वं जगत् इति यमः आदित्यः। तस्मै तदर्थं प्रोक्षामि। हे द्वितीयमहावीर मखाय यज्ञाय यज्ञात्मकादित्याय तदर्थं त्वां प्रोक्षामि। हे तृतीयमहावीर त्वा त्वां सूर्यस्य तपसे सूर्यसम्बन्धिने तेजसे तदर्थं प्रोक्षामि। "एष वै यमो य एष तपति" ( श० का० १४। अ० १। ब्रा० ३। कं० ४ ) इत्यादिकं ब्राह्मणम् अत्रानुसन्धेयम्।

कात्यायनः—"अञ्जन्तीत्युच्यमाने देवस्त्वेत्यनक्ति महावीरम्" ( अ० २६।२।२० ) इति। होत्रा 'अञ्जन्ति' इति प्रथमायाम् ऋचि उच्यमानायां देवस्त्वेति मन्त्रेण प्रचरणीयं प्रथममहावीरम् आज्येन अञ्ज्यात्। तत्पाठस्तु—

**दे॒वस्त्वा॑ सवि॒ता मध्वा॑नक्तु।**

देवः। त्वा। सविता। मध्वा। अनक्तु।

हे महावीर त्वा त्वां देवः देवनशीलः सविता मध्वा मधुना माधुर्यवता आज्येन अनक्तु आर्द्रीकरोतु।

कात्यायनः—"रजतशतमानं खर उपगूहति पृथिव्याः स२ंस्पृश" ( अ० २६।२।२१ ) इति। गार्हपत्यस्य उत्तरतः निर्मिते खराख्ये धिष्ण्ये शतमानपरिमितेन रजतेन निर्मितं रुक्मं स्थापयेत् पृथिव्या इति मन्त्रेण। तत्पाठस्तु—

**पृ॒थि॒व्याः स॒२ंस्पृश॑स्पाहि।**

पृथिव्याः। संस्पृशः। पाहि।

हे रजतरुक्म, पृथिव्याः भूमेः संस्पृशः संस्पर्शादिना महावीरं पाहि रक्ष। अयं हि एषः महावीरः यथा भूमिं न स्पृशेत् तथा त्वम् अन्तर्धानज्ञो भव इत्यर्थः।

कात्यायनः—"स२ंसीदस्वेत्युच्यमाने मुञ्जप्रलवान्द्विगुणानादीप्य प्रतिदिशं खरे करोति तेषु महावीरमाज्यवन्तमर्चिरसीति ( अ० २६।३।४ )। होत्रा 'संसीदस्व महाँ असि' इत्यस्याम् ऋचि उच्यमानायां द्विगुणीकृत्य मुञ्जविमुष्टीन् गार्हपत्ये प्रज्वाल्य खरे तान् निधाय तेषु प्रज्वलत्सु आज्यपूर्णमहावीरम् 'अर्चिरसी'ति मन्त्रेण स्थापयेत्। तत्पाठस्तु—

**अ॒र्चिर॑सि शो॒चिर॑सि॒ तपो॑ऽसि॥ ११॥**

पदच्छेदः स्पष्टः॥ ११॥

हे महावीर त्वम् अर्चिरसि, अर्चनीयं यत्तेजः तद्रूपोऽसि। तथा त्वं शोचिरसीति, शोचकं शोकजनकं यत्तेजः तद्रूपोऽसि। तथा तपोऽसि, सन्तापजनकं यत्तेजः तथाविधोऽसि। [—अ० ३७।२।१]

कात्यायनः—"अनाधृष्टेति वाचयति प्रादेशमध्यधि धारयन्तम्, प्रतिदिशमेके" (अ० २६। ३।५-६ ) इति। अध्यधि महावीरस्य उपरिष्टात् अधि समीपे प्रादेशं धारयन्तं यजमानम् अनाधृष्टेत्यादीन् मन्त्रान् वाचयति। यद्वा मन्त्रलिङ्गानुसारेण प्रागादिदिक्षु क्रमेण धारयन्तं मन्त्रान् वाचयेत्।. तत्पाठस्तु—

**अनाधृष्टा पुरस्तादग्नेराधिपत्य आयुर्मे दाः पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये प्रजाम्मे दाः।**
**सुषदा पश्चाद्देवस्य सवितुराधिपत्ये चक्षुर्मे दा आश्रुतिरुत्तरतो धातुराधिपत्ये रायस्पोषम्मे दाः।**
**विधृतिरुपरिष्टाद् बृहस्पतेराधिपत्य ओजो मे दाः।**

**अनाधृष्टा। पुरस्तात्। अग्नेः। आधिपत्ये। आयुः। मे। दाः। पुत्रवती। दक्षिणतः। इन्द्रस्य। आधिपत्ये। प्रजाम्। मे। दाः॥**

**सुषदा। पश्चात्। देवस्य। सवितुः। आधिपत्ये। चक्षुः। मे। दाः। आश्रुतिः। उत्तरतः। धातुः। आधिपत्ये। रायस्पोषम्। मे। दाः॥**

**विधृतिः। उपरिष्टात्। बृहस्पतेः। आधिपत्ये। ओजः। मे। दाः।**

हे पृथिवि, त्वं पुरस्तात् महावीरस्य प्राच्यां दिशि अग्नेः देवस्य आधिपत्ये अधिपतित्वे वर्तमाना सती अनाधृष्टा केनापि रक्षःप्रभृतिना अप्रधर्षिता असि। अग्निना रक्षितत्वात् त्वं रक्षोभिः घर्षयितुम् अशक्या इत्यर्थः। यदेवम् अतः मे मह्यम् आयुः जीवनं दाः देहि। तथा महावीरस्य दक्षिणतः दक्षिणभागे वर्तमाना त्वं पुत्रवती, पुत्राः पुत्रभूताः सर्वपशुपक्षिमनुष्यादयः, तैः युक्ता सती इन्द्रस्याधिपत्ये अधिपतित्वे वर्तमाना असि। इन्द्रेण पालनीया असीत्यर्थः। अतः त्वं पुत्रवती, अतः मे मह्यं प्रजां पुत्रादिलक्षणां दाः देहि। तथा हे पृथिवि, त्वं पश्चात् महावीरस्य पश्चिमदेशे सुषदा सदा सुखेन आसक्तियोग्या सती देवस्य देवनशीलस्य सवितुः आधिपत्ये अधिपतित्वे वर्तमाना असि। यतः त्वं प्रकाशकेन सवित्रा पालिता असि, अतः मे मह्यं चक्षुः दाः प्रकाशसाधनं चक्षुरिन्द्रियं देहि। तथा उत्तरतः महावीरस्य उत्तरभागे आश्रुतिः आश्रूयमाणा आ समन्तात् प्रथमाना आश्रवणयुक्ता वा सती धातुः विधातुः ब्रह्मणः आधिपत्ये वर्तमाना असि। धात्रा रक्षणीया असीत्यर्थः। तादृशी त्वं रायस्पोषं धनस्य[1] मे मह्यं दाः देहि। तथा हे पृथिवि त्वम् उपरिष्टात् महावीरस्य उपरिदेशे विधृतिः विधारयन्तो सती बृहस्पतेः सुरगुरोः आधिपत्ये वर्तमाना असि। अतः मे मह्यं तादृशी त्वम् ओजः बलं दाः देहि। एवं महावीरस्य परितः रक्षणार्थं पृथिव्याः अग्न्यादिदेवतारक्षणीयत्वम् उक्तम्। "अनाधृष्टा ह्येषा पुरस्ताद्रक्षोभिर्नाष्ट्राभिः" (श० का० १४। अ० १। ब्रा० ३। क० १८) इत्यादिब्राह्मणमनुसन्धेयम्।

१. पुष्टिमिति शेषः उचित०।

कात्यायनः—"विश्वाभ्यो मेति दक्षिणत उत्तानं पाणिं निदधाति" ( अ० २६।३।७ ) इति। पाठस्तु—

**विश्वाभ्यो मा नाष्ट्राभ्यस्पाहि ।**

**पदच्छेदः स्पष्टः ।**

हे पृथिवि, त्वं विश्वाभ्यः सर्वाभ्यः नाष्ट्राभ्यः नाशनरूपाभ्यः पापेभ्यः मां पाहि रक्ष।
कात्यायनः—"मनोरश्वेति प्रादेशमुत्तरतः" ( अ० २६।३।८ ) इति। महावीरस्य उत्तरभागे भूमिम् अभिमृश्य 'मनोरश्वे' ति मन्त्रं जपेत्। तत्पाठस्तु—

**मनोरश्वासि ॥ १२ ॥**

**मनोः। अश्वा। असि ॥ १२ ॥**

"अश्वा ह वा इयं भूत्वा मनुमुवाह" ( श० का० १४। अ० १। ब्रा० ३। कं, २५ ) इति ब्राह्मणम्। अतः हे पृथिवि, त्वं विवस्वतः पुत्रस्य मनोः अश्वा असि, वाहनरूपेण वर्तमाना वडवा भवसि। [—अ० ३७।२।२ ]

कात्यायनः—"विकङ्कतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः स्वाहा मरुद्भिरिति" ( अ० २६।३।९ ) इति। प्रागग्रैः उदगग्रैश्च त्रयोदशभिः विकङ्कतशकलैः महावीरं परिश्रयति। तत्पाठस्तु—

**स्वाहा मरुद्भिः परिश्रीयस्व दिवस्सꣳस्पृशस्पाहि ।**

**स्वाहा। मरुद्भिः। परि। श्रीयस्व। दिवः। संस्पृशः। पाहि।**

हे प्रवर्ग्य स्वाहाकारात्मक, त्वं मरुद्भिः मरुद्गणैः परिश्रीयस्व परितः वेष्टितः भव। त्वां मरुतः परितः आश्रयन्तु इत्यर्थः। सुवर्णशतमानं महावीरस्य उपरिष्टात् निदधाति। तथा च सूत्रितम्—"सुवर्णशतमानेनापिदधाति दिवः सꣳस्पृश इति" ( का० अ० २६।३।१० )। हे सुवर्णशतमान दिवः द्युलोकस्य संस्पृशः संस्पर्शात् पाहि रक्ष। यथा प्रवर्ग्यस्य उष्मा दिवं न स्पृशति तथा महावीरं रक्ष इत्यर्थः।

कात्यायनः—"कृष्णाजिनावकृत्तैर्धवित्रैरुपवीजयति त्रिभिर्दण्डवद्भिर्मधुमध्विति ( अ० २६।४।२)। त्रीणि कार्ष्णाजिनानि धवित्राणि आदाय 'मधु' इति मन्त्रैः त्रिवारं जपेत् इत्यर्थः। पाठस्तु—

**मधु मधु मधु ॥ १३ ॥**

**पदच्छेदः स्पष्टः ॥ १३ ॥**

हे धवित्र, त्वं मधु माधुर्यंरसवत् सारभूतः प्राणः असि। "प्राणो वै मधु" (श० का० १४। अ० १। ब्रा० ३। कं, ३० ) इति हि ब्राह्मणम्। तस्यैव [1]रसवत्त्वम् अन्यत्राम्नातम्। "प्राणो वा

---

१. रसत्वम् उ. म्यु.।

अङ्गानाᳬरसः" ( श० ब्रा०, का० १४ । अ० १ । ब्रा० १ । कं० २१ ) इति । एवम् उत्तरत्रापि मधुशब्दौ व्याख्येयौ । [—अ० ३७।२।३ ]

सप्तत्रिंशेऽध्याये द्वितीयोऽनुवाकः

[ तृतीयोऽनुवाकः १४—२१ ]

कात्यायनः—"परिक्रम्योपतिष्ठन्तेऽकृतं चेद् गर्भो देवानाम्" ( अ० २६।४।११ ) इति । सर्वे प्रवर्ग्यकर्तारः स्वे स्वे स्थाने स्थित्वा महावीरमुपतिष्ठन्ते "गर्भो देवानाम्" इत्यादिना । तत्रायं प्रथमः मन्त्रः—

**गर्भो॑ दे॒वाना॑म्पि॒ता म॑ती॒नाम्पतिः॑ प्र॒जाना॑म् ।**
**सन्दे॒वो दे॒वेन॑ सवि॒त्रा ग॑त॒ सᳬसूर्ये॑ण रोचते ॥ १४ ॥**

गर्भः । देवानाम् । पिता । मतीनाम् । पतिः । प्रजानाम् ॥
सम् । देवः । देवेन । सवित्रा । गत । सम् । सूर्येण । रोचते ॥ १४ ॥

द्वितीयश्च मन्त्रः—

**सम॒ग्निर॒ग्निना॑ गत॒ सन्दै॒वे॑न सवि॒त्रा सᳬसूर्ये॑णारो॑चिष्ट ।**
**स्वाहा॒ सम॒ग्निस्तप॑सा गत॒ सन्दै॒व्ये॑न सवि॒त्रा सᳬसूर्ये॑णारूरुचत ॥ १५ ॥**

सम् । अग्निः । अग्निना । गत । सन् । दैवेन । सवित्रा । सम् । सूर्येण । अरोचिष्ट ॥
स्वाहा । सम् । अग्निः । तपसा । गत । सन् । दैव्येन । सवित्रा । सम् । सूर्येण । अरूरुचत ॥ १५ ॥

गर्भयतीति गर्भः । आदित्यात्मना देवानां गर्भभूतः एष प्रवर्ग्यः । पाति रक्षतीति पिता । मतीनां मन्तॄणां स्तोतॄणाम् एष प्रवर्ग्यः पिता रक्षकः । तथा सर्वासां प्रजानां पतिः स्वामी । देवः दीप्यमानः एष प्रवर्ग्यः । देवेन देवनशीलेन दीप्यमानेन सवित्रा संगत समगच्छत । एकीभूतः अभूत् । संगतश्च सन् तेन सूर्येण रश्मिद्वारा समगच्छत । [1]अनन्तरमेव तेन सूर्येण सह अरोचिष्ट दीप्तोऽभूत् । स्वाहा स्वाहाकारात्मकः अग्निः अग्निवर्णः प्रवर्ग्यः तपसा सन्तापेन समगच्छत । तथा दैव्येन देवसम्बन्धिना सवित्रा सह पूर्ववत् समगच्छत । संगतश्च सन् सूर्येण च अरूरुचत दीप्तः [2]अभूत् । [—अ० ३७।३।१-२ ]

तृतीयमन्त्रः —

**ध॒र्ता दि॒वो वि भा॑ति॒ तप॑सस्पृथि॒व्यान्ध॒र्ता दे॒वो दे॒वाना॒मम॑र्त्यस्त॒पोजाः ।**
**वाच॑म॒स्मे नि य॑च्छ देवा॒युव॑म् ॥ १६ ॥**

धर्ता । दिवः । वि । भाति । तपसः । पृथिव्याम् । धर्ता । देवः । देवानाम् । अमर्त्यः । तपोजाः ॥
वाचम् । अस्मे । नि । यच्छ । देवायुवम् ॥ १६ ॥

---

१. पञ्चदशमन्त्रस्य आदिसः भाष्यांशः मूलपुस्तके नोपलभ्यते । २. अभवत् उ. म्यु. ।

दिवः द्युलोकस्य धर्ता धारयिता आदित्यात्मकः एष प्रवर्ग्यः विभाति दीप्यते। यद् वा सर्वं जगद् भासयति। तपसः तापनशीलस्य रश्मिजालस्य धर्ता धारयिता भूत्वा पृथिव्यां भूम्यां विभाति विशेषेण प्रकाशते। अथवा आदित्यात्मना द्युलोकस्य धारयिता प्रवर्ग्यात्मना पृथिव्याम् अवस्थितः प्रकाशते। देवः देवनशीलः असौ देवानाम् इन्द्रादीनामपि धर्ता धारयिता। अमर्त्यः मरणधर्मविरोधी। तपोजाः सिसृक्षावस्थापन्नं ब्रह्म तप इति उच्यते। "स तपोऽतप्यत, स तपस्तप्त्वा इदꣳसर्वमसृजत" (श० ब्रा० का० १४। अ० १। ब्रा० ४। कं १३) इति श्रुतेः। तस्मात् तपःशब्दाभिधेयाद् ब्रह्मणः जात इति तपोजाः प्रवर्ग्यः। एवंभूतः त्वं, [1]देवान् स्तुत्या यौति विश्वात्मना मिश्रयतीति देवयुः स्तुतिरूपा वाक्, तादृशीं वाचम् अस्मे अस्मभ्यं नियच्छ प्रदेहि। [—अ० ३७।३।३]

चतुर्थः—

अप॑श्यं गो॒पाम॑नि॒पद्य॑मान॒मा च॒ परा॑ च प॒थिभि॒श्चर॑न्तम्।
स स॒ध्रीचीः॒ स विषू॑ची॒र्वसा॑न॒ आव॑रीवर्ति॒ भुव॑नेष्व॒न्तः॥ १७॥

अपश्यम्। गोपाम्। अनिपद्यमानम्। आ। च। परा। च। पथिभिः। चरन्तम्॥
सः। सध्रीचीः। सः। विषूचीः। वसानः। आ। वरीवर्ति। भुवनेषु। अन्तः॥ १७॥

आदित्यात्मना घर्मः स्तूयते—गोपां सर्वासां प्रजानां गोपायितारम् आदित्यात्मना वर्त्तमानं घर्मम् अपश्यम् अद्राक्षम्। कथंभूतं, अनिपद्यमानम् अनिवारितगमनेन गच्छन्तम्। यद् वा, निपदनं नीचैः पतनम्, तद्रहितम्। आभिमुख्येन पराङ्मुखतया च पथिभिः देवयानैः चरन्तं गच्छन्तम्। मध्याह्नात् पूर्वं सूर्यः आभिमुख्येन चरति। ततः उपरि पराङ्मुखः चरति। तदभिप्रायेण इदम्। एवं भूतं तम् आदित्यम् अपश्यम् इति सम्बन्धः। स च आदित्यः, सध्रीचीः सहगमनाः प्राच्यादिदिशः विषूचीः विष्वग्गमनाः आग्नेयादिदिशश्च वसानः स्वतेजसा आच्छादयन् भुवनेषु भूम्यादिसमस्त-लोकेषु अन्तःमध्ये वरीवर्ति पुनः पुनः आवर्तते। [—अ० ३७।३।४]

पञ्चमः—

विश्वा॑साम्भुवाम्पते॒ विश्व॑स्य मनसस्पते॒ विश्व॑स्य वचसस्पते॒ सर्व॑स्य वचसस्पते।
दे॒व॒श्रुत्त्वन्दे॑व घर्म दे॒वो दे॒वान्पा॒ह्यत्र॒ प्रावी॒रनु॒ वान्दे॒ववी॑तये।
मधु॒ माध्वी॑भ्या॒म्मधु॒ माधू॑चीभ्याम्॥ १८॥

विश्वासाम्। भुवाम्। पते। विश्वस्य।
मनसः। पते। विश्वस्य। वचसः। पते॥
सर्वस्य। वचसः। पते। देवश्रुत्। त्वम्। देव। घर्म। देवः। देवान्। पाहि। अत्र। प्र।
आवीः। अनु। वाम्। देववीतये॥
मधु। माध्वीभ्याम्। मधु। माधूचीभ्याम्॥ १८॥

हे विश्वासां भुवां पते सर्वासां भूमीनां पालक, हे विश्वस्य मनसस्पते सर्वप्राणिनाम् अन्तः-करणस्य अधिपते तथा विश्वस्य वचसस्पते सर्वस्य वाक्यजातस्य त्रयीरूपस्य पालक, सर्वस्य वचसस्पते

१. देवयुवमित्यादिः

लौकिकसमस्तवाक्यस्य अधिपते एवं गुणविशिष्ट हे देव देवनशील धर्मदेव, देवश्रुत् देवेषु मध्ये श्रूयमाणः प्रख्यायमाणः भवसि। अतः देवः देवनशीलः त्वं देवान् यष्टव्यान् इन्द्रादीन् यज्ञस्य कृत्स्नतापादनेन हविर्भुजः, तान्[1] रक्ष। अपि च अस्मिन् प्रवर्ग्ये कर्मणि हे धर्म त्वम् अश्विनौ प्रावीः प्रतर्पय। हे अश्विनौ माध्वीभ्यां मध्वास्वादनशीलाभ्यां युवाभ्यां तद्धर्महवीरूपं मधु देववीतये, दीप्यन्ते इति देवाः इन्द्रियाणि, तेषां तर्पणाय[2], युवयोः इन्द्रियाणि तर्पयितुम् अनु प्राप्नोत्; तथा माधूचीभ्यां मधुमद्भ्यां युवाभ्यामेतन्मधु तृप्तिकरं भवतु। तथा च ब्राह्मणम्—"मधु माध्वीभ्यां मधु माधूचीभ्यामिति। दध्यङ् ह वा आभ्यामाथर्वणो मधुनाम ब्राह्मणमुवाच। तदेनयोः प्रियं धाम" (श० का १४। अ० १। ब्रा० ४। कं० १३) इति। [—अ० ३७।३।५]

षष्ठः—

**हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा।**
**ऊर्ध्वो अध्वरन्दिवि देवेषु धेहि ॥ १९ ॥**

पदच्छेदः स्पष्टः ॥ १९ ॥

हृदे हृदयाय सकलजनवशीकरणार्थं त्वां स्तुमः। तथा दिवे द्योतमानाय, मनसे निष्पाद्य-ज्ञानार्थं त्वां स्तुमः। तथा सूर्याय सूर्यार्थं त्वां स्तुमः। स त्वं ऊर्ध्वः ऊर्ध्वगमनविशिष्टः भूत्वा दिवि द्युलोके अवस्थितेषु देवेषु अस्मदीयम् अध्वरं यज्ञं धेहि स्थापय। [—अ० ३७।३।६]

अपि च—

**पिता नोऽसि पिता नो बोधि नमस्ते अस्तु मा मा हिꣳसीः ॥**

पदच्छेदः स्पष्टः।

नः अस्माकं पिता पालकः असि। पिता भवन् नः अस्मान् बोधि बोधय सम्यक् ज्ञानयुक्तान् कुरु। ते तुभ्यमिदं नमः अस्तु, नमस्कारः भवतु। मां प्रवर्ग्यानुष्ठायिनं मा हिंसीः मा वधिष्ठाः।

कात्यायनः—"त्वष्टृमन्त इत्येनां वादयति महावीरमीक्षमाणाम्" (अ० २६।४।१३) इति एनां पत्नीम्। तत्पाठस्तु—

**त्वष्टृमन्तस्त्वा सपेम पुत्रान्पशून्मयि धेह्यरिष्टाहꣳसह पत्या भूयासम् ॥ २० ॥**

त्वष्टृमन्तः। त्वा। सपेम। पुत्रान्। पशून्। मयि। धेहि। अरिष्टा। अहम्। सह। पत्या। भूयासम् ॥ २० ॥

त्वष्टा रेतसां विकर्ता—"त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद् रूपपतिः" (त० ब्रा० २।५।७।४)

तद्युक्ताः सन्तः वयं हे महावीर त्वा त्वां सपेम, सपतिः स्पर्शनकर्मा, स्पृशेम। अत एव वयं त्वष्टृसन्तः, अतः मयि पुत्रान् पशून् च धेहि धारय। अहं च अरिष्टा अहिंसिता सती पत्या भर्त्रा सह भूयासम्। पत्या सहभावः सर्वदा ममास्तु, न कदाचित् वियोग इति प्रार्थना। [—अ० ३७।३।७]

---

१. पाहि इत्यादिः।
२. वाम् इत्यादिः।

कात्यायनः—"अहः केतुनेति दक्षिण ँरौहिणं जुहोति मन्त्रक्रमेणोत्तर ँरात्रिरिति सायम्" ( अ० २६।४।१४ ) इति। प्रातःकालीने प्रवर्ग्ये 'अहः केतुने'ति मन्त्रेण रौहिणपुरोडाशौ यथाकालं जुहोति। सायंकाले 'रात्रिः केतुना' इति जुहोति। तत्पाठस्तु—

अहः॑ के॒तुना॑ जुषता ँ सु॒ज्योति॒र्ज्योति॑षा॒ स्वाहा॑।
रात्रिः॑ के॒तुना॑ जुषता ँसु॒ज्योति॒र्ज्योति॑षा॒ स्वाहा॑ ॥ २१ ॥

पदच्छेदः स्पष्टः ॥ २१ ॥

जुषताम् इदं हविः सेवताम्। तदर्थं स्वाहा सुहुतम् अस्तु। [ –अ० ३७।३।८]

सप्तत्रिंशेऽध्याये तृतीयोऽनुवाकः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वर-वैदिकमार्गप्रवर्तक-वीरबुक्कणभूपाल-साम्राज्य-धुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये सप्तत्रिंशोऽध्यायः।



# अथ अष्टत्रिंशोऽध्यायः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

[ प्रथमोऽनुवाकः १–६ ]

सप्तत्रिंशे प्रवर्ग्ये दोहनात् प्राग्भाविनां कर्मणां विनियोगकराः मन्त्रा ह्याम्नाताः । अष्टत्रिंशे दोहनादिमन्त्राः आम्नायन्ते । तत्र कात्यायनः—"देवस्य त्वेति रज्जुसंदानमादाय–" ( अ.२६।५।१ ) इति । तत्पाठस्तु—

**दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्या॑म्पू॒ष्णो हस्ता॑भ्याम् ।**
**आद॒दे॒ऽदि॑त्यै॒ रास्ना॑सि ॥ १ ॥**

**देवस्य । त्वा । सवितुः । प्रसवे । अश्विनोः । बाहुभ्याम् । पूष्णः । हस्ताभ्याम् ॥**
**आ । ददे । अदित्यै । रास्ना । असि ॥ १ ॥**

आददे इत्येव प्रागुक्तार्थः । हे रज्जो त्वम् अदित्यै अदितिदेवतायाः रास्नासि रसना असि, काञ्चीदाम भवसि इत्यर्थः ।

[—अ० ३८।१।१]

कात्यायनः—"इड एहीति गामाह्वयति नाम्ना च त्रिरुच्चैः" (अ. २६।५।१) इति । इड एहि इत्यादिभिः मन्त्रैः त्रिभिः घर्मपयसो दोग्ध्रीं धेनुम् आह्वयति । तस्याः धेनोः यद् व्यावहारिकं नाम तेन नाम्ना स त्रिः आह्वयेत् । तत्पाठस्तु—

**इळ॒ एह्यदि॑त॒ एहि॒ सर॑स्वत्येहि॑ ।**
**अस॒ावेह्यस॒ावेह्यस॒ावेहि ॥ २ ॥**

**इळे । एहि । अदिते । एहि । सरस्वति । एहि ॥**
**असौ । एहि । असौ । एहि । असौ । एहि ॥ २ ॥**

असौ एहि इत्यादि । इडा, अदितिः, सरस्वती । सरस्वतीशब्दः देवगवीनां नामानि । हे इडे एहि आगच्छ । एवम् उत्तरयोः अपि योजना । असौ इति अदःशब्देन गोनाम उपलक्ष्यते । हे असौ गङ्गे एहि आगच्छ । लोके हि गोषु व्यवहारार्थं गङ्गादिशब्दः संज्ञात्वेन प्रयुज्यते । तथा गङ्गादि-शब्दरूपया संज्ञया संबोध्य गौः आह्वातव्या इति भावः । एवम् उत्तरयोः अपि योजना ।

[ —अ० ३८।१।२ ]

कात्यायनः—"अदित्यै रास्नेति गां पाशेन प्रतिमुच्य–" ( अ. २६।५।३ ) इति । 'अदित्यै' इति मन्त्रेण घर्मदुघां धेनुं रसनया दोहनार्थं बध्नीयात् इत्यर्थः । तत्पाठस्तु—

अदि॑त्यै॒ रास्ना॑सीन्द्रा॒ण्या उ॒ष्णीषः॑ ।
पू॒षासि॑ घ॒र्माय॑ दीष्व ॥ ३ ॥

अदित्यै । रास्ना । असि । इन्द्राण्यै । उष्णीषः ॥
पूषा । असि । धर्माय । दीष्व ॥ ३ ॥

अदित्यै अदितिदेवतायाः देवमातुः, हे रज्जो त्वं रास्नासि रसना असि । तथा इन्द्राण्या इन्द्र-पत्न्याः उष्णीषः शिरोवेष्टनम् असि । कात्यायनः—"पूषासीति वत्समुत्सृजति" ( अ. २६।५।३ ) इति । पूषासीति यजुषा दोहनार्थं वत्सं प्रमुञ्चति । पुष्यति वृष्टिधारादिप्रेरकत्वेन सर्वंजगत् पोषयतीति पूषा वायुः । तथा वत्सोऽपि क्षीरधाराप्रेरक इति सादृश्यम् । हे वत्स त्वं पूषा इव असि पूषदेवता इव भवसि । "अयं वै पूषा योऽयं पवते" (श.का. १४ । अ. २ । ब्रा. १ । क. ९ ।) इति ब्राह्मणम् । कात्यायनः—"घर्माय दीष्वेति वत्समुन्नयति" ( अ. २६।५।४ ) इति । घर्माय दीष्वेति यजुषा स्तन-पानाद् वत्सं व्यावर्त्तयति । हे वत्स त्वं घर्माय प्रवर्ग्याय दीष्व पयो देहि । अथवा घर्मार्थः पयोरसः घर्म इति उच्यते । "एष वा अत्र घर्मो रसो भवति यमेषापिन्वते" (श. का. १४ । अ. २ । ब्रा. १ । कं. १०) इति श्रुतेः । क्रियाग्रहणं कर्तव्यमिति संप्रदानत्वात् (वार्तिकम् १०८५ पा. सू. अ. २।३।१३) चतुर्थी । घर्मं दीष्व पयः घर्मोपयुक्तं प्रापय देहि । [—अ० ३८।१।३]

कात्यायनः—"अश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि" ( अ. २६।५।५। ) इति । पिन्वनं दोह-पात्रम् । तत्पाठस्तु—

अ॒श्विभ्यां॑ पिन्वस्व॒ सर॑स्वत्यै पिन्व॒स्वेन्द्रा॑य पिन्वस्व ।

पदच्छेदः स्पष्टः ।

हे गौः त्वम् अश्विभ्याम् अश्विदेवतार्थं पिन्वस्व पयः सिञ्च । अश्विनोः हवीरूपस्य बहलस्य पयसः सिद्धये त्वं प्रस्नुता सती स्तनाग्रैः क्षीरं स्रावय इति भावः । 'पिवि सेचने' धातुः । तथा सरस्वत्यै सरस्वतीदेवतार्थं पिन्वस्व पयः क्षीरम् । तथा इन्द्राय इन्द्रार्थं पिन्वस्व ।

कात्यायनः—"स्वाहेन्द्रवदिति विप्रुषोऽभिमन्त्रयते" ( अ. २६।५।६ ) । दोहसमये क्षीरविन्दवः परितः निर्गच्छन्ति, तान् 'स्वाहेन्द्रवत्' इति मन्त्रेण अभिमन्त्रयते । तत्पाठस्तु—

स्वाहेन्द्रं॑व॒त्स्वाहेन्द्रं॑व॒त्स्वाहेन्द्रं॑वत् ॥ ४ ॥

स्वाहा । इन्द्रवत् । शिष्टं स्पष्टम् ॥ ४ ॥

यदिदं विप्रुड्जातं पिन्वनात् अन्यत्र गतं तत् इन्द्रवत् इन्द्रयुक्तं सत् स्वाहा सुहुतमस्तु । आवश्यकत्वद्योतनाय मन्त्रस्य त्रिः आवर्तनम् । सर्वथा अन्यत्र गतं विप्रुड्जातम् इन्द्रयुक्तम् एव अस्तु इति । [—अ० ३८।१।४]

कात्यायनः—"यस्ते स्तन इति स्तनमालभते" ( अ. २६।५।७ ) इति । तत्पाठस्तु—

यस्ते॒ स्तन॑श्शश॒यो यो म॑यो॒भूर्यो र॑त्न॒धा व॑सु॒विद्यस्सु॒दत्रः॑ ।
येन॒ विश्वा॒ पुष्य॑सि॒ वार्या॑णि॒ सर॑स्वति॒ तमि॒ह धात॑वेऽकः ।

**यः । ते । स्तनः । शशयः । यः । मयोभूः । यः । रत्नधा । वसुवित् । यः । सुदत्रः ॥**
**येन । विश्वा । पुष्यसि । वार्याणि । सरस्वति । तम् । इह । धातवे । अकः ॥**

हे सरस्वति ते तव यः स्तनः शशयः पुत्रभूतैः अस्माभिः पीतः शयनशीलः भवति; यः स्तनः मयोभूः सर्वस्य जगतः मयसः सुखस्य भावयिता; यश्च रत्नधा, रत्नानां रमणीयानां धनानां धारयिता; यश्च अन्येषां वसुवित् धनस्य लम्भकः सन् सुदत्रः शोभनदानयुक्तः भवति, येन च स्तनेन विश्वा सर्वाणि वार्याणि वरणीयानि आत्मना स्तोतृभ्यः दत्तानि धनानि पुष्यसि बर्धयसि, तं स्तनम् इह अस्मिन् यज्ञे धातवे, 'धेट्' पाने इत्यस्मात् तुमर्थे तवेन् प्रत्ययः, धातुं पातुं धानार्थम् अकार्षीः। अथवा "छन्दसि लुङ्" ( पा. सू. अ. ३।४।६ ) इति प्रार्थनायां लुङ् अकः कुरु।

कात्यायनः—"उपद्रव पयसेत्युच्यमाने गच्छत्युर्वन्तरिक्षमिति" ( अ. २६।५।११ )। यदा होता 'उपद्रवं पयसा' इति एताम् ऋचम् अनुब्रूयात् तदा 'उर्वन्तरिक्षम्' इति मन्त्रेण गार्हपत्यसमीपं गच्छेत्। तत्पाठस्तु—

**उर्वन्तरिक्षमन्वेमि ॥ ५ ॥**

**उरु । अन्तरिक्षम् । अनु । एमि ॥ ५ ॥**

उरु विस्तीर्णम् अन्तरिक्षम् आकाशम् अन्वेमि अनुसृत्य गच्छामि। [—अ० ३८।१।५]

कात्यायनः—"परीशासावादत्ते गायत्रं छन्दोऽसीति प्रतिमन्त्रम्" ( अ. २६।५।१२ ) इति। तस्य महावीरस्य आदानार्थौ यौ परीशासौ तौ गायत्रं छन्दः त्रैष्टुभं छन्दः इति द्वाभ्यां मन्त्राभ्यां क्रमेण आदत्ते। तत्पाठस्तु—

**गायत्रञ्छन्दोऽसि त्रैष्टुभञ्छन्दोऽसि ।**

**पदच्छेदः स्पष्टः ।**

हे महावीर त्वं गायत्रं छन्दः गायत्र्यात्मकं चतुर्विंशत्यक्षरपरिमितं छन्दः तदेव असि भवसि। तथा त्रैष्टुभं त्रिष्टुबात्मकं चतुश्चत्वारिंशदक्षरपरिमितं यत् छन्दः तदेव असि भवसि।

कात्यायनः—"ताभ्यां महावीरं परिगृह्णाति" ( अ. २६।५।१४ ) इति। तत्पाठस्तु—

**द्यावापृथिवीभ्यान्त्वा परिगृह्णाम्यन्तरिक्षेणोपयच्छामि ।**

**द्यावापृथिवीभ्याम् । त्वा । परि । गृह्णामि । अन्तरिक्षेण । उप । यच्छामि ॥**

हे महावीर त्वा त्वां द्यावापृथिवीभ्यां द्यावापृथिव्यात्मकाभ्याम् एताभ्यां शफाभ्यां परिगृह्णामि परितः अवष्टभ्य धारयामि।

कात्यायनः—"उपयमन्योपगृह्णात्यन्तरिक्षेणोपयच्छामि" ( अ. २६।५।१५ ) इति महावीरस्य अधोभागम् उपयमन्याख्येन पात्रेण धारयेत्। अन्तरिक्षेणोपयच्छामि। अन्तरिक्षेण अन्तरिक्षात्मकेन उपयमन्याख्येन पात्रेण हे महावीर त्वाम् उपयच्छामि उपयम्य धारयामि।

कात्यायनः—"अजापयसावसिच्य शान्ते गोः पयोऽवनयतीन्द्राश्विनेति" ( अ. २६।५।१६ )। तत्पाठस्तु—

**इन्द्राश्विना मधुनस्सारघस्य घर्मम्पात वसवो यजत वाट् ।**
**स्वाहा सूर्यस्य रश्मये वृष्टिवनये ॥ ६ ॥**

इन्द्र । अश्विना । मधुनः । सारघस्य । घर्मम् । पात । वसवः । यजत । वाट् ॥
स्वाहा । सूर्यस्य । रश्मये । वृष्टिवनये ॥ ६ ॥

हे इन्द्राश्विना हे इन्द्राश्विनौ, सारघस्य 'सरघा मधुमक्षिका' तत्संपादितस्य मधुनः एवं भूत मध्वात्मकस्य प्रवर्ग्यस्य घर्मं दीप्तं रसं पात पिबत । हे वसवः वासवादेवाः यूयमपि घर्मं रसं पिबत । हे ऋत्विजः यूयमपि तदर्थं यजत घर्मस्य यागं कुरुत । वाट् इति वषट्कारस्य परोक्षनिर्देशः । वाट् वषट्कारः धर्मस्य हविषः दानाय भवतु इति शेषः । वृष्टिं वनोति संभजते ददातीति वा वृष्टिवनिः । तस्मै वृष्टिवनये सूर्यरश्मये स्वाहा स्वाहुतमस्तु । [—अ० ३८।१।६]

अष्टात्रिंशेऽध्याये प्रथमोऽनुवाकः ।

[ द्वितीयोऽनुवाकः ७—१४ ]

कात्यायनः—समुद्राय त्वेति वातनामानि जपति गच्छन्नाहवनीयम् ( अ. २६।६।१ ) इति । प्रवृजनदेशात् आहवनीयं प्रति होमार्थं गच्छन् महावीरहस्त एव समुद्राय इत्यादीनि वातनामानि जपेत् । तत्पाठस्तु—

समुद्राय त्वा वाताय स्वाहा सरिराय त्वा वाताय स्वाहा ।
अनाधृष्याय त्वा वाताय स्वाहा प्रतिधृष्याय त्वा वाताय स्वाहा ।
अवस्यवे त्वा वाताय स्वाहा शिमिदाय त्वा वाताय स्वाहा ॥ ७ ॥
इन्द्राय त्वा वसुमते रुद्रवते स्वाहेन्द्राय त्वादित्यवते स्वाहा ।
इन्द्राय त्वाभिमातिघ्ने स्वाहा सवित्रे त्व ऋभुमते विभुमते वाजवते स्वाहा
बृहस्पतये त्वा विश्वदेव्यावते स्वाहा ॥ ८ ॥
यमाय त्वाङ्गिरस्वते पितृमते स्वाहा ।
स्वाहा घर्माय स्वाहा घर्मः पित्रे ॥ ९ ॥

पदच्छेदः स्पष्टः ॥ ७ ॥ ८ ॥ ९ ॥

समुद्द्रवन्ति चेष्टन्ते सर्वाणि भूतानि अनेन इति समुद्रः वायुः ! प्राणादिरूपे वायौ सत्येव हि सर्वेषां चेष्टा । यद्वा, समुद्रवत् शश्वच्छीलत्वात् समुद्रः । यद्वा मेघप्रेरणेन सर्वं जगत् समुन्दयतीति समुद्रः । तस्मै समुद्राय, वाताय गमनशीलाय वायवे घर्माय त्वा त्वां जुहोमि, स्वाहा स्वाहुतमस्तु । सरिराय सरणशीलाय, यद्वा "सर्वाणि भूतानि सहेरते" ( श. का. १४ । अ. २ । ब्रा. २ । कं. ३ ) इति श्रुतेः । यस्मात् सकाशात् सर्वाणि भूतानि पशुपक्षिमृगादीनि सहैव निर्गच्छन्ति, तस्मै सरिराय वायवे त्वां जुहोमि स्वाहा । स्वाहुतमिदमस्तु इति । अनाधृष्याय, 'ञिधृषा प्रागल्भ्ये' घर्षयितुम् अशक्यः अनाधृष्यः । अरूपद्रव्यतया न केनापि वायुः ग्राहयितुं शक्यते । तथाविधाय वाताय वायवे हे घर्म त्वां जुहोमि स्वाहा स्वाहुतमिदमस्तु । सर्वत्रैवमेव वाक्ययोजना । अप्रतिधृष्यः प्रतिकूलत्वेन

धर्षयितुमशक्यः, तस्मै वाताय। अवस्यवे, अवस्यति अवधानं करोति एतावदिति सर्वं परिच्छिनत्ति इति अवस्युः। तस्मै अवस्यवे। शिमीति कर्मनाम। शिमिं ददातीति शिमिदः। न विद्यते अस्मात् अन्यः शिमिदः इति अशिमिदः तस्मै वाताय। इन्द्रादिनापि वायुरेव स्तूयते। इन्द्राय परमैश्वर्ययुक्ताय, वसवः अस्य वशे विद्यन्ते इति वसुमान्, तस्मै वसुमते वायवे हे प्रवर्ग्यं त्वा त्वां जुहोमि स्वाहा इति पूर्वमुक्तम्। रुद्रा अस्य सन्तीति रुद्रवान्, तस्मै रुद्रवते स्वाहा। तथा आदित्यवानपि, तस्मै आदित्यवते। इन्द्राय परमैश्वर्ययुक्ताय स्वाहा। अभिमातयः अभिमन्तारः शत्रवः, तान् हन्तीति अभिमातिहा, तस्मै अभिमातिघ्ने। इन्द्राय परमैश्वर्ययुक्ताय वायवे हे प्रवर्ग्यं त्वा वां जुहोमि स्वाहा। **"अयं वा इन्द्रो योऽयं पवते"** (श. का. १४। अ. २। ब्रा. २। कं. ६) इति ब्राह्मणमनुसन्धेयम्। सवित्रे सर्वस्य प्रेरकाय वायवे। **"सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः ऋभुर्विभ्वा वाज इति"** (निरु. ११।१६।२) इति यास्केन उक्तत्वात्। ऋभुविभुवाजसनाश्च एषां नामानि। अत्र विभुमते इत्यादि त्रिभिः विशेषणैः वायोः तद्वैशिष्टचम् उच्यते। तस्मै तादृशाय वायवे हे प्रवर्ग्यं त्वां जुहोमि स्वाहा। वृहस्पतये, वृहतां महतां पतये पालकाय, विश्वदेव्यावते, विश्वेषु देवेषु भवः विश्वदेव्यः। अथवा विश्वेषां देवानां हितं विश्वदेव्यम्, तत् अस्य अस्तीति विश्वदेव्यावान्। **"मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ"** ( पा. सू. अ. ६।३।१३१ ) इति दीर्घः। तस्मै वायवे हे प्रवर्ग्यं त्वां जुहोमि स्वाहा। यमयति इति यमो वायुः। अङ्गिरा अस्य अस्तीति अङ्गिरस्वान्, तस्मै अङ्गिरस्वते। पितृदेवता अस्य वशे तिष्ठन्तीति पितृमान्, इदं गुणविशिष्टाय नियमनकारिणे वायवे हे प्रवर्ग्यं त्वां जुहोमि स्वाहा। सुहुतमस्तु इति सर्वत्र व्याख्या। कात्यायनः—**"स्वाहा धर्मायेत्युपयमन्या सिञ्चति घर्मे, स्वाहा घर्मः पित्र इति जपित्वा"** ( अ. २६।६।२-३ ) इति। उपयमन्या महावीरे घर्मे सिञ्चति स्वाहा घर्मायेति जपेत्। ततः पश्चात् स्वाहा घर्मः पित्रे इति जपेत। घर्माय घर्मदेवतायै स्वाहा सुहुतम् इदमस्तु। पित्रे पितृदेवतायै घर्मो रसः स्वाहाकारेण हुतः अस्तु।

[—अ० ३८।२।१-३ ]

कात्यायनः—**"वषट्कृते जुहोति विश्वा आशा इति"** ( अ. २६।६।४ )। आश्रवणादिकं कृत्वा विश्वा आशा इति मन्त्रम् उक्त्वा होतृवषट्कृते सति महावीरस्थं घर्मम् आहवनीये जुहोति। तत्पाठस्तु—

**विश्वा आशा दक्षिणसत्सर्वान्देवानयाळिह।**
**स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना ॥ १० ॥**

**विश्वाः। आशाः। दक्षिणसत्। सर्वान्। देवान्। आयाट्। इह ॥**
**स्वाहाकृतस्य। घर्मस्य। मधोः। पिबतम्। अश्विना ॥ १० ॥**

दक्षिणसत् आहवनीयस्य दक्षिणभागे सीदति आस्ते इति दक्षिणसत् ब्रह्मा। असौ सर्वा आशा दशदिग्देवताः प्रीणयेत्। तथा इह अस्मिन् कर्मणि सर्वान् देवान् यक्ष्यमाणदेवतागणान् अयाट्, त्वम् ( अध्वर्यो ! ) अयाक्षीः। हे अश्विना अश्विनौ स्वाहाकृतस्य स्वाहेति हुतस्य घर्मस्य रसस्य मधोः मधुनः स्वांशं पिबतम्।

[—अ० ३८।२।४]

कात्यायनः—"दिवि धा[1] इति त्रिरुत्कम्पयति" ( अ. २६।६।५ ) इति। धर्मे हुते धर्मपात्रेणैव अग्नि त्रिः ऊर्द्ध्वं ज्वालयेत् इत्यर्थः। तत्पाठस्तु—

**दिवि धा इमँय्यज्ञमिमँय्यज्ञन्दिवि धाः।**

**दिवि। धा। इमम्। यज्ञम्। इमम्। यज्ञम्। दिवि। धाः।**

हे अग्ने, त्वम् इमं यज्ञं यागं दिवि द्युलोके धाः स्थापय। अस्मिन् अर्थे तात्पर्यार्थातिशयद्योतनार्थं पुनरुक्तिः।

कात्यायनः—"स्वाहाग्नय इत्यनुवषट्कृते" ( अ. २६।६।६ ) इति। जुहोतीति शेषः। तत्पाठस्तु—

**स्वाहाग्नये यज्ञियाय शँय्यजुर्भ्यः॥ ११॥**

**स्वाहा। अग्नये। यज्ञियाय। शम्। यजुर्भ्यः॥ ११॥**

यज्ञियाय यज्ञार्हाय अग्नये स्वाहा सुहुतम् इदम् अस्तु। यजुर्भ्यः यष्टृभ्यः शं सुखमस्तु। यद्वा यजुर्भ्यः यजुर्मन्त्रेभ्यः सकाशात् अस्माकं शं सुखमस्तु। [—अ० ३८।२।५]

कात्यायनः—"अश्विना धर्ममिति ब्रह्मानुमन्त्रयते" ( अ. २६।६।७ ) इति। तत्पाठस्तु—

**अश्विना घर्मम्पातᳪँहार्द्वानमहर्दिवाभिरूतिभिः।**
**तन्त्रायिणे नमो द्यावापृथिवीभ्याम्॥ १२॥**

**अश्विना। धर्मम्। पातम्। हार्द्वानम्। अहर्दिवाभिः। ऊतिभिः॥**
**तन्त्रायिणे। नमः। द्यावापृथिवीभ्याम्॥ १२॥**

हे अश्विना अश्विनौ हार्द्वानं हृदयस्य प्रियं धर्मं धर्मरसं पातं पिबतम्। कैः निमित्तभूतैः इति तदुच्यते, अहर्दिवाभिः। अहः शब्देन प्रातःकालः अभिधीयते। दिवाशब्देन सायंकालः। उभयोः कालयोः प्रवर्ग्यानुष्ठानम्। तथाविधाभिः ऊतिभिः युष्मदीयाभिः रक्षणाभि. निमित्तभूताभिः, अत-एवाभिषवे बहुशः स्तूयते—ताभिरूतिभिः अश्विना घर्मं पातमिति। अपि च, तन्त्रायिणे नमो द्यावा-पृथिवीभ्यामिति। तुरीशलाकाप्रोतास्तन्तवः तन्त्रमुच्यते। तन्त्रमिवाचरतीति तन्त्रायी। यथा तन्त्रप्रसारितैः तन्तुभिः विस्तारितं दृश्यते एवम् अयमपि सर्वत्र रश्मिजालं प्रसारयतीति तन्त्रायी। तस्मै तन्त्रायिणे सूर्याय नमः नमस्कारोऽस्तु। तथा द्यावापृथिवीभ्यां च नमः नमस्कारोऽस्तु।

[—अ० ३८।२।६]

कात्यायनः—"अपातामिति यजमानः" ( अ. २६।६।८ ) इति। अनुमन्त्रयतीति अनुषङ्गः। तत्पाठस्तु—

**अपातामश्विना घर्ममनु द्यावापृथिवी अमᳪँसाताम्।**
**इहैव रातयस्सन्तु॥ १३॥**

---

१. इममिति त्रिरूद्ध्वं प्रयतीति। उ. म्यु.।

**अपाताम् । अश्विना । धर्मम् । अनु । द्यावापृथिवी । अमंसाताम् ।।**
**इह । एव । रातयः । सन्तु ।। १३ ।।**

अश्विनौ देवौ धर्मं धर्मरसम् अपातां पीतवन्तौ । द्यावापृथिवी द्यावापृथिव्यौ च तत्पानम् अन्वमंसाताम् अन्वज्ञासिष्टम् । यस्मादेवं तस्मात् इहैव अस्मिन्नेव यज्ञे रातयः धनदानानि सन्तु भवन्तु । [—अ० ३८।२।७]

कात्यायनः—"इषे पिन्वस्वेति पिन्वमानमनुमन्त्रयते" ( अ. २६।६।९ ) इति । दध्ना पूर्यमाणं धर्मम् । 'इषे पिन्वस्व' इति अभिमन्त्रयते । तत्पाठस्तु—

**इषे पिन्वस्वोर्जे पिन्वस्व ब्रह्मणे पिन्वस्व क्षत्राय पिन्वस्व द्यावापृथिवीभ्यां- म्पिन्वस्व ।**
**धर्मासि सुधर्मामेन्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रन्धारय विशन्धारय ॥१४॥**

**इषे । पिन्वस्व । ऊर्जे । पिन्वस्व । ब्रह्मणे । पिन्वस्व । क्षत्राय । पिन्वस्व । द्यावापृथिवी- भ्याम् । पिन्वस्व ।।**
**धर्म । असि । सुधर्म । अमेनि । अस्मे । नृम्णानि । धारय । ब्रह्म । धारय । क्षत्रम् । धारय । विशम् । धारय ।। १४ ।।**

हे धर्म त्वम् इषे सर्वप्राणिभिः इष्यमाणायै वृष्ट्यै पिन्वस्व आत्मानं सेचय । ऊर्जे अन्नाय ब्रह्मणे ब्राह्मणजातये क्षत्राय क्षत्रजातये द्यावापृथिवीभ्यां दिवे पृथिव्यै तर्पणार्थं पिन्वस्व आत्मानं सेचय । पिन्वतिः सेचनार्थः । कात्यायनः—"धर्मासीत्युत्क्रामत्युत्तरपूर्वार्धम्, अमेन्यस्मे इति खरे करोति" ( अ. २६।६।१०-११ ) इति । धर्मासीति मन्त्रेण आहवनीयदक्षिणदेशादुत्तरम् अतिक्रामति उत्तरार्धम् उदङ् अतिक्रम्य अनेन मन्त्रेण महावीरं सादयति । तत्पाठस्तु—'धर्मासि सुधर्मामेन्यस्मे नृम्णानि धारय । ब्रह्म धारय, क्षत्रं धारय, विशं धारय' । हे सुधर्म सुष्टु धारणशील प्रवर्ग्य त्वं धर्मासि सर्वस्य जगतः धारकः असि यज्ञसाकल्यनिष्पादनद्वारा । अपि च अमेनि हिंसकमायुधं मेनि, तद्विरहितः, हिंसाम् अकुर्वन् नृम्णानि धनानि अस्मे अस्मभ्यं धारय । तथा ब्रह्म ब्राह्मणजातिम् अस्मदर्थं धारय । क्षत्रं क्षत्रियजातिम् अस्मदर्थं धारय । विशं वैश्यजातिं च अस्मदर्थं धारय ।

[—अ० ३८।२।८]

**अष्टात्रिंशेऽध्याये द्वितीयोऽनुवाकः ।**

## [ तृतीयोऽनुवाकः १५–१६ ]

कात्यायनः—"विकङ्कतशकलैर्जुहोति धर्मे न्यज्य न्यज्य स्वाहा पूष्णे शरस इति प्रतिमन्त्रम्" (अ. २६।६।१२)। "चतुर्थमहुतमुदङ्ङीक्षमाणो दक्षिणतो बर्हिष्युपगूहति" (कात्या. अ. २६।६।१४)। "सप्तमं च सर्वलेपाक्तं दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति" ( कात्या. अ. २६।६।१५ )। तस्य उत्तरतः शालाया बहिरुत्तरतः तं शकलं निरस्येत् । पाठस्तु—

**स्वाहा॑ पू॒ष्णे श॒र॑से स्वाहा॒ ग्राव॑भ्य॒स्स्वाहा॑ प्रति॒र॒वेभ्यः॑ ।**
**स्वाहा॑ पि॒तृभ्य॑ ऊ॒र्ध्वब॑र्हिर्भ्यो घर्म॒पाव॑भ्य॒स्स्वाहा॒ द्यावा॑पृथि॒वीभ्या॒ᳪ स्वाहा॒ विश्वे॑भ्यो दे॒वेभ्यः॑ ॥१५॥**

**पदच्छेदः स्पष्टः ॥ १५ ॥**

'स्वाहा रुद्राय रुद्रहूतये' इत्यन्ताः सर्वे मन्त्राः पुरस्तात् स्वाहाकाराः श्रूयन्ते। पुरस्तात् स्वाहाकारा वा अन्ये देवा इति। पुष्णाति सर्वं जगत् इति पूषा वायुः। प्राणात्मने तस्मै। शरसे, 'शर' इति दध्न उपरि घनीभूतः शर उच्यते। तत्सारभूताय स्वाहा सुहुतम् अस्तु। ग्रावभ्यः, **"प्राणा वै ग्रावाणः"** (श. का. १४। अ. २। ब्रा. २। कं. ३३) इति श्रुतेः। ग्रावशब्दः अत्र प्राणवाची। ग्रावभ्यः अमरणशीलेभ्यः प्राणेभ्यः स्वाहा सुहुतम् इदमस्तु। **"प्राणा वै प्रतिरवाः"** (श., का. १४। अ. २। ब्रा. २। कं. ३४) इति श्रुतेः। प्रतिरुवन्ति शब्दायन्ते इति व्युत्पत्त्या प्रतिरवाः प्राणाः, तेभ्यः स्वाहा सुहुतमस्तु। पितृभ्यः पितृदेवताभ्यः स्वाहा सुहुतमस्तु। ते विशेष्यन्ते। ऊर्ध्वबर्हिर्भ्यः आस्तीर्णस्य बर्हिषः ऊर्ध्वभागे अवस्थितेभ्यः घर्मपावभ्यः, घर्मं घर्मरसं पिबन्तीति घर्मपावानः, तेभ्यः घर्मपावभ्यः। द्यावापृथिवीभ्याम्, अत्र द्यावापृथिवीशब्देन प्राणोदानौ उच्येते। तथा च ब्राह्मणम्—**"प्राणोदानौ वै द्यावापृथिवी प्राणोदानावेवास्मिन्नेतद्दधाति"** (श. का. १४। अ. २। ब्रा. २। कं. ३६) इति। तथा च प्राणोदानौ एव, आभ्यां स्वाहा सुहुतमस्तु। **"प्राणा वै विश्वेदेवाः"** (श., का. १४। अ. २। ब्रा. २। कं, ३७) इति श्रुतेः अत्र विश्वेदेवाः प्राणाः, तेभ्यः विश्वेभ्यः देवेभ्यः स्वाहा सुहुतमस्तु। [—अ० ३८।३।११]

पाठस्तु—

**स्वाहा॑ रु॒द्राय॑ रु॒द्रहू॑तये॒ स्वाहा॒ सञ्ज्योति॑षा॒ ज्योतिः॑ ।**
**अह॑ः के॒तुना॑ जुषता॒ᳪ सुज्योति॒र्ज्योति॑षा॒ स्वाहा॑**
**रात्रि॑ः के॒तुना॑ जुषता॒ᳪ सु॒ज्योति॒र्ज्योति॑षा॒ स्वाहा॑ ।**

**पदच्छेदः स्पष्टः ।**

रुद्रहूतये, रुद्रशब्दः होतृनामसु पठितः। रुद्रैः होतृभिः आहूयते इति रुद्रहूतिः, तस्मै रुद्रहूतये रुद्राय स्वाहा सुहुतमिदमस्तु।

**कात्यायनः—"स्वाहा सञ्ज्योतिषेत्युपयमन्यामासिञ्चति"** (अ. २६। ६।१७) इति। महावीरस्थं घर्मरसशेषम् उपयमन्याख्ये पात्रे प्रत्यानयेत् इत्यर्थः। ज्योतिषा घर्मरूपेणावस्थितेन सौरतेजसा ज्योतिः भूगतम् आग्नेयतेजः संगच्छताम्। तस्मै एकीभूताय ज्योतिषे स्वाहा सुहुतम् इदमस्तु। अथास्मिन् काले पूर्ववत् उत्तरो रोहिणपुरोडाशो होतव्यः। तस्य सायं प्रातः कालभेदेन यौ मन्त्रौ प्राक् आम्नातौ तौ एव उत्तररोहिणपुरोडाशहोमार्थमपि पुनः पठन्ति। अहः केतुना इति व्याख्यातौ एतौ (अ. ३७।२१)।

**कात्यायनः—"वाजिनवद्भक्षयन्ति मधुहुतमिति"** (अ. २६।६।२०) इति। **'होतरुपह्वयस्व'** इत्यादिना परस्परमुपह्वयन्ते। ते वै प्रवर्ग्यकर्तारः **'मधुहुतम्'** इति मन्त्रेण हुतशेषं घर्मरसं भक्षयेयुः।

तत्पाठस्तु—

मधुंहुतमिन्द्रंतमे अग्ना अश्याम ते देव घर्म नमस्ते अस्तु मा मा हिꣳसीः ॥१६॥

मधु । हुतम् । इन्द्रतमे । अग्नौ । अश्याम । ते । देव । घर्म । नमः । ते । अस्तु । मा । मा । हिंसीः ॥१६॥

इन्द्रः परमेश्वरः, अतिशयेन इन्द्रः इन्द्रतमः, तस्मिन् इन्द्रतमे अग्नौ हुतं देवतार्थत्वेन अस्माभिः त्यक्तम् । हे देव देवनशील घर्म ते तव सम्बन्धि तत् हुतशिष्टं मधु मधुरं घर्मरसशेषम् अश्याम वयमपि प्राशयेम । ते तुभ्यं नमोऽस्तु । मा मां प्रवर्ग्यकर्तारं मा हिंसीः । [—अ० ३८।३।२]

अष्टात्रिंशेऽध्याये तृतीयोऽनुवाकः ।

[ चतुर्थोऽनुवाकः १७ ]

कात्यायनः—"सर्वमासन्द्या करोत्यभीममिति" ( अ. २६।६।२४, २५ )। 'अभीमम्' इति गायत्र्या 'संसीदस्वमहाम्' इति बृहत्या च प्रवर्ग्योपयुक्तं महावीरादिकं सर्वं पात्रम् आसन्द्यां स्थापयेत् इत्यर्थः । तत्र प्रथमा—

अभीमम्महिमा दिवँव्विप्रो बभूव सप्रथाः ।
उत श्रवसा पृथिवीꣳसꣳसीदस्व महाँ२ असि रोचस्व देववीतमः ।
वि धूममग्ने अरुषम्मियेध्य सृज प्रशस्त दर्शतम् ॥१७॥

अभीमम् । महिना । दिवम् । विप्रः । बभूव । सप्रथाः ॥
उत । श्रवसा । पृथिवीम् । सम् । सीदस्व । महान् । असि । रोचस्व । देववीतमः ॥
वि । धूमम् । अग्ने । अरुषम् । मियेध्य । सृज । प्रशस्त । दर्शतम् ॥ १७ ॥

हे प्रवर्ग्य तव महिमा प्रतापः माहात्म्यम् इमं दिवं दृश्यमानम् आकाशम् अभिबभूव स्वकीयेन तेजसा आच्छाद्य तिरस्कृतवान् । कीदृशः ते महिमा । विप्रः मेधावी यद्वा 'प्रा पूरणे' प्राति पूरयति सर्वमिति विप्रः । अत एव सप्रथाः सर्वतः पृथुः अतिशयेन विस्तीर्णः । उत अपि च श्रवसा, श्रूयते इति श्रवः कीर्त्तिः, आत्मसम्बन्धिन्या कीर्त्या पृथिवीं सर्वां भूमिम् अभिबभूव आकाशं ज्वालया व्याप्नोत्, भूमिं च यज्ञजन्येन यशसा व्याप्नोत् इत्यर्थः । संसीदस्वेति । हे अग्ने प्रवर्ग्यात्मक त्वं संसीदस्व आसन्द्याम् उपविष्टः भव । त्वं महान् अधिकः सर्वोत्कृष्टः असि । ततः देववीतमः अतिशयेन देवानां तर्पकः भूत्वा रोचस्व दीप्यस्व । हे मियेध्य, छान्दसः वर्णोपजनः, मेध्य मेधार्हाग्ने अरुषम् आरोचमानं प्रशस्तं पूज्यं दर्शतं दर्शनीयं धूमं विसृज विमुञ्च । [ —अ० ३८।४।१ ]

अष्टात्रिंशेऽध्याये चतुर्थोऽनुवाकः ।

[पञ्चमोऽनुवाकः १८—२५]

प्रवर्ग्योपासने चतुर्गृहीतेन आज्येन तान् शलाकामुष्टीन् आदीप्य आस्यदघ्ननाभिदघ्नजानुदघ्नेषु एतत्प्रमाणेषु आहवनीयस्योपरि धार्यमाणेषु तेषु 'या ते घर्म' इत्यादिभिः त्रिभिः मन्त्रैः क्रमेण जुहोति । तथा च सूत्रम्—"आहवनीये त्रीञ्छालाकान् प्रदीप्य प्रदीप्याग्नीध्रो धारयति शतरुद्रियव-

त्प्रतिलोमं प्रमाणेषु चतुर्गृहीतेनाभिजुहोति या ते धर्म दिव्या शुगिति" ( कात्या. अ. २६।७।४ )। तत्रायं प्रथमो मन्त्रः—

या ते घर्म दि॒व्या शुग्या गा॑यत्र्याᳫं हवि॒र्धाने॑ ।
सा त॒ आप्या॑यता॒न्निष्ट्या॑यता॒न्तस्यै॑ ते॒ स्वाहा॑ ।

या । ते । धर्म । दिव्या । शुक् । या । गायत्र्याम् । हविर्धाने ॥
सा । ते । आप्यायताम् । निष्टयायताम् । तस्यै । ते । स्वाहा ॥

हे धर्म प्रवर्ग्य, ते तव सम्बन्धिनी या दिव्या दिवि भवा द्युलोकप्रतिष्ठा या शुक् दीप्तिः, या च शुक् गायत्र्यां गायत्रीछन्दसि त्वदीया या दीप्तिः वर्तते हविर्धाने हविर्धानाख्ये स्थाने च त्वदीया शुक् ते तव त्वदीया सा आप्यायताम् आप्यायनं करोतु द्युप्रभृतिकं बर्धयतु । माधाक्षीत् इत्यर्थः । तथा निष्टयायताम् नितरां स्त्यायतां संघातभावम् आपाद्यताम् । इतस्ततः प्रसृती सती मा बाधताम् इत्यर्थः । स्त्यै ष्टयै शब्दसंघातयोः इति धातुः । तस्यै तथाविधायै शुचे दीप्त्यै त तुभ्यं स्वाहा सुहुतमस्तु ।

द्वितीयः—

या ते घर्मा॒न्तरि॑क्षे शुग्या त्रि॒ष्टुभ्या॒ग्नी॑ध्रे ।
सा त॒ आप्या॑यता॒न्निष्ट्या॑यता॒न्तस्यै॑ ते॒ स्वाहा॑ ।

या । ते । धर्म । अन्तरिक्षे । शुक् । या । त्रिष्टुभि । आग्नीध्रे ॥
सा । ते । आप्यायताम् । निष्टयायताम् । तस्यै । ते । स्वाहा ॥

हे धर्म प्रवर्ग्य, या ते अन्तरिक्षे अन्तरिक्षलोके वर्तमाना या शुक् दीप्तिः, तथा त्रिष्टुभि त्रिष्टुप्छन्दसि आग्नीध्रे अग्नीध्रमण्डपे त्वदीया दीप्तिः, आप्यायतामित्यादि पूर्ववत् ॥

तृतीयः—

या ते घर्म पृथि॒व्याᳫं शुग्या जग॑त्याᳫं सद॒स्या॑ ।
सा त॒ आप्या॑यता॒न्निष्ट्या॑यता॒न्तस्यै॑ ते॒ स्वाहा॑ ॥१८॥

या । ते । धर्म । पृथिव्याम् । शुक् । या । जगत्याम् । सदस्या ॥
शिष्टं स्पष्टम् ॥१८॥

हे घर्म प्रवर्ग्य, या ते पृथिव्यां भूलोके वर्तमाना शुक् दीप्तिः, तथा जगत्यां जगतीछन्दसि सदस्या सदोगृहे वा या शूक् दीप्तिः, ते तव सा सर्वा दीप्तिः आप्यायताम् इत्यादिपूर्ववत् ॥

( अ० ३८।५।१ )

कात्यायनः—"क्षत्रस्य त्वेति निष्क्रमणम्" ( अ. २६।७।६ ) इति । 'क्षत्रस्य' इति मन्त्रेण प्राग्वंशात् सर्वधर्मोपकरणम् आदाय प्रवर्ग्योद्वासनदेशं प्रति निष्क्रमणं कुर्युः । तत्पाठस्तु—

क्ष॒त्रस्य॑ त्वा पर॒स्पाय॒ ब्रह्म॑णस्त॒न्वं᳖म्पाहि ।
विश॑स्त्वा॒ धर्म॑णा व॒यमनु॑क्रामाम सुवि॒ताय॒ नव्य॑से ॥१९॥

क्षत्रस्य । त्वा । परस्पाय । ब्रह्मणः । तन्वम् । पाहि ॥
विशः । त्वा । धर्मणा । वयम् । अनु । क्रामाम । सुविताय । नव्यसे ॥१९॥

हे वीर, त्वा त्वां क्षत्रस्य क्षत्रियजातेः परस्पाय अतिशयितपालनाय तदर्थम् अनुक्रामाम अनुगच्छेम । "अस्य त्वा मानुषस्य क्षत्रस्य परस्पायत्वाय" (शत. का. १४ । अ. ३ । ब्रा. १ । कं.८) इत्यादि ब्राह्मणम् । स त्वं ब्रह्मणः ब्राह्मणजातेः तन्वं शरीरं पाहि रक्ष । तथा विशः वैश्यजातेः यागोपकरणनिष्पादिकायाः धर्मणा धारणे नियुक्तं त्वां वयम् ऋत्विग्यजमानाः अनुक्रामाम अनुगच्छेम । अथवा "यज्ञो वै विट् । यज्ञस्य त्वाऽरिष्ट्यै" (शत. का. १४ । अ. ३ । ब्रा. १ । कं. ८) इति श्रुतेः विट्पदाभिधेयस्य यज्ञस्य धर्मणा धारणेन अनुष्ठानेन त्वां वयम् अनुगच्छेम । किमर्थम्, सुविताय सुखाय अरिष्ट्यै अहिंसायै इत्यर्थः । कीदृशाय सुविताय, नव्यसे नवीयसे अतिशयेन भिन्नतमाय इत्यर्थः । [—श० ३८।५।२ ]

कात्यायनः—"नाभिस्पृशं प्रवृञ्जनीयं निदधाति चतुः स्रक्तिरिति" ( अ. २६।४।१४ ) इति । उत्तरवेद्या मध्ये या उत्तरनाभिः तत् संस्पृष्टं प्रवृक्तसाधनं प्रथममहावीरं निदधाति इत्यर्थः । तन्मन्त्रपाठस्तु—

चतु॑स्स्रक्ति॒र्नाभि॑र्ऋ॒तस्य॑ स॒प्रथा॒स्स नो॑ वि॒श्वायु॑स्स॒प्रथा॒स्स न॑स्स॒र्वायु॑स्स॒प्रथाः॑ ।
अप॒ द्वेषो॒ अप॒ ह्वरो॒ऽन्यव्र॑तस्य सश्चिम ॥२०॥

चतुःस्रक्तिः । नाभिः । ऋतस्य । सप्रथाः । सः । नः । विश्वायुः । सप्रथाः । सः । नः । सर्वायुः । सप्रथाः ॥
अप । द्वेषः । अप । ह्वरः । अन्यव्रतस्य । सश्चिम ॥२०॥

ऋतस्य यज्ञस्य सम्बन्धिनी या चतुःस्रक्तिः चतुष्कोणा नाभिः उत्तरवेदिमध्ये उत्तरनाभिः इति आख्यायते । हे महावीर, त्वं तस्मिन् स्थाने सप्रथाः सर्वतः विस्तीर्णः भव । अथवा "एष वै चतुः स्रक्तिः । य एष तपति । दिशो ह्येतस्य स्रक्तयः" ( शत. का. १४ । अ. ३ । ब्रा. १ । कं. १७ ) इति श्रुतेः आदित्यात्मना महावीरः स्तूयते । हे महावीर, आदित्यात्मक, त्वं प्रागादिभिः चतसृभिः दिग्भिः चतुः स्रक्तिः चतुष्कोणः असि । ऋतस्य उदकस्य नाभिः बंधकः । सप्रथाः प्रथसा प्रख्यानेन सह वर्तमानः । स त्वं नः अस्माकं विश्वायुः सर्वबलं जीवनं वा यस्य तादृशः भव । सप्रथाः अस्मदर्थया प्रथया प्रसिद्ध्या च युक्तः भव । एतदेव विशदीक्रियते स नः सर्वायुरिति । तथा द्वेषः द्वेष्टॄन् अपगच्छेम अतिक्रामेम । ह्वरः हिंसकान् चौरादीन् अपि अपगच्छेम अतिक्रामेम । अन्यव्रतस्य प्रवृत्तप्रवर्ग्यं परिसमाप्य अन्यव्रतम् अन्यकर्म सश्चिम प्राप्नुयाम । अपद्वेष इत्यत्र अप इति उपसर्गश्रवणात् योग्यक्रियाध्याहारः । अन्यव्रतस्य इति कर्मणि षष्ठी । [—श० ३८।५।३ ]

कात्यायनः—'आसेचनवन्ति पयसः पूरयति धर्मैतत्त इति" ( अ. २६।७।३२ ) इति । यानि प्रवर्ग्यपात्राणि विलम्बितानि तानि अनेन मन्त्रेण पयसा पूरयेत् इत्यर्थः । तत्पाठस्तु—

घर्मै॒तत्ते॒ पुरी॑षन्तेन॒ वर्ध॑स्व॒ चा च॑ प्यायस्व ।
व॒र्धि॒षी॒महि॑ च व॒यमा च॑ प्यासिषीमहि ॥२१॥

धर्म । एतत् । ते । पुरीषम् । तेन । वर्धस्व । च । आ । च । प्यायस्व ॥
वर्धिषीमहि । च । वयम् । आ । च । प्यासिषीमहि ॥ २१ ॥

हे धर्म प्रवर्ग्य एतत् पयः ते तव पुरीषं पूरकं तत् सम्बन्ध्यन्वयानुष्ठानसाधकं यच्छिद्रम् अस्ति तस्य [1]छादकं तेन च पयसा त्वं वर्धस्व । अभिवृद्धः सम्पूर्णावयवः भव । आ च प्यायस्व । च शब्दः भिन्नक्रमः । आप्यायस्व च । ऊर्जितः भव । वयं च त्वत्प्रसादात् वर्धिषीमहि प्रवृद्धाः भवेम । तथा आप्यासिषीमहि आप्यायिताः ऊर्जिताश्च भवेम । [—अ० ३८।५।४ ]

कात्यायनः—"परिषिच्याचिक्रददिति" ( अ. २६।७।१२ ) इति । 'अचिक्रदत्' इति मन्त्रेण उद्वासितं धर्मं परिषिञ्चेत् इत्यर्थः । पाठस्तु—

अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
सꣳसूर्येण दिद्युतदुदधिर्निधिः ॥२२॥

अचिक्रदत् । वृषा । हरिः । महान् । मित्रः । न । दर्शतः ॥
सन् । सूर्येण । दिद्युतत् । उदधिः । निधिः ॥ २२ ॥

वृषा वर्षणशीलः सूर्यात्मना स्थित्वा स्वरश्मिजालैः वृष्टिं कुर्वन् अयं प्रवर्ग्यः अचिक्रदत् क्रन्दनशब्दम् अकरोत् । 'क्रदि' आह्वान इति धातुः । तथा हरिः निदाघसमये रसस्य भूस्थस्य पुनः हर्ता । महानुभावः अयं मित्रः न सूर्यं इव दर्शतः दर्शनीयः प्रेक्षणीयः सन् सूर्येण सह दिद्युतत् संगतः भूत्वा सर्वं जगत् द्योतयति । उदधिः उदकस्य आधारभूतः तथा निधिः सर्वेषामपि धनानमाश्रयभूतः । [—अ० ३८।५।५ ]

कात्यायनः—"चात्वाले मार्जयन्ते सपत्नीकाः सुमित्रिया न इति" ( अ० २६।७।३७ ) इति । पाठस्तु—

सुमित्रिया न आप ओषधयस्सन्तु दुर्मित्रियास्तस्मै सन्तु ।
योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः ॥२३॥

सुमित्रियाः । नः । आपः । ओषधयः । सन्तु । दुर्मित्रियाः । तस्मै । सन्तु ॥
यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः ॥२३॥

व्याख्यातपूर्वः अयम् ( अ० ३६।२४ ) । [ —अ० ३८।५।६ ]

कात्यायनः—"उद्वयमित्युत्क्रामति" ( अ० २६।७।३८ ) इति । मार्जनदेशात् निष्क्रामति इत्यर्थः । पाठस्तु—

उद्वयन्तमसस्परि स्वः पश्यन्त उत्तरम् ।
देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥२४॥

---

१. द्रव्यम् उ. म्यु.

उत् । वयम् । तमसः । परि । स्वः । पश्यन्तः । उत्तरम् ॥
देवम् । देवत्रा । सूर्यम् । अगन्म । ज्योतिः । उत्तमम् ॥ २४ ॥

अन्धकारस्योपरि वर्तमानं सुष्ठु अरणीयम् उत्तरम् उत्कृष्टं ज्योतिः प्रवर्ग्याख्यम् उत्पश्यन्तः वयं देवत्रा देवेषु मध्ये द्योतमानं सूर्याख्यम् उत्कृष्टतमं ज्योतिः प्राप्ताः स्म इति मन्त्रस्य संग्रहार्थः। विस्तरस्तु पूर्वम् उक्तम् । [ —अ० ३८।५।७ ]

कात्यायनः—"एधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति"। ( अ० २६। ७।३६ ) इति—

एधो॑ऽस्येधिषी॒महि॑ । स॒मिद॑सि॒ तेजो॑ऽसि॒ तेजो॒ मयि॑ धेहि ॥२५॥

पदच्छेदः स्पष्टः ॥२५॥

एधोऽस्येधिषीमहीति समिद्ग्रहणमन्त्रः। समिदसि तेजोऽसि तेजो मयि धेहि इति आहवनीयाभ्याधानमन्त्रः । हे समित्, त्वम् एधः वृद्धिहेतुः असि । अतः वयम् अपि त्वया एधिषीमहि वर्द्धेमहि । तथा त्वं समित् समिन्धने साधनम् असि । अत एव त्वं तेजरूपम् एव असि । अतः मयि तेजः धेहि स्थापय । [ —अ० ३८।५।८ ]

अष्टात्रिंशेऽध्याये पञ्चमोऽनुवाकः ।

[ षष्ठोऽनुवाकः २६–२७ ]

कात्यायनः—"यावती द्यावापृथिवी इति दधिघर्मग्रहणम्" ( अ० २६।७।५४ ) इति। सौत्ये अहनि माध्यन्दिसवने अनेन मन्त्रेण दधिघर्माख्यं ग्रहं गृह्णीयात् । तत्पाठस्तु—

याव॑ती॒ द्यावा॑पृथि॒वी याव॑च्च स॒प्त सिन्ध॑वो वितस्थि॒रे ।
ताव॑न्तमिन्द्र ते॒ ग्रह॑मू॒र्जा गृ॑ह्णा॒म्यक्षि॑त॒म्मयि॑ गृह्णा॒म्यक्षि॑तम् ॥२६॥

यावती । द्यावापृथिवी । यावत् । च । सप्त । सिन्धवः । वि । तस्थिरे ॥
तावन्तम् । इन्द्र । ते । ग्रहम् । ऊर्जा । गृह्णामि । अक्षितम् । मयि । गृह्णामि । अक्षितम् ॥ २६ ॥

द्यावापृथिवी द्यावापृथिव्यौ [1]यावन्महिम्ना परिमाणे स्तः सप्त सिन्धवः सप्त संख्याकाः समुद्राश्च यावत् परिमाणा भवन्ति तत्परिमाणाः सन्तः वितस्थिरे विविधम् अवतिष्ठन्ते, तावन्तं तत्परिमाणं हे इन्द्र ते तव ग्रहं दधिघर्माख्यम् ऊर्जा रसेन अक्षितम् अक्षीणं गृह्णामि ग्रहणेन संस्कृ-

१. 'यावता' उ. म्यु. ।

रोमि। अपि च तं ग्रहं मयि आत्मनि अपि अक्षितम् अक्षीणं गृह्णामि अवस्थापयामि।
[—अ० ३८।६।१ ]

कात्यायनः—"मयि त्यदिति भक्षणम्" ( अ० २६।७।५५ ) इति। मयि त्यदिति मन्त्रेण दधिघर्मं हुतशिष्टं भक्षयेत् इत्यर्थः। तत्पाठस्तु—

**मयि॒ त्यदि॑न्द्रि॒यम्बृ॒हन्मयि॒ दक्षो॒ मयि॒ क्रतुः॑।**
**घ॒र्मस्त्रि॒शुग्विरा॑जति वि॒राजा॒ ज्योति॑षा स॒ह ब्रह्म॑णा॒ तेज॑सा स॒ह।**
**पय॑सो॒ रेत॒ आभृ॑त॒न्तस्य॒ दोह॑मशीम॒ह्युत्त॑रामुत्त॒रा॒ᳪ᳭ समा॑म्॥२७॥**

**मयि। त्यत्। इन्द्रियम्। बृहत्। मयि। दक्षः। मयि। क्रतुः॥**
**घर्मः। त्रिशुक्। वि। राजति। विराजा। ज्योतिषा। सह। ब्रह्मणा। तेजसा। सह॥**
**पयसः। रेतः। आ। भृतम्। तस्य। दोहम्। अशीमहि। उत्तराम्। उत्तराम्। समाम्॥२७॥**

त्यत् तत् प्रसिद्धम् इन्द्रियं वीर्यं मयि आत्मनि बृहत् महत् अधिकम् अस्तु। तथा दक्षः, "दक्ष" वृद्धौ, दक्षयतीति दक्षः प्राणवायुः, "प्राणो वै दक्ष" ( तै. सं. २।५।२ ) इति श्रुत्यन्तरम्। मयि प्राणोऽपि नित्यं सन्निहितः भवतु। "अपानः क्रतुः" ( तै० सं० २।५।२ ) इति श्रुतेः क्रतुशब्दः अपानवायुवाचकः। क्रतुश्च मयि सर्वदा वर्तताम्। यद्वा दक्षः दाक्ष्यं मयि भवतु अस्तु। क्रतुः संकल्पः यागो वा मयि भवतु। त्रिषु लोकेषु शोचते दीप्यते इति त्रिशुक् सूर्यात्मकः घर्मः प्रवर्ग्यः विराजति विशेषेण दीप्यते। विराजा विराजमानेन ज्योतिषा सौरेण तेजसा सह तथा ब्रह्मणा परिवृतेन ब्राह्मणजात्यभिमानिना आग्नेयेन तेजसा सह अयं घर्मः विराजति। किंच अस्मिन् घर्मे पयसः आसिक्तस्य क्षीरस्य यद् रेतः सारभूतम् आभृतम् आहृतं तस्य रेतसः सारस्य दोहं प्रपूरणं वयम् अशीमहि प्राप्नुयाम भक्षयाम इत्यर्थः। उत्तरामुत्तरां समाम्। समाशब्दः संवत्सरवचनः। एतस्मिन् संवत्सरे तथा प्रतिसंवत्सरं प्राप्नुयाम॥ [—अ० ३८।६।२ ]

अष्टात्रिंशेऽध्याये षष्ठोऽनुवाकः।

## [ सप्तमोऽनुवाकः २८ ]

कात्यायनः—"त्विषस्संव्वृगिति महाव्रतीये" ( अ. २६।७।५६ ) इति। महाव्रताख्ये यागे अनेन मन्त्रेण दधिघर्मं भक्षयेत्। तत्पाठस्तु—

**त्विष॑स्सं॒व्वृक्क्र॒त्वे दक्ष॑स्य ते सुषु॒म्णस्य॑ ते सुषुम्णाग्निहु॒तः।**
**इन्द्र॑पीतस्य प्र॒जाप॑तिभक्षितस्य॒ मधु॑मत॒ उप॑हूत॒ उप॑हूतस्य भक्षयामि॥२८॥**

**त्विषः। संवृक्। क्रत्वे। दक्षस्य। ते। सुषुम्णस्य। ते। सुषुम्ण। अग्निहुतः॥**
**इन्द्रपीतस्य। प्रजापतिभक्षितस्य। मधुमतः। उपहूतः। उपहूतस्य। भक्षयामि॥२८॥**

हे सुषुम्ण, 'सुम्न' इति सुखनाम। हे शोभन सुखकर दधिघर्म, यः त्वं त्विषः दीप्तेः अन्यदीयस्य तेजसः सम् सम्यग् वर्जयिता असि। तस्य क्रत्वे क्रतोः क्रत्ववयवभूतस्य संकलपात्मकस्य वा दक्षस्य

प्रवृद्धस्य सुषुम्णस्य शोभनसुखस्य अग्निहुतः अग्निहूयमानस्य इन्द्रपीतस्य इन्द्रेण प्रथमं कृतपानस्य ततः प्रजापतिभक्षितस्य महाव्रताख्ये अहनि प्रजापतिः मुख्यदेवता, "प्राजापत्यं तु परं महाव्रतमालभते" इति श्रुत्यन्तरात् । तदभिप्रायेण इदं प्रजापतिभक्षितस्य इति । मधुमतः उपहूतस्य अन्यैः ऋत्विग्भिः कृतोपज्ञानस्य एवं भूतस्य ते तव भागम् अहम् उपहूतः अन्यैः ऋत्विग्भिः अनुज्ञातः सन् भक्षयामि ।
[—अ० ३८।७।१ ]

अष्टात्रिंशेऽध्याये सप्तमोऽनुवाकः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वर-वैदिकमार्गप्रवर्तकवीरवुक्कणभूपालसाम्राज्य-
धुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
काण्वसंहिताभाष्येऽष्टात्रिंशोऽध्यायः ।



# अथ एकोनचत्वारिंशोऽध्यायः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

## [ प्रथमोऽनुवाकः १–१६ ]

एवं प्रवर्ग्य-तदुद्वासनयोः मन्त्राः गताः । अथ धर्मभेदेन प्रायश्चित्तमन्त्रा आम्नायन्ते ।

कात्यायनः—"स्वाहा प्राणेभ्य इति पूर्णाहुतिमाद्यामुत्तमां च मनसः काममाकूतिमिति" ( अ. २६।७।४६ ) इति । 'स्वाहा प्राणेभ्य' इत्यादिभिः यजुर्भिः आज्याहुतीः जुहोति । तत्र प्रथममाम् आहुतिं चतुर्दशीं गृहीत्वा पूर्णाहुतिं जुहोति । अन्तिमां च 'मनसः कामम्' इति मन्त्रेण पूर्णाहुतिं जुहुयात् । तत्पाठस्तु—

**स्वाहा प्राणेभ्यस्साधिपतिकेभ्यः पृथिव्यै स्वाहाग्नये स्वाहान्तरिक्षाय स्वाहा वायवे स्वाहा दिवे स्वाहा सूर्याय स्वाहा ।**
**दिग्भ्यस्स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यस्स्वाहाद्भ्यस्स्वाहा वरुणाय स्वाहा ।**
**नाभ्यै स्वाहा पूताय स्वाहा । वाचे स्वाहा प्राणाय स्वाहा प्राणाय स्वाहा चक्षुषे स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा श्रोत्राय स्वाहा ॥ १ ॥**

**पदच्छेदः स्पष्टः ॥१॥**

प्राणा इन्द्रियाणि, तेषां मनः अधिपतिः । **"मनो वै प्राणानामधिपतिः"** ( श. ब्रा. कां. १४ । अ. ३ । ब्रा. २ । कं. ३ ) इति श्रुतेः । अधिपतिसहितेभ्यः प्राणेभ्यः स्वाहा सुहुतमस्तु । पृथिव्यै भूम्यै, अग्नये अन्तरिक्षाय तदधिपतये, वायवे, दिवे द्युलोकाय, तदधिपाय सूर्याय, दिग्भ्यः प्राच्यादिदिग्भ्यः, तदधिपतये, चन्द्रमसे, तत्परिजनभूतेभ्यः नक्षत्रेभ्यः अद्भ्यः अब्देवताभ्यः, तत्स्वामिने वरुणाय, नाभ्यै अभिषुतस्य सोमस्य शोधनार्थं यद्दशापवित्रं तस्य या नाभिः सोमग्रन्थिप्रदानार्था, उक्तं च **"ताꣳ शकाशे दशापवित्रनाभिः"** इति । तस्यै सोमसम्बन्धिन्यै नाभ्यै, पूताय पवनेन शोधिताय सोमाय, सर्वत्र स्वाहाकारः योज्यः । वाचे अस्या अन्तर्वर्तिने वागिन्द्रियाय, प्राणाय नासिकान्तः संचरते प्राणवायवे, छिद्रद्वयापेक्षया प्राणाय इति द्विरुक्तिः । एवं चक्षुःश्रोत्रयोः अपि गोलकाभिप्रायेण द्विर्वचनम् । चक्षुपे चक्षुरिन्द्रियाय, श्रोत्राय श्रवणेन्द्रियाय । गतमन्यत् ।

[ —अ० ३६।१।१ ]

**इति एकोनचत्वारिंशेऽध्याये प्रथमोऽनुवाकः ।**

## [ द्वितीयोऽनुवाकः २ ]

तथा अन्तिमायाः पूर्णाहुतेः मन्त्रः—

**मन॑सः काम॒मकू॑तिँ॒ वा॒चस्स॒त्यम॑शीय ।**
**प॒शू॒नाꣳ रू॒पमन्न॑स्य र॒सो यशः॒ श्रीः श्र॑यता॒म्मयि॒ स्वाहा॑ ॥ २ ॥**

**मनसः । कामम् । आकूतिम् । वाचः । सत्यम् । अशीय ॥**
**पशूनाम् । रूपम् । अन्नस्य । रसः । यशः । श्रीः । श्रयताम् । मयि । स्वाहा ॥ २ ॥**

मनसः अन्तःकरणस्य कामं कामनाविषयाम् आकूतिम् अभिप्रायविशेषम् अशीय प्राप्नुयाम् । यद्यत् फलं कामयते एवमेव अस्तु इति यत् संकल्प्यते मनसः सम्बन्धि तत्सर्वम् अहं लभेय इत्यर्थः । यथा वाचः वागिन्द्रियस्य अभिवदनव्यवहारम्, यतः सत्यं यथार्थभाषणरूपं प्राप्नुयाम् । किं च पशूनां गवादीनां यद् रूपं स्वरूपं तदपि मयि प्रवर्ग्यकर्तारं श्रयतां भवतु । तथा अन्नस्य यः प्रसिद्धः माधुर्यादिरसः यशः कीर्तिः श्रीः धनधान्यादिसम्पत्, एतत्त्रिनयम् अपि श्रयतां संप्राप्नोतु इत्यर्थः । महावीरस्य संभेदनेन यत् एतेषां वैकल्यं प्राप्तं तत् अनया पूर्णाहुत्या समीहितं भवतु इत्यर्थः । स्वाहा इति पूर्ववत् । एतेषां मन्त्राणां महावीरभेदननिमित्तदोषोपशमनसामर्थ्यं, श्रुत्या "पृथिवी वै सर्वेषां देवानामायतनम्" ( श. १४।३।२।४ ) इत्यादिना विस्तरशः प्रतिपाहितं तत् अनुसन्धेयम् । [ —अ० ३६।२।१ ]

**इति एकोनचत्वारिंशेऽध्याये द्वितीयोऽनुवाकः ।**

## [ तृतीयोऽनुवाकः ३ ]

कात्यायनः—"प्रजापतिः संभ्रियमाण इति यथाकालमिति" ( अ. २६।७।५० ) । सम्भरणाद्यवस्थाविशेषेषु तत्तदवस्थावन्महावीरप्रतिपादकाः "प्रजापतिः सम्भ्रियमाण" इत्याद्याः मन्त्राः प्रयोज्याः । तत्पाठस्तु—

**प्र॒जाप॑तिस्सम्भ्रि॒यमा॑णस्स॒म्राट् सम्भृ॑तो वैश्वदे॒वस्सꣳस॒न्नो घ॒र्मः प्रवृ॑क्त॒स्तेज॒ उद्य॑त आश्वि॒नः पय॑स्यानी॒यमा॑ने पू॒षा विष्य॒न्दमा॑ने मारु॒तः क्वथ॑न् ।**
**मै॒त्रश्शर॑सि सन्ता॒य्यमा॑ने वाय॒व्यो॑ ह्रि॒यमा॑ण आग्ने॒यो हू॒यमा॑नो॒ वाग्घु॒तः ॥ ३ ॥**

**प्रजापतिः । सम्भ्रियमाणः । सम्राट् । सम्भृतः । वैश्वदेवः । सम् । सन्नः । धर्मः । प्रवृक्तः । तेजः । उद्यतः । आश्विनः । पयसि । आनीयमाने । पूषा । विष्यन्दमाने । मारुतः । क्वथन् ॥**
**मैत्रः । शरसि । सन्ताय्यमाने । वायव्यः । ह्रियमाणः । आग्नेयः । हूयमानः । वाग्घुतः ॥ ३ ॥**

सम्भ्रियमाणः मृद्वल्मीकवराहविहतादिसम्भारैः निष्पद्यमानः महावीरः प्रजापतिः प्राजापत्यात्मकः प्रजापतिना अधिष्ठितः भवति इत्यर्थः । सम्भृतः यदा सम्भारैः निष्पन्नः लब्धात्मकः भवति तदा सः महावीरः सम्राट् सम्यग् भ्राजमानः सम्राजात्मकः भवति इत्यर्थः । यदा खलु सम्पन्नः सम्भरणोत्तरकालं प्रवृञ्जनात् प्राक् सन्नः आसादितः भवति तदा सः महावीरः वैश्वदेवः विश्वदेव-

सम्बन्धी, यदा महावीरः प्रवृक्तः गार्हपत्यस्य उत्तरतः चरेत् प्रवृञ्जनेन संस्कृतः तदा धर्मः धर्मशब्दाभिधेयः सूर्यात्मक इत्यर्थः। यदा खलु उद्यतः शफाभ्याम् ऊर्द्ध्वम् आधृतः तदा तेजः तेजोरूपः। पयसि महावीरे आनीयमाने सति आश्विनः अश्विसम्बन्धी, आनीते पयसि विष्यन्दमाने उपरि उद्गच्छति स महावीरः पूषा पूषदेवतात्मकः, यदा क्वथन्, क्वथनं ज्वालाभिमानं तेन प्रक्षिप्तः भवति तदा [1]वाक् वागात्मकः। [—अ० ३९।३।१]

इति एकोनचत्वारिंशेऽध्याये तृतीयोऽनुवाकः।

## [ चतुर्थोऽनुवाकः ४ ]

कात्यायनः—"सविता प्रथमेऽहन्निति च प्रत्यहमिति" (अ० २६।७।५१)। एकाहे सूपसदां हुतत्वात् प्रवर्ग्यस्य अपि दिवसत्रये एव अनुष्ठानं, साग्निचित्येषु [2]षड्दिवसेषु अहीनाहर्गणेषु सर्वत्र द्वादशोपसद इति द्वादशदिवसेषु प्रवर्ग्यानुष्ठानरूपेषु[3] प्रतिदिवसं महावीरस्य देवताविशेषसम्बन्धिप्रतिपादकाः मन्त्राः एते। तत्पाठस्तु—

**स॒वि॒ता प्र॑थ॒मेऽह॑न्न॒ग्निर्द्वि॒तीये॑ वा॒युस्तृ॒तीय॑ आदि॒त्यश्च॑तु॒र्थे च॒न्द्रमाः॑ पञ्च॒म ऋ॒तुः ष॒ष्ठे म॒रुतः॑ सप्त॒मे बृह॒स्पति॑रष्ट॒मे मि॒त्रो न॑व॒मे वरु॑णो दश॒म इन्द्र॑ एकाद॒शे विश्वे॑दे॒वा द्वा॑द॒शे ॥ ४ ॥**

पदच्छेदः स्पष्टः ॥ ४ ॥

प्रथमेऽहन् प्रथमदिवसे स महावीरः सविता सवितृदेवतात्मकः, द्वितीयेऽहनि अग्निः अग्न्यात्मकः, तथा तृतीये वाय्वात्मकः, चतुर्थे तु आदित्यात्मकः, पञ्चमे चन्द्रमा अधिष्ठितः, षष्ठे वसन्ताद्यात्मकः, सप्तमे मरुद्गणात्मकः, अष्टमे बृहस्पतिः, नवमे मित्रः, दशमे वरुणः, एकादशे इन्द्रः द्वादशे विश्वेदेवा इत्याद्यात्मकः। एवम् एतेषु दिवसेषु क्रमेण प्रवर्ग्यः सवित्रादिदेवताधिष्ठित इत्यर्थः। [—अ० ३९।४।१]

इति एकोनचत्वारिंशेऽध्याये चतुर्थोऽनुवाकः।

## [ पञ्चमोऽनुवाकः ५ ]

"हस्तेन मारुतान् जुहोति शुक्रज्योतिरिति प्रतिमन्त्रम्" (कात्या. अ. १८।४।२३) इति। अग्निचयने यत् सूत्रकृता उक्त तत्र "उग्रश्च" इति ऋचः एको मन्त्रः आरण्ये ध्येयत्वसामान्यात् अत्र आम्नातः। तत्पाठस्तु—

**उ॒ग्रश्च॑ भी॒मश्च॒ ध्वान्त॑श्च॒ धुनि॑श्च।**
**सा॒स॒ह्वाँश्चा॑भियु॒ग्वा च॑ वि॒क्षिप॒स्स्वाहा॑ ॥ ५ ॥**

---

१. अवशिष्टभाष्यांशः नोपलभ्यते।

२. 'पर' उ. म्यु.। ३. 'भूतेषु' उ. म्यु.।

उग्रः । च । भीमः । च । ध्वान्तः । च । धुनिः । च ॥
सासह्वान् । च । अभियुग्वा । च । विक्षिपः । स्वाहा ॥ ५ ॥

उग्रः उद्गूर्णः, भीमः भयङ्करः, ध्वान्तः अन्धकारसदृशः, धुनिः कम्पयिता, सासह्वान् असत्यार्थानाम् अभिभविता, अभियुग्वा अभियोगशीलः, विक्षिपः विक्षेपणकारी, परस्परसमुच्चयार्थाः चकाराः । उग्रादीनि च सप्तानां मरुतां नामानि । अयम् एकः मरुद्गणः । तस्मै स्वाहा सुहुतमस्तु ।

[ —अ० ३९।५।१ ]

इति एकोनचत्वारिंशेऽध्याये पञ्चमोऽनुवाकः ।

[ षष्ठोऽनुवाकः ६ ]

अतः परम् अध्यायपरिसमाप्तेः आश्वमेधिकाः मन्त्राः आरण्ये ध्येयत्वसामान्यात् तत्र आम्नाताः । तत्र द्वाभ्यां कण्डिकाभ्यां 'शादं दद्भिः' इत्यादिवत् अश्वावयवविशेषाणां देवतासम्बन्धः प्रतिपाद्यते । तत्पाठस्तु—

**अ॒ग्निꣳ हृद॑येना॒शनि॑ꣳ हृद॒याग्रे॑ण पशु॒पति॑ङ्कृत्स्न॒हृद॑येन भ॒वँय्य॒क्ना ।**
**श॒र्वम्म॑त॒स्नाभ्या॒मीशा॑नम्म॒न्युना॑ महादे॒वम॑न्तः पर्श॒व्येनो॒ग्रन्दे॒वँव्व॑नि॒ष्ठुना॑ वसिष्ठ॒हनु॒ꣳशिङ्गी॑नि को॒श्याभ्या॑म् ॥ ६ ॥**

अग्निम् । हृदयेन । अशनिम् । हृदयाग्रेण । पशुपतिम् । कृत्स्नहृदयेन । भवम् । यक्ना ॥
शर्वम् । मतस्नाभ्याम् । ईशानम् । मन्युना । महादेवम् । अन्तःपर्शव्येन । उग्रम् । देवम् । वनिष्ठुना । वसिष्ठहनुः । शिङ्गीनि । कोश्याभ्याम् ॥ ६ ॥

अग्निं देवं हृदयेन अश्वसम्बन्धिना हृदयाख्येन अवयवेन तोषयामि । अशनिम् अशनिरूपां देवतां हृदयाग्रेण हृदयस्य अग्रदेशेन प्रीणयामीति सर्वत्र सम्बन्धः । पशूनां पतिं पालकं देवं कृत्स्नहृदयेन सकलेन हृदयेन प्रीणयामि । यक्ना, यकृत् नाम पशोः हृदयसमीपवर्त्ती कालमांसखण्डः, तेन भवं भवाख्यम् । "पद्दन्न" इति (पा. सू. अ. ६।१।६३) तृतीयैकवचने यकृच्छब्दस्य यकन्नादेशः । शर्वं देवं मतस्नाभ्याम्, मतस्नौ पार्श्वयोः वर्तमानावयवविशेषौ, ताभ्याम् । ईशानं मन्युना आश्वेन क्रोधेन, महादेवम् अन्तःपर्शव्येन, पर्शवः पार्श्वास्थीनि, तेषु अन्तर्वर्तमानम् अन्तःपर्शव्यम्; तेन । देवं द्योतमानम् उग्रं वनिष्ठुना स्थविरान्त्रेण, वसिष्ठहनुः, अतिशयेन वासयिता वसिष्ठः, तद्हननशीलः, तेन, शिङ्गीनि, कोश्यौ इति अवयवविशेषौ ताभ्यां प्रीणयामीति सर्वत्र ।

[ —अ० ३९:६।१ ]

इति एकोनचत्वारिंशेऽध्याये षष्ठोऽनुवाकः ।

[ सप्तमोऽनुवाकः ७ ]

द्वितीयो मन्त्रः—

उग्रँल्लोहितेन मित्रꣳ सौव्रत्येन रुद्रन्दौर्व्रत्येनेन्द्रम्प्रक्रीळेन मरुतो बलेन साध्यान्प्रमुदा ।

भवस्य कण्ठ्यꣳ रुद्रस्यान्तःपार्श्व्यम्महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत् ॥ ७ ॥

उग्रम् । लोहितेन । मित्रम् । सौव्रत्येन । रुद्रम् । दौर्व्रत्येन । इन्द्रम् । प्रक्रीडेन । मरुतः । बलेन । साध्यान् । प्रमुदा ॥

भवस्य । कण्ठचम् । रुद्रस्य । अन्तःपार्श्व्यम् । महादेवस्य । यकृत् । शर्वस्य । वनिष्ठुः । पशुपतेः । पुरीतत् ॥ ७ ॥

उग्रम् उग्राख्यं देवम् अप्सम्बन्धिना लोहितेन रुधिरेण, मित्रं मित्राख्यं सर्वस्य अनुकूलं सुव्रतस्य भावः सौव्रत्यं तेन, तथा दुर्व्रतस्य भावः दौर्व्रत्यं तेन रुद्रं देवम्, प्रकीडेन प्रक्रीडनम् अश्वस्य विहारः तेन इन्द्रम्, मरुतः मरुत्संज्ञकान् देवान् अश्वसम्बन्धिना बलेन प्रीणयामि । साध्यान् देवगणान् प्रकृष्टा मुत् प्रमुत्, तया प्रीणयामीति सर्वत्र । कण्ठचं कण्ठे भवं पिशितम् भवस्य सम्बन्धि तेन भवं प्रीणयामीत्यर्थः । अन्तपार्श्व्यम्, पशूनाम् अन्तर्भवं मांसजातं रुद्रस्य सम्बन्धि । महादेवस्य सम्बन्धि यकृत् । शर्वस्य सम्बन्धी वनिष्ठुः । पशुपतेः भवस्य पुरीतत् हृदयपुण्डरीकम् ।

[—अ० ३९।७।१]

इति एकोनचत्वारिंशेऽध्याये सप्तमोऽनुवाकः ।

[ अष्टमोऽनुवाकः ८ ]

एवम् अश्वावयवानां देवतासम्बन्धप्रतिपादकहोममन्त्राः गताः । इदानीम् अस्मिन् एवाश्वमेधे प्रायश्चित्तहोममन्त्राः आम्नायन्ते । तत्र लोमाद्यश्वावयवाभिमानिदेवत्यहोममन्त्रान् आह—

लोमभ्यस्स्वाहा लोमभ्यस्स्वाहा त्वचे स्वाहा त्वचे स्वाहा लोहिताय स्वाहा लोहिताय स्वाहा मेदसे स्वाहा मेदसे स्वाहा ।

माꣳसेभ्यस्स्वाहा माꣳसेभ्यस्स्वाहा स्नावभ्यस्स्वाहा स्नावभ्यस्स्वाहास्थभ्यस्स्वाहास्थभ्यस्स्वाहा मज्जभ्यस्स्वाहा मज्जभ्यस्स्वाहा रेतसे स्वाहा पायवे स्वाहा ॥ ८ ॥

पदच्छेदः स्पष्टः ॥ ८ ॥

लोमानि रोमाणि तेभ्यः अश्वसम्बन्धिभ्यः, तदभिमानिदेवतायै स्वाहा सुहुतमस्तु । सर्वेषां सकलावयवव्यापिनां रोम्णां परिग्रहार्थं द्विरुक्तिः । एवम् उत्तरत्रापि । त्वचे अश्वसम्बन्धि चर्मा-

भिमानिदेवतायै। लोहिताय त्वचान्तर्वर्त्तिने रुधिराय। मेदसे रुधिरान्तर्वर्त्तिमांसच्छादकः धातुः मेदः, तस्मै मेदसे। मेदसोऽन्तर्वर्त्तीनि मांसानि, तेभ्यः, स्नावभ्यः, मांसान्तर्वर्त्तिनः शिराविशेषाः स्नायवः, तेभ्यः। स्नाय्वन्तर्वर्त्तीनि अस्थीनि, तेभ्यः अस्थिभ्यः। अस्थ्नाम् अन्तर्गता मज्जानः तेभ्यः इत्यन्तं द्विरुक्तिः। रेतसे, ततोऽपि अन्तर्वर्त्ती धातुः शुक्रम्, तस्मै। अश्वसम्बन्धि गुदं पायुः, तस्मै। एवम् अश्वाभिमानिदेवानां होममन्त्रा उक्ताः। [—अ० ३९।८।१]

इति एकोनचत्वारिंशेऽध्यायेऽष्टमोऽनुवाकः।

[ नवमोऽनुवाकः ९–१० ]

अथ तद्व्याप्याभिमानिदेवानां होममन्त्रान् आह—

**आ॒या॒साय॒ स्वाहा॑ प्रा॒या॒साय॒ स्वाहा॑ सँय्या॒साय॒ स्वाहा॑ वि॒या॒साय॒ स्वाहो-**
**द्या॒साय॒ स्वाहा॑।**
**शु॒चे स्वाहा॒ शोच॑ते॒ स्वाहा॒ शोका॑य॒ स्वाहा॑।**
**तप॑से॒ स्वाहा॒ तप्य॑माना॒य॒ स्वाहा॑ त॒प्ता॒य॒ स्वाहा॑।**
**निष्कृ॑त्यै॒ स्वाहा॒ प्राय॑श्चित्त्यै॒ स्वाहा॑ भेष॒जा॒य॒ स्वाहा॑ ॥ ९ ॥**

पदच्छेदः स्पष्टः ॥ ९ ॥

आयासः श्रमः तस्मै अश्वसम्बन्धिने स्वाहा सुहुतमस्तु। प्रकृष्टः आयासः प्रायासः। संयासः, 'यसु प्रयत्ने' इत्यस्मात् समुपसृष्टात् धातोः घञ्। संयासः संयसनं सम्यक् प्रयत्नः तस्मै। विविधं यसनं वियासः तस्मै। उत्कटम् उद्यसनम् उद्यासः तस्मै। शुचे शोचनाय, शोचते शोचनं कुर्वते। शोकाय संज्ञपनजन्याय अन्तस्तापाय, तपसे तापेन विषयीक्रियमाणाय, तप्यमानाय सन्तप्यमानाय, तप्ताय सन्तापेन विषयीक्रियमाणाय। निःशेषेण करणं समापनं निष्कृतिः, तस्यै। प्रायः वैकल्यं, तस्य चित्तिः समाधानं तस्यै प्रायश्चित्त्यै। अयथावत् अनुष्ठानरूपस्य दोषस्य चिकित्सा भेषजम्, तस्मै। स्वाहाकारः सर्वत्र पूर्ववत्। [—अ० ३९।९।१]

दोषपरिपाकरूपस्य दुःखस्य कर्तॄन् देवविशेषान् उद्दिश्य होममन्त्रानाह—

**य॒माय॒ स्वाहान्त॑काय॒ स्वाहा॑ मृ॒त्यवे॒ स्वाहा॑।**
**ब्र॒ह्म॒हत्या॑यै॒ स्वाहा॒ विश्वे॑भ्यो दे॒वेभ्य॒स्स्वाहा॒ द्यावा॑पृथि॒वीभ्या॒ꣳ स्वाहा॑ ॥ १० ॥**

पदच्छेदः स्पष्टः ॥ १० ॥

यच्छतीति यमः वैवस्वतः, तस्मै। अन्तकाय विनाशकारिणे, मृत्यवे मारयित्रे, ब्रह्महत्यायै ब्रह्महननरूपायै क्रियायै, विश्वेभ्यः देवेभ्यः। किमनया कतिपयानां देवानां परिगणनया, सर्वेभ्यः

देवेभ्यः स्वाहा सुहुतम् इदम् अस्तु इति सर्वत्र योजना। सर्वेषां देवानाम् आवासभूते द्यावापृथिव्यौ, ताभ्यां स्वाहा सुहुतम् इदम् अस्तु। [—अ० ३९।९।२]

इति एकोनचत्वारिंशोऽध्याये नवमोऽनुवाकः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्तक-वीरबुक्कणभूपालसाम्राज्य-
धुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
काण्वसंहिताभाष्ये एकोनचत्वारिंशोऽध्यायः।



# अथ चत्वारिंशोऽध्यायः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

## [ प्रथमोऽनुवाकः १–१८ ]

इत्थं दर्शपूर्णमासस्य प्रवर्ग्यान्तेषु कर्मसु विनियुक्ताः 'इषे त्वा' इत्यादयः मन्त्राः गताः । एतावत् कर्मकाण्डं परिसमाप्तम् । अथ 'ईशा वास्यम्' इत्यादि ज्ञानकाण्डम् । न च तत् कर्मशेषताप्रतिपादकम्, श्रुतिलिङ्गादिप्रमाणाभावात् । न च वाच्यं कर्मणः कर्तृसाकाङ्क्षत्वात् तदपेक्षितः कर्ता ज्ञानकाण्डेन प्रतिपाद्यते । अतः वाक्यप्रकरणादिना कर्मगता इति । शुद्धत्वात्, पापाविद्धत्वैकत्वाशरीरत्वस्य सर्वगतत्वादिलक्षणस्य उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गस्य वक्ष्यमाणस्य आत्मयाथात्म्यस्य कर्मविरोधित्वात् तत्प्रतिपादकानां मन्त्राणां कुतः कर्मानुप्रवेशः । अपि च कर्मकाण्डफलं चतुर्विधम्—उत्पत्ति-विकार-प्राप्ति-संस्कारलक्षणम् । न खलु तत् नित्ये कूटस्थे नित्यप्राप्ते अनाधेयातिशये स्वप्रकाशे चिदात्मनि सम्भवति । येन कर्मजन्यफलपाकेन कर्मशेषता स्यात् ।

ननु एवम् आत्मनः ईदृग्रूपत्वात् कर्तृत्वाभावात् अप्रामाण्यम् एव कर्मकाण्डस्य आपतेत् इति चेन् मैवम् । लोके बुद्धिसिद्धम् आत्मनः अनेकत्व-कर्तृत्व-भोक्तृत्वाशुद्धत्वपापविद्धत्वादिकम् उपादाय कर्मणां प्रवृत्तिसिद्धेः । ननु अध्ययनपरिगृहीतत्वात् ज्ञानकाण्डस्यापि फलवत्त्वेन भवितव्यम् । यच्च फलवत् तत् कर्मशेषत्वेन कल्प्यते नान्यथा इति चेन्न । साधनचतुष्टयसम्पन्नस्य मुमुक्षोः आत्मयाथात्म्यदर्शनेन, आत्मनि स्वभावसिद्धम् अज्ञानं निवर्तयता शोकमोहादिसकलानर्थहेतुभूतसंसारविच्छित्तिलक्षणस्य प्रतिपादनात् । अतः साधनचतुष्टयसम्पन्नस्य विशिष्टाधिकारिणः मुमुक्षोः अनुकूललक्षणात्मयाथात्म्यप्रतिपत्तये 'ईशा वास्यम्' इत्यादिमन्त्रोपनिषत् आम्नायते । सा च भगवद्भिः शारीरकमीमांसाभाष्यकृद्भिः आचार्य्यैः विस्तरशः व्याख्याता । तदनुसारेण अस्माभिः अपि संग्रहेण व्याख्यास्यते । तत्र तावत् इह जन्मनि जन्मान्तरे वा अनुष्ठितैः नित्यनैमित्तिकलक्षणैः यज्ञदानादिकर्मादिभिः उत्पन्नापूर्वविशेषस्य पुंसः पुत्राद्यध्येषणात्रयसन्न्यासेन आत्मज्ञाननिष्ठतया आत्मा रक्षितव्य इति अमुमर्थमाह—

ई॒शा वा॒स्य॑मि॒दꣳ सर्वं॒ यत्किञ्च॒ जग॑त्यां॒ जग॑त् ।
तेन॑ त्य॒क्तेन॑ भुञ्जीथा॒ मा गृ॑धः॒ कस्य॑ स्वि॒द्धन॑म् ॥ १ ॥

ईशा । वास्यम् । इदम् । सर्वम् । यत् । किम् । च । जगत्याम् । जगत् ॥
तेन । त्यक्तेन । भुञ्जीथाः । मा । गृधः । कस्य । स्वित् । धनम् ॥ १ ॥

ईशा, ईष्टे इति ईट्, ईशिता परमेश्वरः परमात्मा, स खलु सर्वस्य ईष्टे। तेन ईशा ईश्वरेण सत्यभूतेन परमात्मना इदं पराक् प्रत्यक्षविषयभूतं सर्वं जगत् नामरूपक्रियात्मकम् अनृतं वास्यम् आच्छादनीयम्। इदमित्युक्तं किमिति तदाह यत् किं चेति। यत् किं च जगत्याम् इतिं उपलक्षणम्। जगत्यां पृथिव्यां पृथिव्युपलक्षितं सर्वत्र यत् किंचिदपि जगत् स्थावरजङ्गमात्मकं विकारजातम् अस्ति इदं सर्वं कारणभूतेन परमार्थसत्येन अर्थस्वरूपेण आच्छाद्य कार्यप्रपञ्चस्य मिथ्यात्वम् अधिगम्य निष्प्रपञ्चितमेव परमात्मानं स्वात्मतया साक्षात् कुर्यात् इत्यर्थः। एवंविधात्मस्वरूपनिश्चयः पुत्राद्येषणात्रयविहीनस्य एव सम्भवति इति अभिप्रेत्य आह तेनेति। त्यजेः भावे निष्ठा। यः अयं नामरूपक्रियात्मकः अध्यस्तः प्रपञ्चः सः अधिष्ठानभूतस्य परमात्मनः यथास्वावगमात् मिथ्याभूततया त्यक्तव्यः। तेन त्यक्तेन अनात्मप्रपञ्चविषयेण त्यागेन भुञ्जीथाः हे मुमुक्षो त्वम् आत्मानं पालयेथाः। एषणात्रयसन्न्यासेन आत्मरक्षां कुरु इत्यर्थः। एवं त्यक्तैषणः त्वं कस्यस्वित् कस्यचिदपि परस्य धनं मा गृधः माभिकाङ्क्षीः। 'गृधु अभिकाङ्क्षायाम्' परस्वविषयाम् आकाङ्क्षां मा कृथाः। यद् वा, आक्षेपे किम् शब्दः। धनं मा गृधः धनविषयाम् आशाम् मा कार्षीः। कस्य स्वित् कस्य खलु तद् धनं न कस्यचिदपि। 'आत्मैवेदं सर्वम्', 'इदं सर्वं यदयमात्मैव' ( बृह० २।४।६ ) इति एवंविधात्मभावनया युक्तस्य स्वव्यतिरिक्तस्यापि अभावात्। मिथ्याप्रतिभासमानधनविषयाकाङ्क्षा न युक्ता इति भावः। [—अ० ४०।१।१]

अथ उक्तार्थे ग्रहणाशक्तस्य असंस्कृतचित्तस्य कर्मठस्य उपदिशति—

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः।**
**एवन्त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥ २॥**

**कुर्वन्। एव। इह। कर्माणि। जिजीविषेत्। शतम्। समाः॥**
**एवम्। त्वयि। न। अन्यथा। इतः। अस्ति। न। कर्म। लिप्यते। नरे॥ २॥**

कर्माणि अग्निहोत्रादीनि कुर्वन् एव निर्वर्त्तयन् एव शतं समाः शतसंख्याकान् संवत्सरान्, एतावत् इति मनुष्याणां विधात्रा औचित्येन परिकल्पितम् आयुः, तावत् पर्यन्तं जिजीविषेत् जीवितुम् इच्छेत्। अत्र यथाप्राप्तानुवादेन यत् जिजीविषेत् शतं वर्षाणि तत् कुर्वन् एव कर्माणि इति एतद् विधीयते। एवम् अनेन प्रकारेण जिजीविषति नरे नरमात्राभिमानिनि मनुष्यत्वादिसकलसांसारिकधर्मविहीनम् अद्वयम् आत्मतत्त्वम् अजानाने त्वयि इतः एतस्मात् अग्निहोत्रकर्मादिनिर्वर्त्तनात् अन्यथा प्रकारान्तरं नास्ति। येन प्रकारान्तरेण पापकर्म न लिप्यते पापसंस्पर्शः त्वयि न भवति इत्यर्थः। तत् प्रकारान्तरं नास्तीति सम्बन्धः। यस्मात् एवं तस्मात् शास्त्रविहितानि अग्निहोत्रादीनि कर्माणि सर्वदा कुर्वन् एव जिजीविषेत्। ननु पूर्वेण मन्त्रेण आत्मज्ञानम्, अनेन तु कर्म इत्युभयोः समुच्चितयोरेव पुरुषार्थसाधनत्वप्रतीतौ सत्यां मुमुक्षोः ज्ञानार्थिनः तदन्यस्य कर्मठस्य च इति व्यवस्थोक्तिः मापद्यत इति चेत् न। ज्ञानकर्मणोः विरोधात्। तथा हि कर्माणि तावत् कर्तारम् आत्मानम् अपेक्षन्ते। तेन त्यक्तेन इत्यादिना कर्तृत्वभोक्तृत्वादिप्रमुखस्यं त्यागानुवादेन सद्यः संस्पृष्टं सच्चिदानन्दात्मकम् अद्वितीयम् आत्मतत्त्वं पालनीयम् इति उपदिश्यते। अतः एवंविधात्मज्ञानं कर्मणा सम्बन्धं नार्हति। प्रत्युत कर्तृत्वादिप्रविलायनेन तं निरुणद्धि। अतः ज्ञानकर्मणोः समुच्च-

यांशः दूरापास्त इति उक्तैव व्यवस्था युक्ता। अतः ज्ञानकर्मणोः उभयोः पृथक् फलम् आम्नायते— "इमौ द्वावेव पन्थानौ अनुनिष्क्रान्ततरौ भवतः। क्रियापथश्चैव पुरस्तात् संन्यासश्चोत्तरेण। तयोः सन्न्यासपथ एवातिरेचयति"। तैत्तिरीयके च "कर्माणि प्रयुतानि वा एतान्यवराणि तमांꣳसि संन्यास एवातिरेचयतीति"। कर्मणां विप्रकृष्टफलत्वं ज्ञानमार्गस्य अतिशयितफलत्वं च आम्नातम्। तथा भगवता व्यासेनापि स्मृतम्—

"द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः।
प्रवृत्तिलक्षणो धर्मो निवृत्तौ च विभाषितः॥

इति। इहापि उत्तरत्र अनयोः मार्गयोः विभागः दर्शयिष्यते। [—अ० ४०।१।२ ]

एवम् आत्मतत्त्वग्रहणाशक्तानां पुरुषार्थसाधनकर्ममार्गम् उद्दिश्य, अथ ये कर्ममार्गाः त एव श्रेयः साधनं नान्यत् इति विपर्यासितमतयः ये तान् निन्दति—

**असुर्या नाम ते लोका अन्धेन तमसावृताः।**
**ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥ ३॥**

पदच्छेदः स्पष्टः॥ ३॥

परमात्मभावम् अद्वयम् अपे देवादयः असुराः, तेषां स्वभूता असुर्याः। नामशब्दः प्रसिद्धौ। लोक्यन्ते दृश्यन्ते भुज्यन्ते एषु इति लोकाः, देवादिजन्मानि। एवं विधाः प्रसिद्धा असुर्या लोकाः। अन्धेन आत्मतत्त्वादर्शनात्मकेन तमसा अज्ञानेन आवृताः तथाविधान् लोकान् ते मूढाः प्रेत्य वर्तमान-देहं त्यक्त्वा अभिगच्छन्ति प्राप्नुवन्ति। स्वस्वपुण्यपापपरीपाकवशात् देवमनुष्यादिरूपां विविधां योनिम् आपद्यन्ते। के पुनः ते इति तान् आह ये के च इति। आत्मानं हन्तीति आत्महन्। सकल-संसारदुःखविहीने निरतिशयानन्दस्वप्रकाशचिदात्मके आत्मतत्त्वे कर्तृत्वभोक्तृत्वादिसकलदुःख-निवहस्य आरोप एव आत्महननम्। ये के च जनाः आत्महनः उक्तलक्षणात्मतत्त्वानभिज्ञाः ते तान् असुर्यान् गच्छन्ति, न कदाचित् तेषां मुक्तिशङ्का इत्यभिप्रायः। [—अ० ४०।१।३]

किं तत् आत्मतत्त्वम्? यस्य हननात् अविद्वांसः आसुरीं योनिमापद्यन्ते, तद्विपर्ययेण विद्-वांसः मुच्यन्ते इति तदाह—

**अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्शत्।**
**तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति॥ ४॥**

अनेजत्। एकम्। मनसः। जवीयः। न। एनत्। देवाः। आप्नुवन्। पूर्वम्। अर्शत्॥
तत्। धावतः। अन्यान्। अति। तिष्ठत्। तस्मिन्। अपः। मातरिश्वा। दधाति॥ ४॥

**'एजृ कम्पने'**, न एजत् अनेजत्। एजनं कम्पनं स्वावस्थाप्रच्युतिः, तद्वर्जितं सर्वदा एकम् एकरूपमित्यर्थः। तच्च आत्मतत्त्वम् एकमेव सर्वेषु भूतेषु। **"एको देवः सर्वभूतेषु गूढः"** ( श्वेताश्व. उ., अ. ६।११ ) इति श्रुतेः। मनसः संकल्पलक्षणात् जवीयः, जवनं वेगः तद्वत्। ननु इदं विरुद्धमभिधीयते, अनेजन्मनसो जवीय इति च, इति चेत् नैष दोषः। निरुपाध्युपाधिमत्त्वोपपत्तेः। अत्र निरुपाधिकेन स्वेन रूपेण उच्यते अनेजत् एकमिति। मनसः अन्तःकरणस्य संकल्पविकल्पलक्षणस्य उपाधेः अनुवर्तनात् तदपेक्षया जवीय इति अभिहितम्। मनसो वा कुतो वा इत्युच्यते। यद्यपि इहैव देहे मनः तिष्ठति तथापि ब्रह्मलोकादिदूरस्थसंकल्पनं क्षणमात्रेण करोति। अतः लोके मनसः वेगवत्त्वं प्रसिद्धम्। तस्मिन् मनसि ब्रह्मलोकादीन् गच्छति सति प्रथमप्राप्त इव चैतन्यावभासः गृह्यते। अतः **'मनसो जवीय'** इति औपाधिकः उपचारप्रयोगः। अत एव एनत् एतदात्मतत्त्वं देवाः द्योतनशीलाः चक्षुरादीन्द्रियाणि न आप्नुवन् न प्राप्नुवन्तः। तेभ्यः मनो जवीयः, ततोऽपि आत्मतत्त्वस्य जवीयस्त्वात् कथं तद्विषयता इत्यर्थः। कुत इत्यत आह। यस्मात् मनसोऽपि पूर्वम् अर्षत् पूर्वमेव गतम्। व्योमवद् व्यापितत्वात्। सर्वथा इदमात्मतत्त्वं सर्वसंसारधर्मवर्जितं स्वेन निरुपाधिकेन रूपेण अविक्रियमेव सत्, उपाधिकृताः सर्वाः संसारविक्रिया अनुभवतीव अविवेकिनां मूढानाम् अनेकमिव प्रतिदेहं प्रत्यवभासते इति एतदाह—तद्धावत इति। धावतः द्रुतं गच्छतः अन्यान् आत्मविलक्षणान् मनोवागिन्द्रियप्रभृतीन् तत् आत्मतत्त्वम् अत्येति अतीत्य गच्छतीति। अत्येति च शब्दे न अस्तीति कथं तदर्थलाभ इति तदाह तिष्ठदिति। स्वयम् अविक्रियमेव सत् सर्वस्य प्रपञ्चाधिष्ठानत्वेन स्थितमित्यर्थः। तस्मिन् तथाविधे आत्मतत्त्वे नित्यचैतन्यस्वभावे मातरिश्वा मातरि अन्तरिक्षे श्वसिति इति वायुः सर्वप्राणभृत् क्रियात्मकः। यदाश्रयाणि करणजातानि यस्मिन् ओतानि प्रोतानि च तत् सूत्रसंज्ञितं सर्वस्य जगतः धारयेत्। श्रूयते हि—**"वायुर्वै गौतम तत् सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति"** ( बृ. उ., अ. ३। ब्रा. ७ ) इति। मातरिश्वा हिरण्यगर्भः अपः कर्माणि प्राणिनां चेष्टालक्षणानि अग्न्यादित्यपर्जन्यादीनां च ज्वलन-दहन-प्रकाशनाभिवर्षणादीनि दधाति विदधाति विभजति इत्यर्थः। विभाजयतीति वा। **"भीषास्माद् वातः पवते भीषोदेति सूर्यः"** ( तै. उ. २।८।१ ) इत्यादिश्रुतेः। हिरण्यगर्भसृष्टम् इदं सकलं जगत् सर्वाधिष्ठानभूते तस्मिन् आत्मतत्त्वे अधिकरणभूते प्रज्ञायते ( प्रजायते ) इत्यर्थः।

[ —अ० ४०।१।४ ]

अथ उक्ते एवार्थे पुनराह—

**तदे॑जति॒ तन्नैज॑ति॒ तद्दू॒रे तद्व॑न्ति॒के।**

**तद॒न्तर॑स्य॒ सर्व॑स्य॒ तदु॒ सर्व॑स्यास्य बाह्य॒तः॥ ५॥**

तत्। एजति। तत्। न। एजति। तत्। दूरे। तत्। उ। अन्तिके॥

तत्। अन्तः। अस्य। सर्वस्य। तत्। उ। सर्वस्य। अस्य। बाह्यतः॥ ५॥

तत् प्रकृतम् आत्मतत्त्वम् एजति चलति तदेव च न एजति स्वतः नैव चलति। अचलमेव सत् उपाधीनां चलनेन चलतीव दृश्यते इत्यर्थः। किं च तत् आत्मतत्त्वं देशतः कालतश्च विप्रकृष्टदेशे

वर्तते। वर्षकोट्या कालेन महाप्रस्थानेन च अविद्वद्भिः मनाक् अपि प्राप्तुम् अशक्यत्वात् दूरे तत् इत्यभिधानम्। तदु तदेव आत्मतत्त्वम् अन्तिके समीपे अत्यन्तं सन्निकृष्टमेव, विद्वद्भिः स्वात्मतया साक्षात्करणात्। तथा अस्य सर्वस्य जगतः नामरूपक्रियात्मकस्य अन्तः अन्तरेव आत्मतत्त्वम्। "आत्मा सर्वान्तरः" (बृ. उ. ३।४।१) इति श्रुतेः। सर्वभूतानाम् अभ्यन्तरभूत इत्यर्थः। अस्य सर्वस्य जगतः वाह्यतः, वहिर्भवोऽपि तदु तदेव आत्मतत्त्वं, वाह्याभ्यन्तरसकलवस्तूनाम् अधिष्ठानतया व्योमवत् सर्वव्यापित्वात्। [ —अ० ४०।१।५ ]

ननु एवं रूपे आत्मतत्त्वे रतिः सकलविषयपरिहारेण कथं जायते इति तत्राह—

**यस्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति।**
**सर्वभूतेषु चात्मानन्ततो न विजुगुप्सते॥ ६॥**

**यः। तु। सर्वाणि। भूतानि। आत्मन्। एव। अनु। पश्यति॥**
**सर्वभूतेषु। च। आत्मानम्। ततः। न। वि। जुगुप्सते॥ ६॥**

यस्तु ब्रह्मैकलक्षणः परिव्राट् मुमुक्षुः सर्वाणि भूतानि अव्यक्तादीनि आत्मनि स्वस्वरूपे एव अनुपश्यति आत्मव्यतिरिक्ततया न जानाति इत्यर्थः। तेषु च सर्वभूतेषु आत्मानं कारणत्वेन स्वस्वरूपम् अनुस्यूतं पश्यति, यथा अस्य कारणसंघातस्य आत्मा अहं सर्वप्रत्ययसाक्षिभूतः चेता केवलः निर्गुणः अनेनैव स्वरूपेण अव्यक्तादीनां स्थावरान्तानाम् अहमेव आत्मा इति सर्वभूतेषु आत्मानं यः पश्यति स आत्मवित्। ततः तस्मात् आत्मदर्शनात् नापि विजुगुप्सते जुगुप्सां घृणां न प्राप्नोति। आत्मदर्शनप्रशंसाम् अतिप्रशंसत्येव हि आत्मदर्शनविषया अजुगुप्सा जायते। आत्मानमेव तु अत्यन्तविशुद्धं सांसारिकदोषविनिर्मुक्तं निरतिशयानन्दरूपम् अद्वयं पश्यतः किं निमित्ता घृणा जायेत। तस्मात् आत्मनः सार्वात्म्यानुसन्धानस्य जुगुप्सा न जायते इति युक्ततरम्।

[ —अ० ४०।१।६ ]

एतदर्थस्य दाढर्याय उत्तरमन्त्रमाह—

**यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः।**
**तत्र को मोहः कश्शोक एकत्वमनुपश्यतः॥ ७॥**

**यस्मिन्। सर्वाणि। भूतानि। आत्मा। एव। अभूत्। विजानतः॥**
**तत्र। कः। मोहः। कः। शोकः। एकत्वम्। अनु। पश्यतः॥ ७॥**

यस्मिन् काले, यद्वा यस्मिन् उक्तलक्षणे सर्वाणि भूतानि पूर्वोक्तानि अव्यक्तादीनि स्थावरान्तानि परमात्मदर्शनात् आत्मा एव अभूत् आत्मा एव संवृतः तस्य विजानतः परमार्थेन आत्मानमेव साक्षात्कुर्वतः, स्वव्यतिरिक्तस्य एव अभावात् सर्वं विकारजातं विदुषः स्वात्मरूपम् एव भवति इत्यर्थः। तत्र तस्मिन् काले तस्मिन् परमात्मनि कः मोहः कः शोकः शोकमोहयोः कुतः प्रसङ्गः,

तयोः अज्ञानकार्यत्वात्, अज्ञानस्य च आत्मतत्त्वज्ञानेन समूलम् उन्मूलनात्। कस्य इति चेत् उच्यते। एकत्वं नाम परमात्मना सह ऐक्यम्। यद्वा सर्वं विकारजातं मूलाज्ञाननिरासेन विलाप्य विशुद्धे सात्मैक्यम् अनुपश्यतः साक्षात्कुर्वतः तस्मिन् परमात्मनि शोकमोहयोः असम्भवः। एवं च कारणस्य संसारस्य अत्यन्तमेव उच्छेदः प्रदर्शितो भवति। [ —अ० ४०।१।७ ]

यः अयम् अतीतैः मन्त्रैः उक्तः आत्मा सः स्वेन रूपेण किंलक्षणः इति तदाह—

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम्।**

**कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यस्समाभ्यः॥ ८॥**

सः। परि। अगात्। शुक्रम्। अकायम्। अव्रणम्। अस्नाविरम्। शुद्धम्। अपाप-विद्धम्॥

कविः। मनीषी। परिभूः। स्वयम्भूः। याथातथ्यतः। अर्थान्। वि। अदधात्। शाश्व-तीभ्यः। समाभ्यः॥ ८॥

यथोक्तः आत्मा पर्यगात् आकाशवत् परितः व्याप्नोति। अधिष्ठानतया सर्वव्यापीत्यर्थः। स इति कविर्मनीषीति उभयत्र पुंलिङ्गतया निर्देशात् अन्तर्वर्त्तीनि शुक्रमित्यादिविशेषणानि पुंलिङ्ग-त्वेन विपरिणेयानि। शुक्रं शुक्रः दीप्तिमान् स्वप्रकाश इत्यर्थः। अकायं कायरहितः लिङ्गशरीर-विवर्जित इत्यर्थः। अव्रणं क्षतरहितः अस्नाविरं स्नावाः शिराः न विद्यन्ते अस्मिन् इति अस्नाविरः। अव्रणमस्नाविरमिति आभ्यां विशेषणाभ्याम् आत्मनः स्थूलशरीरसम्बन्धाभावः प्रतिपादितः। शुद्धं निर्मलः परमार्थतः निरवद्य इत्यर्थः। अपापविद्धं धर्माधर्मलक्षणेन पुण्यपापेन अविद्धः रहितः अकर्तृ-स्वरूपत्वात्। कविः क्रान्तदर्शी, सर्वद्रष्टा। "नान्योऽतोऽस्ति द्रष्टा" ( बृ. उ. ३।८।११ ) इत्यादि श्रुतेः। मनीषी मनसः ईषिता सर्वज्ञः ईश्वर इत्यर्थः। सर्वेषां परि उपरि भवतीति परिभूः। स्वयमेव भवति स्वसत्तापादकम् अन्यत् किंचित् नास्तीति स्वयम्भूः। स नित्यमुक्त इत्यर्थः। यथा-तथाभावः याथातथ्यम्, ततः याथातथ्यतः परमार्थतः सर्वज्ञात् इत्यर्थः, अर्थान् कर्तव्यपदार्थान् शाश्वतीभ्यः नित्याभ्यः समाभ्यः संवत्सरेभ्यः, **"संवत्सरो वै प्रजापतिः"** ( श. ब्रा. का. १०। अ. २। ब्रा. ६। कं. १ ) इति श्रुतेः। अत्र समाशब्देन प्रजापतयः उच्यन्ते, तेभ्यः प्रजापतिभ्यः व्यदधात् विहितवान्। त्वया इदं कर्तव्यम् इति यज्ञजीवातुरूपं व्यभजत् इत्यर्थः। श्रूयते हि—**"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै"** ( श्वेताश्व. उ. अ. ६।१८ ) इति। अत्र खलु इह जन्मनि जन्मान्तरे वा अनुष्ठितैः यज्ञदानादिभिः संस्कृतचित्तस्य साधनचतुष्टयसम्पन्नस्य एषणात्रय-संन्यासेन आत्मनि यथात्मनिष्ठता **'ईशावास्य'** इति अनया उपदिष्टा। तद्विलक्षणस्य ज्ञानस्य कर्मणा सह समुच्चयः सम्भवति। तत् दैववित्संस्तुतं देवताविषयं ज्ञानं कर्मसम्बन्धित्वेन उपपन्न-मिति मन्तव्यम्, न परमात्मज्ञानम्। [ —अ० ४०।१।८ ]

तथा च विद्यया देवलोकः कर्मणा पितृलोक इति तयोः ज्ञानकर्मणोः पृथक्फलश्रवणात् प्राप्त-पृथगनुष्ठानसमुच्चिचीषया तावत् निन्दति—

अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायांरताः ॥ ९ ॥

पदच्छेद स्पष्टः ॥ ९ ॥

अन्धन्तमः अदर्शनात्मकं तमोविकारं प्रविशन्ति के, ये अविद्यां विद्यायाः अन्या अविद्या कर्म इत्यर्थः, ताम् अविद्याम् अग्निहोत्रादिलक्षणामेव केवलाम् उपासते तत्पराः सन्तः अनुतिष्ठन्ति इत्यर्थः। ते अन्धन्तमः प्रविशन्ति इति सम्बन्धः। तस्मात् अन्धात्मकात् तमसः भूय इव बहुतरमेव तमः प्रविशन्ति ये कर्म हित्वा विद्यायामेव अज्ञाने एव रताः पर्ययेण अभिरताः ते विहितकर्मानुष्ठान-जन्येन पापेन ग्रस्तत्वात् केवलकर्मानुष्ठायिभ्यः अपि अधिकम् अन्धकारं प्रविशन्ति इत्यर्थः।
[ —अ० ४०।१।९ ]

ननु अनयोः ज्ञानकर्मणोः पृथगनुष्ठानप्रसक्तिरेव नास्तीति आशंक्य उभयोः स्वतन्त्रफलवत्त्वात् पृथगनुष्ठानं प्रसज्यत इत्याह—

अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया ।
इति शुश्रुम धीराणाँये नस्तद्विचचक्षिरे ॥ १० ॥

अन्यत् । एव । आहुः । विद्यया । अन्यत् । आहुः । अविद्यया ॥
इति । शुश्रुम । धीराणाम् । ये । नः । तत् । वि । चचक्षिरे ॥ १० ॥

विद्यया देवताज्ञानेन कर्मफलात् अन्यत् विलक्षणमेव फलं क्रियते इति आहुः कथयन्ति। तथा अविद्यया अविद्यालक्षणेन कर्मणा देवताज्ञानात् अन्यत् विलक्षणमेव फलं क्रियते इति आहुः कथ-यन्ति। तथा च श्रुतिः—"विद्यया तदारोहन्ति विद्यया देवलोको न तत्र दक्षिणायन्ति कर्मणा पितृ-लोकः" ( बृ. उ. १।५।१६ ) इति विभागेन ज्ञानकर्मणोः पृथक् फलसत्तां स्पष्टं ब्रूते। अपि च ये ज्ञानिनः आचार्याः नः अस्मभ्यं तत् कर्म ज्ञानं च विचचक्षिरे व्याख्यातवन्तः, तेषां धीराणां धीमतां वचनमिति शुश्रुम एव प्रकारमेव वयं श्रुतवन्तः। तस्मात् एवं पृथक्फलत्वात् प्राप्तं पृथगनुष्ठानं समुच्चयविधित्सया निन्दितम्। [ —अ० ४०।१।१० ]

अथ तयोः समुच्चयानुष्ठानमाह—

विद्याञ्चाविद्याञ्च यस्तद्वेदोभयꣳ सह ।
अविद्यया मृत्युन्तीर्त्वा विद्ययामृतमश्नुते ॥ ११ ॥

विद्याम् । च । अविद्याम् । च । यः । तत् । वेद । उभयम् । सह ॥
अविद्यया । मृत्युम् । तीर्त्वा । विद्यया । अमृतम् । अश्नुते ॥ ११ ॥

विद्या देवताविषयं ज्ञानम्। अविद्या कर्म च तत्, तदुभयं यः सह वेद एकेनैव पुरुषेण अनुष्ठेयं जानाति सः क्रमेण ज्ञानकर्मानुष्ठाता अविद्यया कर्मणा अग्निहोत्रादिना मृत्युं, मर्त्यत्वापादकं लौकिक-

कर्म तज्ज्ञानं च मृत्युशब्दवाच्यम्, तदुभयं तीर्त्वा अतिक्रम्य विद्यया देवताज्ञानेन अमृतं मरणरहितं देवतात्मभावम् अश्नुते प्राप्नोति। [ —अ० ४०।१।११ ]

अथ व्याकृताव्याकृतोपासनम् समुच्चिचीषया तयोः पृथगुपादानं निन्दति—

**अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते।**
**ततो भूय इव ते तमो य उ सम्भूत्याꣳ रताः॥ १२॥**

**पदच्छेदः स्पष्टः॥ १२॥**

सम्भूतिः उत्पत्तिः सम्भूयते उत्पद्यते इति सम्भूतिः तद्विलक्षणा असम्भूतिः प्रकृतिः कारणम् अव्याकृताख्यम्, ताम् असम्भूतिम् अक्षराख्यां प्रकृतिम् अविद्यां कामकर्मबीजभूताम् अदर्शनात्मिकां ये उपासते तदनुरूपमेव अन्धन्तमः अदर्शनात्मकं प्रविशन्ति, "तद् यथा यथोपास्ते तत्तद्भवति" इति श्रुतेः। तत् तस्मादपि ततमसः भूय इव बहुतरमिव अन्धन्तमः प्रविशन्ति ये उपेत सम्भूत्यां ब्रह्मणि हिरण्यगर्भाख्ये रताः अविरताः।

[ —अ० ४०।१।१२ ]

पूर्वमेव अनयोः उपासनयोः पृथगनुष्ठानप्रासङ्गिकं फलभेदमाह—

**अन्यदेवाहुस्सम्भवादन्यदाहुरसम्भवात्।**
**इति शुश्रुम धीराणाँय्ये नस्तद्विचचक्षिरे॥ १३॥**

**अन्यत्। एव। आहुः। सम्भवात्। अन्यत्। आहुः। असम्भवात्॥**
**इति। शुश्रुम। धीराणाम्। ये। नः। तत्। वि। चचक्षिरे॥ १३॥**

सम्भवात् सम्भूतेः कार्यब्रह्मोपासनात् अन्यदेव अव्याकृतोपासनफलादिलक्षणमेव अणिमाद्यैश्वर्यप्राप्तिलक्षणम् आहुः तत्त्वविदः प्रतिपादयन्ति। तथा असम्भवात् असम्भूतेः अव्याकृतात् अव्याकृतोपासनात् अन्यदेव कार्यब्रह्मोपासनफलविलक्षणमेव प्रकृतिविलक्षणफलम् आहुः पौराणिकाः कथयन्ति। इत्येवं शुश्रुम श्रुतवन्तः वयं धीराणां धीमतां वचनम्, ये नः अस्मभ्यं तत् अव्याकृतव्याकृतोपासनफलं विचचक्षिरे व्याख्यातवन्तः। एवं पृथक्फलत्वात् सम्भूत्यसम्भूत्युपासनयोः कर्तृभेदप्राप्तौ सत्यां तत् निराकृत्य, अथ तयोः समुच्चयानुष्ठानेन फलातिशयमाह—

**सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयꣳसह।**
**विनाशेन मृत्युन्तीर्त्वा सम्भूत्यामृतमश्नुते॥ १४॥**

**सम्भूतिम्। च। विनाशम्। च। यः। तत्। वेद। उभयम्। सह॥**
**विनाशेन। मृत्युम्। तीर्त्वा। सम्भूत्या। अमृतम्। अश्नुते॥ १४॥**

सम्भूतिं च इत्यत्र छान्दसः अलोपः। सम्भूतिम् अव्याकृतोपासनम्, विनाशं विनाशधर्मयुक्तं कार्यब्रह्मोपासनम्, तत् उभयं सह समुच्चयेन यः वेद जानीते, विनाशेन कार्यब्रह्महैरण्यगर्भोपासनेन मृत्युम् अनैश्वर्यधर्मादिरूपम् अज्ञानं तीर्त्वा अतीत्य असम्भूत्या अव्याकृतोपासनेन अमृतं प्रकृतिलयलक्षणं फलम् अश्नुते। [ —अ० ४०।१।१४ ]

अथ यदुक्तं "विद्याञ्चाविद्याञ्च" इत्यादि तच्च देवताज्ञानकर्मणोः समुच्चयेन अनुतिष्ठन् येन मार्गेण अमृतत्वम् अश्नुते इति तं मार्गमाह—

**हिरण्मयेन पात्रेण सत्यस्यापिहितम्मुखम्।**
**तत्त्वम्पूषन्नपावृणु सत्यधर्माय दृष्टये॥ १५॥**

**हिरण्यथेन। पात्रेण। सत्यस्य। अपिहितम्। मुखम्॥**
**तत्। त्वम्। पूषन्। अपावृणु। सत्यधर्माय। दृष्टये॥ १५॥**

यत्तत्सत्यमसौ आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः" ( श. ब्रा. १४।५।६।३ ) इति तदेतत् अध्यात्मम् अधिदेवतं च यत् सत्यब्रह्मोपासनया उक्तकर्मानुष्ठानेन सह तत् कुर्वन् आत्मनः उपास्यसत्यब्रह्मप्राप्तिद्वारं पवते 'हिरण्मयेन' इति। हिरण्मयं ज्योतिर्मयम् इत्यर्थः। तेन हिरण्मयेन पात्रेण मण्डलरूपेण सत्यस्य आदित्यमण्डलस्थस्य ब्रह्मणः मुखं द्वारम् अपिहितम् आच्छादितम्। हे पूषन्, पुष्णाति सर्वं जगत् इति पूषा सूर्यः, हे सूर्य तत् त्वम् अपावृणु अपसारय। किमर्थम्, सत्यधर्माय दृष्टये। सत्यस्य उपासनात् सत्यं धर्मः यस्य असौ सत्यधर्मः तस्मै। सत्योपासनसत्यशब्दाभिधेयस्य मण्डलान्तर्गतस्य ब्रह्मणः दर्शनाय। यद्वा सत्यधर्मः उपास्यः, षष्ठ्यर्थे चतुर्थी। सत्यधर्मस्य दर्शनाय अध्यात्मोपलब्धये इत्यर्थः।

[ —अ० ४०। १। १५ ]

एवम् उपासकः मार्गं याचित्वा, उपास्यतेजः पुञ्जेन प्रतिहता ( मा ) अस्मदीया दृष्टिः ताम् आक्षिप क्षमस्वेति तत्तेजसः अपनयनं प्रार्थयते।

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्त्समूह।**
**तेजो यत्ते रूपङ्कल्याणतमन्तत्ते पश्यामि योऽसावसौ पुरुषस्सोऽहमस्मि॥१६॥**

**पूषन्। एकर्षे। यम। सूर्य। प्राजापत्य। व्यूह। रश्मीन्। समूह॥**
**तेजः। यत्। ते। रूपम्। कल्याणतमम्। तत्। ते। पश्यामि। यः। असौ। असौ।**
**पुरुषः। सः। अहम्। अस्मि॥ १६॥**

हे पूषन् जगतः पोषक सूर्य, हे एकर्षे, 'ऋषिः गत्यर्थः' एक एव ऋषति गच्छतीति एकर्षिः। "सूर्य एकाकी चरति" (यजुः अ. मा. सं. २३।४६) इति श्रुतेः। तथा सर्वस्य नियमनात् यमः, हे यम, रश्मीनां प्राणानां रसानां च प्रेरणात् सूर्यः, हे सूर्य, प्रजापतेः अपत्यगुणविशिष्ट, त्वदीयान् रश्मीन् किरणसंधान् व्यूह विगमय। तथा तेजः उत्कृष्टं ज्योतिः समूह सूर्य एकीकुरु। ते तव यत् रूपं

कल्याणतमम् अत्यन्तशोभनं तत् अहं पश्यामि साक्षात्करोमि, तव प्रसादात् पश्यामि। अपि च तव असौ यः खलु प्रसिद्धः अस्य मण्डलान्तर्वर्त्ती भूरित्यादिव्याहृत्यवयवः पुरुषाकारः, "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः" ( छा० अ० १। खं० ५।६ ) इति श्रुत्यन्तरम्। सः अहम् अस्मि, तद्विधोपासनात् अहमपि तद्रूप एव भवामि। अतः हे सूर्य माम् अनुगृहाण इति भावः।

[ —अ० ४०।१।१६ ]

अथ उपासकः स्वस्य मरणावस्था एवं भवतु इति प्रार्थयते—

**वायुरनिलममृतमथेदम्भस्मान्तꣳ शरीरम्।**

**ओ३म् क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर॥ १७॥**

**वायुः। अनिलम्। अमृतम्। अथ। इदम्। भस्मान्तम्। शरीरम्॥**

**ओम्। क्रतो। स्मर। कृतम्। स्मर। क्रतो। स्मर। कृतम्। स्मर॥ १७॥**

मरिष्यतः मम वायुः प्राणः अध्यात्मपरिच्छेदं हित्वा अधिदैवतात्मानं सर्वात्मकम् अनिलम् अमृतं मरणरहितं सूत्रात्मकं हिरण्यगर्भं प्राप्नोतु इति शेषः। अनेन प्राणनिगमनाभिमानेन ज्ञानकर्मसंस्कृतं लिङ्गशरीरमपि मदीयात् देहात् अभिनिष्क्रामतु इति अर्थात् उक्तं भवति। अथ एतन्निष्क्रमणानन्तरम् इदं शरीरम् अग्नौ हुतं भस्मान्तं भस्मावशेषितं भूयात्। ओमिति प्रणवेन तत्प्रतीकम् उपास्यं ब्रह्म प्रतिपद्यते। हे क्रतो स्मर, मनसा एतावन्तं कालम् ओमिति प्रणवेन यद् ब्रह्म उपासितं नैरन्तर्येण ध्यातं मम प्रयाणकाले तत् स्मर। यत् त्वं मया कृतं विहितं कर्म हे क्रतो तदपि स्मर, देवताज्ञानफलभूतं कार्यब्रह्मप्रापणम् अनुचिन्तय इत्यर्थः। क्रतो स्मर कृतं स्मर इति पुनरुक्तिः आदरार्था।

[ —अ० ४०।१।१७ ]

इत्थं मरणावस्थायां कर्तव्यम् आशंस्य पुनः उपासकः मार्गं प्रार्थयते—

**अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्।**

**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम॥ १८॥**

**अग्ने। नय। सुपथा। राये। अस्मान्। विश्वानि। देव। वयुनानि। विद्वान्॥**

**युयोधि। अस्मत्। जुहुराणम्। एनः। भूयिष्ठाम्। ते। नमउक्तिम्। विधेम॥ १८॥**

अग्ने, अङ्गति गच्छति व्याप्नोति सर्वं कार्यजातम् इति अग्निः हिरण्यगर्भः, हे अग्ने सर्वव्यापिन् ईश्वर, सुपथा शोभनमार्गेण, गमनागमनसाध्यत्वात् दक्षिणमार्गः संसारापादकत्वेन अशोभनः, अतः पुनरावृत्तिरहितेन शोभनेन पथा अस्मान् उपासकान् नय गमय। किमर्थं, राये धनाय ज्ञानकर्मफलोपभोगाय इत्यर्थः। विश्वानि सर्वाणि वयुनानि कर्माणि प्रज्ञानानि यस्मात् तानि हे देव त्वं विद्वान् "लक्षणहेत्वोः" ( पा. सू. अ. ३।२।१२६ ) इति विदेः शतृप्रत्ययः, यस्मात् त्वं वेत्सि अतः मां तत्फलं नय। किं च जुहुराणं कुटिलम् एनः पापम् अस्मत् अस्म ? युयोधि वियोजय

विनाशय इत्यर्थः। तथा च वयं निष्कल्मषाः सन्तः भूयिष्ठां बहुतरां ते तुभ्यं नमउक्तिं विधेम नमस्कारेण त्वां परिचरेम इत्यर्थः। त्वद्रूपमेव सर्वदा ध्यायन्तं मां पुनरावृत्तिरहितेन उत्तरमार्गेण भवदीयं कर्मफलं प्रापय इति भावः। [—अ० ४०।११८]

चत्वारिंशोऽध्याये प्रथमोऽनुवाकः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थो महेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वर-वैदिकमार्गप्रवर्तक-वीरबुक्कणभूपाल-साम्राज्य-धुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे काण्वसंहिताभाष्ये चत्वारिंशोऽध्यायः।

समाप्तोऽयं ग्रन्थः।



परिशिष्टम्

# शुक्लयजुर्वेद-काण्वसंहितायाः

## अकारादिक्रमेण मन्त्रसूची

| क्र० सं० | मन्त्राः | पृष्ठम् | अध्यायः | मन्त्र-सं० | अनुवाकः | मन्त्र-सं० |
|---|---|---|---|---|---|---|
| | अ | | | | | |
| १ | अक्षन्पितरोऽमीमदन्त | १६ | २१ | ३९ | ३ | ६ |
| २ | अक्षराजाय कितवङ् | २९८ | ३४ | १८ | ३ | ५ |
| ३ | अग्न आयूंषि पवस | १७ | २१ | ४२ | ३ | ९ |
| ४ | अग्न आयूंषि पवस | १९९ | २९ | ३८ | ५ | १ |
| ५ | अग्न आयूंषि पवस | ३२२ | ३५ | ४८ | ४ | १४ |
| ६ | अग्न इन्द्र वरुण मित्र | २५९ | ३२ | ४८ | ४ | ५ |
| ७ | अग्नये कुटरूनालभते | १५१ | २६ | २४ | ५ | ३ |
| ८ | अग्नये गायत्राय त्रिवृते | २३९ | ३१ | ४९ | ५ | १ |
| ९ | अग्नयेऽनीकवते प्रथम | १४८ | २६ | १७ | ४ | १ |
| १० | अग्नयेऽनीकवते रोहिता | २४१ | ३१ | ५७ | ५ | ९ |
| ११ | अग्नये पीवानम्पृथिव्यै | ३०० | ३४ | २१ | ४ | ३ |
| १२ | अग्नये स्वाहा सोमाय | १०० | २४ | ९ | २ | १ |
| १३ | अग्नये स्वाहा सोमाय | ११० | २४ | २९ | १३ | १ |
| १४ | अग्निन्दूतम्पुरो दधे | १०४ | २४ | १७ | ४ | ७ |
| १५ | अग्निः पशुरासीत् | १२३ | २५ | १९ | ४ | ६ |
| १६ | अग्निमद्य होतारमवृणी | ९३ | २३ | ६२ | ६ | १२ |
| १७ | अग्निमद्य होतारमवृणीता | २१३ | ३० | २३ | २ | १२ |
| १८ | अग्निमद्य होतारमवृणी | २२१ | ३० | ४६ | ४ | १२ |
| १९ | अग्निर्ऋषिः पवमानः | १८४ | २८ | १३ | १० | १ |
| २० | अग्निर्ऋषिः पवमानः | २०० | २९ | ४० | ५ | ३ |
| २१ | अग्निर्वृत्राणि जङ्घनद् | २४६ | ३२ | ९ | १ | ९ |
| २२ | अग्निश्च पृथिवी च | १७९ | २८ | १ | १ | १ |
| २३ | अग्निष्वात्तानृतुमतौ | २४ | २१ | ६३ | ४ | ११ |

